भूत्वा नरं समाश्रित्य प्रययुः शोचनीयताम् । तस्थुस्तं तु समालम्ब्य प्रभुं भुवनवन्द्यताम्[1] ॥२८३॥

यस्याश्रितः किल समाश्रयणीयलभ्यां निन्द्यां गतिं जगति सर्वजनार्चितां वा ।
गच्छत्यधस्तृणगुणः श्रितकूपयन्त्रः पुष्पाश्रयी सुरशिरोभुवि वर्तमेति ॥२८४॥

सिद्धः सिद्धः सदेहोयमिति शश्वत्सुरा दिवि । प्राघोषयंस्ताडयन्तः[1] पटहं सप्त वासरान् ॥२८५॥ 285

उत्पलाक्ष इति ख्यातिं पेशलाक्षतया[1] गतः । तत्सूनुस्त्रिंशतं सार्धां वर्षाणामन्वशान्महीम् ॥२८६॥

तस्य सूनुर्हिरण्याक्षः स्वनामाङ्कं पुरं व्यधात् । क्ष्मां सप्तत्रिंशतिं[1] वर्षान्सप्त मासांश्च भुक्तवान् ॥२८७॥

हिरण्यकुल इत्यस्य हिरण्योत्सकृदात्मजः । षष्टिं षष्टिं वसुकुलस्तत्सूनुरभवत्समाः ॥२८८॥

अथ म्लेच्छगणाकीर्णे मण्डले चण्डचेष्टितः । तस्यात्मजोभून्मिहिरकुलः कालोपमो नृपः ॥२८९॥

दक्षिणां सान्तकामाशां स्पर्धया जेतुमुद्यता । यस्मिन्पात्युत्तरहरिद्बभारान्याभिकान्तकम् ॥२९०॥ 290

सांनिध्यं यस्य सैन्यान्तर्हन्यमानाशनोत्सुकान्[1] । अजानन्गृध्रकाकादीन्व्रजाग्रे धावतो जनाः ॥२९१॥

दिवारात्रं हतप्राणिसहस्रपरिवारितः । योभूद्भूपालवेतालो विलासभवनेष्वपि ॥२९२॥

बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवम् । न बभूव नृशंसस्य यस्य घोराकृतेर्भृतः ॥२९३॥

स जातु देवीं संवीतसिंहलांशुककञ्चुकाम्[1] । हेमपादाङ्कितकुचां दृष्ट्वा जज्वाल मन्युना ॥२९४॥

सिंहलेषु नरेन्द्राङ्घ्रिमुद्राङ्कः क्रियते पटः । इति कञ्चुकिना पृष्टेनोक्तो यात्रामदात्ततः ॥२९५॥ 295

तत्सेनाकुम्भिदानाम्भोनिम्नगाकृतसंगमः । यमुनालिङ्गनप्रीतिं प्रपेदे दक्षिणार्णवः ॥२९६॥

स सिंहलेन्द्रेण समं संरम्भादुदपाटयत् । चिरेण चरणस्पृष्टप्रियालोकनजां व्यथाम्[1] ॥२९७॥

दूरात्तत्सैन्यमालोक्य लङ्कासौधैर्निशाचराः । भूयोपि राघवोद्योगमाशङ्क्य प्रचकम्पिरे ॥२९८॥

स तत्रान्यं नृपं हत्वा तीव्रशक्तिरुपाहरत्[1] । पटं यमुषदेवाख्यं मार्तण्डप्रतिमाङ्कितम् ॥२९९॥

व्यावृत्य चोलकर्णाटलाटादींश्च नरेश्वरान् । सिन्धुरानिव गन्धेभो गन्धेनैव व्यदारयत् ॥३००॥ 300

तस्मिन्प्रयाते प्राग्रेभ्यः शशंसुस्तत्पराभवम् । नगर्यो नरनाथेभ्यस्त्रुट्यद्वट्टालमेखलाः ॥३०१॥

काश्मीरं द्वारमासाद्य भ्रभ्रष्टस्य दन्तिनः । श्रुत्वा स त्रासजं घोषं तोषरोमाञ्चितोभवत् ॥३०२॥

तदाकर्णनसंरम्भे सद्यैव विरुद्धधीः । शतमन्यद्गजेन्द्राणां हठेन निरलोठयत् ॥३०३॥

स्पर्शोङ्गानि यथा वाचं कीर्तनं पापिनां तथा । संदूषयेदतो नोक्ता तस्यान्यापि नृशंसता ॥३०४॥

को वेत्त्यदुर्नचेष्टानां कृत्यं प्राकृतचेतसाम्[1] । धर्मं सुकृतसंप्राप्तिहेतोः सोपि यदाददे ॥३०५॥ 305

श्रीनगर्यां हि दुर्बुद्धिर्विदधे मिहिरेश्वरम् । होलडायां[1] स मिहिरपुराख्यं प्रभुपत्तनम् ॥३०६॥

अग्रहाराञ्जगृहिरे गान्धारा ब्राह्मणास्ततः । समानशीलास्तस्यैव ध्रुवं तेपि द्विजाधमाः ॥३०७॥

---

२८३. [1]) Thus corr. by $A_2$ from $A_1$ °वन्द्यताम्. २८५. [1]) Thus $A_2$; $A_1$ प्रोद्घोषयन्ताड°. २८६. [1]) Thus corr. by later hand from $A_1$ पेशलाक्षितया. २८७. [1]) $A_2$ gloss एकोन, with note स्वनामाङ्कपुरमपीति पाठः.—[2]) A वर्षाणि°. २९१. [1]) $A_2$ gloss हन्यमानानां लोकानां भक्षणं । अशनं । तत्रोत्सुकाः. २९४. [1]) $A_2$ gloss सिंहलदेशीय. २९७. [1]) Thus corr. by $A_1$ from हठम्. २९९. [1]) Thus corr. by $A_2$ from $A_1$ °शक्तिरपा°. ३०२. [1]) $A_2$ gloss तदारभ्य हस्तिवधः इति प्रसिद्धः प्रदेशनाम येन आख्यातो मिहिरकुलः. ३०५. [1]) $A_2$ वेत्त्युदुत्र°. ३०६. [1]) Emended; A होलाडायां. Cf. vii. 1228. viii. 733. 1432 (*C.*). 2909 (*C.*). 3216 (*C.*).

मेघागमः फणिभुजां प्रथितान्धकारः प्रीणाति हंसममलो जलदात्ययश्च ।
प्रीतेः समानरुचितैव भवेन्निदानं नातुः प्रतिप्रकृतयः परस्परस्य ॥३०८॥[1]
स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः । भूरिरोगार्दितवपुः प्राविशज्जातवेदसम् ॥३०९॥
310 सोयं त्रिकोटिहा मुक्तो यः स्वात्मन्यपि निर्घृणः । देहत्यागेस्य गगनादुच्चचारेति भारती ॥३१०॥
इत्यूचुर्ये मते तेषां स एव परिहारदः । खण्डबन्धीतमृणतामग्रहारादिकर्मभिः ॥३११॥
आक्रान्ते दारदैर्भौट्टैर्म्लेच्छैरशुचिकर्मभिः । विनष्टधर्मे देशेस्मिन्पुण्याचारप्रवर्तनम् ॥३१२॥
आर्यदेश्यान्स संस्थाप्य व्यतनोद्दारुणं तपः । संकल्प्य स्ववपुर्दाहं प्रायश्चित्तक्रियां व्यधात् ॥३१३॥
अत एवाग्रहाराणां सहस्रं प्रत्यपादयत् । गान्धारदेशजातेभ्यो द्विजेभ्यो विजयेश्वरे ॥३१४॥
315 क्षुरखड्गासिधेन्वादिपूर्णेयःफलके तदा । वह्निप्रदीप्ते सहसा पर्यन्ते स्वां तनुं जहौ ॥३१५॥
इत्येतस्मिञ्जनाम्नाये केचिदव्यभिचारिणि । प्राहुः पुरुषसिंहस्य क्रौर्यं तस्याविगर्हितम् ॥३१६॥ कुलकम् ॥
ये नागेन रुषा दग्धे नगरे प्राभवन्खशाः । तेषां नाशाय वृत्तान्तं पूर्वोक्तं जगदुः परे ॥३१७॥
अवतारयतस्तस्य चन्द्रकुल्याभिधां नदीम् । अशक्योन्मूलना मध्ये शिलाभूद्विघ्नकारिणी ॥३१८॥
ततः कृततपाः स्वप्ने देवैरुक्तः स भूपतिः । यक्षः शिलायां बलवान्ब्रह्मचार्यत्र तिष्ठति ॥३१९॥
320 साध्वी स्पृशति चेदेनां निरोद्धुं न स शक्नुयात् । ततोपरेद्युः स्वप्नोक्तं शिलायां तेन कारितम् ॥३२०॥
तासु तासु कुलस्त्रीषु व्यर्थयत्नास्वथाचलत् । चन्द्रवत्याख्यया स्पृष्टा कुलाल्या सा महाशिला ॥३२१॥
कोटित्रयं नरपतिः क्रुद्धस्तेनागसा ततः । सपतिभ्रातृपुत्राणामवधीत्कुलयोषिताम् ॥३२२॥
इयं चान्यमते ख्यातिः प्रमते तथ्यतः पुनः । अभव्या सनिमित्तापि प्राणिहिंसा गरीयसी ॥३२३॥
एवं क्षुद्रोपि यद्राजा संभूय न हतो जनैः । तत्कर्म कारयंस्तैस्तैर्दैवतैरेव रक्षितः ॥३२४॥
325 प्रजापुण्योदयैस्तीव्रैश्चिरात्तस्मिन्क्षयं गते । वकस्तत्प्रभवः पौरैः सदाचारोभ्यषिच्यत ॥३२५॥
तत्रापि पूर्वसंस्कारादुत्त्रासं दधे जनः । श्मशानवर्जिते लीलावेश्मनीव नृपास्पदे ॥३२६॥
अतिसंतापदाज्जातः स जनाह्लादकोभवत् । जलौघो जलदश्यामात्तपात्ययदिनादिव ॥३२७॥
लोकान्तरादिवायातं मेने धर्मं तदा जनः । अभयं च परावृत्तं प्रवासाद्दहनादिव ॥३२८॥
स वकेशं वकश्वभ्रे वकवत्यापगां तथा । कृत्वा पुरं परार्ध्यश्रीर्लवणोत्साभिधं व्यधात् ॥३२९॥
330 तत्र त्रिषष्टिर्वर्षाणां सत्रयोदशवासरा । अत्यवाह्यत भूपेन तेन पृथ्वीं प्रशासता ॥३३०॥
अथ योगेश्वरी काचिद्भट्टाख्या रजनीमुखे । कृत्वा कान्ताकृतिं काम्यामुपतस्थे विशां पतिम् ॥३३१॥
तया मनोहरैस्तैस्तैर्वचनैर्लोपितस्मृतिः । स यागोत्सवमाहात्म्यं द्रष्टुं हृष्टो न्यमन्त्र्यत ॥३३२॥
पुत्रपौत्रशतोपेतः प्रातस्तत्र ततो गतः । चक्रवर्ती तया निन्ये देवीचक्रोपहारताम् ॥३३३॥
कर्मणा तेन सिद्धाया व्योमाक्रमणसूचकम् । जानुमुद्राद्वयं तस्या दृषद्यद्यापि दृश्यते ॥३३४॥

---

३०८. [1]) Edd. add before this verse the following verses, not found in A G R: [illegible] ॥ — [2]) A₂ °[illegible]. — [3]) Thus A₂; A₁ °[illegible]. ३२०. [1]) Thus corr. by A₂ from A₁ न च. ३२५. [1]) Emended; A R G एकस्त°. ३२६. [1]) G [illegible]. ३३२. [1]) Thus corr. by A₂ from A₁ °[illegible]°.

देवः शतकपालेशो मातृचक्रं शिला च सा । क्षीरीमठेषु महतीं स्मृतिमद्यापि यच्छति ॥३३५॥ 335

देव्यां कुलवतोः कन्दः क्षितिनन्दोऽथवोचितः । ततस्तस्य सुतस्त्रिंशद्वत्सरानन्वशान्महीम् ॥३३६॥

द्वापञ्चाशतमब्दान्क्ष्मां द्वौ च मासौ तदात्मजः । अपासीद्वसुनन्दाख्यः प्रख्यातस्मरशास्त्रकृत् ॥३३७॥

नरः षष्टिं तस्य सूनुस्तावतोऽक्षश्च तत्सुतः । वर्षाण्यभूद्विभुर्योऽसौ योऽक्षवालमकारयत् ॥३३८॥

जुगोप गोपादित्योऽथ क्ष्मां सद्वीपां तदात्मजः । वर्णाश्रमप्रत्यवेक्षासंशीलितादियुगोदयः ॥३३९॥

सखोलखागिकाहाडिग्रामंस्कन्दपुराभिधान् । शमाङ्गासंमुखांश्चाग्रहारान्यः प्रत्यपादयत् ॥३४०॥ 340

ज्येष्ठेश्वरं प्रतिष्ठाप्य गोपाद्रावार्यदेशजाः । गोपाग्रहारान्कृतिना येन स्वीकारिता द्विजाः ॥३४१॥

भूक्षीरवाटिकायां यो निर्वास्य लशुनाशिनः । खासटायां व्यधाद्विप्रांश्चिजाचारविवर्जितान् ॥३४२॥

अन्यांश्चानीय देशेभ्यः पुण्येभ्यो वश्चिकादिषु । पावनानग्रहारेषु ब्राह्मणान्स न्यरोपयत् ॥३४३॥

उत्तमो लोकपालोऽयमिति लक्ष्म प्रशस्तिषु । यः प्राणवान्विना यज्ञं चक्षमे न पशुक्षयम् ॥३४४॥

सषड्दिनां वर्षषष्टिं पालयित्वा स मेदिनीम् । भोक्तुं पुण्यपरीपाकं लोकान्सुकृतिनामगात् ॥३४५॥ 345

गोकर्णस्तत्सुतः क्षोणीं गोकर्णेश्वरकृद्दधे । अष्टपञ्चाशतं वर्षांस्त्रिंशत्याह्नां विवर्जिताम् ॥३४६॥

सूनुर्नरेन्द्रादित्योऽस्य खिङ्खिलान्याभिधोऽभवत् । भूतेश्वरप्रतिष्ठानामक्षयिण्याश्च कारकः ॥३४७॥

दिव्यानुग्रहमुग्राभिधो यस्य गुरुर्व्यधात् । उग्रेशं मातृचक्रं च प्रभावोदग्रविग्रहः ॥३४८॥

भूत्वा षट्त्रिंशतं वर्षाञ्छतं चाह्नां विभुर्भुवः । स दीर्घैरव्ययांल्लोकानासदत्सुकृतैः कृती ॥३४९॥

युधिष्ठिराभिधानोऽभूदथ राजा तदात्मजः । यः सूक्ष्माक्षतया लोकैः कथितोऽन्धयुधिष्ठिरः ॥३५०॥ 350

तेन क्रमागतं राज्यं सावधानेन शासता । अनुजग्मे मितं कालं पूर्वभूपालपद्धतिः ॥३५१॥

काले कियत्यपि ततो यात्यभाग्यवशादसौ । सिषेवे श्रीमदक्षीबो यत्किंचनविधायिताम् ॥३५२॥

नान्वग्रहीदनुग्राह्यान्न संजग्राह धीमतः । न प्रवृत्तोपचाराणां प्रागिवासीत्प्रियंकरः ॥३५३॥

दुर्विदग्धपर्षदा सार्कं निर्विशेषं सभाजितैः । परिजह्रे स दुर्जातो जाततेजोवधैर्बुधैः ॥३५४॥

सर्वत्र समदृष्टित्वं गुणोऽयं खलु योगिनः । अकीर्तिहेतुः स महान्दोषस्तु पृथिवीपतेः ॥३५५॥ 355

नयद्भिर्गुणतां दोषान्दोषतां च गुणान्विटैः । स लुप्तप्रतिभश्चक्रे शनकैः स्त्रीजितोपमः ॥३५६॥

वाङ्मर्मच्छेदिनी दीर्घं नर्म शश्वत्कथा विटैः । अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् ॥३५७॥

पुरो मिथ्या गुणग्राही परोक्षे दोषदर्शकः । असुस्थिरादरो भूभृत्सोऽभूद्द्वेष्योऽनुजीविनाम् ॥३५८॥

मनागनवधानेन स्खलतस्तस्य भूपतेः । इत्थं राज्यस्थितिरगादचिरेण विसूत्रताम् ॥३५९॥

उपेक्षितस्य निर्द्रोहैरयतन्ताजितात्मनः । अथ लब्धबलास्तस्य भाग्याय द्रोहिमन्त्रिणः ॥३६०॥ 360

---

३३९. [1]) Thus corr. by $A_2$ from $A_1$ प्रत्यवेक्षा°. ३४०. [1]) $A_2$ gloss [illegible].—[2]) $A_2$ gloss [illegible].—[3]) $A_1$ [illegible], with gloss [illegible]. ३४१. [1]) $A_2$ gloss [illegible] इति प्रसिद्धस्थले. ३४२. [1]) $A_2$ gloss [illegible] इति भाषया प्रसिद्धस्थले.—[2]) $A_2$ gloss [illegible].—[3]) Emended; A R [illegible]°; G [illegible]°. ३४३. [1]) $A_2$ gloss [illegible]. ३४५. [1]) $A_2$ सषण्मासां. ३४७. [1]) Thus corr. from $A_1$ °[illegible] by $A_2$ which adds the glosses [illegible] च प्रसिद्धा, and [illegible] इति पार्वतीयदेशादौ [illegible] इति प्रसिद्धा: [illegible] ($A_2$ [illegible]) [illegible]. Of a third gloss by $A_2$ which has been smeared over with ink, only the following can be read: [illegible] ———.—[2]) Thus corr. by $A_2$ from $A_1$ [illegible]. ३५०. [1]) Thus $A_2$; $A_1$ सूक्ष्माक्षितया. ३५४. [1]) Thus $A_2$; $A_1$ °जिते. ३६०. [1]) $A_2$ gloss [illegible].

प्रभोः संकोचिताशेषैश्वर्यैर्निरवग्रहम् । राज्यं जिहीर्षवो भूपाधिकारे भूम्यनन्तराः ॥३६१॥
तदनुप्राणिताः सर्वे ते ते नानादिगाश्रयाः । आसन्राज्यामिषं प्राप्तुं श्येना इव ससंभ्रमाः ॥३६२॥
अथोत्पन्नभयो राजा न शशाक निजस्थितिम् । व्यवस्थापयितुं यन्त्रच्युतां कारुः शिलामिव ॥३६३॥
चिरं क्षुण्णे क्षमाभर्तुस्तस्मिन्राज्ये विसंस्थुले । उपायोस्य स्थितेर्हेतुर्नैकः कथनं पथये ॥३६४॥
365 दृष्टदोषान्स्थितिं प्राप्तो हन्यादस्मानसंशयम् । विचिन्त्येति न सामास्य जगृहुर्निजमन्त्रिणः ॥३६५॥
अथ निरुरुधुस्ते संनद्धा बलैर्नृपमन्दिरं व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः ।
मदकरिघटाकेतुच्छायानिरुद्धरविप्रभा भवनवलभीः संतन्वन्तो दिवापि तमोवृताः ॥३६६॥
तैर्गन्तुं स्वभुवो निवारितरणैर्दत्तावकाशो ततस्त्यक्तभीर्नगरान्तरात्स नृपतिस्तात्पर्यतो निर्ययौ ।
आजानेयरजोङ्कुराजललनानस्थानसंदर्शनक्षुभ्यत्पौरजनाकुलाजकणिकाकीर्णेन राजाध्वना ॥३६७॥
राज्याच्च्युतस्य बहुशः परिवाररामाकोशादि तस्य रिपवो व्रजतोपजह्रुः ।
उर्वीरुहो विगलितस्य नगेन्द्रशृङ्गात्पल्लीफलादि रभसादिव गण्डशैलाः ॥३६८॥
रम्यैः शैलपथैर्व्रजञ्श्रमवशाच्छायां श्रितः शाखिनामासीनप्रचलायितेन सुमहद्दुःखं विसस्मार सः ।
दूरात्पामरपूत्कृतैः श्रुतिपथप्राप्तैः प्रबुद्धस्त्वभूद्दृष्टो निर्झरवारिभिः सह मनःश्वभ्रे निमज्जन्निव ॥३६९॥
नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्वीरम्भःक्षोभप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः ।
370 क्रान्त्वा श्रान्तैर्विसकिसलयच्छायमुग्धाङ्गलेखैरभ्युत्सङ्गं निदिततनुभिर्मूर्छितं तस्य दारैः ॥३७०॥
पर्यन्ताश्रितटाद्विलोक्य सुचिरं दूरीभवन्मण्डलं ग्रामान्मन्त्रयितुं जहत्सु नृपतेर्दारेषु पुष्पाञ्जलीन् ।
क्षोणीपृष्ठविकीर्णपक्षतिनमत्तुण्डैः स्वनीडस्थितैः सावेगं गिरिकन्दरासु पततां वृन्दैरपि क्रन्दितम् ॥३७१॥
स्तनयुगलनद्धस्रस्तमूर्धांशुकानां त्रिकवलनविलोलं वीक्ष्य दूरात्स्वदेशम् ।
अवहत रुदतीनां मौलिविन्यस्तहस्तं पथि नृपवनितानामश्रुभिर्निर्झराम्भः ॥३७२॥
प्रीतिस्थैर्यैरुचितवचनाक्षिप्तया शोकशान्त्या निर्व्याजाज्ञाग्रहणगुरुभिस्तैश्च तैश्चोपचारैः ।
तस्य स्नेहादुपगतवतो राज्यविभ्रंशदुःखं मन्दीचक्रुः स्वभुवि सुजना भूपतेर्भूमिपालाः ॥३७३॥

इति काश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां प्रथमस्तरङ्गः ॥
चतुर्दशाधिकं वर्षसहस्रं नव वासराः । मासाश्च विगता ह्यस्मिन्नेकविंशतिराजसु ॥

---

३६२. [1]) A₁ had written च after ते ते; struck out. A₂ तदनुप्राणिता वैरिनृपा नाना°. ३६३. [1]) A₂ gloss यन्त्रपद इति सेनायां कुठारो प्रसिद्धम्. ३६४. [1]) Thus corr. by A₂ from A₁ कस्य न. ३६५. [1]) Thus corr. by A₂ from A₁ प्रातान्ह°. ३६०. [1]) A₂ gloss धर्मद्वारे. ३६८. [1]) Thus corr. by A₂; A₁ °रामा..कौ°.—[2]) Thus corr. by A₂ from A₁ °पिजह्रुः—[3]) A₂ विचलितस्य. ३६९. [1]) G has *sec. manu* the *v. l.* आसीनः प्रलयायितेन.—[2]) Thus A₁; A₂ gives the *v. l.* महत् for मनः between the lines and another *v. l.* पुनः in margin. ३७०. [1]) A₂ अभ्युत्सङ्गं. ३७१. [1]) Thus A₂; A₁ पर्यन्ता°.—[2]) A₂ क्षिपत्सु. ३७२. [1]) A₂ बालवल्कानां, with gloss अवलानां बालं कर्तुं.—[2]) A₂ gloss कर्म. *Colophon.* [1]) A₂ adds before this the note रा १८ ॥ वं ॥ १०२ ॥.—[2]) A₂ चतुर्विंशा°.—[3]) Thus A₂; A₁ °न्नद्दाविंशति रा°.

## ॥ द्वितीयस्तरङ्गः ॥

विहितभुजगोशृङ्गाभ्यां धनुर्घटितं तथा नरकरटिनोर्देहार्धाभ्यां गणं परिगृह्णतः । [1,2]
विविधघटनारम्भाणां निवेशरुचिं विभोर्जयति ललनापुंभागाभ्यां शरीरविनिर्मितिः ॥१॥ [3]
भूयोराज्यार्जनोद्योगस्तेनात्यज्यत भूभुजा । जरसा शमिवाण्या च कर्णमूलमवाप्तया ॥२॥
अनयाहितयोद्वान्तः समं स्वविषयेण तान् । विषयान्वशिनामग्र्यः स ताम्पश्चापि विस्मृतिम् ॥३॥
धावमाज्येच्छया दुर्गागलिकायां[1] स्वमन्त्रिभिः । कालेन स्थापितो बद्धुस्त्यभ्यधायि तु केरपि ॥४॥
अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात् । विक्रमादित्यभूभर्तुर्ज्ञातिराज्येऽभ्यषिच्यत ॥५॥
शकारिर्विक्रमादित्य इति स भ्रममाश्रितैः । अन्यैरत्रान्यथालेखि विसंवादि[1] कदर्थितम् ॥६॥
इदं स्वभेदविधुरं हर्षादीनां धराभुजाम् । कंचित्कालमभूद्भोज्यं ततः प्रभृति मण्डलम् ॥७॥
असपूर्वापि तेनोर्वी सपूर्वेव महीभुजा । लालिता हृदयज्ञेन पत्या नववधूरिव ॥८॥
भुक्त्वा द्वात्रिंशतं वर्षान्भुवं तस्मिन्दिवं गते । जलौकास्तत्सुतो भूमेर्भूषणं समपद्यत ॥९॥
पितुरेव समं कालं वृद्धिहेतोः स दिद्युते । विधुवत्पूर्णशीतांशुरिव शीतेतरार्चिषः ॥१०॥
अथ वाक्पुष्टया सार्धं देव्या दिव्यप्रभावया । भुवं तत्प्रभवो भुञ्जंस्तुञ्जीनोऽरञ्जयत्प्रजाः ॥११॥
दंपतिभ्यामियं ताभ्यामभूष्यत वसुंधरा । गङ्गामृगाङ्कखण्डाभ्यां जटाभूरिव धूर्जटेः ॥१२॥
मण्डलं साध्वधत्तां तौ नानावर्णमनोरमम् । शतह्रदापयोवाहौ माहेन्द्रमिव कार्मुकम् ॥१३॥
चक्राते च महाभागौ विश्वमाभरणं भुवः । तुङ्गेश्वरं हरावासं कतिकाख्यं च पत्तनम् ॥१४॥
कश्चिन्मडवराज्यान्तःस्थाने चण्डातपोज्ज्वले[1] । तत्प्रभावेण फलितं वृक्षैस्तल्लक्षणरोपितैः ॥१५॥
नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः । द्वैपायनमुनेरंशस्तत्काले चन्दकोऽभवत् ॥१६॥
तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता । प्रजासु दुःसहा जातु व्यापद्दैवी[1] व्यजृम्भत ॥१७॥
पाकोन्मुखशरच्छालिच्छन्नकेदारमण्डले । मासि भाद्रपदेऽकस्मात्पपात तुहिनं महत् ॥१८॥
तस्मिन्विभ्रक्षयोद्युक्तकालाट्टहसितोपमे । न्यमज्जच्छालयः सार्कं प्रजानां जीविताशया ॥१९॥
अथासीत्क्षुत्परिक्षामजनप्रेतकुलाकुलः । प्राकारो[1] निरयस्येव घोरो दुर्भिक्षविप्लवः ॥२०॥
पत्नीमार्ति सुतं स्नेहं पितृदाक्षिण्यमातुरः । कुक्षिंभरिः क्षुदुत्क्षामो विसस्माराखिलो जनः ॥२१॥

---

१. ¹) Thus corr. by $A_2$ from $A_1$ °भो अभुजन°.—²) Thus corr. by $A_3$ from $A_1$ प्रतिगृह्णतः.—³) $A_4$ gloss अन्वस्ता.
२. ¹) $A_2$ gloss [illegible]. ४. ¹) $A_2$ gloss दुर्गाज्याम्. ६. ¹) $A_2$ स इति भ्रम°; R G follow this reading and write °श्रितः.—²) $A_2$ विसंवादक°. १४. ¹) $A_2$ gloss [illegible]. १५. ¹) $A_2$ °तपोल्बणे. १६. ¹) Thus $A_2$, also R G; $A_1$ °काले.
१७. ¹) $A_2$ gloss दैवी: कृतत्वादेवानां संबन्धिनी दैवी. २०. ¹) Thus $A_1$; altered by $A_2$ into प्रकारो.

क्षुत्पापाद्व्यस्मरल्लज्जामभिमानं कुलोन्नतिम् । अन्नार्जनक्रियासक्तो लोको लक्ष्मीकटाक्षितः ॥२२॥
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता । पुत्रो वा पितरं त्यक्त्वा चकार स्वस्य पोषणम् ॥२३॥
त्वगस्थिशेषे बीभत्से स्वदेहेऽहंक्रियावताम् । अभूद्भोज्यार्थिनां युद्धं प्रेतानामिव देहिनाम् ॥२४॥
25 रूक्षाभिभाषी क्षुत्क्षामो घोरो विश्वक्षिणी क्षिपन् । एक एको जगज्जीवैरियेष स्वात्मपोषणम् ॥२५॥
तस्मिन्महाभये घोरे प्राणिनामतिदुःसहे । ददृशे लोकनाथस्य तस्यैव करुणार्द्रता ॥२६॥
निवारितप्रतीहारः स रक्षौषधिशोभिना । दर्शनेनैव दीनानामलक्ष्मीक्रममच्छिनत् ॥२७॥
सपत्नीको निजैः कोशैः संचयैर्मन्त्रिणामपि । क्रीतान्नः स दिवारात्रं प्राणिनः समजीवयत् ॥२८॥
अटवीषु श्मशानेषु रथ्यास्ववसथेषु च । क्षुत्क्षामः क्ष्माभुजा तेन नहि कश्चिदुपेक्ष्यत[1] ॥२९॥
30 ततो निःशोषितधनः क्षीणान्नां वीक्ष्य मेदिनीम् । क्षपायामेकदा देवीमेवमूचे स[1] दुःखितः ॥३०॥
देव्यस्मदपचारेण ध्रुवं केनापि दुस्तरा । जाता निरपराधानां जनानां व्यापदीदृशी ॥३१॥
धिङ्मामधन्यं यस्याग्रे लोकोऽयं शोकपीडितः । पश्यत्यशरणामुर्वीमनुपायो विपद्यते ॥३२॥
प्रजा निःशरणा एता अन्योन्यं बान्धवोज्झिताः । अरक्षतो भयेऽमुष्मिन्किं कार्यं जीवितेन मे ॥ ३३ ॥
यथा कथंचिल्लोकोऽयं दिनान्येतानि यत्नतः । मयातिवाहितः सर्वो न च कोऽपि व्यपद्यत ॥३४॥
35 अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिता । निष्किंचना च संजाता पृथिवी गतगौरवा ॥३५॥
नदिमाः सर्वतो मग्ना दारुणे व्यसनार्णवे । उपायः कतमस्तावत्समुद्धर्तुं क्षमः प्रजाः ॥३६॥
निरालोको हि लोकोऽयं दुर्दिनग्रस्तभास्करः । कालरात्रिकुलैर्विश्वक्परीत इव वर्तते ॥३७॥
हिमसंघातदुर्लङ्घ्यक्षितिभृद्रुद्धनिर्गमाः[1] । बद्धद्वारकुलाय[2]स्थखगवद्विवशा जनाः ॥३८॥
शूराश्च मतिमन्तश्च विद्यावन्तश्च जन्तवः । कालदौरात्म्यतः पश्य जाता निहतयोग्यताः ॥३९॥
आशाः काञ्चनपुष्पकुड्मलकुलच्छन्ना न काः क्ष्मातले सौजन्यामृतवर्षिभिस्तिलकितं सद्भिर्न किं मण्डलम् ।
40 पन्थानः सुचिरोपचाररुचिरैर्व्याप्ता न कैः संस्तुतैस्तेषामेव वसन्ति निह्नुतगुणाः कालेन ये[3] मोहिताः ॥४०॥
तदेव गलितोपायो जुहोमि ज्वलने तनुम् । न तु द्रष्टुं समर्थोऽस्मि प्रजानां नाशमीदृशम् ॥४१॥
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते । पौरान्पुत्रानिव पुरः सर्वतो वीक्ष्य निर्वृतान् ॥४२॥
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा । निपत्य तल्पे निःशब्दं[1] रुरोद पृथिवीपतिः ॥४३॥
निवातस्तिमितैर्दीपैरुद्ग्रीवैः कौतुकादिव । वीक्षमाणाय तं देवी जगाद जगतीभुजम् ॥४४॥
45 राजन्प्रजानां कुकृतैः कोऽयं मतिविपर्ययः । येनेतर इव स्वैरमधीरोचितमीहसे ॥४५॥
यदसाध्यानि दुःखानि छेत्तुं न प्रभविष्णुता । तन्महीपाल महतां महत्त्वस्य किमङ्कनम् ॥४६॥
कः शक्रः कतमः स्रष्टा वराकः कतमो यमः । सत्यव्रतानां भूपानां कर्तुं शासनलङ्घनम् ॥४७॥
पत्यौ भक्तिर्व्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतम् । प्रजानुपालनेऽनन्यकर्मता भूभृतां व्रतम् ॥४८॥

---

२२. [1]) $A_1$ लोकोऽलक्ष्मी°. २९. [1]) Thus corr. by $A_1$ from $A_1$ उपेक्ष्यते. ३०. [1]) Thus corr. by $A_1$ from $A_1$ सु°. ३८. [1]) $A_3$ हिमसंघातदुर्लक्ष्यक्षि°.—[2]) $A_1$ gloss नीडं ४०. [1]) $A_3$ प्रचुरी°.—[2]) $A_3$ संस्तुतैरेषां°, with gloss एषां शूरमतिमदादीनाम् निह्नुतगुणा ये शूराद्या अत्र अस्मिन्नेव देशे वसन्ति देशान्तरं न गच्छन्ति ते कालेन मोहिताः.—[3]) $A_2$ ते. ४३. [1]) Thus corr. by $A_1$ from $A_1$ °शङ्कं.

उचितं प्रतिमानस्य क्व विपर्येति मद्वचः । प्रजापाल प्रजानां ते नास्त्येव सुकृतं भयम् ॥४९॥
इति संरम्भतः प्रोक्ते तयानुध्याय देवता । प्रतिगेहं गतप्राणः कपोतनिवहोऽपतत् ॥५०॥ 50
प्रातस्तन्नृपतिर्वीक्ष्य व्यरंसीन्मरणोद्यमात् । प्रजाश्च प्रत्यहं प्रीतैः कपोतैर्जीवितं दधुः ॥५१॥
वस्त्वन्तरं किमपि तत्साध्वी नूनं ससर्ज सा । जगतां जीविताकाङ्क्षी न कपोतास्तु तेऽभवन् ॥५२॥
मादृशां नहि निर्व्याजप्राणिकारुण्यशालिनाम् । हिंसया धर्मचर्यायाः शक्यं क्वापि कलङ्कनम् ॥५३॥
अभवन्निर्मलं व्योम देवीकृत्यैः सह क्रमात् । साकं भूपालशोकेन दुर्भिक्षं च शमं ययौ ॥५४॥
सा भूमिविभवोदग्रमग्रहारं द्विजन्मनाम् । सती कर्लाभुवं चक्रे रामुषं पापकल्मषा ॥५५॥ 55
वर्षैः षट्त्रिंशता शान्ते पत्यौ विरहजो ज्वरः । तत्यजे ज्वलनज्वालामालिनप्रच्छदे तया ॥५६॥
सा यत्र शुचिचारित्रा विपन्नं पतिमन्वगात् । स्थानं जनैस्तद्वाक्पुष्टाटवीत्यद्यापि [illegible]ते ॥५७॥
चारुचारित्रया तत्र तया सत्त्रेऽवतारिते । नानापथागतानाथसार्थैरद्यापि भुज्यते ॥५८॥
आभ्यामभ्यधिकं कर्तुं शक्तिः कस्येति निश्चितम् । विधित्स्यारोचकी धाता नापत्यं निर्ममे तयोः ॥५९॥
वेधाः परां धुरमुपैति परीक्षकाणामिक्षोः फलप्रजननेन कृतश्रमो यः ।
विस्मारितोऽङ्कुरसुधारसयोग्यतां तं तस्मादुदेत्य किमिवाभ्यधिकं विदध्यात् ॥६०॥ 60
दीर्घदुर्दिननष्टार्के राष्ट्रमात्मापचारतः । ज्ञात्वा राज्यमिसाहेहे सा चकारेति केचन ॥६१॥
ततोऽन्यकुलजो राजा विजयोऽष्टावभूत्समाः । पत्तनेन परीतं यश्चकार विजयेश्वरम् ॥६२॥
सुतो महीमहेन्द्रस्य जयेन्द्रस्तस्य भूपतेः । क्ष्मामाजानुभुजो राजा बुभोजाथ पृथुप्रथः ॥६३॥
अलोलकीर्तिकल्लोलदुकूलवलनोज्ज्वलाम् । बभार यद्भुजस्तम्भो जयश्रीसालभञ्जिकाम् ॥६४॥
तस्याभूदद्भुतोदन्तस्वभक्तिविभूषितः । राज्ञः संधिमतिर्नाम मन्त्री मतिमतां वरः ॥६५॥ 65
नास्त्युपायः स संसारे कोऽपि योऽपोहितुं क्षमः । भूपालमत्तकरिणामेषां चपलकर्णताम् ॥६६॥
अत्यद्भुतमतिः शङ्क्यः सोऽयमुत्केति यद्विटैः । तस्मिन्धीसचिवे द्वेषस्तेनाग्राहि भूभुजा ॥६७॥ युग्मम् ॥
निवारितप्रवेशोऽथ सकोपस्तमहेतुकम् । निनाय हृतसर्वस्वं यावदायुर्दरिद्रताम् ॥६८॥
तस्य भूपतिविद्वेषभीष्मोष्मपरिशोषिणः । आप्यायं राजपुरुषा वार्तयापि न चक्रिरे ॥६९॥
गिरं गभीरो गृह्णाति क्ष्माभृद्यावत्तदग्रगाः । उक्तानुवादिनस्तावद्[illegible] प्रतिरवा इव ॥७०॥ 70
स तु राजविरुद्धत्वदारिद्र्याभ्यां न विव्यथे । गतस्पृहतया प्रीतः प्राप्तया हरसेवया ॥७१॥
अथ भाव्यर्थमाहात्म्यात्प्रथमे प्रतिमन्दिरम् । राज्यं संधिमतेर्भावीत्यश्रुतापि सरस्वती ॥७२॥
नाचोदिता वाक्चत्वरस्थानेभ्यः श्रुतवान्नृपः । ततः संभूतसंत्रासः कारावेश्मनि तं न्यधात् ॥७३॥

---

५०. [1]) A₂ [illegible]. ५२. [1]) A₁ [illegible]. ५५. [1]) A₂ gloss [illegible].—[2]) A₂ gloss रामोष्. ६०. [1]) Thus A₂; A₁ [illegible]; G [illegible]. explained by [illegible] and subsequently corrected into [illegible].—[2]) A₂ gloss [illegible]. ६४. [1]) G आलोल°.—[2]) Thus corr. by A₂ from A₁ °श्री°.—[3]) A₂ gloss [illegible]. ६६. [1]) A₁ °[illegible]. ६८. [1]) A₁ [illegible]. ७२. [1]) Thus corr. by A₂ from A₁ प्रथम°; A₂ had explained in margin the original reading by a note which has been struck out: [illegible] (sic) [illegible]. ७३. [1]) Thus corr. by A₂ from A₁ सद्भूत°.—[2]) Thus corr. by A₂ from A₁ [illegible].

तत्र तस्योपनिगडैः पीडिताङ्गैर्विशुष्यतः । पूर्णीभूतश्रमो वर्षो भूपतेश्चायुषोऽवधिः ॥७४॥

75 निष्पुत्रः स महीपालो मुमूर्षुर्दाहमारधे । रोगोत्थया पीडया च चिन्तया च तदीयया ॥७५॥

ऊष्मायमाणो विद्वेषवह्निना ज्वलतानिशम् । न विना तद्वधं मेने भवितव्यप्रतिक्रियाम् ॥७६॥

भाव्यर्थस्याबुधाः[1] कुर्युरुपायं स्थगनाय यम् । स एवापावृतं द्वारं श्रेयं दैवेन कल्पितम् ॥७७॥

दग्धाङ्गारकदम्बके विलुठतः स्तोकोन्मिषत्तेजसो वेधा वह्निकणस्य शक्तिमतुलामाधातुकामो हठात् ।
तन्निर्वापणमिच्छतः प्रतनुते पुंसः समीपस्थिते[1] संतापद्रुतभूरिसर्पिषि घटे पानीयकुम्भभ्रमम् ॥७८॥

अथ राजाज्ञया क्रूरैर्वधकर्माधिकारिभिः । निशि संधिमतिः शूले समारोप्य विपादितः ॥७९॥

80 प्रोतशूले श्रुते तस्मिञ्शोकशङ्कुर्महीपतेः । निरगाद्रोगभग्नस्य पूर्वं पश्चात्तु जीवितम् ॥८०॥

सप्तत्रिंशतिवर्षेषु यातेष्वस्मिन्निरन्वये । प्रशान्तभूमिपालाभूत्कतिचिद्दिवसानि भूः ॥८१॥

अथ संधिमतिं बुद्ध्वा तथा व्यापादितं गुरोः । ईशानाख्यस्य हृदयं विवशं वशिनोऽप्यभूत् ॥८२॥

शिरीष इव संसारे फलोच्छेदे मनीषिणाम् । हन्तानृशंस्यं तद्वृन्तमिवैकमवशिष्यते ॥८३॥

स श्मशानभुवं प्रायादनाथस्येव शुष्यतः । कर्तुं विमथिनस्तस्य स्वोचितामन्त्यसत्क्रियाम् ॥८४॥

85 तं चास्थिशेषमद्राक्षीत्कृष्यमाणं बलाद्वृकैः । शूलमूलावबद्धास्थिखण्डावष्टम्भनिश्चलम् ॥८५॥

समीरणसमाकीर्णमुण्डरन्ध्रायनिर्गतैः[1] । ध्वनितैरनुशोचन्तमिवावस्थां तथाविधाम् ॥८६॥

हा वत्स द्रष्टुमीदृक्ते जीवाम्यद्येति वादिना । तस्याकृष्यत शूलान्तःप्रोतं तेनाथ कीकसम् ॥८७॥

वेष्टिताङ्गः शिरःशीर्णैस्त्रस्तकचैर्धूलिधूसरैः । अनैषीत्तं स कङ्कालं वारयन्भषतो वृकान् ॥८८॥

उचितां सत्क्रियां कर्तुं ततस्तस्य समुद्यतः । भाले विधातृलिखितं श्लोकमेतमवाचयत् ॥८९॥

90 यावज्जीवं दरिद्रत्वं दश वर्षाणि बन्धनम् । शूलस्य पृष्ठे मरणं पुना[1] राज्यं भविष्यति ॥९०॥

पादत्रयस्य दृष्टार्थः[1] श्लोकस्यासीत्स योगवित् । द्रष्टव्ये तुर्य[2]पादार्थ[3]मत्यये कौतुकान्वितः ॥९१॥

अचिन्तयच्च संभ्रान्तः कथमेतद्भविष्यति । उवाच च विधेः शक्तिमचिन्त्यां कलयंश्चिरम्[1] ॥९२॥

तत्तत्कर्मव्यतिकरकृतः पारतन्त्र्यानुरोधात्सज्ज्ञाः सर्वे व्यवसितहठोन्मूलनाय प्रयत्नात् ।
चित्रं तत्राप्युदयति विधेः शक्तिरत्यद्भुतेयं यन्माहात्म्याद्विविधघटनासिद्धयो निर्निरोधाः ॥९३॥

मणिपूरपुरे पार्थं निहतं समजीवयत् । फणिकन्याप्रभावेण सर्वाश्चर्यनिधिर्विधिः ॥९४॥

95 द्रोणपुत्रास्त्रनिर्दग्धं मातुर्गर्भे परीक्षितम् । जीवयन्कृष्णमाहात्म्याद्धाता धुर्योऽधिकारिणाम् ॥९५॥

कथं भस्मीकृतं दैत्यैर्नागांस्तार्क्ष्येण भक्षितान् । पुनर्जीवयितुं को वा देवादन्यः प्रगल्भते ॥९६॥

इत्युक्त्वा भाविनोऽर्थस्य द्रष्टुं सिद्धिं समुद्यतः । तत्रैव बद्धवसतिः कङ्कालं स ररक्ष तम् ॥९७॥

अथार्धरात्रे निर्निद्रस्तयैवाद्भुतचिन्तया । धूपाधिवासमीशानो घ्रातवान्दिव्यमेकदा ॥९८॥

उच्चण्डलाडनादण्डोद्घृष्टघण्टौघटांकृतैः[1] । चण्डैर्डमरुनिर्घोषैर्[2]घर्घरं श्रुतवान्ध्वनिम् ॥९९॥

---

७७. [1]) Thus corr. by later hand from $A_1$ °र्थस्य बुधाः. ७८. [1]) Another hand alters this to °स्थितेः. ८६. [1]) $A_2$ °समापूर्णमु° with gloss शिरः over मुण्ड. ९०. [1]) Thus $A_1$; $A_2$ पुनराज्यं. ९१. [1]) Thus corr. by later hand from $A_1$ °दृष्टार्थे.— [2]) $A_2$ gloss चतुर्थ — [3]) Thus corr. by later hand from $A_1$ °पादार्थे. ९२. [1]) Thus corr. by $A_2$ from $A_1$ कार्यंशे°. ९९. [1]) $A_2$ gloss ताडना अन्तर्गता शलाका आण्डु इति भाषया.— [2]) $A_2$ °डमरुघोषैश्च.

तापसैर्भस्मरुद्राक्षजटाजूटाङ्कितैर्बभौ । तस्य माहेश्वरी पर्षदिव भूमिपतेः सभा ॥१२७॥
शिवलिङ्गसहस्रस्य प्रतिष्ठाकर्मणि प्रभोः । प्रतिज्ञा प्रत्यहं तस्य नाभूद्विघटिता क्वचित् ॥१२८॥
प्रमादात्तदनिष्पत्तौ शिलामुत्कीर्य कल्पिता । सहस्रलिङ्गी तद्भृत्यैः सर्वतोद्यापि दृश्यते ॥१२९॥
130 तासु तासु स वापीषु लिङ्गव्याजादरोपयत् । स्वपुण्यपुण्डरीकाणां[1] जन्मनेऽक्षपरंपराम् ॥१३०॥
स्थाने स्थाने जलान्तश्च बहुसंख्यैर्निवेशितैः । अनयन्नर्मदाभङ्गिं शिवलिङ्गैस्तरङ्गिणीः ॥१३१॥
प्रतिलिङ्गं महाग्रामाः प्रत्यपाद्यन्त तेन ये । पर्षदामद्य तद्भोगः कालेनाप्यविनाशितः ॥१३२॥
अकरोत्स महाहर्म्यैर्महालिङ्गैर्महावृषैः । महात्रिशूलैर्महतीं महामाहेश्वरो महीम् ॥१३३॥
कृत्वा संधीश्वरं देवसंधानपितृकानने । ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं हरम् ॥१३४॥
135 भेदां च भीमादेवीं च देशांस्तांस्तान्पदेपदे । स मठप्रतिमालिङ्गैर्हर्म्यैर्निन्ये महार्घताम् ॥१३५॥
स्वयंभूमिव तीर्थैश्च पूतं भक्तिविभूषितः । स एव भोक्तुमत्रासीत्पार्थैः कश्मीरमण्डलम् ॥१३६॥
जातस्य निर्झराम्भोभिः पुष्पलिङ्गार्चनोत्सवे । राज्ञस्तस्य वनोर्वीषु मासः पुष्पाकरो ययौ ॥१३७॥
स चातिरम्यः काश्मीरो ग्रीष्मस्त्रिदिवदुर्लभः । हिमलिङ्गार्चनैः प्रायाद्वनान्तेषु कृतार्थताम् ॥१३८॥
फुल्लाब्जषण्डखण्डाशाः प्राप्य पुष्करिणीतटीः । लक्ष्मीसखः स खण्डेन्दुचूडध्यानपरोऽभवत् ॥१३९॥
140 नीलोत्पलवतीर्वापीरगस्त्योदयनिर्विषाः । अवगाह्य हरार्चाभिः शरदं निर्विवेश सः ॥१४०॥
सार्धं तपोधनैस्तैस्तैर्भजतो जागरोत्सवान् । तस्याभूवन्भुवो भर्तुरमोघा माघरात्रयः ॥१४१॥
अत्यद्भुतं राज्यलाभमित्थं सफलयन्कृती । पञ्चाशतं त्रिवर्षोनामत्यक्रामत्स वत्सरान् ॥१४२॥
शमव्यसनिनस्तस्य राज्यकार्याण्यपश्यतः । तस्मिन्काले प्रकृतयो विरागं प्रतिपेदिरे ॥१४३॥
अन्वैष्यत नृपस्ताभिः कश्चिद्राज्याय भूभुजे । राजपुत्रो जिगीषुश्च श्रीमान्यौधिष्ठिरे कुले ॥१४४॥
145 जुगोप गोपादित्याख्यं कश्मीरेन्द्रजिगीषया । युधिष्ठिरप्रपौत्रं हि गान्धाराधिपतिस्तदा ॥१४५॥
वसन्नप्राप्तसाम्राज्यः स तत्र तनयं क्रमात् । अवाप लक्षणैर्दिव्यैरमोघं मेघवाहनम् ॥१४६॥
स तत्र पितुरादेशाद्वैष्णवान्वयजन्मनः । राज्ञः प्राग्ज्योतिषेन्द्रस्य ययौ कन्यास्वयंवरे ॥१४७॥
तत्र तं वारुणं छत्रं छायया राजसंनिधौ । भेजे वरस्रजा राजकन्यका चामृतप्रभा ॥१४८॥
तेन तस्य निमित्तेन वृद्धिमागामिनीं जनाः । अजानन्नम्बुवाहस्य पाश्चात्येनेव वायुना ॥१४९॥
150 राज्ञा हि नरकेणैतद्वरुणादुष्णवारणम् । आनीतमकरोच्छायां न विना चक्रवर्तिनम् ॥१५०॥
तमन्तिके पितुः प्राप्तं पत्न्या लक्ष्म्या च संश्रितम् । श्रुत्वा निमन्त्रयामासुर्मन्त्रिणो वंशयोग्यया ॥१५१॥
अथार्यराजो विज्ञाय स्वराज्यं भेदजर्जरम् । प्रतिपक्षे न शक्तोपि तस्थौ तु त्यक्तुमुत्सुकः ॥१५२॥
अचिन्तयच्च सत्यं मे संप्रीतो भूतभावनः । सिद्धिविघ्नानमून्दीर्घानपाकर्तुं समुद्यतः ॥१५३ ॥
कृत्ये बहुनि निष्पाद्ये प्रमात्कौसीद्यमाश्रयन्[1] । प्रावृषीवाध्वगो दिष्ट्या मोहितोस्मि न निद्रया ॥१५४॥
155 स्वकाले[1] त्यजता लक्ष्मीं विरक्तां[2] बन्धकीमिव । हठनिर्वासनक्रीडा दिष्ट्या नासादिता मया ॥१५५॥

---

१३०. [1]) Thus corr. by $A_2$ from $A_1$ °पुण्डरीकाणाम°. १३४. [1]) The *aksharas* न्नो supplied by $A_2$ in space left by $A_1$.— [2]) $A_2$ gloss ईशभारू इति प्रसिद्धस्थले. १३६. [1]) $A_2$ °विशेषतः.—[2]) Thus $A_2$ ; $A_1$ पात्रः.—[3]) Thus corr. by later hand from $A_1$ काश्मीर°. १३९. [1]) Thus corr. by later hand from $A_1$ चूडाध्या°. १४०. [1]) Thus corr. by $A_1$ from °रुग्रहस्त:. १४६ [1]) Thus $A_2$; $A_1$ वसन्नपरास्तसा°. १५०. [1]) $A_2$ कृपा. १५४. [1]) $A_2$ glosses आलस्यम् and — न कर्म कौसीद्यं.—[2]) Thus corr. by $A_2$ from $A_1$ °भवत्. १५५ [1]) Thus $A_1$ ; $A_2$ स्वकुले.—[2]) Thus corr. by $A_2$ from $A_1$ सरक्ताम्.

शैलूषस्येव मे राज्यरङ्गेस्मिन्नल्पमस्थिरम् । निर्व्यूढमपि वैरस्यं दृष्ट्वा न प्रेक्षका गताः ॥१५६॥

विदग्धा सदैव वैमुख्यमुपैरुद्योगपङ्क्तिभिः । त्यागक्षणे न भीतोस्मि विकत्थन इवाहवे ॥१५७॥

इति संचिन्तयन्नन्तः सर्वत्यागोन्मुखो नृपः । मनोराज्यानि कुर्वाणो दरिद्र इव पिप्रिये ॥१५८॥

अन्येद्युः प्रकृतीः सर्वाः संनिपात्य सभान्तरे । ताभ्यः प्रत्यर्पयन्न्यासमिव राज्यं सुरक्षितम् ॥१५९॥

उज्झितं स्वेच्छया तस्य प्रयत्नेनापि नाशकत् । तं स्वीकारयितुं कश्चित्फणीन्द्रमिव कञ्चुकम् ॥१६०॥ 160

अर्धालिङ्गमुपादाय सोथ मायादुकूलकः । धौतवासा निरुष्णीषः पद्भ्यामेव प्रजेश्वरः ॥१६१॥

तस्य पादार्पितदृशो व्रजतो मौनिनः प्रभोः । पन्थानं जगृहुः पौरा निःशब्दजनवत्सलः ॥१६२॥

स विलङ्घितगव्यूतिरुपविश्य तरोरधः । जनमेकैकमुद्बाष्पं न्यवर्तयत सान्त्वयन् ॥१६३॥

पथि शिखरिणां मूले मूले विलम्ब्य जहज्जनान्मितपरिकरो गच्छन्नूर्ध्वं क्रमात्समदृश्यत ।
गहनवसुधाः संपूर्णोर्मिर्व्रजन्स निजास्पदादब्द इव विनिर्यातः स्तोकैः कृतानुगमो जनैः ॥१६४॥

निःशेषं निकटात्स लोकमटवीमध्ये निरुन्धन्पदं शोकावेशसबाष्पगद्गदपदं संमान्य प्रोत्साह्य च ।
भूर्जत्वक्परिरोधमर्मरमहाविश्राणसिद्धाध्वगश्रेणीमौलिमणिप्रभोज्ज्वलगुहागेहं जगाहे वनम् ॥१६५॥ 165

अथ वनसरसीतटद्रुमाधः पुटकघटोदरसंभृताम्बुपूराम् ।
वसतिमकृत वासरावसाने शुचितरुपल्लवकल्पितोरुतल्पाम् ॥१६६॥

शृङ्गासक्तसितातपाः शबलितच्छायाभुवः शाद्वलैरुत्फुल्लामलमल्लिकातलमिलत्सुप्तव्रजस्त्रीजनाः ।
सश्वासा वनपालवेणुरणितोन्मिश्रैः प्रपाताम्बुभिः श्रान्तं दूरपथमागतास्तमनयन्विश्रामभूराद्रयः ॥१६७॥

वनकरिरसितैः पदे पदे स प्रतिभटतां पटहध्वनेर्दधानैः ।
अमनुत रटितैश्च कर्करेटोः परिगलितां गमनोन्मुखस्त्रियामाम् ॥१६८॥

अन्येद्युर्विधिवदुपास्य पूर्वसंध्यामासन्ने नलिनसरस्यपास्तनिद्रः ।
क्ष्मापालः परिचितसोदराम्बुतीर्थं नन्दीशाध्युषितमवाप भूतभर्तुः ॥१६९॥

नन्दिक्षेत्रे त्रिभुवनगुरोः सोमतस्तत्र यावत्तस्थौ तावत्स्वयमभिमताश्रमे जायते स्म ।
भस्मस्मेरः सुघटितजटाजूटबन्धोक्षसूत्री रुद्राक्षाङ्को जरठमुनिभिः सस्पृहं वीक्ष्यमाणः ॥१७०॥ 170

आरब्धश्रीकण्ठव्रतजनितमहासत्क्रियो भैक्ष्यहेतोर्भिक्षाग्रामोद्यतासु प्रतिमुनिनिलयं संभ्रमात्तापसीषु ।
वृक्षैर्भिक्षाकपाले शुचिफलकुसुमश्रेणिभिः पूर्यमाणे मान्यो वैराग्ययोगेप्यनुपनतपरप्रार्थनालाघवोभूत् ॥१७१॥

६ ॥ १७१ ॥ आदितः ५३ ॥ ग्रं ५४३ ॥

इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां द्वितीयस्तरङ्गः ॥

शतद्वये वत्सराणामष्टाभिः परिवर्जिते । अस्मिन्द्वितीये व्याख्याताः षट्प्रख्यातगुणा नृपाः ॥

---

१५६. [1]) Thus $A_1$; the *v. l.* of $A_2$ निर्व्यूढवपि has been struck out again; G R निर्व्यूढमपि. १६०. [1]) Thus corr. by later hand from $A_1$ तं च. १६४. [1]) Thus corr. by $A_2$ from $A_1$ स्तोकानुगमो. १६५. [1]) Thus $A_2$; $A_1$ निरुन्धत्पदं.— [2]) Thus corr. by later hand from $A_1$ भूर्जत्वक्प°.—[3]) Thus corr. by $A_2$ from $A_1$ मर्मर°.—[4]) The *akshara* नि supplied by $A_2$ in space left by $A_1$.—[5]) The gloss श्रीनगरी, written by $A_4$ at the foot of the page, probably refers to this word. १६७. [1]) Thus corr. by $A_2$ from $A_1$ शाद्वलैश्छायाभुव°; the latter reading repeated in margin by $A_3$.—[2]) Thus G *sec. manu* and P; A R C °पालेषु°.—[3]) $A_2$ gloss पर्वताः. १६८ [1]) $A_2$ वनकरि° —[2]) Thus corr. by later hand from $A_1$° ध्वनेर्°.— १७०. [1]) $A_1$ अवस्तावत्; supplemented as above by $A_2$. १७१. [1]) $A_2$ आरब्धश्री°.—[2]) Thus corr. by $A_2$ from $A_1$ °श्रोण्यो.— [3]) $A_1$ writes °प्यनुपनत°, with figures indicating transposition.

## ॥ तृतीयस्तरङ्गः ॥

मुग्धेभाजिनभस्म कुम्भकुहरे मुक्ताः क्षुधामोचिताः किं भालज्वलनेन कज्जलमतः स्वीकार्यमक्ष्णोः कृते ।
संधाने वपुरर्धयोः प्रतिपदमेवं निषेधेप्सुभिः कर्तव्ये प्रियवाचरानुसरणोद्युक्तो हरः पातु वः ॥१॥

अथोत्सवसमुद्दाममानिन्युर्मेघवाहनम् । गान्धारविषयं गत्वा सचिवाधिष्ठिताः प्रजाः ॥२॥

एकप्रजस्य[1] भूभर्तुः पश्चाल्लोकानुरञ्जनम् । तस्याज्ञायि जनैर्धौतक्षौमक्षालनसंनिभम् ॥३॥

स पुनर्बोधिसत्त्वानामपि सत्त्वानुकम्पिनाम् । चर्यामुदात्तचरितैरस्पर्धत महाशयः ॥४॥

5 तस्याभिषेक एवाज्ञां धारयन्तोधिकारिणः । सर्वतोमार[1]मर्यादापटहानुदघोषयन् ॥५॥

कल्याणिना प्राणिवधे तेन राज्ञा निवारिते । निष्पापां प्रापिता वृत्तिं स्वकोशात्सौनिकादयः ॥६॥

तस्य राज्ये जिनस्येव मारविद्वेषिणः प्रभोः । क्रतौ घृतपशुः पिष्टपशुर्भूतबलावभूत् ॥७॥

स मेघवननामानमग्रहारं विनिर्ममे । मयुष्टग्रामकृत्पुण्यज्येष्ठं[1] मेघमठं तदा[2] ॥८॥

भोगाय देश्य[1]भिक्षूणां वल्लभास्यामृतप्रभा । विहारमुच्चैरमृतभवनाख्यमकारयत् ॥९॥

10 देशैकदेशाल्लो[1]नाम्नः प्राप्तस्तस्याः पितुर्गुरुः । स्तुन्पा[2] तत्रापया भोक्ता लोस्तोन्पास्तूपकार्यकृत् ॥१०॥

चक्रे नडवने राज्ञो यूक[1]देव्यभिधा वधूः । विहारमद्भुताकारं सपत्नीस्पर्धयोद्यता ॥११॥

अर्धे यस्मिन्भिक्षवः शिक्षाचारास्तयार्पितास्तया । अर्धे गार्हस्थ्यगर्ह्याश्च सस्त्रीपुत्रपशुश्रियः ॥१२॥

अथेन्द्रदेवीभवनमिन्द्रदेव्यभिधा व्यधात् । विहारं सचतुःशालं स्तूपं भूपप्रियापरा ॥१३॥

अन्याभिः खादनासम्मा[1]प्रमुखाभिर्निजाख्यया । देवीभिस्तस्य महिता विहारा बहवः कृताः ॥१४॥

15 अर्वाक्कालोद्भवस्यापि राज्यकालेऽस्य भूपतेः । न्यक्कृतादिनृपोदन्तैर्वृत्तान्तैरद्भुतोऽभवत् ॥१५॥

स बहिर्विहरञ्जातु भूभृद्भीतैरुदीरितम् । चौरश्चौरोयमित्याराच्छृणोत्क्रन्दितध्वनिम् ॥१६॥

कः कोत्र बध्यतां चौर इत्युक्ते तेन सक्रुधा । शशामाक्रन्दितध्वानो न च चौरो व्यभाव्यत ॥१७॥

पुनर्द्वित्रैर्दिनैस्तस्य निर्गतस्याग्रतस्ततः । अभवन्नभयार्थिन्यो द्वित्रा दिव्यप्रभाः स्त्रियः ॥१८॥

ताः संभूतेप्सितास्तेन रक्षाधीशेन कृपालुना । अभ्यभाषन्त सीमन्तपुञ्जिताञ्जलयो वचः ॥१९॥

20 देव दिव्यप्रभावेण भुवने भवता भृते । अपरस्माद्भयं जातु कस्य स्यात्करुणानिधे ॥२०॥

तदानीं तोयदा भूत्वा छादयन्तो नभस्तलम् । अकाण्डकाण्डपाताशङ्किभिः कार्षकैर्नृप ॥२१॥

पक्वशालिवनस्फीति[1]रक्षाक्षुभितमानसैः । नागास्त्वत्कोपसंरम्भभूमितां[2] गमिताः प्रभो ॥२२॥

---

३. [1]) $A_2$ gloss मेघस्य. ५. [1]) $A_2$ gloss अमार- अहिंसा. ८. [1]) $A_2$ °ज्येष्ठो.—[2]) $A_2$ तथा. ९. [1]) Thus $A_2$; $A_1$ भोज्य°.
१०. [1]) Thus $A_1$; corr. by later hand into देशैक°.—[2]) $A_2$ स्तुन्पा. ११. [1]) $A_2$ मूल°. १४. [1]) $A_2$ gloss मृतकीर्तिः.
२२. [1]) A °स्फाति°.—[2]) $A_1$ भूमि ते.

तेऽस्माकं पतयश्चौरचौर इत्यार्तभाषितम् । श्रुत्वा देवेन बध्यन्तामित्यवादि तदा क्रुधा ॥२३॥
तदा त्वदाज्ञाभावेन न्यपतन्पाशवेष्टिताः । प्रसादः क्रियतां तेषामस्मत्करुणयाधुना ॥२४॥ चक्कलकम् ॥
तदाकर्ण्याभवद्राजा प्रसादविकसद्दाननः । सर्वे ते बन्धनाद्यातास्त्यज्यन्तामिति जल्पितः ॥२५॥
तथा तस्याज्ञया राज्ञो नागा विधुतबन्धनाः । प्रणम्य चरणौ भूपे प्रययुः सपरिग्रहाः ॥२६॥
अथ साधयितुं भूपानाज्ञां हिंसानिवृत्तये । स दिग्जयाय निर्व्याजधर्मैश्वर्यो विनिर्ययौ ॥२७॥
अभूदभीतजनतावेक्षणश्लाघ्यविक्रमः । स्पृहणीयो जनस्यापि तदीयविजयोद्यमः ॥२८॥
प्रभावविजितान्कृत्वा सोऽहिंसादीक्षितान्नृपान् । अर्णवान्तं पत्युरम्भसामवापाहववर्जितः ॥२९॥
तत्र तालीवनच्छायासुखविश्रान्तसैनिकः । बुद्धिं द्वीपान्तराक्रान्तौ क्षणमन्तर्व्यचिन्तयत् ॥३०॥
अथ वेलावनोपान्तात्तेनार्ताक्रन्दितध्वनिः । मेघवाहनराज्येऽपि हतोऽहमिति शुश्रुवे ॥३१॥
तमायःशङ्कुनेवान्तर्भणितः स द्रुतं ततः । संचारिणातपत्रेण सह तां ककुभामगात् ॥३२॥
अपश्यदथ केनापि चण्डिकायतनागतः । नरं शबरसेनान्या हन्यमानमधोमुखम् ॥३३॥
अनात्मज्ञ धिगेतत्ते कुकर्मेति महीभुजा । तर्जितः स भयादेवं शबरस्तं व्यजिज्ञपत् ॥३४॥
शिशुर्मुमूर्षुर्मे राजन्नयं रोगार्दितः सुतः । कर्मैतद्वैद्यवक्त्रमस्य श्रेयोऽलब्धवानहम् ॥३५॥
उपहारनिरोधेन सद्य एव विपद्यते । बन्धुवर्गमशेषं च निरुन्धेतज्जीवजीवितम् ॥३६॥
अरण्यगहनालब्धमनाथं देव रक्षसि । बहुलोकाश्रयं बालं कथमेतमुपेक्षसे ॥३७॥
अथाभ्यधान्महात्मा स वचोभिः शबरस्य तैः । वध्यस्य दृष्टिपातैश्च विक्लवैर्विवशीकृतः ॥३८॥
किरात कातरो मा भूः स्वयं संरक्ष्यते मया । बहुबन्धुस्तव सुतो वध्योऽप्ययमबान्धवः ॥३९॥
उपहारीकरोम्येष चण्डिकायै स्वविग्रहम् । मयि प्रहर निःशङ्कं जीवत्वेतज्जनद्वयम् ॥४०॥
तदद्भुतमहासत्त्वचित्तोदात्तत्वविस्मितः । उन्मिषद्रोमहर्षस्तं ततः स शबरोऽभ्यधात् ॥४१॥
अतिकारुण्यभिन्नस्य तवायं पृथिवीपते । कश्चिन्मतिविपर्यासप्रकारो हृदि रोहति ॥४२॥
त्रैलोक्यजीवितेनापि यो रक्ष्यो हेलयैव तम् । पृथिवीभोगसुभगं कथं कायमुपेक्षसे ॥४३॥
न मानं न यशो भार्यांश्च दारांश्च बान्धवान् । न धर्मं न सुतान्भूपा रक्षन्ति प्राणतृष्णया ॥४४॥
तत्प्रसीद प्रजानाथ मा बध्येऽस्मिन्कृपां कृथाः । शिशुश्चैव प्रजाश्चेता जीवन्तु त्वयि जीवति ॥४५॥
कृपाजिहीर्षुरात्मानं हन्तव्योत्तारकम्बदैः । अर्चयन्निव चामुण्डामथोवाच स पार्थिवः ॥४६॥
सदाचारसुधास्वादे के भवन्तो वनौकसः । जाह्नवीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ॥४७॥
ध्रुवापायेन कायेन क्रीणतः कीर्तिमव्ययाम् । ममाभीष्टं प्रमार्ष्टुं ते मूढ क्षोभमासदः ॥४८॥
मा वोचः किंचिदपरं प्रहर्तुं चेद्घृणा तव । न किं निजः कृपाणो मे शक्तः प्रक्रान्तसिद्धये ॥४९॥
इत्युक्त्वा स स्वयं देहमुपहर्तुं समुद्यतः । खड्गमाप स्वमुण्डस्य विकोशं पातमादधे ॥५०॥
ततः प्रहर्तुकामस्य तस्य सुकुसुमैः शिरः । करश्च दिव्यवपुषा रुद्धः केनाप्यजायत ॥५१॥

---

३०. ¹) Thus corr. by later hand from $A_1$ °कैः। ३३. ¹) A R G here and elsewhere शबर°. ३६. ¹) $A_2$ एव. ४८. ¹) Thus corr. by later hand from $A_1$ °भीर्त.







अथापश्यत्तथाभूतः कंचिद्दिव्याकृतिं पुरः । न वञ्चकां न तं वध्यं न किरातं न तारकम् ॥५२॥
स तं दिव्यस्तदावादीन्मां त्वं सत्त्ववशीकृतम् । विद्धि मध्यमलोकेन्दो वरुणं करुणानिधे ॥५३॥
यदेतत्त्वामुपास्तेद्य छत्रं तन्मत्पुरात्पुरा । महाबलोहरद्भीमः पुराणश्वशुरस्तव ॥५४॥
55 रसातलैकतिलकं माहात्म्यवदिदं विना । उपद्रवाः प्राणहराः पौराणां नः पदे पदे ॥५५॥
तदिदं प्राप्तुकामेन त्वदौदार्यं परीक्षितुम् । कारुण्यमय मायेयं निरमायि मयेदृशी ॥५६॥
त्वदादिर्यो व्यधाज्जन्मून्यसून्वसुकुलात्मजः । प्रावधिस्तममारेण चरसीव तदेनसः ॥५७॥
भयस्पृहाजनकयोर्धरणीधारणोचिते । शेषदेहे विषोद्गारफणारत्नौषधयोरिव ॥५८॥
तमःप्रकाशावहयोस्तेजःक्रान्तदिगन्तरे । उषर्बुधे धूमजालज्वालापल्लवयोरिव ॥५९॥
60 क्षमाप्यायक्रियाभाजो रुद्धतेजस्विमण्डले । प्रावृट्पयोदच्छदेहि संतापासारयोरिव ॥६०॥
द्वयोरालोकितं चित्रं जन्मैकस्मिन्महाकुले । तस्य त्रिकोटिहन्तुश्च तथाहिंसस्य च प्रभोः ॥६१॥ चक्कलकम् ॥
नतः समाश्चर्यैवं स वदतो यादसां प्रभोः । चकार पूजां स्तोत्रेण प्रश्रेण च कृताञ्जलिः ॥६२॥
तं च स प्रतिगृह्णन्तं प्रणयादुष्णवारणम् । जगाद गुणिनामग्र्यो वरुणं धरणीधरः ॥६३॥
कल्पद्रुमाश्च सन्तश्च नार्हन्ति समतीर्थिकाम् । अर्थिनां प्रार्थिताः पूर्वं फलन्त्यन्ये स्वयं यतः ॥६४॥
65 अवालम्बिष्यत छत्रं कथं नः पुण्यपण्यताम् । तत्प्रार्थयिष्यत न चेदार्तोपकृतये भवान् ॥६५॥
वदान्यः संविभाग्येभ्यः पूर्णं कुर्यादनुग्रहम् । छाययाप्याययन्नर्थांस्फलान्यपि महीरुहः ॥६६॥
तदेवं[1] विदितोदात्तसंविभागाभिचोदितः । जनोयं भगवन्किंचिद्वरं प्रार्थयते परम् ॥६७॥
वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात् । जेतुं द्वीपान्कथ्यतां तु युक्तिः पाथोधिलङ्घने ॥६८॥
इत्यर्थ्यमानोकथयद्भूमिपालं जलेश्वरः । तितीर्षौ भवति स्तम्भं नीयतेम्भो ममाम्बुधेः ॥६९॥
70 ततो महान्प्रसादोयमित्युक्ते पृथिवीभुजा । तिरोबभूव भगवान्वरुणः सोष्णवारणः ॥७०॥
अन्येद्युर्विस्मयस्मेरैर्बलैः सीमन्तयञ्जलम् । प्रभावस्तम्भितक्षोभं प्रोत्ततार स वारिधिम् ॥७१॥
गुणरत्नाकरः शैलं स रत्नाकरशेखरम् । नानारत्नाकरं सैन्यैरारुरोहाथ रोहणम् ॥७२॥
तत्र तालीतरुवनच्छायाध्यासितसैनिकम् । भीत्या लङ्काधिराजस्तमुपतस्थे विभीषणः ॥७३॥
समागमः स शुशुभे नरराक्षसराजयोः । बन्दिगाथाद्भुतान्योन्यंप्रथमालापसंभ्रमः ॥७४॥
75 अथ रक्षःपतिर्लङ्कां नीत्वालंकरणं क्षितेः । अमर्त्यसुलभाभिस्तं विभूतिभिरुपाचरत् ॥७५॥
यदासीत्पिशिताशा इत्यन्वर्थं नाम रक्षसाम् । तदा तदाज्ञाग्रहणे प्रापि तद्रूढिशब्दताम् ॥७६॥
रक्षःशिरःप्रतिच्छन्दैः[1] स्थिरप्रणतिसूचकैः । समावशिखरान्प्रावात्तस्मै रक्षःपतिर्ध्वजान् ॥७७॥
पाराद्वारिनिधेः प्राप्ताः कश्मीरेष्वद्भुतापि ये । राज्ञां यात्रासु निर्यान्ति ख्याताः पारध्वजाः पुरः ॥७८॥
इत्थमाराक्षसकुलं प्राणिहिंसां निषिध्य सः । स्वमण्डलं प्रति कृती न्यवर्तत नराधिपः ॥७९॥

---

५७. [1]) The *aksharas* न्मून्यसून्वसुकु and मारेण चरसीव तदेनसः supplied by $A_2$ in spaces left by $A_1$. ५८. [1]) भयस्पृहाजन supplied by $A_2$, as above. ६५. [1]) त supplied by $A_2$. ६६. [1]) Emended; A R G वदान्य:.—[2]) $A_1$ gloss अर्थिन्यः.—[3]) Thus corr. by $A_2$ from $A_1$ फलान्त. ६७. [1]) Thus corr. by $A_2$ from $A_1$ तदर्थं. ७१. [1]) Thus $A_1$, $A_2$ ज्ञाते. ७४. [1]) स supplied by $A_2$.—[2]) न्योन्य supplied by $A_2$ in space left by $A_1$. ७७. [1]) $A_1$ gloss प्रतिमाभि·

ततः प्रभृति तस्याज्ञा सार्वभौमस्य भूपतेः । हिंसाविरतिरूपा सा न कैश्चिदुदलङ्घ्यत ॥८०॥ 80
क्षुद्रैर्झषादिभिर्नाप्सु सिंहाद्यैर्गहने न च । न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः ॥८१॥
अतिक्रामति कालेऽथ कोपि शोकाकुलो द्विजः । पुत्रं गदार्तमादाय द्वारि चक्रन्द भूपतेः ॥८२॥
दुर्गया प्रार्थितं राजन्पश्वाहारं विनैष मे । अनन्यसंततेः सूनुर्ज्वरेणाद्य विपद्यते ॥८३॥
यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि । एतद्विपत्तौ त्वत्कोन्यो निमित्तं प्रतिभाति मे ॥८४॥
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयताम् । ब्राह्मणस्य पशोर्वा स्यात्प्राणानां कियदन्तरम् ॥८५॥ 85
तपःस्थानपि ये जघ्नुर्ब्राह्मणप्राणलब्धये । क्व यातास्तेधुना भूमे प्रजापालास्तिरोहिताः ॥८६॥
इति ब्रुवति साक्षेपं शोकरूक्षाक्षरं द्विजे । आपन्नार्तिहरो राजा चिरमेवं व्यचिन्तयत् ॥८७॥
न वध्याः प्राणिन इति प्राङ्मया समयः कृतः । विप्रार्थमपि किं कुर्यां स प्रतिज्ञातविप्लवम् ॥८८॥
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि । तत्राप्यस्त्यल्पपापीयानर्थः संकल्पविप्लवः ॥८९॥
नैति मे संशयभ्रान्तमेकपक्षावलम्बनम् । संभेदावर्तपतितं प्लवनमिव मानसम् ॥ ९०॥ 90
तत्स्वदेहोपहारेण दुर्गां तोषयता मया । प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः ॥९१॥
इति संचिन्त्य सुचिरं देवदानोद्यतो नृपः । श्वः प्रियं तव कर्तास्मीत्युक्त्वा विप्रं व्यसर्जयत् ॥९२॥
क्षपायां क्ष्मापतिमथ स्वमुपाहर्तुमुद्यतम् । निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजन्मजम् ॥९३॥
इत्याद्यद्यतनस्यापि चरितं तस्य भूपतेः । पृथग्जनैस्त्वसंभाव्यं वर्णयन्तस्त्रपामहे ॥९४॥
अथवा रचनानिर्विशेषमार्गेण वर्त्मना । प्रसिद्धतां नानुरुन्धन्ति श्रोतृचित्तानुवर्तनम् ॥९५॥ 95
तस्मिन्नस्तंगते भुक्त्वा क्ष्मां चतुस्त्रिंशतं समाः । अनादित्यमिवाशेषं निरालोकमभूज्जगत् ॥९६॥
अथ क्ष्माभृद्ररक्ष क्ष्मां श्रेष्ठसेनस्तदात्मजः । आहुः प्रवरसेनं यं तुञ्जीनं चाञ्जसा जनाः ॥९७॥
दोःस्तम्भसंभृतासक्तौ कृपाणमणिदर्पणे । संक्रान्तेवोन्मुखी यस्य भुवनश्रीर्व्यभाव्यत ॥९८॥
समातृचक्रं निर्माय यः पूर्वं प्रवरेश्वरम् । पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात् ॥९९॥
गृहाङ्गनमिव क्षोणीं गणयन्वशवर्तिनीम् । त्रिगर्तोर्वीं ग्राममध्ये प्रवरेशाय यो ददौ ॥१००॥ 100
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनाम् । स समास्त्रिंशतं भूभृन्निस्त्रिंशाश्रयोभवत् ॥१०१॥
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ । साम्राज्ययुवराजत्वभाजने रञ्जनं क्षितेः ॥१०२॥
बलाहतानां प्राचुर्ये विनिवार्यासमञ्जसम् । तोरमाणेन दीनाराः स्वाहताः संप्रवर्तिताः ॥१०३॥
मामवज्ञाय राजेव कस्मादेतेन वल्गितम् । इति तं पूर्वजो राजा कोपनो बन्धने व्यधात् ॥१०४॥
चिरंस्थितित्यक्तभुजस्तत्र तस्याञ्जनाभिधा । ऐक्ष्वाकस्यात्मजा राज्ञी वज्रेन्द्रस्यास गुर्विणी ॥१०५॥ 105
आसन्नप्रसवा भर्त्रा सा यथार्तेन बोधिता । सुतं प्रविश्य प्रासोष्ट कुलालनिलये क्वचित् ॥१०६॥
स कुम्भकारगेहिन्या काकस्येव पिकशावकः । पुत्रीकृतो राजपुत्रः पर्याप्ते पर्यवर्धत ॥१०७॥

---

८०—८१. [1])—[1]) These two verses have been supplied in margin by $A_2$. ८३. [1]) $A_2$ राजन्पश्वाहारं. ८८. [1]) $A_2$ प्राण्यो[illegible] [illegible]. ९५. [1]) This verse is supplied by $A_2$ in margin.—[2]) $A_2$ gloss [illegible]. १००. [1]) Thus $A_2$; $A_1$ °[illegible] १०३. [1]) Thus A ; G R Edd. आहत°.—[2]) $A_2$ gloss [illegible].—[3]) $A_2$ gloss स्वाहता: [illegible] आहताः संप्रवर्तिताः व्यवहारविषयाः कृताः. १०४. [1]) $A_2$ gloss तोरमाणेन. १०६. [1]) $A_2$ gloss यथार्तेन [illegible].

अनयिष्याः कुलाल्याथ रक्षिष्या विदितोभवत् । रत्नस्थलेर्भुजंग्याश्च प्रच्छन्न इव शेवधिः ॥१०८॥

तीव्रः प्रवरसेनस्य गिरा मातुर्नृपात्मजः । पैतामहेन नाम्नैव कुलाल्या व्यापितोभवत् ॥१०९॥

110 वर्धमानः स संपर्कं न सेहे सहवासिनाम् । तेजस्विमैत्रीरसिकः शिशुः पद्म इवाम्भसाम् ॥११०॥

तं कुलीनैश्च शूरैश्च विद्याविद्भिश्च दारकैः । अन्वीतमेव ददृशुः क्रीडन्तं विस्मयाज्जनाः ॥१११॥

स्वमृन्दस्यात्युदारौजा राजा चक्रे स दारकैः । मृगेन्द्रशावः क्रीडद्भिर्वने बालमृगैरिव ॥११२॥

संविभेजेनुजग्राह वशीचक्रे च तोर्भकान् । अराजोचितमाचारं नैव कंचिदसेवत ॥११३॥

भाण्डानि कर्तुं मृत्पिण्डं कुम्भकारैः समर्पितम् । स्वीकृत्य चक्रिरे तेन शिवलिङ्गपरंपराः ॥११४॥

115 तथा साधर्यचर्यः स क्रीडञ्जातु व्यलोकयत । मातुलेन जयेन्द्रेण सादरं चाभ्यनन्द्यत ॥११५॥

आवेद्यमानं शिशुभिस्तं जयेन्द्रोपमित्यसौ । भूपालवत्सावहेलं पश्यन्नन्यमहीमिव ॥११६॥

संभाव्य सत्त्वाबद्धम्भातमसामान्यवंशजम् । सादरस्याङ्गिनीभर्तुर्भागिनेयमशङ्कत ॥११७॥

सत्वरस्तस्यजिज्ञासारसेनानुससार तम् । प्राप्तस्तद्गृहमौत्सुक्यात्स्वसारं च व्यलोकयत् ॥११८॥

सा स चान्योन्यमुन्मन्यू पश्यन्तौ भ्रातरौ चिरात् । निःश्वासद्विगुणोष्माणि मुहुरश्रूण्यमुञ्चताम् ॥११९॥

120 कुलाल्या दारको मातः कावेताविति पृष्टवान् । अकथ्यतेयं वत्सैषा माताथ मातुलश्च ते ॥१२०॥

पितुर्बन्धेन सक्रोधं तं कालापेक्षयाक्षमम् । विश्वासयित्वा जयेन्द्रोथ कार्यशेषाय निर्ययौ ॥१२१॥

छलिप्सोत्पादनासज्जे तस्मिन्भ्राता यदृच्छया । बन्धात्त्यक्तो नृतरणिस्तोरमाणोस्तमाययौ ॥१२२॥

निवार्य मरणोद्योगं मातुर्निर्वेदखेदितः । ययौ प्रवरसेनोथ तीर्थौत्सुक्याद्दिगन्तरम् ॥१२३॥

रक्षित्वा दशमासोनाः क्ष्मामेकत्रिंशतिं समाः । तस्मिन्क्षणे हिरण्योपि शान्तिं निःसंततिर्ययौ ॥१२४॥

125 तत्रानेहस्युज्जयिन्यां श्रीमान्हर्षापराभिधः । एकच्छत्रश्चक्रवर्ती विक्रमादित्य इत्यभूत् ॥१२५॥

भूपमद्भुतसौभाग्यं श्रीर्वल्लभमसाभजत् । विहाय हरिवार्हूय चतुरः सागरांश्च यम् ॥१२६॥

लक्ष्मीं कृत्वोपकरणं गुणे येन प्रवर्तिते । श्रीमत्सु गुणिनोद्यापि तिष्ठन्त्युद्धुरकन्धराः ॥१२७॥

म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः । शकान्विनाश्य येनादौ कार्यभारो लघूकृतः ॥१२८॥

नानादिगन्तराख्यातं गुणज्ञसुलभं नृपम् । तं कविर्मातृगुप्ताख्यः सर्वास्थानस्थमासदत् ॥१२९॥

30 स गम्भीरस्य भूभर्तुरनुभावं महाद्भुतम् । त्रिविधास्थानसंपृक्तस्तस्याभ्यूह्य व्यचिन्तयत् ॥१३०॥

सोयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः । परभागोपलब्ध्यास्य पूर्वेमुष्य महीभुजः ॥१३१॥

यस्मिन्नाजनि तत्त्वज्ञैः सूरिभिः संभृतश्रुतैः । नाञ्जलिर्धीयते जातु मानाय च गुणाय च ॥१३२॥

भङ्ग्यामुष्मिन्विदधती स्वाभिप्रायप्रकाशनम् । वैदग्ध्यवन्ध्यतां नैति बुद्धिः कुलवधूरिव ॥१३३॥

खिलीकृतखलालापे युक्तायुक्तविवेककारि । नायाति सेव्यमानेस्मिन्स्वगुणोनर्थकारिताम् ॥१३४॥

35 अनामुवद्भिः सावद्यदुर्विषसमशीर्षिकाम् । जीवन्मरणमस्याग्रे गुणिभिर्नानुभूयते ॥१३५॥

---

१०८. ¹) A₃ gloss भूमेः  ११२. ¹) A₃ gloss अतिशयेन उदारं ओजः यस्य.  ११३. ¹) Thus corr. by later hand from A किंचिद°.  ११६. ¹) A₃ gloss प्रवरसेनः.  १२२. ¹) Thus A₁; A₁ has given a *varia lectio* in margin of which only छलिप्सो-त्पाद° is legible (छलिप्सोत्पादनासज्जे?) A₃ छलिप्सोत्पादने सज्जे, with gloss [illegible] सति.  १२७. ¹) G Edd. गुणो येन प्रवर्धते.  १२८. ¹) A₃ gloss कार्यनाशः.  १२९. ¹) G *sec. manu* and Edd. सर्वास्था°.  १३२. ¹) A₃ अतिसंज्ञा°.

संभावनानुसारेण प्रवृत्तोऽस्माद्विवेकिनः । शोच्यते नाश्रितोऽप्यत्र प्रीतिदायो महाशयैः ॥१३६॥
गृह्णन्त्यपगुणं स्वान्तमुचितप्रतिपत्तिभिः । अन्तरज्ञः क्रमस्तासामयमुत्साहवर्धनः ॥१३७॥
सेवया दृष्टकष्टस्य दाक्षिण्योत्पादने श्रमः । अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रयः ॥१३८॥
मिथ्याख्यातगुणो नाप्तो नामात्यः कलहप्रियः । असत्यसंधः स्थेयो वा नास्थानेऽस्य महीपतेः ॥१३९॥
अश्लीलालापिनोऽन्योन्यं नर्मोक्त्या मर्मभेदिनः । अन्यापदेशावसराः संहता नास्य सेवकाः ॥१४०॥
छन्दानुवर्तिनामेव निजविज्ञानबन्धिनाम् । सर्वज्ञंमन्यताध्मानां मुखप्रेक्षी न पार्थिवः ॥१४१॥
अनेन सह संजातः संलापो विपुलोदयः । लभ्यते नान्तराच्छेत्तुं दुर्जातैर्जातु दुर्जनैः ॥१४२॥
सर्वदोषोज्झितं सेव्यं नृपमेवमिमं मम । समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः ॥१४३॥
गम्भीरश्च गुणज्ञश्च स्थिरबुद्धिश्च पार्थिवः । एष क्षेममतं त्यक्त्वा निषेव्यः प्रतिभाति मे ॥१४४॥
न चास्माज्जन्ममादाय रञ्जितादन्यराजवत् । आत्मनो[illegible]मुष्मिन्सेव्योऽन्यः प्रतिभाति मे ॥१४५॥
इति संचिन्त्य सुदृढं स मत्वामिव तां सभाम् । ना[illegible]ासते स्म गुणिगोष्ठीषु मध्यगः ॥१४६॥
मृदुपूर्वं गुणानेवं दर्शयन्तं विशांपतिः । विशिष्टयोग्यताज्ञाने विवेदाराधनोन्मुखम् ॥१४७॥
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः । ददाति सत्क्रियार्हत्वं यदल्पस्य गभीरता ॥१४८॥
इति संचिन्त्य राजापि ज्ञातुं तस्यान्तरं मतेः । नाक्रियन्त परीक्षार्थं यथावल्लाभसत्क्रियाः ॥१४९॥
स तेनानुपचारेण तमुदाराशयं नृपम् । स्वीकर्तारं विदन्धीमान्सिषेवे प्रीतिमाश्रितः ॥१५०॥
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः । तस्य नोद्वेगमगमत्स्वकाय इव पार्थिवः ॥१५१॥
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया । शरद्दिवासरेणेव राज्ञो निन्ये प्रसन्नताम् ॥१५२॥
नर्मभिर्नर्मचेटानां द्वाःस्थानां विक्रियाक्रमैः । मिथ्यास्तवैर्विटानां च न स क्षोभमनीयत ॥१५३॥
प्रह्वालापसंग्रामी छायामय इवाचलः । प्रतिस्पर्धीव च कुब्जकायच्छायामभूत्प्रभोः ॥१५४॥
वीक्षणं राजदासीनां राजद्विष्टैः सहासनम् । राजाग्रे च कथां नीचैः कालविन्नाचचार सः ॥१५५॥
स्वभावाद्राजपुरुषैः सजने राजनिन्दकैः । नास्मात्संभोकपालम्भो लेभे पैशुन्यजीविभिः ॥१५६॥
वदद्भिरादरास्थैर्यं वैफल्याद्यन्यदं प्रभोः । निन्ये नोत्साहशैथिल्यं सेवोत्साहासहिष्णुभिः ॥१५७॥
अन्योत्कर्षाणामपि यदभ्यक्रमेण निरापदः । स्वाभिप्रायोत्तकः सोऽभूत्सभ्यानां हृदयंगमः ॥१५८॥
एवं स सेवमानस्तमुद्योगेन बलीयसा । अनिर्विण्णो मातृगुप्तः षडृतूनत्यवाहयत् ॥१५९॥
अथ तं कृशसर्वाङ्गं धूसरं जीर्णवाससम् । बहिर्जातु विनिर्यातो राजा वीक्ष्य व्यचिन्तयत् ॥१६०॥
वैदेशिको निःशरणो गुणवानाश्रयोज्झितः । हार्दं जिज्ञासुना कष्टं सोऽयमायासितो मया ॥१६१॥
कोऽस्याश्रयः किमशनं कानि प्रावरणानि वा । इत्यैश्वर्यविमूढेन मया हन्त न चिन्तितम् ॥१६२॥
वसन्तेनेव न मया शोभकयापि योजितः । शीतवातातपैः शुष्यन्नयं पुरुषपादपः ॥१६३॥

---

१३६. ¹) संभावनानुसा supplied by A2 in space left by A1. १३७. ¹) A2 gloss प्रतिपत्तिः सत्कारः सत्क्रिया पूजनं मानमिति यावत्. १४५. ¹) Thus corr. by A2 from A1 आन्मनो. १४६. ¹) Thus corr. by A2 from A1 नारव्रज°. १५२. ¹) A2 gloss राजा चन्द्रोऽपि.—²) A2 gloss ऋतुगुणेन. १५५. ¹) A2 gloss राजशत्रुभिः. १५६. ¹) A2 gloss मातृगुप्तात्. १५९. ¹) Thus corr. by A2 from A1 अनिर्विणो.

अस्य ग्लानस्य भैषज्यं निर्विण्णस्य विनोदनम् । श्रान्तस्य वा श्रमच्छेदं को विदध्यात्ससंपदः ॥१६४॥

165 नास्मै चिन्तामणिं दध्यां नामृतं वा निषेवितः । मया वयमेतावद्व्यामूढेन परीक्ष्यते ॥१६५॥

तदमुष्य गुणित्वस्य तीव्रसेवाश्रमस्य च । प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयाम् ॥१६६॥

इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति । स्वप्रसादोचिता काचित्सत्यभाजैव सत्क्रिया ॥१६७॥

ततः प्रावर्तत स्फारनीहारलवपातिभिः । दहन्निवाङ्गं प्रालेयपवमानैर्हिमागमः ॥१६८॥

संततध्वान्तमिषतस्तीव्रशीतवशीकृताः । आशाश्चकाशिरे नीलनिचोलाच्छादिता इव ॥१६९॥

170 शीतार्त्या द्युमणावौर्वदहनोष्माभिलाषतः । द्रुतं यातीव जलधिं दिनानि लघुतां ययुः ॥१७०॥

अथ दीपोज्ज्वले धाम्नि लसद्धीमहसन्निके । कदाचिन्नृपतिर्हैमावर्धरात्रे व्यबुध्यत ॥१७१॥

स हेमन्तानिलैर्भूरिझांकारपरुषैः पुरः । दीपान्प्रकम्पितानीषदवशिष्टार्चिषोऽपि दृष्टवान् ॥१७२॥

तानुज्ज्वलयितुं भृत्यानन्विष्यन्नभ्यधात्ततः । [illegible]केषु बहिः सज्जः को वर्तत इति स्फुटम् ॥१७३॥

प्रसुप्तेषु सर्वेषु वाचकस्यान्तरात्ततः । राजन्नहमहं मातृगुप्त इत्यशृणोद्वचः ॥१७४॥

175 प्रविशेति स्वयं राज्ञा दत्तानुज्ञस्ततो गृहम् । लक्ष्मीसांनिध्यरम्यं तदपृष्टोऽन्यैर्विवेश सः ॥१७५॥

दीपानुज्ज्वलयेत्युक्तो निष्पाद्य चतुरैः पदैः । बहिर्यियासुरूचेऽयं क्षणं तिष्ठेति भूभुजा ॥१७६॥

स भयद्विगुणीभूतशीतकम्पः प्रभोः पुरः । किं स्विद्वक्ष्यतीति विमृशन्नातिदूरेऽभ्युपाविशत् ॥१७७॥

अथ पप्रच्छ भूपालः कियत्यस्ति निशेति तम् । सोऽभ्यधाद्देव यामिन्या यामः सार्धोऽवशिष्यते ॥१७८॥

ततो भूभृदुवाचैनं कथं सम्यङ्निशाक्षणः । त्वयावधारितो निद्रा कथं नाभूच्च ते निशि ॥१७९॥

180 अथ कृत्वा क्षणाच्छ्लोकमेतं तं स व्यजिज्ञपत् । अवस्थावेदनादाशां दैन्यं वा स्वकमुज्झतः ॥१८०॥

शीतेनोद्धूषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥१८१॥

तदाकर्ण्य महीपालः साधुवादैः परिभ्रमम् । अभिनन्द्य कवीन्द्रं तं पूर्वस्थानं व्यसर्जयत् ॥१८२॥

अचिन्तयच्च धिङ्मां यः सगुणाख्यिन्नचेतसः । दुःखोत्तमं वचः शृण्वन्नेवमेवाधुना स्थितः ॥१८३॥

निरर्थकान्साधुवादानन्यस्येव वदन्मम । अयमज्ञातहृदयो दुःखमास्ते ध्रुवं बहिः ॥१८४॥

185 चिरं चिन्तयतो यत्नात्सदृशीमस्य सत्क्रियाम् । देयं महार्हमद्यापि न किंचित्प्रतिभाति मे ॥१८५॥

अथ वाद्यैव सूक्तेन स्मारितोऽस्म्यधुना यथा । वर्तते राजरहितं काम्यं कश्मीरमण्डलम् ॥१८६॥

पात्रायास्मै मही तस्मात्सा मया प्रतिपाद्यते । अवधीर्य महीपालान्महतोऽप्यर्थनापरान् ॥१८७॥

इति निश्चित्य चतुरं क्षपायामेव पार्थिवः । गूढं व्यसर्जयद्दूतान्काश्मीरीः प्रकृतीः प्रति ॥१८८॥

आदिदेश च तान्यो वो दर्शयेच्छासनं मम । मातृगुप्ताभिधो राज्ये निःशङ्कं सोऽभिषिच्यताम् ॥१८९॥

190 अथ दूतेषु यातेषु लेखयित्वा स्वशासनम् । क्ष्मापतिस्तं क्षपाशेषं कृतकृत्योऽत्यवाहयत् ॥१९०॥

---

१६५ [1]) $A_2$ gloss अनेन इत्यर्थः. १६६. [1]) $A_2$ gloss सत्क्रियया. १६७. [1]) $A_2$ gloss चित्तविषयं न गता इत्यर्थः. १७१. [1]) $A_2$ gloss हसन्तिका मशाकिका. १७४. [1]) $A_2$ gloss राजिजागरेषु पुरुषेषु. १७५. [1]) $A_2$ तदहृष्टो. १७६. [1]) Thus corr. by $A_2$ from $A_1$ °रूचे च. १८०. [1]) $A_2$ gloss अवस्थाया: आवेदनं तस्मात्. १८६. [1]) $A_2$ gloss सत्यानीन्यासिना. १८८. [1]) $A_2$ gloss सचिवान् प्रति.

मातृगुप्तस्तु नृपतेः संलापमपि निष्फलम् । आयमगृहीतनैराश्यस्त्वकामार इवाभजत् ॥१९१॥
अन्तर्दध्यौ च कर्तव्यं कृतं प्राज्ञोऽत्र संशयः । आशापिशाचिकास्यक्तकथरिष्याम्यधुना कृतम् ॥१९२॥
गतानुगतिकत्वेन कोऽयमासीन्मम भ्रमः । जनप्रवादात्सेव्यत्वं येनास्य ज्ञातवानहम् ॥१९३॥
शुष्काङ्गाः पवनं सरीसृपगणाः प्रख्यापिता भोगिनो गायत्कृकविचारका निगदिता विस्तीर्णकर्णा गजाः ।
यथाभ्यन्तरसंभृतोष्मविकृतिः प्रोक्तः शमी स द्रुमो लोकेनेति निरर्गलं प्रलपता सर्वं विपर्यासितम् ॥१९४॥
अथ वा विद्यतेऽमुष्य न काप्यनभिगम्यता । लक्ष्मीप्रणयिनो येन कृताः प्रणयिनां गृहाः ॥१९५॥ 195
त्यागिनो निष्कलङ्कस्य को दोषोऽस्य महीपतेः । ममापुण्यं तु तच्चिन्त्यं यच्छ्रेयःप्रतिबन्धकम् ॥१९६॥
रत्नोज्ज्वलाः प्रविकिरंल्लहरीः समीरैरब्धिः क्रियेत यदि रत्नघटाभिमुख्यः ।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां[1] दातुर्मनागपि न तस्य तु दातृतायाः ॥१९७॥
उत्तानफललुब्धानां वरं राजोपजीविनः । न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये ॥१९८॥
तिष्ठन्ति ये पशुपतेः किल पादमूले संप्राप्यते झटिति तैर्महि भस्मनोऽन्यत् ।
ये तद्गृहस्य तु समुज्ज्वलमाणिक्यप्राप्त्या न कानि सुदिनानि तदैव तेषाम् ॥१९९॥
चिन्तयन्नपि पश्यामि न कंचिद्दोषमात्मनः । यातो विरक्तिं यं ज्ञात्वा सेव्यमानोऽप्ययं नृपः ॥२००॥ 200
अथ वानादृतोऽन्येन संप्राप्तोऽस्मिन्कमाप्नुयात् । कः फलेनाभिसंबन्धं गतानुगतिकात्प्रभोः ॥२०१॥
अन्तर्ये सततं लुठन्त्यगणितास्तानेव पाथोधरैरात्तानापततस्तरङ्गवलयैरालिङ्ग्य गृह्णन्नसौ ।
स्वच्छं मौक्तिकरत्नतां जलकणान्संप्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते[1] स्वामिभिः ॥२०२॥
इदं संचिन्तयन्सोऽभूत्सेव्ये तस्मिन्निरादरः । खिन्नस्य हि विपर्येति तत्त्वज्ञस्यापि शेमुषी ॥२०३॥
प्रभातायां विभावर्यामथास्थानस्थितो नृपः । आकार्यतां मातृगुप्त इति क्षत्तारमादिशत् ॥२०४॥
ततः प्रधावितानेकप्रतीहारप्रवेशितः । प्रविवेश महीभर्तुस्त्यक्ताश इव सोऽन्तिकम् ॥२०५॥ 205
तस्मै कृतप्रणामाय मुहूर्तादेव पार्थिवः । भ्रूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा ॥२०६॥
स्वयं च तमुवाचाङ्ग कश्मीरान्वेत्सि किं भवान् । गत्वा तत्राधिकारिभ्य एतच्छासनमर्प्यताम् ॥२०७॥
स ज्ञापितोऽस्मदेशेन यो लेखं वाचयेत्पथि । संविदेषा प्रयत्नेन विस्मर्तव्या न जातु चित् ॥२०८॥
अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशङ्कितः । सोऽबुद्ध दहनज्वालां न तु रत्नाङ्कुरद्युतिम् ॥२०९॥
यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते । निर्गर्वः पूर्ववद्राजा तस्थावाप्तैः सहालपन् ॥२१०॥ 210
अथाक्लेशोचितं[1] क्षामपाथेयमबान्धवम् । दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः ॥२११॥
अहो नरेश्वरस्येयं यत्किंचनविधायिता । कृपणजनोचिते कर्मण्यर्हतो निदधाति यः ॥२१२॥
दुराशया धृतक्लेशं सेवमानमहर्निशम् । ध्रुवं क्लेशार्हमेवैनं ज्ञातवान्कुधी नृपः ॥२१३॥
यथार्थं यं[1] पुरस्कृत्य सेवते सेवकः प्रभुम् । अनन्तरज्ञस्तस्यैव योग्यं तं किल मन्यते ॥२१४॥

१९७ [1]) $A_2$ °पर्ययेण. १९८. [1]) $A_1$ glosses राजोपजीविनः कृपणाः, तत्स्वामिनः तेषां स्वामिनः सकाशात् न वरं. २०२. [1]) Thus corr. by later hand from $A_1$ कुर्वन्ति व°.—[2]) Thus $A_2$; $A_1$ °र्च्यते. २०४. [1]) $A_1$ gloss द्वारस्थं. २०८ [1]) $A_2$ gloss निश्चयः. २११. [1]) Thus corr. by later hand from $A_1$ अथ क्ले°. २१२. [1]) $A_2$ gloss कृपणत्व. २१४. [1]) Doubtful emendation; on account of an ink blot only the following is legible in the handwriting of $A_1$: यथाय—— स्कृत्य. $A_4$ reads यथार्थं पुरस्कृत्य; this reading is found also in R. G and Edd. read यथार्थं यं.

सुखार्थी नागारिप्रतिभयशमायाच्युत स्खलं जडो शेषस्तल्पीकृततनु निषेव्यासुररिपुम् ।
215 यतस्तेनामुष्मिन्नधिगतवता क्लेशसहतां भ्रमादद्यापि न्यस्तं निरवधि धराभारवहनम् ॥२१५॥
अयमेतद्गृहीतेषु गुणवत्सु गुणाधिकम् । आत्मानं गुणवान्पश्यन्नास्थयैनमशिश्रियत् ॥२१६॥
अनन्तरज्ञः कोन्योस्माद्गुणान्दर्शयतेधिकान् । अस्मै गुणवते पूजां यश्चकार किलेदृशीम् ॥२१७॥
यो नानाद्युतिमत्पदार्थरसिकोसारेपि शक्रायुधे सप्रेमा स विलोकय बर्हमिह मे किं किं न कुर्यादिमम् ।
इत्याविष्कृतबर्हराजि नटते यो बर्हिणेम्भोलवानप्युन्मुञ्चति तं विहाय जलदं कोन्योस्ति शून्याशयः ॥२१८॥
गच्छतो मातृगुप्तस्य निर्दैन्यस्यैव कश्मीरान् । नाभूद्राज्यार्थमाहात्म्यादिविकल्पः कोपि चेतसि ॥२१९॥
220 अहंपूर्विकयोपात्तैर्निमित्तैः शुभशंसिभिः । स वितीर्णकरालम्ब इव न श्रममाददे ॥२२०॥
अपश्यत्स फणाकोटौ खञ्जरीटमहेः पथि । स्वप्ने प्रासादमारुह्य स्वं चोल्लङ्घितसागरम् ॥२२१॥
अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः । एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ॥२२२॥
फलं मम तनीयोपि कश्मीरेषु भवेद्यदि । अनर्घदेशमाहात्म्यात्तत्किं नातिशयेत तत् ॥२२३॥
अकृच्छ्रलङ्घ्याः पन्थानो बद्धातिथयो गृहाः । उपानमन्गच्छतोस्य सत्क्रियाश्च पदे पदे ॥२२४॥
225 इत्थं विलङ्घिताध्वा स लोलानोकहशाद्वलम् । मङ्गल्यदधिपिण्डाभं ददर्शाग्रे हिमाचलम् ॥२२५॥
सरलस्यन्दसुभगा गङ्गाशीकरवाहिनः । प्रत्युद्ययुस्तं मरुतः पाल्यायाः संस्तुता भुवः ॥२२६॥
क्रमवर्ताभिधाने स प्रदेशे प्राप्तवांस्ततः । ढक्के काम्बुवनामाने सोथ शूरपुरे स्थितः ॥२२७॥
नानाजनपदाकीर्णे स्थाने तत्राथ शुश्रुवान् । काश्मीरिकान्महामात्यान्स्थितान्केनापि हेतुना ॥२२८॥
गलोपनीतप्राग्वेशः प्रावृतो धवलांशुकैः । स जगामान्तिकं तेषां दातुं नृपतिशासनम् ॥२२९॥
230 तं प्रयान्तं समुद्यद्भिः शकुनैः सूचितोदयम् । पान्थाः केप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमम् ॥२३०॥
श्रुत्वाथ विक्रमादित्यदूतः प्राप्त इति द्रुतम् । द्वाःस्थाः काश्मीरमन्त्रिभ्यस्तमासन्नं न्यवेदयन् ॥२३१॥
आगच्छत प्रविशतेत्युच्यमानोथ सर्वतः । स तान्समस्तसामन्तानाससादानिवारितः ॥२३२॥
यथाप्रधानं सचिवैर्विहितोचितसत्क्रियः । ततः परार्ध्यमध्यास्त तन्निर्दर्शितमासनम् ॥२३३॥
कृतार्हणैरथामात्यैराज्ञां पृष्टो महीभुजः । शनैस्तच्छासनं तेभ्यो लज्जमान इवार्पयत् ॥२३४॥
235 तेभिवन्द्य प्रभोर्लेखमुपांशु मिलितास्ततः । उन्मुच्य वाचयित्वैतमवोचन्विनयान्विताः ॥२३५॥
मातृगुप्त इति श्लाघ्यं भवतामेव नाम किम् । एवमेवैतदित्यूचे सोपि तान्विहितस्मितः ॥२३६॥
कः कोत्र संनिधातॄणामित्यभूयत वाक्ततः । राज्याभिषेकसंभारो दृश्यते स्म च संभृतः ॥२३७॥
ततः कलकलोत्तालभूरिलोकसमाकुलः । प्रदेशः क्षणमात्रेण सोभूत्क्षुभ्यन्निवार्णवः ॥२३८॥
अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः । संनिपत्य प्रकृतिभिर्मातृगुप्तोभ्यषिच्यत ॥२३९॥
240 तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठत् । सशब्दमभिषेकाम्बु रेवास्रोत इवाबभौ ॥२४०॥
अथ स्नातानुलिप्ताङ्गं सर्वाङ्गामुक्तभूषणम् । व्यजिज्ञपंस्तं राजानं कान्तराजासनं प्रजाः ॥२४१॥

२१७. [1]) $A_2$ gloss मूर्खपुरुषः. २१८. [1]) $A_2$ विलोकय जलदमित्यन्वायसि. २२५. [1]) Thus $A_1$; corr. by $A_2$ into °शोत्कट°, as also in G R. २२६. [1]) $A_1$ gloss पाल्याया इति प्रभूतविस्मता तेभिरेत्तार्थः. २३५. [1]) $A_1$ gloss परैर्न श्रूयते यथा उपांशु परिकीर्तितम् $A_2$ adds मन्त्रकरणे. २४०. [1]) Thus $A_3$; $A_1$ °लेढ, corr. by later hand into °ठत.

अर्थितेन स्वयं यातु विक्रमादित्यभूभुजा । निर्दिष्टः स्वसमानस्त्वं शाधि नः पृथिवीमिमाम् ॥२४२॥
मण्डलानि विलभ्यन्ते येनानेन प्रतिक्षणम् । मा मंस्था मण्डलं राजन्विलब्धं तदिदं परैः ॥२४३॥
कर्मभिः स्वैरवाप्तस्य जन्मनः पितरौ यथा । राज्ञां तथान्ये राज्यस्य प्रवृत्तावेव कारणम् ॥२४४॥
इत्थं स्थितेपरं कश्चित्त्वदीयोस्मीति शंसता । न नेया भवता राजन्खेदमात्मा च लाघवम् ॥२४५॥ 245
इति तैस्तथ्यमुक्तोपि संस्मरन्स्वामिसत्क्रियाम् । मातृगुप्तो महीपालः क्षणमासीत्कृतस्मितः ॥२४६॥
दानेन सुदिनं कुर्वन्नथ राज्योर्जितेन सः । तत्रैव मङ्गलोदर्कं तदहो निरवर्तयत् ॥२४७॥
पुरप्रवेशायाभ्येतुरर्थ्यमानोथ मन्त्रिभिः । अद्भुतप्रभृतं दूतं राज्यदातुर्व्यसर्जयत् ॥२४८॥
दैवौचित्यानुसारेण स्पर्धामिव च तां विदन् । स्वामिनो मनसि प्रीतः सागसं स्वममन्यत ॥२४९॥
अथाहूयापरान्भृत्यान्वक्तुं सेवास्मृतिं प्रभोः । अल्पार्थाण्यपि सात्म्यानि प्राहिणोत्प्राभृतानि सः ॥२५०॥ 250
असामान्यान्गुणांस्तस्य स्मरन्पर्यश्रुलोचनः । स्वयं लिखित्वा श्लोकं च स्वकमेकं व्यसर्जयत् ॥२५१॥
नाकारमुद्वहसि नैव विकत्थसे त्वं दित्सां न सूचयसि मुञ्चसि सत्फलानि ।
निःशब्दवर्षणमिवाम्बुधरस्य राजन्संलक्ष्यते फलत एव तव प्रसादः ॥२५२॥
ततः प्रविश्य नगरं सैन्यैः पिहितदिक्तटैः । क्रमागतामिव महीं यथावत्पर्यपालयत् ॥२५३॥
त्यागे वा पौरुषे वापि तस्यौचित्योन्नतात्मनः । क्ष्माभुजस्तर्कुकस्येव नाभूत्परिमितेच्छता ॥२५४॥
कर्तुं यज्ञान्धृतोद्योगस्त्यागी विततदक्षिणान् । पशुबन्धमनुध्याय करुणाकूणितोभवत् ॥२५५॥ 255
अमारमादिदेशाथ यावद्राज्यं स्वमण्डले । चूर्णीकृत्य सुवर्णादि प्रददौ च करम्भकम् ॥२५६॥
करम्भके कीर्यमाणे मातृगुप्तेन भूभुजा । वैतृष्ण्यमुन्मिषत्तोषो न को नाम न्यषेवत ॥२५७॥
गुणी च गुणकश्च वदान्यश्च स पार्थिवः । विक्रमादित्यतोप्यासीदभिगम्यः गुणार्थिनाम् ॥२५८॥
विशेषज्ञतया तस्य साम्यया सुरभीकृताः । लक्ष्मीविलासाः क्ष्माभर्तुरशोभन्त मनीषिषु ॥२५९॥
हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम् । आसमाप्ति ततो नापत्साध्वसाध्विति वा वचः ॥२६०॥ 260
अथ ग्रथयितुं तस्मिन्पुस्तकं प्रस्तुते न्यधात् । लावण्यनिर्याणभिया तदधः स्वर्णभाजनम् ॥२६१॥
अन्तरज्ञतया तस्य तादृश्या कृतसत्कृतिः । भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोर्पणम् ॥२६२॥
स मातृगुप्तस्वाम्याख्यं निर्ममे मधुसूदनम् । कालेनाथ च ग्रामान्भ्रमः श्वशुरसद्मने ॥२६३॥
इत्यासादितराज्यस्य शासतः क्ष्मां क्षमापतेः । त्रिमासोना ययुस्तस्य सैकाहाः पञ्च वत्सराः ॥२६४॥
कृतार्थतां तीर्थलोकैराज्यमेयोनयन्नृपान् । जातं तादृशमश्रौषीत्स्वस्मिन्देशे पराक्रमम् ॥२६५॥ 265
पितृशोकार्दिता तस्य क्रोधेनाम्लानभीयत । तरोरिवार्कतापेन नैदाघेनाकुलस्थिता ॥२६६॥
श्रीपर्वते पाशुपतव्रतिवेषस्तदागतम् । आचख्यावथ पादाग्र्यः सिद्धः कन्दाशनं वदत् ॥२६७॥

---

२४३. ¹) ²) $A_1$ indicates the *vv. ll.* विलीयन्ते and विलब्धं. २४५. ¹) Thus $A_2$; $A_1$ राजा. २४६. ¹) Thus corr. by later hand from $A_1$ °गुप्त°; G R as above. २४७. ¹) $A_2$ gloss अत्यन्तवाक्यवत्. २५०. ¹) Thus $A_1$; $A_2$ सात्म्यानि, also G R: Edd. सात्म्यानि. २५२. ¹) तव supplied by $A_2$. २५४. ¹) Thus corr. by later hand from $A_1$ °चित्यौच°.—²) $A_2$ gloss शाश्वतमेव. २५५. ¹) Thus A; G R °कूणितो; Edd. °कुञ्चितो. २५८. ¹) Emended: A R G वदान्यश्च. २६०. ¹) $A_2$ gloss काव्यं. २६२. ¹) $A_2$ राजाश्रः. २६३. ¹) $A_1$ gloss स्वयंवरगृहाय. २६५. ¹) $A_2$ gloss प्रवरसेनः.—²) $A_2$ पराभवम्. २६७. ¹) $A_2$ gloss प्रवरसेनं.

जन्मान्तरे लब्धसिद्धिस्त्वामस्म्युपरि साधकम् । वाक्कामपूर्व्वं राज्यार्थमभिलाषस्तु तमभवत् ॥२६८॥

प्रयत्नं तव कर्तुं तन्मनोरथमनन्यथा । अथ मामित्थमादिक्षत्स्वपारमेश्वरः ॥२६९॥

270 गणोऽयं मामकः सिद्धो यस्तवोपरि साधकः । जन्मान्तरेऽस्य राज्येच्छां कुर्वीमहमनन्यथा ॥२७०॥

भाव्यं भवत्सङ्गवतो भगवान्व्यक्तदर्शनः । साफल्यं नेष्यतीत्येवमभिधाय तिरोदधे ॥२७१॥

साम्राज्येच्छोः समामेकां तव तस्य तपस्यतः । लब्धस्मृतिः सिद्धगिरा प्रददौ दर्शनं शिवः ॥२७२॥

प्रतिषेधं तमादिश्य वाञ्छितार्थसमर्पणम् । स जगत्त्रिर्नमोभिर्न नरेन्द्रस्तमयाचत ॥२७३॥

उपेक्ष्य मोक्षं किं क्ष्माभृद्भोगानिच्छसि भङ्गुरान् । इति जिज्ञासुना भावं शंभुना सोऽभ्यधीयत ॥२७४॥

275 स तं बभाषे शंभुं त्वां बुद्ध्वा व्याजतपोधनम् । अभ्यर्थयामि दमदा त्वं न स देवो जगद्गुरुः ॥२७५॥

महान्तो ह्यर्थिताः स्वल्पं फलन्त्यल्पेतरं स्वयम् । उदन्यवा बहाम्भोदादुग्धाब्धिं सं पयोधिने ॥२७६॥

अस्य वैकल्यकैवल्यलाभनिश्चलचेतसः । नो वेत्त्यभिजनस्याभिभूतिं मर्मव्यथावहाम् ॥२७७॥

जगत्परिवृढः प्रौढप्रीतिस्तं सफलार्थनम् । कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽभ्यभाषत ॥२७८॥

मज्जतो राज्यसौख्येषु सायुज्याभाविभूतिकाम् । महाशवाभ्यपादस्ते संज्ञां काले करिष्यति ॥२७९॥

280 इत्युक्त्वान्तर्हिते देवे स कृतव्रतपारणः । आगच्छदभ्यपाद्य तमापृच्छ्याभिमतां भुवम् ॥२८०॥

ततो विदितवृत्तान्तो मातृगुप्ताभिषेचनात् । निषिध्य सचिवांयातानमात्यानब्रवीद्वचः ॥२८१॥

विक्रमादित्यमुत्सिक्तमुच्छेत्तुं यतते मनः । मातृगुप्तं प्रति न नो रोषेणाकषितं मनः ॥२८२॥

अविवेकैरपि निष्पिष्टैः किं स्यात्क्लेशासहिष्णुभिः । ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते ॥२८३॥

ग्राम्यश्वाभ्युदयं क्षिपन्ति शशिनः कोऽन्यस्ततोऽसंमतस्तन्निर्मोचितकरीन्द्रकुम्भदलनं ब्रजाम कोऽयं नयः ।
सामर्थ्यप्रथनाय विक्रमसखैः स्पर्धा विधूयोन्नता ये तेषु प्रभवन्ति तत्र जहति व्यक्तं प्रकृत्या रुषः ॥२८४॥

285 त्रिगर्तानां भुवं जित्वा स व्रजन्नथ भूपतिः । विक्रमादित्यमशृणोत्कालधर्ममुपागतम् ॥२८५॥

तस्मिन्नहनि भूभर्ता शोकाग्निःश्वसतानिशम् । नाखादि नाशि नास्वापि स्थितेनावनताननम् ॥२८६॥

अन्येद्युर्भुवमुत्सृज्य कश्मीरेभ्यो विनिर्गतम् । शुश्राव मातृगुप्तं स नातिदूरे कृतस्थितिम् ॥२८७॥

कैश्चिन्निर्वासितो मा स्विन्मदीयैरिति शङ्कितः । ययौ प्रवरसेनोऽस्य पार्श्वे मितपरिच्छदः ॥२८८॥

कृतार्हणं सुखासीनं ततः पप्रच्छ तं शनैः । विनयावनतो राजा राज्यत्यागस्य कारणम् ॥२८९॥

290 बभाषे तं क्षणं स्थित्वा सं निःश्वस्य विहस्य च । गतः स सुकृती राजन्येन भूमिभुजो वयम् ॥२९०॥

यावन्मूर्ध्नि रवेः पादास्तावद्योतयते दिशः । द्योतते नान्यथा किंचिद्ग्रावैव तपनोपलः ॥२९१॥

---

२६८. [1]) ऽस्तु supplied by $A_2$ in space left by $A_1$. २६९. [1]) [2]) $A_2$ glosses आदिदेश and ईश्वरः. २७१. [1]) $A_2$ gloss अभ्यपायः. २७२. [1]) $A_2$ gloss प्रवरसेनस्य.—[2]) Thus $A_1$; corr. by later hand into °स्मृतेः, as found also in R. २७६. [1]) $A_1$ gloss स्वल्पमर्थिता बहु फलन्ति महान्तः.—[2]) $A_1$ gloss उदन्यवा पिपासया.—[3]) Emended: A R G बदन्यौ.—[4]) $A_2$ gloss शिवः. २७७. [1]) $A_2$ gloss पराभवं. २७८. [1]) $A_2$ gloss प्रभुः.—[2]) Thus corr. by $A_2$ from $A_1$ स फलार्थिनम्. २७९. [1]) Thus $A_1$; corr. by later hand into सायुज्या°. २८०. [1]) $A_2$ आगच्छ°. २८१. [1]) स supplied by $A_2$ in space left by $A_1$.—[2]) $A_2$ gloss निवार्य. २८४. [1]) $A_2$ gloss तेजः.—[2]) $A_2$ gloss धीरैः. २८६. [1]) Emended; A निश्वस°. २८९. [1]) $A_2$ gloss प्रवरसेन. २९०. [1]) $A_2$ gloss मातृगुप्तः.—[2]) Thus corr. by later hand from $A_1$ विन्चस्य.—[3]) $A_2$ gloss विक्रमादित्यः. २९१. [1]) Thus $A_1$; corr. by $A_2$ into द्योततेऽनान्यथा किं न which reading is found also in G R Edd.—[2]) $A_2$ gloss सूर्यकान्तः.

अथ राजाभ्यधात्केन राज्यमपकृतं तव । यस्मात्प्रत्युपचिकीर्षायै नमीशामनुशोचसि ॥२९२॥

मातृगुप्तस्ततोवादीत्कोपस्मितसिताधरः । अस्मानुत्सहते कश्चिन्नापकर्तुं बलाधिकः ॥२९३॥

नयता गण्यतामस्मानन्तरज्ञेन तेन हि । न भस्मनि हुतं सर्पिर्नोप्तं वा सस्यमूषरे ॥२९४॥

उपकारं स्मरन्तस्तु कृतज्ञस्य वशंवदाः । पदवीमुपकर्तॄणां यान्ति निश्चेतना अपि ॥२९५॥ 295

निर्वाणमनुनिर्वाति तपनं तपनोपलः । इन्दुमिन्दुमणिः किं च शुष्यन्तमनुशुष्यति ॥२९६॥

पुण्यां वाराणसीं गत्वा तस्माच्छमसुखोन्मुखः । इच्छामि सर्वसंन्यासं कर्तुं द्विजजनोचितम् ॥२९७॥

मणिदीपनिवेशं तमन्तरेणान्धकारिताम् । बिभेमि द्रष्टुमप्युर्वीं भोगयोगे कथैव का ॥२९८॥

इत्यौचित्यनिधेस्तस्य वाणीमाकर्ण्य विस्मितः । धीरः प्रवरसेनोपि व्याजहारोचितं वचः ॥२९९॥

सत्यं विश्वंभरा देवी भूपते रत्नसूरियम् । उत्पन्नया द्योतते धन्यैः कृतज्ञैर्या भवादृशैः ॥३००॥ 300

अन्तरज्ञतया श्लाघ्यः कोन्यस्तस्मान्महीभुजः । इत्थं जडे जगत्येकस्त्वं यथावद्विवेद यः ॥३०१॥

चिरं खलु खिलीभूताः कृतज्ञस्य वीथयः । धीर त्वयैव न स्याच्च संचारो यदि दर्श्यते ॥३०२॥

पाकक्षेत्र भुमस्य मेघ तदसौ प्रागेव नाराद्धिकमु स्वार्थेनेव मयास्य किं न भजते दीनान्धबन्धूनयम् ।
मत्तो रन्ध्रदृशोस्य भीर्यदि न तल्लुब्धः किमेष त्यजेदित्यन्तः पुरुषाधमः कलयति प्रायः कृतोपक्रियः ॥३०३॥

अत्युदात्तगुणेष्वेषा कृतपुण्यैः प्ररोपिता । शालशालीभवत्येव यावन्मात्रापि सत्क्रिया ॥३०४॥

तत्त्वं गुणवतामध्यस्तस्त्वद्विधाभिनन्दितः । परीक्षितो मणिरिव व्यक्तं बहुमतः सताम् ॥३०५॥ 305

तस्मादनुगृहाणास्मान्मा स्म त्याक्षीर्नरेन्द्रताम् । ममापि ख्यातिमायातु गुणवत्पक्षपातिता ॥३०६॥

पूर्वं तेनाथ चरमं मयापि प्रतिपादिताम् । भवान्प्रतिप्रणयिनीं विदधातु पुनर्भुवम् ॥३०७॥

अथ्यामौदार्यचर्यस्य भुङ्क्ष्वेति नृपतेर्वचः । कृतस्मितो मातृगुप्तः शनैर्वचनमब्रवीत् ॥३०८॥

यान्त्यक्षराण्यन्तरेण वाक्यं वक्तुं न पार्यते । का गतिस्तदुपादाने मर्यादोल्लङ्घनं विना ॥३०९॥

अतः परुषमप्यत्र किंचिदेव मयोच्यते । अव्याजार्जवमप्येतदार्यत्वमवधीर्यते ॥३१०॥ 310

सर्वः स्मरति सर्वस्य प्रागवस्थाश्च लाघवम् । आत्मैव वेत्ति माहात्म्यं वर्तमाने क्षणे पुनः ॥३११॥

पूर्वावस्था मदीया ते त्वदीया या च मे हृदि । ताभ्यां विमोहितावावां न विद्मोन्योन्यमाशयम् ॥३१२॥

राजा भूत्वा कथं मादृक्प्रतिगृह्णातु संपदः । कथमेकपदे सर्वमौचित्यं परिमार्जतु ॥३१३॥

असाधारणमौदार्यमाहात्म्यं तस्य भूपतेः । भोगमात्रकृते मादृक्किं साधारणतां नयेत् ॥३१४॥

अपि च स्पृहयालुः स्यां भोगेभ्यो यदि भूपते । ध्रियमाणेभिमाने मे केन ते विनिवारिताः ॥३१५॥ 315

यन्ममोपकृतं तेन तद्विना प्रत्युपक्रियाम् । जीर्णमेवाधुनाङ्गेषु प्रभवत्वेष निश्चयः ॥३१६॥

या गतिर्भूभुजोमुष्य मया तामनुगच्छता । पात्रापात्रविवेकस्य ख्यातिर्नेया प्रकाश्यताम् ॥३१७॥

एतावत्येव कर्तव्ये यातेस्मिन्कीर्तिशेषताम् । भोगमात्रपरित्यागाद्विदध्यां सत्त्वसंपदाम् ॥३१८॥

---

२९२. [1]) Thus corr. by later hand from A₁ प्रत्युप°. २९४. [1]) A₂ gloss तेन हर्षेणेन. २९५. [1]) A₂ °वशीकृताः. २९८. [1]) A₂ gloss विक्रमादित्यं. ३०१. [1]) A₂ gloss हर्षेणात्. ३०२. [1]) A₂ gloss वीथिषु.—[2]) दर्श्यते supplied by A₂ in space left by A₁. ३०७. [1]) Thus A₁; A₂ °न्माणिम°. ३०९. [1]) Thus corr. by A₂ from A₁ यान्त्यक्षरा°. ३१०. [1]) This verse has been omitted by A₁ and supplied in margin by A₂; found in R G. ३१५. [1]) A₂ gloss ते भोगा इत्यर्थः. ३१८. [1]) A₂ gloss विक्रमादित्ये.

इत्युक्त्वा विरते तस्मिन्नजगाद जगतीपतिः । त्वदीया न मया स्पृश्यास्त्वयि जीवति संपदः ॥३१९॥

320 अथ वाराणसीं गत्वा कृतकाषायसंग्रहः । सर्वं संन्यस्य सुकृती मातृगुप्तोभवद्यतिः ॥३२०॥

राजा प्रवरसेनोपि काश्मीरोत्पत्तिमञ्जसा । निखिलां मातृगुप्ताय प्राहिणोद्दत्तनिश्चयः ॥३२१॥

स हठापतितां लक्ष्मीं भिक्षाभुक्प्रतिपादयन् । सर्वार्थिभ्यः कृती वर्षान्दश प्राणानधारयत् ॥३२२॥

अन्योन्यं साभिमानानामन्योन्यौचित्यशालिनाम् । त्रयाणामपि[1] वृत्तान्त एष त्रिपथगापथः ॥३२३॥

राजा प्रवरसेनोथ नमयन्नवनीभरान् । अकृष्णलक्ष्माः ककुभो वृद्धस्य यशसो व्यधात् ॥३२४॥

325 पीताब्धिर्लङ्घितोर्वीभृत्कुम्भयोनिरिवानयत् । तस्य प्रतापः प्रभवन्भुवनानि[1] प्रसन्नताम् ॥३२५॥

भुग्नतमालपत्राणि शीर्णताडीदलानि च । तत्सेनार्णवतीराणि चक्रेरिस्त्रीमुखानि च ॥३२६॥

स गङ्गालिङ्गिताङ्गस्य पूर्ववारिनिधेर्व्यधात् । सैन्येभमदनिष्पन्दैः कालिन्दीसंगमश्रियम् ॥३२७॥

रोधस्यपरपाथोधेः कटकैः स्पृष्टदिक्तटैः । चकारोत्पाट्य सौराष्ट्रानसौ राष्ट्रविपाटनम् ॥३२८॥

यशोर्थिनः पार्थिवेषु द्वेषरागबहिष्कृतः । ववृधे धर्मविजयस्तस्य क्षितिशतक्रतोः ॥३२९॥

330 वैरिनिर्वासितं पित्र्ये विक्रमादित्यजं न्यधात् । राज्ये प्रतापशीलं स शीलादित्यापराभिधम् ॥३३०॥

सिंहासनं स्ववंश्यानां तेनाहितहृतं ततः । विक्रमादित्यवसतेरानीतं स्वपुरं पुनः ॥३३१॥

हेलुत्तीर्य विविधानमन्वानं पराजयम् । सप्त वारान्स[1] तत्याज जित्वा मुम्मुनिं[2] भूभुजम् ॥३३२॥

धार्ष्ट्यादयाष्टमे वारे हेतुमाख्यातुमुद्यतम् । धिक्प्रभून्बध्यतां सोयमित्यूचे नृपतिः क्रुधा ॥३३३॥

अवध्योहं प्रभुत्वेन वीरेत्युक्ताभयोत्सुकः । मध्येसभं ननर्तास्य सोनुकुर्वन्कलापिनम् ॥३३४॥

335 नृत्तं केकां च शिखिनो[1] दृष्ट्वास्मै प्रार्थितं नृपः । अभयेन समं प्रादात्तालावचरणोचितम्[2] ॥३३५॥

वसतोस्य दिशो जित्वा प्रभुः पैतामहे पुरे । कर्तुं पुरं स्वनामाङ्कं प्रथते स्म मनोरथः ॥३३६॥

रात्रौ क्षेत्रं च लग्नं च दिव्यं ज्ञातुमथैकदा । स वीरो वीरचर्यायां निर्ययौ पार्थिवार्यमा ॥३३७॥

गच्छतः क्ष्मापतेस्तस्य मौलिरत्नाग्रबिम्बितः । बभार तारानिकरो[1] रक्षासर्षपविभ्रमम् ॥३३८॥

अथानन्तचितालोकस्पष्टभीमतटद्रुमाम् । श्मशानप्रान्ततटिनीं पर्यटन्नाससाद[1] सः ॥३३९॥

340 ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः । ऊर्ध्वबाहु महद्भूतं प्रादुरासीन्महौजसः ॥३४०॥

नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः । उल्काज्योतिःकृताश्लेषः कुलाद्रिरिव दिद्युते ॥३४१॥

तमथ प्रतिशब्देन घोरेणापूरयन्दिशः । अभ्यासं विहसन्नुच्चैरुवाच क्षणदाचरः ॥३४२॥

संत्यज्य विक्रमादित्यं सत्त्वोद्रिक्तं च शूद्रकम् । त्वां च भूपाल पर्याप्तं धैर्यमन्यत्र दुर्लभम् ॥३४३॥

वसुधाधिपते वाञ्छासिद्धिस्तत्र विधीयते । सेतुमेतं समुत्तीर्य पार्श्वमागम्यतां मम ॥३४४॥

345 इत्युदीर्य निजं जानुं रक्षः पारात्प्रसारयत् । तन्महासरितो वारि सेतुसीमन्तितं व्यधात् ॥३४५॥

अङ्गेन रक्षःकायस्य ज्ञात्वा सेतुं प्रकल्पितम् । वीरः प्रवरसेनोथ विकोशां क्षुरिकां दधे ॥३४६॥

---

३२३. 1) $A_1$ gloss त्रयाणां विक्रमादित्यमातृगुप्तप्रवरसेनानाम्. ३२५. 1) $A_3$ gloss जलान्यपि. ३३२. 1) $A_3$ gloss प्रवरसेन.—2) Doubtful emendation. मुं has been supplied by $A_2$ in space left by $A_1$; $A_2$ has marked a different division of the words, जित्वाऽमुं । मुनिभूभुजम्, which is also indicated by the interlinear gloss of $A_3$ प्रतापशीलं; C reads मुम्मुनि°. For the name मुम्मुनि see iv. 167; v. 516; viii. 2180 (C.).—३३५. 1) $A_3$ gloss शिखिवृन्दा.—2) Thus $A_1$; $A_2$ तालार्धचरणो°. ३३८. 1) Thus $A_2$; $A_1$ °बाग्र°. ३३९. 1) Thus apparently $A_1$; $A_2$ °यन्.

स तथोत्कृत्य तन्मांसं कृतसोपानपद्धतिः । अरोहद्यत्र तत्स्थानं क्षुरिकाबलमुच्यते ॥३४७॥
पार्श्वस्थं तं समभ्युक्त्वा प्रातर्मस्तकपातनम् । दृष्ट्वा पुरं विधेहीति तदद्भुतं तिरोदधे ॥३४८॥
देव्या शारिकयाद्रेन यक्षेणाधिष्ठिते[1] च सः । ग्रामे शारीटके[2] पश्यत्सूत्रं वेतालपातितम् ॥३४९॥
भक्त्या प्रतिष्ठां प्राक्तस्मिन्निनीषौ प्रवरेश्वरम् । जयस्वामी स्वयं पीठे भित्त्वा क्ष्मामुपाविशत् ॥३५०॥
वेतालावेदितं लग्नं जानतो जगतीभुजा । स्थपतेः स जयाख्यस्य नाम्ना प्रख्यापितोभवत् ॥३५१॥
नगराप्रातिलोम्याय भक्त्या तस्य विनायकः । प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ ॥३५२॥
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः । पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन्निवेशिताः ॥३५३॥
वितस्तायां स भूपालो बृहत्सेतुमकारयत् । ख्याता ततः प्रभृत्येव तादृक्सेतुकल्पना ॥३५४॥
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात् । मातुलः स नरेन्द्रस्य जयेन्द्रो विनिवेशनम् ॥३५५॥ 
बुभोज सिंहलादीन्यो द्वीपान्स सचिवीकरोत् । मोराकनामा मोराकभवनं भुवनाद्भुतम् ॥३५६॥
षट्त्रिंशद्गृहलक्षाणि पुरे तत्प्रथमे पुरा । यस्यास्तां वर्धनस्वामी विश्वकर्मा च सीमयोः ॥३५७॥
दक्षिणस्मिन्नेव पारे वितस्तायाः पुरा किल । निर्मितं तेन नगरं विभक्तैर्युक्तमापणैः ॥३५८॥
ते तत्राभ्रंलिहाः सौधा यान्व्याहत्य दृश्यते । वृष्टिविघ्नं निदाघान्ते चैत्रे चोत्कुसुमं जगत् ॥३५९॥
तद्विना नगरं कुत्र पवित्राः सुलभा भुवि । सुभगाः सिन्धुसंभेदाः क्रीडावसथवीथिषु ॥३६०॥ 
दृष्टः क्रीडानगोन्यत्र न मध्येनगरं क्वचित् । यतः सर्वौकसां लक्ष्मीः संलक्ष्या पुरपथादिव ॥३६१॥
वैतस्तं वारि वास्तव्यैर्बृहत्सुहिमशार्करम् । ग्रीष्मेप्यहि स्ववेश्मासाद्य ततोन्यत्र लभ्यते ॥३६२॥
प्रतिदेवगृहं कोशास्ते तस्मिन्नर्पिता नृपैः । सहस्रशः शक्यते यैः क्रेतुं भूः सागराम्बरा ॥३६३॥
पुरे निवसतस्तस्मिंस्तस्य राजप्रजासृजः । शनैः साम्राज्यलाभस्य षष्टिः संवत्सरा ययुः ॥३६४॥
ललाटे भूलमुद्राङ्के जराभुक्ताः शिरोरुहाः । तस्य शंभुभ्रमासक्तगङ्गाम्भोविभ्रमं दधुः ॥३६५॥ 
अथाश्वपादेनेशाननिदेशात्तत्क्षणागतः । काश्मीरिको जयन्ताख्यो द्विजन्माचोदि पार्श्वगः ॥३६६॥
भ्रान्तोस्यध्वन्य नान्यस्माद्देशात्तेभिमतं भवेत् । राज्ञे प्रवरसेनाय लेख एष प्रदर्श्यताम् ॥३६७॥
इत्युक्तार्पितलेखोसावसमर्थः पथः पृथून् । गन्तुं प्रस्थानखिन्नोस्मि सवास्तेनेत्यगदत ॥३६८॥
आचम्य तावत्त्वं स्पृष्टो द्विजः कापालिना मया । उक्तेति तेन क्षिप्तोसावावासजे दीर्घिकाजले ॥३६९॥
उन्मीलितेक्षणोऽद्राक्षीत्स्वं स्वदेशादथोत्थितम् । तस्थुषः प्रार्चने राज्ञो भृत्यान्व्यापाञ्जलाहतौ ॥३७०॥ 
स्वमावेदयितुं तथा नीयमाने नृपान्तिकम् । अभ्याक्षिप्तोक्षिपल्लेखं स स्नानकलशे ततः ॥३७१॥
प्रवरेशं स्नापयता न्यस्तं तत्कलशात्पुनः । राज्ञा लेखं वाचयित्वा जयन्तः प्रापितोन्तिकम् ॥३७२॥
कृतं कृत्यं भवद्वत्स भोगा भुक्ता वयो गतम् । किमन्यत्करणीयं ते एहि गच्छ शिवालयम् ॥३७३॥
ततस्तं वृत्तसंकेतः संतोष्याभिमतार्पणात् । भित्त्वा तमथ प्रासादं जगाहे विमलं नभः ॥३७४॥
शनैः स ददृशे गच्छन्कैलासतिलकां दिशम् । विशदे वहन्व्योम्नि द्वितीयतपनोदयम् ॥३७५॥ 

३४७. [1]) Thus corr. by A₃ from A₁ °आरं; G °बाल. ३४९. [1]) Thus corr. by later hand from A₁ °टिहें.—[2]) A₂ gloss ग्रामद्. ३५१. [1]) स्व supplied by A₃. ३५४. [1]) Thus corr. by A₃ from A₁ सत. ३५५. [1]) A gloss स्थापनम्. ३६२. [1]) A₃ °वेहसु°. ३६६. [1]) Thus corr. by A₃ from A₁ °निर्दे°.

जयन्तेनाद्भुतोदन्तहेतुनावाप्य संपदः । स्वनामाङ्कमठारादिकर्मभिर्निर्मलाः कृताः ॥३७६॥
एवं स भुवनैश्वर्यं भुक्त्वा[1] भूमिभृतां वरः । अनेनैव शरीरेण भेजे भूतपतेः सभाम् ॥३७७॥
प्रासादे प्रवरेशस्य सिद्धिक्षेत्रे क्षमापतेः । स्वर्गद्वारप्रतिमठं[1] द्वारमद्यापि लक्ष्यते ॥३७८॥
तस्य रत्नप्रभादेव्यां जातो राजा युधिष्ठिरः । अपासीन्नवमासोनाः क्ष्मां चत्वारिंशतिं[1] समाः ॥३७९॥
380 सर्वरत्नजयस्कन्दगुप्तशब्दाङ्किताभिधाः । आसन्विहारचैत्यादिकृत्यैस्तत्सचिवा वराः ॥३८०॥
भत्रच्छेदाभिधं ग्रामं स्तुत्यं चैत्यादिसिद्धिभिः । यो व्यधात्सोस्य वज्रेन्द्रोप्यासीन्मन्त्री जयेन्द्रजः ॥३८१॥
दिक्कामिनीमुखोत्कीर्णकीर्तिचन्दनचित्रकाः । आसन्कुमारसेनाद्यास्तस्यान्येप्यग्र्यमन्त्रिणः ॥३८२॥
पश्चात्तस्यां सुतस्तस्य नरेन्द्रादित्य इत्यभूत् । लःखणापरनामा यो नरेन्द्रस्वामिनं व्यधात् ॥३८३॥
वज्रेन्द्रतनयौ वज्रकनकौ यस्य मन्त्रिणौ । अभूतां सुकृतोदन्तौ राज्ञी च विमलप्रभा ॥३८४॥
385 स विधायाधिकरणं लिखितस्थितये निजम् । द्यां त्रयोदशभिर्वर्षैरारुरोह महाभुजः ॥३८५॥
तस्यानुजो धरणिभृद्रणादित्यस्ततोभवत् । तुञ्जीनापरनामानं यं जनाः प्राहुरञ्जसा ॥३८६॥
जगद्विलक्षणं यस्य शङ्खमुद्राङ्कितं शिरः । अपूर्वशर्वरीशान्तर्लीनभानुश्रियं दधे ॥३८७॥
रिपुकण्ठाटवीष्वासीद्यस्य धाराधरः पतन् । तद्वधूनेत्रकुण्डैस्तु जलाधिक्यमधार्यत ॥३८८॥
अपूर्वां यत्प्रतापाग्निः प्रविश्योर्वीं द्विषां न्यधात् । नारीनेत्रेषु नीरोर्मीन्मन्दिरेषु तृणाङ्कुरान् ॥३८९॥
390 यस्य पाणिप्रणयितां कृपाणे समुपागते । कबन्धेभ्यः परो नृत्तं न व्यधत्त द्विषद्दले[1] ॥३९०॥
तस्याप्यपोढमाहात्म्या देवी दिव्याकृतेः प्रिया । विष्णुशक्तिः क्षितिं प्राप्ता रणारम्भाभिधाभवत् ॥३९१॥
स हि जन्मान्तरे पूर्वं द्यूतकारोभवत्किल । कदापि प्राप निर्वेदं सर्वस्वं कितवैर्जितः ॥३९२॥
देहत्यागोद्यतोप्यासीत्प्राप्यं किंचिद्विचिन्तयन् । न पर्यन्तेप्युपेक्षन्ते कितवाः स्वार्थसाधनम् ॥३९३॥
अवन्ध्यदर्शनां विन्ध्ये देवीं भ्रमरवासिनीम् । द्रष्टुमैच्छद्वराकाङ्क्षी निर्व्यपेक्षः स्वजीविते ॥३९४॥
395 भ्रमरैः शङ्कुपुच्छाग्रैः खण्ड्यमानस्य देहिनः । तदास्पदं हि विख्यातो दुर्लङ्घ्या पञ्चयोजनी ॥३९५॥
स वज्रशङ्कुपुच्छानां धीमांस्तेषां प्रतिक्रियाम् । देहेवश्यपरित्याज्ये मन्वानोभूददुष्कराम् ॥३९६॥
प्रागयोवर्मणा देहं ततो महिषचर्मणा । तेन छादयता दत्तो मृल्लेपोथ सगोमयः ॥३९७॥
अथ भानुकरोच्छुष्कमृल्लेपाम्रेडिताङ्गकः । स लोष्ट इव संचारी प्रतस्थे क्रूरनिश्चयः ॥३९८॥
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समम् । गुहा तेन ततः सान्द्रतमोभीमा व्यगाह्यत ॥३९९॥
400 अथोदतिष्ठन्गर्तेभ्यो घोरा भ्रमरमण्डलाः । पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्यरवैरिव ॥४००॥
ते तमुच्छुष्कमृल्लेपरेणुव्रणितलोचनाः । सहसा नाक्रमन्ते स्म प्रहरन्तोपि बाधितुम् ॥४०१॥
रेणुभिर्येन्धितदृशस्ते न्यवर्तन्त षट्पदाः । तेखण्डयंस्तु मृल्लेपं न्यपतन्ये नवा नवाः ॥४०२॥
तैः खण्ड्यमानमुद्दण्डैर्व्रजतो योजनत्रयीम् । क्रमान्मृत्कवचं तस्य पथि संक्षयमाययौ ॥४०३॥
ततो मुहुः प्रहरतां तेषां माहिषचर्मणि । घोरश्चटचटाघोषः प्रादुरासीद्भयंकरः ॥४०४॥

---

३७७. [1]) Thus $A_2$; $A_1$ त्यक्त्वा. ३७८. [1]) $A_2$ °विमठं. ३७९. [1]) Thus corr. by $A_2$ from $A_1$ चतुर्विंशतिं. ३८१ [1]) $A_2$ gloss भौट्टी. ३८३. [1]) $A_1$ ल × खणा°. ३९०. [1]) $A_2$ indicates a *varia lectio* in the marginal note अन्यत कबन्धेभ्यः परं नृत्तं न व्यधत्त द्विषद्दलम्; over the last word the gloss कर्तृ by the same hand.

धनुर्धयोजनस्यार्धमतिक्रम्य चिखेद सः । रणत्कारैर्हरेः कांस्यतालयोर्मर्मपातिभिः ॥४०५॥ 405

धावंस्ततोतिवेगेन लभ्यमानेन षट्पदैः । स शस्त्रवर्मणामोचि चित्तं[1] धैर्येण नो पुनः ॥४०६॥

गव्यूतिमात्रमासन्ने देवीधामनि धैर्यवान् । धुन्वन्कराभ्यां मधुपान्धावति स्म स धीरधीः ॥४०७॥

अथ काश्यस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः । कराभ्यामक्षिणी रक्षन्देव्यायतनमासदत् ॥४०८॥

प्रशान्ते भृङ्गसंपाते प्रकाशमवलोकयन् । स देव्याः पादयोरग्रे पपातोत्क्रान्तजीवितः ॥४०९॥

स्तोकावशेषप्राणं तं देव्याश्वासयितुं ततः । अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना ॥४१०॥ 410

दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा । स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी ॥४११॥

प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरसीम्नि याम् । घोराकारां स तां देवीं नाद्राक्षीच्च तां पुनः[1] ॥४१२॥

ददर्श पुनरुद्यानलतावासे विलासिनीम् । स्थितां पुष्करिणीतीरे श्यामां पुष्करलोचनाम् ॥४१३॥

गृहीतहारमुक्तार्घां[1] वक्त्रां पीनस्तनाञ्जलिम् । महार्हैः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकाम् ॥४१४॥

यावकाहारिणौ पादौ दधतीं कृच्छ्रचारिणौ । स्तनचक्रमुखं द्रष्टुं तपस्यन्ताविवान्वहम् ॥४१५॥ 415

भास्वद्बिम्बाधरां कृष्णकेशीं सितकराननाम् । हरिमध्यां शिवाकारां सर्वदेवमयीमिव ॥४१६॥

तां विभाव्यानवद्याङ्गीं निर्मेन यौवनोर्जिताम् । निन्ये[1] वारितवामेन स कामेन विधेयताम् ॥४१७॥

दधती रूपमाधुर्यपुरश्छन्नामधृष्यताम् । अप्सराः प्रत्यभात्तस्य सा हि चित्ते न[1] देवता ॥४१८॥

कृपामृदुरवादीत्तं व्यथितोसि चिरं पथि । मुहुः सौम्य समाश्वस्य प्रार्थ्यतामुचितो वरः ॥४१९॥

स तां बभाषे शान्तो मे भवत्या दर्शनाच्छ्रमः । अदेवी किं तु भवती वरं दातुं कथं क्षमा ॥४२०॥ 420

देवी जगाद तं भद्र कोयं ते मनसि भ्रमः । देवी वा स्यामदेवी वा वरीतुं त्वां तु शक्नुयाम् ॥४२१॥

इति सोभीष्टसंप्राप्तौ कारयित्वा प्रतिश्रवम् । दूरमुत्क्रान्तमर्यादः संगमं तामयाचत ॥ ४२२॥

तमभ्यधात्सा दुर्बुद्धे कोयं तेनुचितो विधिः । प्रार्थयस्वेतरद्यस्मात्साहं भ्रमरवासिनी ॥४२३॥

देवीं तां जानतोप्यस्य नाभूदविहितं मनः । निरुद्धा वासनाः केन जन्मान्तरनिबन्धनाः ॥४२४॥

स तामुवाच सत्यां[1] नेदेवि त्वां गिरमिच्छसि । प्रमाणीकुरु मद्वाणीमहमन्यन्न कामये ॥४२५॥ 425

पूर्वमेव हि जन्तूनां योधिवासो निलीयते । तिलानामिव तेषां स पर्यन्तेपि न शीर्यते ॥४२६॥

देवी वा भव कान्ता वा भीमा वा शोभनापि वा । यादृशीं पूर्वमद्राक्षं तादृश्येवावभासि मे ॥४२७॥

तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयम् । एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः ॥४२८॥

उत्सहन्ते हि संस्प्रष्टुं न दिव्या[1] मर्त्यधर्मिणः । तद्गच्छ क्रूरसंकल्पेत्युक्त्वा सान्तर्दधे ततः ॥४२९॥

अन्यजन्मा भूयासं तया देव्येति चिन्तयन् । प्रयागवटशाखायामवहासीत्स वपुस्ततः ॥४३०॥ 430

सोजायत रणादित्यो रणारम्भा च सा भुवि । मर्त्यभावेपि या नैव जहौ जन्मान्तरस्मृतिम् ॥४३१॥

रतिसेनाभिधश्चोलराजः सज्जोब्धिपूजने । तां तरङ्गान्तराल्लेभे रत्नराशिमिवोज्ज्वलाम् ॥४३२॥

---

४०६. [1]) $A_2$ चित्तं. ४१२. [1]) Thus $A_1$; $A_3$ G पुरः; R and Edd. read पुनः. ४१४. [1]) Thus $A_1$; altered by $A_2$ to °मुक्तार्घाम्बुजा. $A_2$ reads in margin गृहीतहारमुक्तार्घां वक्त्राब्जपीनस्तनाञ्जलिम्, with gloss मुक्ता एवार्घः G and R follow $A_1$. ४१७. [1]) $A_1$ writes ऽ after निन्ये. ४१८. [1]) This division of the words is indicated by $A_1$. ४२५. [1]) Thus corr. by later hand from $A_1$ सत्यं; सत्यां also in G and R. ४२९. [1]) $A_2$ देव्यो.

आ बाल्याद्व्यक्तदिव्योर्मिं तामलंकृतयौवनाम् । दिव्यार्थी पृथिवीशेभ्यो मार्गितोपि ददौ नृपः ॥४३३॥
रणादित्यनृपामात्ये दूत्यायाते तथैव ताम् । मत्वाख्यानेच्छुमाचख्यौ सैव तद्वरणं वरम् ॥४३४॥
435 तदर्थमेव कथितस्वोत्पत्तिं तां ततः पिता । द्रुतं कुन्तलभूभर्तुः सदनं प्राहिणोत्सुताम् ॥४३५॥
प्रहृष्टो विप्रकृष्टं तं देशं गत्वा व्यधत्त ताम् । परिणीय रणादित्यः शुद्धान्तस्याधिदेवताम् ॥४३६॥
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि । तं मायया मोहयन्ती न पस्पर्श कदाचन ॥४३७॥
व्यधान्मायामयीं राज्ञस्तल्पे स्वसदृशीं स्त्रियम् । स्वयं सा भ्रमरीरूपा निर्जगाम बहिर्निशि ॥४३८॥
स नाम्ना स्वस्य देव्याश्च कृत्वा हरगृहद्वयम् । माहेश्वरः शैललिङ्गे कारयामास कारुभिः ॥४३९॥
440 श्वः प्रतिष्ठाप्रसङ्गेन सज्जे तल्लिङ्गयोर्द्वयम्[1] । देशान्तरागतः कश्चिद्दूषयामास दैववित् ॥४४०॥
स दृष्टप्रत्ययः शश्वत्तयोर्घटितलिङ्गयोः । अश्मखण्डैः समण्डूकैर्बभाषे गर्भमावृतम् ॥४४१॥
किंकर्तव्यतया मूढं प्रतिष्ठाविघ्नविह्वलम् । दिव्यदृष्टिः स्वयं देवी ततो राजानमब्रवीत् ॥४४२॥
राजन्गिरिसुतोद्वाहे पौरोहित्यं पुरा भजन् । स्वमर्चादेवमादत्त[1] पूजाभाण्डात्प्रजापतिः ॥४४३॥
तां विष्णोः प्रतिमां वीक्ष्य पूजितां तेन धूर्जटिः । शून्यामिव तदा मेने शक्तिरूपां विना शिवम् ॥४४४॥
445 निमन्त्रितैर्ढौकितानि रत्नान्यथ सुरासुरैः । पिण्डीकृत्य स्वयं चक्रे लिङ्गं भुवनवन्दितम् ॥४४५॥
तां विष्णुप्रतिमां तच्च लिङ्गमीशानपूजितम् । स्वयं प्रजासृजः पूज्यं कालेनाहृत रावणः ॥४४६॥
तेनाप्यभ्यर्च्यमानं तल्लङ्कायामभवच्चिरम् । देवद्वयं रावणान्ते नीतमासीच्च वानरैः ॥४४७॥
तिर्यक्तया ते कपयो मुग्धा हिमनगौकसः । शान्तौत्सुक्याः शनैर्देवौ न्यधुरुत्तरमानसे ॥४४८॥
प्रागेव सरसस्तस्मात्कुशलैः शिल्पिभिर्मया । नावुद्धृतौ प्रातरत्र प्राप्तौ द्रक्ष्यस्यसंशयम् ॥४४९॥
450 तयोः प्रतिष्ठा क्रियतामित्युक्त्वा पृथिवीभुजम् । देवी प्रयाता शुद्धान्तं सिद्धान्सस्मार खेचरान् ॥४५०॥
ते[1] ध्यातमात्राः[2] संप्राप्ता देव्यादेशेन पाथसः[3] । उद्धृत्य नृपतेर्धाम्नि देवौ हरिहरौ न्यधुः[4] ॥४५१॥
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः । प्रातर्नृपगृहे दृष्ट्वा परं विस्मयमाययौ ॥४५२॥
सज्जे प्रतिष्ठालग्नेऽथ माहेश्वरतया नृपः । रणेश्वरप्रतिष्ठायां पूर्वं यत्नसमुद्यतः ॥४५३॥
रणारम्भानुभावेन तावद्देवाद्भुतावहः । स्वयं पीठे रणस्वामी भित्त्वा यन्त्रमुपाविशत् ॥४५४॥
455 कर्तुं प्रभावजिज्ञासां राज्ञ्या दत्तधनस्ततः[1] । स स्वयंभूः स्वयं भक्तोस्तांस्तान्यामानदापयत्[2] ॥४५५॥
कुम्भवासतया छन्नः सिद्धो ब्रह्माभिधो वसन् । परिज्ञाय तयोर्देव्या[1] प्रतिष्ठाकर्म कारितः ॥४५६॥
स वृत्तप्रत्यभिज्ञः सन्प्रतिष्ठाप्य रणेश्वरम् । व्योम्ना भजन्रणस्वामिप्रतिष्ठां गूढमादधे ॥४५७॥
जनास्त्वलक्षयन्यत्तस्वयं पीठमवातरत् । इति केषामपि हृदि प्रवादोऽद्यापि वर्तते ॥४५८॥
सा[1] ब्रह्मप्रतिमं सिद्धं देवी ब्रह्मविदां वरम् । अकारयत्समुद्दिश्य परार्ध्यं[2] ब्रह्ममण्डपम्[3] ॥४५९॥
460 रणारम्भास्वामिदेवौ दंपतिभ्यां व्यधीयत । मठः पाशुपतानां च ताभ्यां प्रद्युम्नमूर्धनि[1] ॥४६०॥

४४०. 1) A₃ gloss शिवलिङ्गद्वयम्. ४४३. 1) Thus A₂; A₁ °धत्त ४५१. 1)2)3) Thus corr. by later hand from A₁ ते, °मात्र, पायस.—4) Thus A₂; A₁ न्यधुः. ४५३. 1) Thus A₁; A₂ °लिङ्गे. ४५५. 1) Thus corr. by A₂ from A₁ ततः.—2) Thus A₂; A₁ भक्तैस्तां°. ४५६. 1) A₃ gloss हरिहरयोः. ४५८. 1) Thus A₂; A₁ प्रवादो. ४५९. 1) Thus corr. by later hand from A₁ स.—2) Thus corr. by A₂ from A₁ परार्धं.—3) Thus A₂; A₁ °मण्डपम्. ४६०. 1) A₃ gloss प्रद्युम्नमूर्धनि शारिकागिरौ.

आरोग्यशाला निरवाप्युल्लाघत्वाय रोगिणाम् । तेन सेनामुखीदेवीभवनान्ते च कारिता ॥४६१॥
ख्यातिं रणपुरस्वामिसंज्ञया सर्वतो गतम् । स सिंहरोत्सिकाग्रामे मार्तण्डं प्रत्यपादयत् ॥४६२॥
अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः । दक्षिणेस्मिन्नजेशस्य पार्श्वे देवोमृतेश्वरः ॥४६३॥
मेघवाहनभूभर्तृपत्न्या भिन्नाख्यया कृते । विहारेपि तया बुद्धबिम्बं साधु निवेशितम् ॥४६४॥
राज्ञे देव्यनुरक्ताय सानुक्रोशाय शंकरः । पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरम् ॥४६५॥ 465
मा भून्मोघास्य मत्प्रीतिरिति मत्वा तदर्पितम् । असाधयत्स तं प्राप्य यशान्ते[1] वत्सरान्बहून् ॥४६६॥
कृत्वाष्टिकापथे कष्टं तपो[1] नन्दिशिलां गतः । भूरिभिर्वत्सरैर्मन्त्रसिद्धेः प्रणयितां ययौ ॥४६७॥
स्वप्नेथ सिद्धिलिङ्गेन जाताभङ्गुरनिश्चयः । चन्द्रभागाजलं[1] भित्त्वा प्रमुखैः प्राविशद्बिलम् ॥४६८॥
बिलेपावृततां याते दिवसान्येकविंशतिम् । प्रविश्य पौरान्प्राभिन्ये दैत्यस्त्रीभोगभोगिताम् ॥४६९॥
एवं स भूपतिर्भुक्त्वा[1] भुवं वर्षशतत्रयम् । निर्वाणशम्भ्वनिर्व्यूढि पातालैश्वर्यमासदत्[2] ॥४७०॥ 470
सानुगे नृपतौ याते दैतेयदयितान्तिकम् । देवी सा वैष्णवी शक्तिः श्वेतद्वीपमगाहत ॥४७१॥
राजवंशेष्वनेकेषु राज्ञोर्वंशद्वये परम् । द्वयोरेवात्र निर्व्यूढिं प्रजावात्सल्यमागतम् ॥४७२॥
रणादित्यस्य गोनन्दवंशे रामस्य राघवे[1] । लोकान्तरगतस्यापि ययोरंशभुजः[2] प्रजाः ॥४७३॥
विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत्सुतः । तस्यासीद्विक्रमादित्यस्त्रिविक्रमपराक्रमः ॥४७४॥
राजा ब्रह्मगल्लूनाभ्यां सचिवाभ्यां समं महीम् । सोपासीद्वासवसमो द्वाचत्वारिंशतिं समाः ॥४७५॥ 475
चक्रे ब्रह्ममठं ब्रह्मा गल्लूनो[1] लूनदुष्कृतः । रत्नावल्याख्यया वध्वा विहारं निरमापयत् ॥४७६॥
राज्ञोनन्तरजस्तस्य राजाभूत्तदनन्तरम् । नापितारातिभूपालो बालादित्यो बलोर्जितः ॥४७७॥
लवणार्णवपानेन तर्षोत्कर्षमिवोद्वहन् । यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोभजन्मुखम् ॥४७८॥
आसन्वैरिमनोगाधबोधदण्डा इवाहताः । यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्वसारिधौ ॥४७९॥
प्रभावाङ्केन बङ्गालाञ्जित्वा येन न्यधीयत । काश्मीरिकनिवासाय कालम्ब्याख्यो[1] जनाश्रयः ॥४८०॥ 480
कश्मीरेषु धनोदग्रमग्रहारं द्विजन्मनाम् । राजा मडवराज्ये यो भेडराख्यमकारयत्[1] ॥४८१॥
विशां विपाटितारिष्टमरिष्टोत्सादने[1] व्यधात् । वल्लभा यस्य बिम्बोष्ठी बिम्बा बिम्बेश्वरं हरम् ॥४८२॥
खातरो मन्त्रिणस्तस्य त्रयो मडसुरीकयोः । सेतोश्च कारका[1] आसन्खङ्खशाबुभमालवाः ॥४८३॥
बभूव तस्य भूभर्तुर्भुवनाद्भुतविभ्रमा । तनयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी ॥४८४॥
तां वीक्ष्य लक्षणोपेतां मृगाक्षीं पितुरन्तिके । अमोघप्रत्ययो व्यक्तं व्याजहारेति दैववित् ॥४८५॥ 485
भविता तव जामाता जगतीभोगभाजनम् । त्वदन्तमेव साम्राज्यं गोनन्दान्वयजन्मनाम् ॥४८६॥
सुतासंतानसाम्राज्यमनिच्छन्नथ पार्थिवः । दैवं पुरुषकारेण जेतुमासीत्कृतोद्यमः ॥४८७॥

---

४६६. [1]) Thus A; R G यशान्तं; Edd. वशान्तं. ४६७. [1]) Thus $A_2$; $A_1$ नतो. ४६८. [1]) Thus corr. by later hand from $A_1$ चान्द्र°. ४७०. [1]) Thus corr. by $A_2$ from $A_1$ भुक्त्वा.—[2]) Thus $A_2$; $A_1$ °मैश्वरम्. ४७३. [1]) $A_1$ gloss वंशे.—[2]) $A_2$ gloss ययोः रामरणादित्ययोः. ४७६. [1]) Emended; A R G °गल्लुन°. ४८०. [1]) The words from कालम्ब्याख्यो to कारका in verse 483 have been supplied by $A_1$ at a later date and in a smaller handwriting, partly in space left for this purpose, partly in margin. ४८१. [1]) Thus corr. by $A_2$ from $A_1$ भेदरा°. ४८२. [1]) $A_2$ gloss रौराले. ४८३. [1]) See note to verse 480 above.

अराजान्वयिने दत्ता मैवं साम्राज्यहारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे ॥४८८॥
हेतुं स रूपतामात्रं कृत्वा जामातरं नृपः । अथाश्वघासकायस्थं चक्रे दुर्लभवर्धनम् ॥४८९॥
490 मातुः कार्कोटनागेन सुप्तायाः समीयुषा । राज्यायैव हि संजातो राज्ञा नाज्ञायि तेन सः ॥४९०॥
निधिन्वते हि शंसन्त्या यमेवायोग्यमाशयात् । जिगीषयेव तत्रैव निदधाति विधिः शुभम् ॥४९१॥
मात्सर्येण जडद्रुहां विलसतो धूमध्वजे योग्यतां ज्ञात्वा स्वां विदधत्त्विषं दिनपतिर्ध्वान्तस्य प्रशान्त्युन्मुखः ।
दैवं वेत्ति न यः शिखी नु परतो नामास्तु तत्संभवाः स्युर्दीपा अपि यद्वशेन जगतस्तिग्मांशुविस्मारकाः ॥४९२॥
धिया भाग्यानुगामिन्या चेष्टमानो नयोचितम् । अभूत्सर्वस्य चक्षुष्यः स तु दुर्लभवर्धनः ॥४९३॥
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथाम् । कौबेरभाग्यस्वाम्यं च शनकैः श्वशुरोऽनयत् ॥४९४॥
495 पित्रोः प्रेयस्तयोद्वृत्तां तारुण्यादिमदेन च । राजपुत्री यथावस्तु गणयामास नैव तम् ॥४९५॥
स्वैरिणीसंगमो भोगा युवानोऽपि पितुर्गृहम् । पत्युर्मृदुत्वमित्यस्याः किं नाभूच्छीलविप्लवकृत् ॥४९६॥
सा नित्यदर्शनाभ्यासाच्छनकैर्विवशा मनः । अनङ्गलेखा खङ्खेन समयुज्यत मन्त्रिणा ॥४९७॥
छन्नप्रेमसुखाभ्यासनष्टह्रीभीतिसंभ्रमा । धार्ष्ट्यं दिवानिशं यान्ती ततस्तन्मयतां ययौ ॥४९८॥
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह ॥४९९॥
500 उपलेभे च शनकैस्तस्यास्तं शीलविप्लवम् । विरागलिङ्गैस्तैस्तैर्धीमान्दुर्लभवर्धनः ॥५००॥
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने । अकाण्ड एव मोहाय पश्यन्ती सस्मितं पथः ॥५०१॥
पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चलैः । तदमित्रं भाषमाणे सस्मितं न्यस्तलोचना ॥५०२॥
तत्तुल्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता । रिरंसां तस्य संलक्ष्य सखीभिर्बद्धसंकथा ॥५०३॥
तच्चुम्बने भुग्नकण्ठी तदाश्लेषसशङ्किका । तत्संभोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता ॥५०४॥
505 भवेद्धि प्रायशो योषित्प्रेमविक्रीतचेतना । निवेदयन्ती दौःशील्यपिशाचावेशवैकृतम् ॥५०५॥ कुलकम् ॥
निगूढचारदौरात्म्यचिन्ताकृशवपुस्ततः । शुद्धान्तमविशज्जातु निशि दुर्लभवर्धनः ॥५०६॥
सोऽपश्यत्सुरतक्लान्तिसुलभस्वापनिःसहाम् । दुर्जारभर्तुरङ्केषु प्रसुप्तामिव वल्लभाम् ॥५०७॥
श्वासैरगलितावेगैः कम्पयन्त्रिः कुचाङ्कुरौ । निवेदयन्तीं तत्कालमेव निर्वहणं रतेः ॥५०८॥
अन्यस्यापि क्रुधो हेतुं पुनरप्यक्षमावहाम् । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ॥५०९॥
510 प्रजिहीर्षुः स रोषेण विमर्शेन निवारितः । महस्येव महस्येव निभृतं स्वममन्यत ॥५१०॥
ततस्तथाविधः क्षुभ्यन्क्रोधावेशसागरः । विचारवेलया तस्य बलात्प्रशममनीयत ॥५११॥
नमस्तस्मै ततः कोऽन्यो गण्यते वशिनां भुवि । जीर्यन्ते येन पर्याप्ता ईर्ष्याविषविषूचिकाः ॥५१२॥
सोऽचिन्तयदहो कष्टाश्चेष्टारागानुगा इमाः । विचारवन्ध्याः क्षिप्यन्ते क्षिप्रं याभिरधो नराः ॥५१३॥

---

४८८. [1]) $A_2$ gloss स्नुषकुलीकरणाय दत्ता. ४८९. [1]) कृत्वा जामा supplied by $A_2$ in space left by $A_1$. ४९०. [1]) Thus corr. by $A_2$ from $A_1$ समेयुषा.—[2]) Thus corr. by $A_2$ from $A_1$ सा. ४९२. [1]) Emended; A R G जडद्रुह°.—[2]) Thus $A_2$; $A_1$ स.—[3]) $A_2$ gloss दूरे इत्यर्थः. ४९६. [1]) $A_2$ gloss शीलविप्लवकारि. ४९७. [1]) Emended; A संपृ°. ४९९. [1]) $A_2$ सह.
५००. [1]) The text from मान्दुर्लभवर्धनः to the end of verse 507 below has been supplied by $A_2$, partly in space left by $A_1$, partly in margin. ५०४. [1]) Emended with Edd.; A °निद्रता. ५०७. [1]) $A_2$ दुर्जार°, with v. l. as above.—[2]) See note to verse 500 above. ५०८. [1]) Thus corr. by $A_2$ from $A_1$ °यन्ती. ५११. [1]) Thus corrected by $A_2$ from $A_1$ क्रुधः वेला°.

स्त्रीति नामेन्द्रियार्थोयमिन्द्रियार्थो यथा परे । तथैव सर्वसामान्या वशिनामत्र काः क्रुधः ॥५१४॥
निसर्गतरला नारीः को नियन्त्रयितुं क्षमः । नियन्त्रणेन किं वा स्याद्यत्सतां स्मरणोचितम् ॥५१५॥ 515
यः शुनोरिव संघर्ष एकार्थाभिनिविष्टयोः । रागिणोर्यदि मानः स कोवमानस्ततः परः ॥५१६॥
ममकारो मृगाक्षीषु क इवायं सचेतसाम् । स्वदेहेनुपपन्नोपि यः सोन्यत्र कथं मतः ॥५१७॥
उद्वेगोत्पादनायैषा वध्या चेत्प्रतिभाति मे । रागस्तर्हि स्मृतः कस्मान्मूलमुद्वेगशाखिनः ॥५१८॥
सप्तपातालनिक्षिप्तमूलो रागमहीरुहः । भूमिभूतमनुत्पाट्य द्वेषमुन्मूल्यते कथम् ॥५१९॥
द्वेषो नामैव दुर्धर्षो जितो येन विवेकिना । क्षणार्धेनैव रागस्य तेन नामापि नाशितम् ॥५२०॥ 520
वीक्ष्यैतद्विष्यता दृष्ट्या रागिणो वाच्यमीदृशम् । ईर्ष्या जेया ततो रागः स्वयमाशु पलायते ॥५२१॥
इति ध्यात्वा लिखद्वर्णान्खड्गस्यांशुकपल्लवे । वध्योपि न हतो वश्यं स्मर्तव्यं तत्त्ववेत्यसौ ॥५२२॥
जनैरलक्ष्यमाणेथ याते दुर्लभवर्धने । त्यक्तनिद्रः स मन्त्री तद्दृष्ट्वा वर्णानवाचयत् ॥५२३॥
दाक्षिण्यात्प्राणदस्यास्य खड्गः स मनसा तदा । विसस्मारानङ्गलेखां दध्यौ तु प्रत्युपक्रियाम् ॥५२४॥
तस्योपकर्तुमुचितं प्रतिकारमिच्छोर्भिन्नाभिशाय तु मनः स्मरबाणपङ्क्तिः ।
दृग्गोचरे परिचयप्रणयं प्रपेदे निर्भिन्नता न तु कदाचन राजपुत्री ॥५२५॥ 525
भुक्त्वा सप्तत्रिंशतिमब्दान्स चतुर्भिर्मासैर्वन्द्यो मूर्धनि रत्नं नृपतीनाम् ।
तस्मिन्काले लोकमनापोज्ज्वलकृत्यो बालादित्यो बालशशाङ्काङ्कितमौलिः ॥५२६॥
पूर्वं विपन्नतनयेभिजनस्य शेषे गोनन्दसंततिरजायत तत्र शान्ते ।
प्राग्वह्निभुग्ननलिनाय हठप्रविष्टतोयौघपाटितबिसा नलिनीव दीना ॥५२७॥
अथ शिथिलितमुख्यामात्यवैमत्यविघ्नः कनकघटविमुक्तैः पावनं तीर्थतोयैः ।
कथमपि स कृतज्ञो राजजामातुरुर्व्यामधित विधिवदिष्टं मूर्ध्नि राज्याभिषेकम् ॥५२८॥
कार्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणद्योतश्रेणिकणाङ्कुराङ्कितबृहद्बाहुमेरीमुखरन् ।
ज्ञातिप्रीतिसतोषशेषफणभृत्संफुल्लदृक्पल्लवन्यासावर्जकदाडकाब्जपटलस्रग्धामशोभोभवत् ॥५२९॥
अथ विगलिता गोनन्दोर्वीभुजोभिजनाच्छुचेरतिशुचिनि भूः कार्कोटाहेः कुले व्यधित स्थितिम् ।
चिरपरिचितात्स्वर्गाभोगाध्वनः पतनं श्रिता त्रिभुवनगुरोः शंभोर्मौलाविवामरनिम्नगा ॥५३०॥ 530

१० ॥ ५३६ ॥ आदितः ५१ ॥ ग्रं १०६९॥
इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां तृतीयस्तरङ्गः ॥[1]

---

५१६. 1) $A_3$ gloss विरोधः. ५२२. 1) Thus corr. by $A_2$ from $A_1$ °स्यांशुस्या°. ५२३. 1) मन्त्री स supplied by $A_2$ in space left by $A_1$. ५२४. 1) तदा किं supplied by $A_2$ in space left by $A_1$. ५२५. 1) Thus $A_1$; altered by $A_2$ to समर्पि°.— 2) $A_3$ gloss कमलितस्यार्थः. ५२७. 1) $A_3$ gloss वर्तिकम्. ५२८. 1) $A_3$ gloss वाक्. ५२९. 1) Thus corr. by $A_2$ from $A_1$ कार्कोट°. *Colophon.* 1) $A_1$ adds here लिखितमेव मया राजानकरत्नकण्ठेन.

## ॥ चतुर्थस्तरङ्गः ॥

तद्गृहीतव्यतिरेकमभिन्नतयादेवेन मिश्रीभवद्विश्वस्थूलमिह व्यपोहतु वपुः स्थाणोरभद्राणि वः ।
वेण्या भोगिवधूशरीरकुटिलश्यामत्विषा वेष्टिता जूटाहेरपि यत्र भाति दयितामूर्त्येव पृक्ता तनुः ॥१॥
स महीं राजकन्यां च प्राप चानेकतः कुलात् । रत्नानां च सुतानां च राजाभूद्भाजनं शनैः ॥२॥
पतिगोपितदौःशील्या तुल्यसौभाग्यगौरवा । अनङ्गभवनं चक्रे विहारं नृपतिप्रिया ॥३॥
शिशुरेवायुषोल्पत्वं दैवज्ञोक्तं विचिन्तयन् । राज्ञः सुतो मल्हणाख्यो मल्हणस्वामिनं व्यधात् ॥४॥
5 पौरविशोककोटादौ प्रदत्तप्रतिपत्तिना । अदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्षमाभुजा ॥५॥
श्रीनगर्यां प्रतिष्ठाप्य दुर्लभस्वामिनं हरिम् । षट्त्रिंशता स वर्षाणां क्ष्मावृषास्तमुपाययौ ॥६॥
अनङ्गदेव्यां संभूतस्तस्य दुर्लभकः सुतः । शशास वासवसमस्ततो वसुमतीं कृती ॥७॥
मातामहस्य यो मात्रा दौहित्रस्तनयीकृतः । प्रतापादित्य इत्याख्यां तत्कुलानुगुणां दधे ॥८॥
औडैनैडबिडालाख्यामभिधा यन्मन्त्रिणा कृताः । अग्रहारा हनुमता पुण्यानुमतसंपदा ॥९॥
10 प्रतापतापितारातिः प्रतापपुर[1]पत्तनम् । मघवन्नगरस्पर्धि दीर्घबाहुर्व्यधत्त सः ॥१०॥
नानादिगन्तरायाततत्तत्क्रयिकसंकुले । नोणाभिधोवसत्तस्य देशे रौहीतको वणिक् ॥११॥
रौहीतदेशे जातानां निवेशाय[1] द्विजन्मनाम् । महागुणो नोणमठं पुण्यज्येष्ठं चकार सः ॥१२॥
स जातु राजभवने राज्ञा प्रीत्या निमन्त्रितः । पूजितोभवदेकाहमुपचारैर्नृपोचितैः ॥१३॥
प्रातः सुखासिकां प्रेम्णा पृष्टोथ पृथिवीभुजा । शीर्षव्यथामकथयत्प्रजातां[1] दीपकज्जलैः ॥१४॥
15 ततः क्रमेण नृपतिस्तेन जातु कृतार्थनः[1] । वसंस्तदास्पदेद्राक्षीत्क्षपायां मणिदीपकान् ॥१५॥
विलासित्वेन लक्ष्म्या च तादृश्या तस्य विस्मितः । अथ द्वित्राण्यहान्यासीत्तत्रैव स कृतार्हणः ॥१६॥
एकदा तेन तत्कान्ता व्यलोकि ललिताकृतिः । श्रीनरेन्द्रप्रभा नाम हर्म्ये हिमकरानना ॥१७॥
उरोजपूर्णकुम्भाङ्का सद्वृत्ताहितविभ्रमा । मूर्तिमन्मङ्गलमिव स्मरस्य[2] च गृहस्य च ॥१८॥
हर्म्यस्य निर्जनतया स निःशङ्कविहारिणीम् । तां विलोक्यानवद्याङ्गीमभिलाषेण पस्पृशे ॥१९॥
20 सापि दर्शितमालीभिः किंचित्साचीकृतानना । अपश्यत्काश्यपीकान्तं श्रोत्रविश्रान्तया दृशा ॥२०॥
प्राग्जन्मप्रेमबन्धाद्वा निदेशाद्वा[1] मनोभुवः । सपक्षपातं सा तस्य दृष्ट्यैव विदधे मनः ॥२१॥
क्षणादलब्धस्पर्शोपि तां सौभाग्यसुधामयीम् । मज्जानमपि[1] संस्पृश्य स्थितामिव विवेद सः ॥२२॥

१०. 1) $A_3$ gloss लापर्. १२. 1) $A_3$ gloss स्थितये. १४. 1) Thus corr. by $A_3$ from $A_1$ प्रजाना. १५. 1) Thus corr. by $A_3$; $A_1$ seems to have read कृतानन:. १८. 1) $A_1$ gloss सन्तो च ताबूक सबूक ताल्वां आहितो विभ्रमो यथा.—2) च स्मरस्य supplied by $A_3$ in space left by $A_1$. २१. 1) Thus corr. by $A_3$ from $A_1$ निर्देशाद्वा. २२. 1) Thus corr. by later hand from $A_1$ मज्जामामपि.

हर्षस्तम्भच्छन्नगामी क्षणं भूत्वा जगाम सा । व्यावर्त्य वक्त्रं पश्यन्ती पार्थिवं तं मुहुर्मुहुः ॥२३॥
गृहीतहृदयस्तस्यास्ताभिरेव महीपतिः । स चिन्ताजिह्मनयनो राजधानीं समैयसौ ॥२४॥
अथ तस्य तदाकारध्यानाधिष्ठितचक्षुषः । सममन्तःपुरप्रीत्या प्रपेदे लाघवं तनुः ॥२५॥
अचिन्तयच्च धिक्कष्टं क्वोयमनुभावहः । अहिमन्थो मानसोद्याने रागनामा विषद्रुमः ॥२६॥
अहो नु दुर्जयं रागवृत्तिभिस्तं विजित्य या । विवेकादीन्व्यधात्पूर्वे हृदयः परिपन्थकान् ॥२७॥
आव्यं कौलीनशीलेन येन भूमिभृता सता । तस्य मे दुःसहः कोयं सदाचारविपर्ययः ॥२८॥
यत्र दारापहरणं राजैव कुरुते विशाम् । परः को नाम तत्रास्तु ख्यापितां नीत्यतिक्रमे ॥२९॥
विमृश्यन्निति भूपालो विस्मर्तुमसमर्थस्तां । न पश्यति साधुलेख्यां न च तां दीर्घलोचनाम् ॥३०॥
तमथ प्रथितास्वास्थ्यं नेदीयोमरणं वणिक् । स जनाज्ज्ञातवृत्तान्तः सुजनो विज्ञनेब्रवीत् ॥३१॥
इमामवस्थां प्राप्नोषि किं धर्मेण निरुध्यसे । न प्राणसंशये जन्तोरकृत्यं नाम किंचन ॥३२॥
यन्मतानि प्रतीक्ष्यन्ते विबुधैर्धर्मसंशये । तेषामपीदृशे कृत्ये भूयते संयमव्ययः ॥३३॥
यशोनुरोधादुचितं नापि देहमुपेक्षितुम् । स्वकीर्तिर्न परासूनां कीर्णा कर्णरसायना ॥३४॥
माभून्मदनुरोधस्ते त्वत्प्रियार्थे हि पार्थिव । प्राणा अपि न मे गण्या इन्द्रियार्थेषु का कथा ॥३५॥
एवमुक्तोपि नादत्ते तां चेत्तस्तां गुरास्पदात् । गृहतो नर्तकीभूत्वा नृपतस्त्वाम्यथार्पिता ॥३६॥
नेनेति प्रथमाणः स वलिना च मनोभुवा । प्राग्लज्जामथ जग्राह कथंचित्तां सुलोचनाम् ॥३७॥
कृत्यैस्तदात्तैः सापास्ततादृक्चारित्रलाघवा । नरेन्द्रमहिषी चक्रे श्रीनरेन्द्रेश्वरं हरम् ॥३८॥
क्रमेण च प्रजापुण्यैश्चन्द्रापीडाभिधं सुतम् । प्रासोष्ट पार्थिवभूर्निधानमिव मेदिनी ॥३९॥
तस्याभिजनमालिन्यं स्वच्छैरच्छेदि तद्गुणैः । शाणाश्मकषणैः कार्ष्ण्यमाकरोत्थं मणेरिव ॥४०॥
धूमाद्याद्रमलीमसाम्बुदचयः सूते घनस्योद्गमो लोहस्यातिशितस्य जातिरचलात्कुण्ठाश्ममालामयात् ।
किं चात्यन्तजडाज्जलाद्द्युतिमतो ज्वालाध्वजस्योद्गमो जन्मावन्यनुकारिणो न महतां सर्वे स्वभावाः क्वचित् ॥४१॥
तारापीडोपि तनयः क्रमात्तस्यामजायत । अविमुक्तापीडनामा मुक्तापीडोपि भूपतेः ॥४२॥
वज्रादित्योदयादित्यललितादित्यसंज्ञकाः । प्रतापादित्यजाः ख्याताश्चन्द्रापीडादयोपि ते ॥४३॥
वर्षाण्यञ्चाशतं भुक्त्वा भुवं दुर्लभभूपतिः । पुण्यनिःश्रेणिभिः पुण्यामारुरोह दिवं शनैः ॥४४॥
राज्यचूडामणिः श्रीमांश्चन्द्रापीडस्ततोभवत् । पीडितेन्दुत्विषा कीर्त्या कलेः पीडां चकार यः ॥४५॥
एकपादाकृतिर्धर्मः समस्तैर्वेर्जितो नृपैः । भुक्तशोकधृता येन पादैः संयोजितस्त्रिभिः ॥४६॥
यं क्षमाविक्रममुखाः परस्परविरोधिनः । सिषेविरे गुणास्तुल्यं दिव्योद्यानमिवर्तवः ॥४७॥
स्थाने स्थाने यदीया श्रीस्तुल्यमाप्यायमन्त्यभूत् । कुमारुद्यानकुल्येव निखिलाननुजीविनः ॥४८॥
दोषास्त्यक्तान्यभूपेषु यं शुद्धा श्रीरशिश्रियत् । मार्गाद्रिस्रोतःकालुष्यं हित्वा सिन्धुरिवार्णवम् ॥४९॥

२८. ¹) चार supplied by $A_2$ in space left by $A_1$. २९. ¹) नित supplied by $A_2$ in space left by $A_1$. ३०. ¹) पाली supplied by $A_2$ in space left by $A_1$. ३४. ¹) Thus corr. by $A_2$ from $A_1$ °दुर्वित.—²) Thus corr. by $A_2$ from $A_1$ कीर्णक°. ३६. ¹) $A_1$ तरा.—²) $A_3$ gloss देवगृहात्. ४०. ¹) $A_3$ gloss कृष्णत्वं.—²) Thus corr. by $A_2$ from $A_1$ °कषणैः. ४९. ¹) Thus corr. by $A_1$ from दुर्गोदरा°.—²) Thus corr. by $A_2$ from $A_1$ °स्वमस्ति°.—³) Thus $A_1$ with $A_3$ gloss भूमि. R C Edd. wrongly जम्मावञ्च°.

50 कार्यज्ञो यो न तथके यत्फलैर्भूरिविस्मयी: । परं समाचरंस्तुल्यं स्तूयमानस्त्रपां दधे ॥५०॥
व्यनीयत न योमात्यैर्विनयं तान्स्वाशिक्षयत् । वर्त्म न भिद्यते कैश्चिच्छिन्नैरप्यन्याम्मर्णीस्तु तत् ॥५१॥
यस्याधर्मभयादासीत्संत्याज्यो धर्मसंशये । निजोपि पक्षः कुलिशत्रासादिव गरुत्मतः ॥५२॥
न्याय्यं दर्शयता वर्त्म तेन राज्ञा प्रवर्तिताः । स्थितयो वीतसन्देहा भास्वतेव दिनक्रियाः ॥५३॥
नियन्त्रितां यद्गणितिस्तद्गुणोदीरणादियम् । अतिप्रसङ्गभङ्गात्तत्त्वेयत्तावाधितः पुनः ॥५४॥
55 तस्य त्रिभुवनस्वामिप्रासादारम्भकर्मणि । चर्मकृत्कोपि न प्रादात्कुटीं क्षेत्रोपयोगिनीम् ॥५५॥
शश्वत्प्रतिभुसार्थानां नवकर्माधिकारिणाम् । नैसर्गिकाग्रहग्रस्तः सूत्रपातं न चक्षमे ॥५६॥
विज्ञापितोथ तैरेत्य तमर्थं पृथिवीपतिः । तानेव सागसो मेने चर्मकारं न तं पुनः ॥५७॥
सोभ्यधात्साभिगेतेषामप्रेक्षापूर्वकारिताम् । प्रागेव यैरपृष्ट्वा तं प्रविष्टं नवकर्मणि ॥५८॥
नियम्यतां विनिर्माणं यद्वान्यत्र विधीयताम् । परभूम्यपहारेण सुकृतं कः कलङ्कयेत् ॥५९॥
60 ये द्रष्टारः सदसतां ते धर्मविगुणाः क्रियाः । वयमेव विदध्मश्चेद्यातु न्याय्येन कोध्वना ॥६०॥
इत्युक्तवति भूपाले प्रेषिता मन्त्रिपर्षदा । पार्श्वात्पादुकृतस्तस्य दूतः प्राप्तो व्यजिज्ञपत् ॥६१॥
इच्छति स्वामिनं द्रष्टुं स च ब्रूते न चेन्मम । युक्तः प्रवेश आस्थाने बाह्यालयवसरेस्तु तत् ॥६२॥
अन्येद्युरथ भूपेन स बहिर्दत्तदर्शनः । पुण्यकर्मणि नो विघ्नः किं त्वमेवेत्यपृच्छ्यत ॥६३॥
प्रतिभाति गृहं तच्चेद्रम्यं तत्र ततोधिकम् । तदर्थ्यतां धनं वापि भूयैव चाभ्यधीयत ॥६४॥
65 तूष्णीं स्थितं ततो भूपं चर्मकारो व्यजिज्ञपत् । दन्तांशुसूत्रैस्तत्सत्त्वमानं ज्ञातुमिवोद्यतः ॥६५॥
राजन्विज्ञाप्यते किंचिद्यदस्माभिर्यथाशयम् । न स्थेयमवलिप्तेन तत्र द्रष्ट्रा सता त्वया ॥६६॥
नाहमूनः शुनो नास्ति काकुत्स्थात्पार्थिवः पृथुः । क्षुभ्यन्तीवाद्य तत्सभ्याः संलापेस्मिन्किमावयोः ॥६७॥
जातस्य जन्तोः संसारे भङ्गुरः कायकञ्चुकः । अहंताममताख्याभ्यां शङ्कुभ्यामेव बध्यते ॥६८॥
कङ्कणाङ्गदहारादिशोभिनो भवतो यथा । निष्किंचनानामस्माकं स्वदेहेहंक्रिया तथा ॥६९॥
70 देवस्य राजधान्येषा यादृशी सौधहासिनी । कुटी घटमुखानद्धमोरिस्तादृशी मम ॥७०॥
आ जन्मनः साक्षिणीयं मातेव सुखदुःखयोः । मठिका, लोठ्यमानाद्य नेक्षितुं क्षम्यते मया ॥७१॥
नृणां यद्वेश्महरणे दुःखमाख्यातुमीश्वरः । तद्विमानच्युतोमर्त्यो राज्यभ्रष्टोथ पार्थिवः ॥७२॥
एवमप्येत्य मद्वेश्म सा चेद्देवेन याच्यते । सदाचारानुरोधेन दातु तदुचितं मम ॥७३॥
इति तेनोत्तरे दत्ते भूभृद्गत्वा तदास्पदम् । कुटीं जग्राह वित्तेन नाभिमानः शुभार्थिनाम् ॥७४॥
75 अथावोचच्चर्मकारस्तं तत्र स व्यञ्जिताञ्जलिः । राजन्धर्मानुरोधेन परवत्ता तवोचिता ॥७५॥
अनिग्रहेण धर्मेण पाण्डुसूनोः पुरा यथा । धार्मिकत्वं तथा तेद्य मयास्पृहयेन वीक्षितम् ॥७६॥
स्वस्ति तुभ्यं चिरं स्थेया धर्म्या वृत्तान्तपद्धतीः । दर्शयन्नीदृशीः शुद्धाः श्रद्धेया धर्मचारिणाम् ॥७७॥

---

५०. [1]) Thus $A_3$, $A_1$ °चरस्तुल्यं. ५१. [1]) Thus $A_3$; $A_1$ नाम्भैर्वि° G R Edd. follow $A_g$.—[2]) $A_3$ gloss रथ्या. ५२. [1]) Thus corr. by $A_3$ from $A_1$ यस्य ध°.—[2]) Thus $A_3$, $A_1$ °स्तता. ५६. [1]) $A_3$ gloss नवीहा नाम राजसचिवोत्पाद्य. ५८. [1]) $A_3$ gloss अस्मानि. ६१. [1]) $A_1$ gloss चर्मकारस्य. ६६. [1]) $A_3$ विज्ञप्यसे.—[2]) Thus corr. by $A_1$ from यथाशयम्. ६७. [1]) $A_3$ नास्ति. ७३. [1]) $A_3$ उपेत्य.—[1]) Thus corr. by later hand from $A_1$ देव च; $A_3$ gloss नृपेण. ७५. [1]) $A_3$ ततः. ७६. [1]) $A_1$ मया ऽस्पृहयेन; $A_3$ gloss अयमेन.

एवं निष्कल्मषाचारः स चक्रे पावनीं भुवम् । राजा त्रिभुवनस्वामिकेशवस्य प्रतिष्ठया ॥७८॥
कृत्यैः प्रकाशदेव्याख्या प्रकाशाकाशकान्तिभिः । प्रकाशिकाविहारस्य तत्पत्नी कारयित्र्यभूत् ॥७९॥
गुरुर्मिहिरदत्ताख्यस्तस्योदात्तगुणोऽभवत् । विश्वंभरस्य गम्भीरस्वामिनाम्नो[1] विधायकः ॥८०॥
सर्वाधिकरणस्थैर्योच्छेत्ता छलितकाभिधः । नगराधिकृतस्तस्य छलितस्वामिनं व्यधात् ॥८१॥
कदाचन सभासीनं पृष्टा धर्माधिकारिभिः । प्रायोपविष्टा राजानं ब्राह्मणी काचिदब्रवीत् ॥८२॥
त्वयि प्रशासति महीमहो महानिर्बर्हणे । सुखसुप्तस्य मे पत्युर्हृतं केनापि जीवितम् ॥८३॥
एषैव महती लज्जा सदाचारस्य भूपतेः । यदकालभवो मृत्युस्तस्य संस्पृशति प्रजाः ॥८४॥
कलिकालबलात्स्वेच्छाचारैरपि दृश्यते । पापात्पापतरैर्मुष्टिर्निर्दोषे कथमुद्यते ॥८५॥
चिन्तयन्त्यपि नावैमि भर्तुः कंचिद्विरोधिनम् । निर्दोषस्य हि तस्यासन्सर्वतः शीतला दिशः ॥८६॥
अनसूयो निरुत्सेकः प्रियवाग्गुणवत्सलः । पूर्वाभिभाषी निर्लोभो न विद्वेष्यो हि कस्यचित् ॥८७॥
तस्य तुल्यवया बाल्यात्सभृत्यध्ययनेऽधमः । माक्षिकस्वामिवास्तव्यो विप्रः शङ्कोऽभिचारवित् ॥८८॥
गुणदारिद्र्यनिर्विण्णैः क्षुद्रैः कौशलशालिनाम् । प्रसिद्धिस्पर्धया वन्ध्यैर्बाध्यन्तेऽसूययासवः ॥८९॥
नापुंश्चलेयो दुःशीलो नाद्रोहो नित्यशङ्कितः । नावाचालो मृषाभाषी नाकायस्थः कृतघ्नधीः ॥९०॥
नादासगृहजो लुब्धो नानीर्ष्यो नित्यदुःखितः । नास्त्रीजितः सर्वहास्यो नावृद्धः स्निग्धभाषितः ॥९१॥
नानन्यजः पितृद्वेषी नारागी निरपत्रपः । नाशुद्धविद्यः पापीयानिति भूतार्थसंग्रहः ॥९२॥ तिलकम् ॥
इत्युक्तवत्यां ब्राह्मण्यां तच्छङ्कावसतिं द्विजम् । आनीय परिपृच्छ्यस्वेत्यभ्यधाद्वसुधाधिपः ॥९३॥
भूयो ब्राह्मण्यवादीत्तं व्याजः स्वार्थोदविद्यया । निःसंभ्रमः स्तम्भयितुं देव दिव्यक्रियामयम् ॥९४॥
म्लायद्वक्त्र इवावादीत्ततस्तां मेदिनीपतिः । अदृष्टदोषे किं कुर्मो वयमत्राधिकारिणः ॥९५॥
नान्यस्मिन्नपि दण्डस्य प्रसङ्गोऽनिश्चितागसि । किं पुनर्ब्राह्मणो दण्ड्यो यो दोषेऽपि[1] वधं विना ॥९६॥
उक्त्वेति विरते तस्मिन्द्विजजायाब्रवीत्पुनः । शतशः क्षणशः क्षीणा राजधनशनस्य मे[1] ॥९७॥
नान्यगां परिणेतारं हन्तुः प्रतिचिकीर्षया । तत्राविहितदण्डेऽस्मिंस्त्यजाम्यनशनेऽसून् ॥९८॥
तथा स्थितायां ब्राह्मण्यां कृतप्रायोपवेशनः । स्वयं त्रिभुवनस्वामिपादानुद्दिश्य सोऽभवत् ॥९९॥
त्रिरात्रोपोषितं तत्र राजानं रजनीक्षये । स्वप्ने स्वप्नोत्तमोऽवोचत्सत्योक्तिं सत्यवाहनः ॥१००॥
ईदृङ्न युज्यते राजन्सत्यस्यान्वेषणं कलौ । निशीथे[1] कस्य सामर्थ्यं कर्तुं दिवि विकर्तनम्[2] ॥१०१॥
भवद्भक्त्यनुरोधेन प्रकृतं तत्समर्थ्यते । मत्प्रासादाङ्गने मुष्टिभिः शालिचूर्णं[2] विकीर्यताम् ॥१०२॥
प्रदक्षिणं कुर्वतोऽस्य चिरम यदि दृश्यते । ब्रह्महत्यापादमुद्रा पादमुद्रानुयायिनी ॥१०३॥

८०. [1]) A₂ gloss नारायणस्य.—[2]) A₂ gloss गम्भीरस्वामिकृत्. ८३. [1]) A₂ *varia lectio* मत्पत्युः. ८५. [1]) A₂ gloss अकालमरणं. ८७. [1]) A₂ gloss निरहङ्कारः. ८९. [1]) A₂ gloss रहितैः. ९५. [1]) Thus corr. by later hand from A₁ तं. ९६. [1]) A₂ gloss भूदारी.—[2]) A₂ gloss सति. ९७. [1]) Thus A₃; A₁ राजकृपि न वास्यते. ९८. [1]) A₂ gloss हन्तारि. १००. [1]) A₂ glosses नारायणः and सत्यस्तु गरुडे भुवि. १०१. [1]) Thus corr. by A₂ from A₁ निशीथे.—[2]) A₂ gloss सूर्यं. १०२. [1]) A₂ भवद्भक्त्य°.—[2]) A₂ gloss पिष्टम्. १०३. [1]) A later hand, not met with elsewhere, adds in margin of A the following note: [illegible] —[2]) A₂ gloss [illegible]

तद्वेव वधको भूत्वा सदृशं दण्डमर्हति । राज्ञैव विधिः कार्यो द्विजे पापकृदर्गला ॥१०४॥

105 अथ तत्कारयित्वा स कृष्टदोषे द्विजन्मनि । दण्डं दण्डधरश्चक्रे द्विजत्वाद्वधवर्जितम् ॥१०५॥

महीमयोमा भर्तुर्मे तस्मिन्नभिविचारणे । ततो द्विजन्मजाया सा कृताशीरभ्यभाषत ॥१०६॥

इयत्यवनिभृद्धर्मे गूढपापानुशासनम् । कार्तवीर्यस्य वा दृष्टं तव वा पृथिवीपते ॥१०७॥

दण्डधारे त्वयि क्ष्माप क्षितिं नेतौ महासति । को वैरदेहयोः पारमनासाद्यावसीदति ॥१०८॥

इत्थं कृतयुगश्लाघ्यैर्धर्म्यवृत्तान्तवस्तुभिः । स्वल्पेऽपि राज्यकालोऽस्य पर्याप्तैः पर्यपूर्यत ॥१०९॥

110 चतुर्मिहरपाथोजसंसर्गेण निर्मलः । निबिडं जडिमा जाने व्यधत्त धियि संनिधिम् ॥११०॥

विभक्तवर्णशोभस्य तस्यासावन्यथा कथम् । माहेन्द्रस्येव धनुषो विदधे दृष्टनष्टताम् ॥१११॥

कारयित्वाभिचारं तं निग्रहोभयदं द्विजम् । तं यशःशेषतामीशस्तारापीडोऽनुजोऽनयत् ॥११२॥

दुष्कर्मदुर्भगान्भोगान्भोक्तुं पापा गुणोज्झितम् । भृङ्गन्ति कण्टकान्याप्तुं करभा इव केतकम् ॥११३॥

ततः प्रभृति भूपानां राज्येष्वक्रूरां बुभुक्षति । दुष्टाः प्रकृत्या राज्येऽस्मिन्नभिचाराश्रिकाः क्रियाः ॥११४॥

115 श्रीचन्द्रापीडदेवस्य सत्त्वमित्थमपश्चिमम् । संस्मर्यमाणं कुरुते न कस्योत्पुलकं वपुः ॥११५॥

मुमूर्षुर्यस्त लब्ध्वापि तं कृत्याधायिनं द्विजम् । वराकोऽन्यप्रयुक्तोऽस्मिन्को दोष इति नावधीत् ॥११६॥

विस्मृतः स कृतक्ष्माभृत्पङ्क्तिमध्येऽपि वेधसा । दत्वा काकपदं नूनं न्यस्तः कलिनृपावली ॥११७॥

अष्टौ वर्षाण्यष्टमासाननुगृह्णेति मेदिनीम् । प्रविवेश वशी स्वर्गमनिशं च सतां मनः ॥११८॥

भ्रातृद्रोहाजदहदां प्रतापेन भयावहः । उवाह तारापीडः स चण्डः क्ष्मामण्डलं ततः ॥११९॥

120 पूर्णपात्रप्रतिभटं द्विषां लुण्टयता यशः । शिशोः प्रतापस्योत्सवे कबन्धा येन नर्तिताः ॥१२०॥

तस्यातिदुष्टचेष्टस्य लक्ष्मीर्दीप्तापि सर्वतः । अभूदुद्वेगजननी श्मशानाग्नेरिव द्युतिः ॥१२१॥

मन्त्रैः प्रभावसांनिध्यं देवानां क्रियते द्विजैः । मत्वेति देवद्वेषी स द्विजानां दण्डमत्यजत् ॥१२२॥

मासं षड्भिर्दिनैर्न्यूनं चतस्रश्च समा भुवि । स प्राभवद्गुरुद्रोहप्ररोहस्तुकृतालयः ॥१२३॥

अथ गूढाभिचारेण विहितायुःक्षयो द्विजैः । स भ्रातुः सदृशीं शान्तिं प्रपेदे न पुनर्गतिम् ॥१२४॥

योऽयं परापकरणाय सृजत्युपायं तेनैव तस्य नियमेन भवेद्विनाशः ।

125 धूमं प्रसौति नयनान्ध्यकरं यमग्निर्भूत्वाम्बुदः स शमयेत्सलिलैस्तमेव ॥१२५॥

राजा श्रीललितादित्यः सार्वभौमस्ततोऽभवत् । प्रादेशिकेश्वरस्रष्टुर्विधेर्बुद्धेरगोचरः ॥१२६॥

प्रतापांशुच्छटाकूटैः पटवासभ्रमोर्मिभिः । जम्बुद्वीपद्विपेन्द्रस्य येनातन्यत मण्डनम् ॥१२७॥

नयाञ्जलिषु बद्धेषु राजभिर्विजयोद्यमे । पार्थिवः पृथुविक्रान्तिर्युधि कोपं मुमोच यः ॥१२८॥

विनिःसरज्जनतया भयाद्गर्भानिवामुचन् । द्विषां वसतयो यस्य निशम्यास्कन्ददुन्दुभिम् ॥१२९॥

---

१११. 1) $A_2$ gloss यथा आकर्षं विना.—2) $A_2$ gloss भावी दृष्टः पश्चात्तः. ११६. 1) $A_2$ gloss वराकता. ११७. 1) $A_2$ gloss चन्द्रापीडः कृतक्ष्माभृत्पङ्क्तिमध्ये.—2) $A_2$ gloss काकपदं कारवल्लेखो । इति भाषया लिपिर्ज्ञेया +. ११८. 1) $A_2$ स्वर्गं विषयं (°विचारं). ११९. 1) $A_2$ भ्रातृद्रोहासहद्रुहा.—2) Thus corr. by $A_2$ from $A_1$ उवाच.—3) Thus $A_1$; $A_2$ मण्डली. १२०. 1) $A_2$ gloss सद्यः. १२२. 1) $A_2$ gloss अभिचाराश्रिरपरिस्पर्धः. १२३. 1) Thus corr. by $A_2$ from $A_1$ मासैः.—2) $A_2$ gloss पुण्यनाशः. १२४. 1) The text from here to नयनान्ध्यकरं यम in following verse has been supplied by $A_2$ in space left by $A_1$. १२५. 1) See note to preceding verse.

विलोलतिलकान्येष स्वेदाम्भोभिराननैः । विनापत्त्रलेखानानि द्विषां नारीरकारयत्¹ ॥१३०॥ 130

क्षितिं प्रदक्षिणयतो रवेरिव महीपतेः । जिगीषोः प्रायशस्तस्य प्राच्यामेव ययौ ययौ ॥१३१॥

करं पूर्वदिशो गृह्णन्प्रतापालसंनिधौ । अन्तर्वेद्यां¹ महाराजः स्वकीर्त्युष्णीषभृद्बभौ ॥१३२॥

धन्यानां यत्र कुब्जत्वं¹ व्यधाद्गाधिपुरे महत् । तत्रैव शंसनीयः स पुंसां चक्रे भयस्पृशाम् ॥१३३॥

यशोवर्माद्रिवाहिन्याः क्षणात्कुर्वन्विशोषणम् । नृपतिर्ललितादित्यः प्रतापादित्यतां¹ ययौ ॥१३४॥

मतिमान्कान्यकुब्जेन्द्रः मत्यभात्कृत्यवेदिनाम् । वीक्षं यल्ललितादित्यं पृष्ठं दत्त्वा व्यपेयत ॥१३५॥ 135

तत्सहायास्ततोऽप्याजिकाममभिमानिनः । कुसुमाकरतोऽप्युग्रैः सुरभिश्चन्द्रमानिलः ॥१३६॥

श्रीयशोवर्मणः संधौ सांधिविग्रहिको न यत् । नयं नियमनालेखे मित्रशर्मास्य चक्षमे ॥१३७॥

सोऽभूत्संधिर्यशोवर्मललितादित्ययोरिति । लिखितेनादिनिर्देशावमर्दस्य¹ विवम्भोः ॥१३८॥ युगलकम्² ॥

सुदीर्घविग्रहाशान्तैः सेनानीभिरसूयिताम्¹ । औचित्यापेक्षणां² तस्य क्षितिभृद्बहमन्यत ॥१३९॥

¹भीतः पञ्चमहाशब्दभाजनं तं व्यधत्त सः । यशोवर्मनृपं तं तु समूलमुदपाटयत् ॥१४०॥ 140

अष्टादशानामुपरि प्राक्सिद्धानां तदुद्भवैः । कर्मस्थानैः स्थितिः प्राप्ता ततः प्रभृति पञ्चभिः ॥१४१॥

महाप्रतीहारपीडा¹ स महासंधिविग्रहः । महाश्वशालापि महाभाण्डागारश्च पञ्चमः ॥१४२॥

महासाधनभागश्चेत्येता यैरभिधाः श्रिताः । शाहिमुख्या येष्वभवन्नध्यक्षाः पृथिवीभुजः ॥१४३॥

कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्मा तद्गुणस्तुतिबन्दिताम् ॥१४४॥

किमन्यत्कान्यकुब्जोर्वी¹ यमुनापारतोऽस्य सा² । अभूदाकालिकातीरं³ गृहप्राङ्गणवद्वशे ॥१४५॥ 145

यशोवर्माणमुत्खाय हिमाद्रिमिव जाह्नवी । सुखेन प्राविशत्तस्य वाहिनी पूर्वसागरम् ॥१४६॥

पश्यद्भिर्जन्मवसुधां सेर्ष्याधोरणभर्त्सितैः । तन्मातङ्गैः कलिङ्गेभ्यः कथंचित्प्रस्थितं पथि ॥१४७॥

आकृष्टलक्ष्मीपर्यङ्कदन्तिसख्यादिवागताः । अशिश्रियंस्तं निःशेषा दन्तिनो गौडमण्डलात् ॥१४८॥

कटकेभघटाहस्तकृतवीचिकचग्रहः । अदृश्यतापगैस्तस्य गृहीतः पूर्ववारिधिः ॥१४९॥

वनराजिश्यामलेन¹ दिशं वैवस्वताङ्किताम् । स प्रतस्थेऽब्धितीरेण तत्कृपाणेन² तु द्विषः ॥१५०॥ 150

तस्योर्ध्वजूटाः कर्णाटाः कृतप्रणतयोऽनयन् । सुवर्णकेतकीस्त्यक्त्वा प्रतापमवतंसताम् ॥१५१॥

तस्मिन्प्रसङ्गे रट्टाख्या¹ कर्णाटी चटुलेक्षणा । अपासीन्नृपतिर्भूत्वा पृथुश्रीर्दक्षिणापथम्² ॥१५२॥

विन्ध्याद्रिमार्गाः पर्याप्ता विन्ध्यपर्यन्तप्रभावया । दुर्गयेव तया देव्या कृता निहतकण्टकाः ॥१५३॥

ललितादित्यपादाब्जनखदर्पणमण्डले । स्वमूर्तिं वीक्ष्य संक्रान्तां प्रणता सापि पिप्रिये ॥१५४॥

---

१३०. ¹) Thus corr. by $A_2$ from $A_1$ °कारयन्. १३२ ¹) $A_2$ gloss प्रयागे गङ्गायमुनयोरन्तरालभूमिरन्तर्वेदी. १३३. ¹) $A_2$ gloss कुब्जत्वं. १३४. ¹) $A_2$ प्रतापादित्यतां. १३८. ¹) $A_2$ gloss सः मित्रशर्मा.—²) युगलकम् added by $A_2$. १३९. ¹) Thus corr. by later hand from $A_1$ °तम्.—²) Thus A G R; Edd. °पेक्षितां. १४०. ¹) $A_1$ has left before this verse a blank space for four lines, writing in the middle न किंचिल्लिखितम्. १४२. ¹) Thus A G R: perhaps to be emended to °पीरं. Cf. महाप्रतीहारपीडा- धिकारे iv. 485. १४५. ¹) Thus corr. by later hand from $A_1$ कान्य°.—²) सेऽस्य सा and कालीरं supplied by $A_2$ in spaces left by $A_1$.—³) Thus $A_2$; $A_1$ अभूदवालि°, altered by later hand to अभूदकालि°. १४९. ¹)–¹) These words have been written twice by $A_1$, at the end of fol. 62 (here struck out again) and at the head of fol. 63. १५० ¹) ²) $A_2$ gives the notes वनश्यामितां दक्षिणां दिशं and तस्य राज्ञः कृपाणेन खड्गेन तु पुनर्द्विषो रिपवो वैवस्वताङ्कितां दिशं प्रतस्थिरे इत्यर्थः. १५२. ¹) रट्ट supplied by $A_2$ in space left by $A_1$.—²) $A_1$ पृथुश्रीरक्षि°, corr. by later hand into °श्री.

155 तालीतरुतलाचान्तनारिकेरद्रवोर्मयः । कावेरीतीरपवनैस्तद्योधाः क्लममत्यजन् ॥१५५॥

चन्दनाद्रिस्तदास्कन्दत्रासभ्रश्यदहिच्छलात् । श्रीखण्डद्रुमदोःषण्डान्मण्डलाग्रानिवात्यजत् ॥१५६॥

उत्तराश्मस्थितं पदं क्षिप्त्वा द्वीपेष्वविभ्रमः । स कुल्याया इवाम्भोधेः क्षिप्रं चक्रे गतागतम् ॥१५७॥

ततोऽब्धिवीचिभिर्धौतैर्गृहीतनवमङ्गलः । प्रतस्थे पश्चिमामाशां जिगीषूणामपश्चिमः ॥१५८॥

आक्रम्य क्रमुकान्सद्यः कौङ्कणान्सम तापयन् । तुरगानिव तिग्मांशोः प्रतापस्तस्य पप्रथे ॥१५९॥

160 पश्चिमाब्धेर्महद्व्यस्तवीचेराविर्भवन्त्यभूत् । द्वारका तस्य सैन्यानां प्रवेशोत्कण्ठ्यदायिनी ॥१६०॥

विन्ध्याद्रिस्तद्बलक्षुण्णधातुरेण्वावृताम्बरः । प्रत्यमात्यक्तमर्यादः कोपताम्र इवोन्नमन् ॥१६१॥

विश्रान्तां दर्शनश्रेण्यस्तस्यावन्तिषु दन्तिनाम् । महाकालकिरीटेन्दुज्योत्स्नया खण्डिताः परम् ॥१६२॥

सर्वतो दिक्कमालोक्य जितप्रायांस्ततो नृपान् । स प्राविशत्सुविस्तीर्णमपथेनोत्तरापथम् ॥१६३॥

राजभिस्तस्य तत्रोग्रैः संग्रामोऽभूत्पदे पदे । कुलाद्रिभिरिवेन्द्रस्य पक्षच्छेदोद्यमस्पृशः ॥१६४॥

165 काम्बोजानां वाजिशाला जायन्ते स्म हयोज्झिताः । ध्वान्तच्छलात्साहिरुद्धैर्मरुद्धा महिषैरिव ॥१६५॥

तुःखाराः शिखरश्रेणीर्यान्तः संत्यज्य वाजिनः । कुण्ठभावं तदुत्कण्ठां निर्धुर्दुर्ग्रा हयाननान् ॥१६६॥

श्रीम्वारान्समरे जित्वा जितं मेने स मुम्मुनिम् । सकृज्जयमरेर्वीरा मन्यन्ते हि घुणाक्षरम् ॥१६७॥

चिन्ता न वृद्धा भौट्टानां वक्त्रे प्रकृतिपाण्डुरे । वनौकसामिव क्रोधः स्वभावकपिले मुखे ॥१६८॥

तस्य प्रतापो दरदां न सेहेऽनारतं मधु । हरीणामोषधिज्योतिः प्रत्यूषार्क इवोदितः ॥१६९॥

170 कस्तूरीमृगगर्भस्पर्शी धुतकुङ्कुमकेसरः । सैन्यसीमन्तिनीस्तस्य संचस्कारोत्तरानिलः ॥१७०॥

शून्ये प्राग्ज्योतिषपुरे निर्जिहानं ददर्श सः । धूपधूमं घनमुद्यत्कालागुरुवनात्परम् ॥१७१॥

मरीचिकावितीर्णार्णोविभ्रमे वालुकाम्बुधौ । तद्गजेन्द्रा महाग्राहसमूहसमतां ययुः ॥१७२॥

तद्योधान्विगलद्धैर्यान्स्त्रीराज्ये स्त्रीजनोऽकरोत् । तुङ्गौ स्तनौ पुरस्कृत्य न तु कुम्भौ कराटिनाम् ॥१७३॥

स्त्रीराज्यदेव्यास्तस्याग्रे वीक्ष्य कम्पादिविक्रियाम् । सेवासमभिलाषं वा निधिकाय न कश्चन ॥१७४॥

175 उत्तराः कुरवोऽविक्षंस्तद्भयाज्जन्मपादपान् । उरगान्तकसंत्रासाद्बिलानीव महोरगाः ॥१७५॥

जयार्जितधनः सोऽथ प्रविवेश स्वमण्डलम् । भिन्नेभमौक्तिकापूर्णपाणिः सिंह इवाचलम् ॥१७६॥

जालंधरं लोहरं च मण्डलानीतराणि च । प्रसादीकृत्य विदधे राजस्वं सोऽनुजीविनाम् ॥१७७॥

पराजयव्यञ्जनार्थं नाना लिङ्गानि पार्थिवाः । उभेण प्राग्विस्तेन वहन्त्यद्यापि निर्मदाः ॥१७८॥

बन्धमुद्राभिधानाय पश्चाद्बाहू नताननाः । तुरुष्का दधते व्यक्तं मूर्धानं चार्धमुण्डितम् ॥१७९॥

180 क्षितिभृद्दाक्षिणात्यानां तिर्यक्कशापनाय सः । पुच्छं महीतलस्पर्शि चक्रे कौपीनवाससि ॥१८०॥

न तत्पुरं न स ग्रामो न सा सिन्धुर्न सोऽर्णवः । न स द्वीपोऽस्ति यत्रासौ प्रतिष्ठां न विनिर्ममे ॥१८१॥

---

१५५. [1]) Thus $A_3$; $A_1$ °रसोर्मय°. १५६. [1]) $A_3$ gloss मलयात्.—[2]) $A_3$ gloss भुजगभयवशकम्पितस्कन्धः.—[3]) $A_3$ gloss श्रीखण्डद्रुमा चन्दनद्रुमा एव दोःषण्डा भुजसमूहा यस्य सः तथाविधात्.—[4]) $A_3$ gloss खड्गान्. १५७. [1]) $A_3$ gloss उत्तरणार्थं अश्मानः उत्तराश्मानः ये कुल्यायां मध्ये भवन्ति, to this gloss $A_2$ has added उडवट्ट इति भाषया. १५९. [1]) Thus $A_1$; $A_3$ क्रमुकस्थामान्कौ° —[2]) Thus $A_3$; $A_1$ तिग्मांशु. १६१. [1]) Thus corr. by $A_2$ from $A_1$ °रेणुवृता°. १६६. [1]) $A_1$ तु×खाराः, $A_2$ G R तुःखाराः.—[2]) Thus corr. by later hand from $A_1$ °भावं.—[3]) Thus $A_2$; $A_1$ भवान्. १६७. [1]) Thus A; misread क्षुल्लिन् in G R and Edd. $A_4$ gloss घुणैन् क्षात्. Cf. iii 332; v. 516; viii 2180 (C). १६८. [1]) Thus $A_1$; corr. by later hand into भौट्टानां —[2]) $A_3$ gloss वानराणां.

कश्चिदंहासमुचितं कश्चित्तत्समयानुगम् । बाहुल्येन प्रतिज्ञानां स मानी¹ नाम संदधे ॥१८२॥
सुनिश्चितपुरं चक्रे दिग्जये कृतनिश्चयः । सहर्षो¹ दर्पितपुरं कृतवान्²फलकेशवम् ॥१८३॥
कलं फलपुरे पर्णोत्से पर्णमावहत् । क्रीडारामविहारं¹ च क्रीडन्नाम्ना विनिर्ममे ॥१८४॥
एकमूर्धं नमन्नमथः कार्यतत्परम् । बद्ध्वा व्यधाच्चिरालम्बं स्त्रीराज्ये नृहरिं च सः ॥१८५॥ 185
दिगन्तरस्थे भूपाले तस्मिंस्तत्कर्मकृत्¹किल । पुरं विधाय तन्नाम्ना तत्कोपफलमन्वभूत् ॥१८६॥
ललिताख्यं पुरं तस्मिन्नादित्याय स भूपतिः । सग्रामां कान्यकुब्जोर्वीमभिमानोर्जितो ददौ² ॥१८७॥
तेन हुष्कपुरे श्रीमान्मुक्तस्वामी व्यधीयत । बृहद्विहारो भूपेन सस्तूपश्च महात्मना ॥१८८॥
एकां कोटिं गृहीत्वा स दिग्जयाय विनिर्गतः । भूतेशाय ददौ शुद्ध्यै कोटीरेकादशागतः ॥१८९॥
स तत्र ज्येष्ठरुद्रस्य शिलाप्रासादयोजनम् । भूमिग्रामप्रदानं च विदधे वसुधाधिपः ॥१९०॥ 190
चक्रे चक्रधरे¹ तेन वितस्ताम्भःप्रतारणम् । विनिर्मायारघट्टालीस्तांस्तान्ग्रामान्प्रवर्तता ॥१९१॥
सोऽखण्डिताश्मप्राकारं प्रासादान्तर्व्यधत्त च । मार्तण्डस्याद्भुतं दाता ग्रामास्फीतं च पत्तनम् ॥१९२॥
लोकपुण्ये पुरं¹ कृत्वा नानोपकरणावलीम् । प्रतिपादितवाञ्जिष्णुर्ग्रामैः² साकं स विष्णवे ॥१९३॥
ततः परं परीहासशीलो भूलोकवासवः । विहसद्वासवावासं परिहासपुरं व्यधात् ॥१९४॥
विरेजे राजतो देवः श्रीपरीहासकेशवः । क्षिप्तो रत्नाकरस्याप्सु मुक्ताज्योतिर्भरैरिव ॥१९५॥ 195
नाभीनलिनकिञ्जल्कपुञ्जेनेवानुरञ्जितः । अपकांस्यकाञ्चनमयः श्रीमुक्ताकेशवो हरिः ॥१९६॥
महावराहः शुशुभे काञ्चनं कवचं दधत् । पाताले तिमिरं हन्तुं बद्ध्वेव रविः प्रभाः ॥१९७॥
गोवर्धनधरो देवो राजतस्तेन कारितः । यो गोकुलपयःपूरैरिव पाण्डुरतां दधे ॥१९८॥
चतुष्पञ्चाशतं हस्तानारोपयित्वा महाशिलाम् । ध्वजाग्रे दितिजारातेस्तार्क्ष्यस्तेन निवेशितः ॥१९९॥
चक्रे बृहच्चतुःशालाबृहच्चैत्यबृहज्जिनैः । राजा राजविहारं स विरजाः सततोर्जितम् ॥२००॥ 200
तोलकानां सहस्राणि चतुर्भिरधिकानि सः । अशीतिं निदधे देवो मुक्ताकेशवविग्रहे ॥२०१॥
तावन्त्येव सहस्राणि पलानां रजतस्य च । संधाय शुद्धधीश्चक्रे श्रीपरीहासकेशवम् ॥२०२॥
रीतिप्रस्थसहस्रैस्तु तेन तावद्भिरेव सः । व्योमव्यापिवपुः श्रीमान्बृहद्बुद्धो व्यधीयत ॥२०३॥
चतुःशालो च चैत्यं च तावता तावता व्यधात् । धनेनैवेति तस्याश्चर्यमय्यो निर्मितयः समाः ॥२०४॥
राजतान्कापि सौवर्णान्कापि देवान्विनिर्ममे । पार्श्वेषु मुख्यदेवानां पार्षदो¹ धनदोपमः ॥२०५॥ 205
कियन्ति तत्र रत्नानि ग्रामान्परिकरांस्तथा । स प्रादादिति कः शक्तः परिच्छेत्तुमियत्तया ॥२०६॥
अवरोधैरमात्यैश्च सेवकैश्च नरेश्वरैः । तत्र प्रतिष्ठाः शतशो विहिता भुवनाद्भुताः ॥२०७॥

१८२. ¹) Thus corr. by $A_2$ from $A_1$ कुर्ती. १८३. ¹) $A_2$ सहर्षो.—²) $A_2$ कृतवीरः. १८४. ¹) $A_2$ क्रीडारामवि°. १८५. ¹) Thus corr. by $A_2$ from $A_1$ कुकुर. १८६. ¹) $A_2$ पुरनिर्माणाधिकारी.—²) ददौ and च supplied by $A_2$. १९०. ¹) $A_2$ gloss त्रिपुर. १९१. ¹) Thus corr. by later hand from $A_1$ भूमिधारे. १९२. ¹) Thus $A_2$; $A_1$ °वरस्तेन. १९३. ¹) Thus corr. by $A_2$ from $A_1$ पुरे.—²) Thus $A_2$; $A_1$ जिष्णुग्रामैः. १९४. ¹) Thus corr. by later hand from $A_1$ °पार्.—²) Over हसत्पुरं $A_2$ has written सपुर (for परिहासपुर). १९६. ¹) $A_2$ अकाञ्चन, with gloss कांस्य रीतिविमुक्तनयोः. १९७. ¹) Thus corr. by $A_2$ from $A_1$ हर्तुं.—²) Thus G sec. manu; A रविप्रभाः. १९९. ¹) Thus corr. by later hand from $A_1$ हस्ताग्रो°. २०१. ¹) The words from चतुर्भिर° to सहस्राणि in the following verse have been omitted by $A_1$ and supplied by $A_2$ in margin. २०५. ¹) Thus $A_1$; $A_2$ पार्थिवो. २०६. ¹) Thus $A_2$; $A_1$ °कारं तथा.

राज्ञी कमलवत्यस्य कमलाहट्टकारिणी । राजतं विपुलाकारं कमलाकेशवं व्यधात् ॥२०८॥
अमात्यो मित्रशर्मापि चक्रे मित्रेश्वरं हरम् । श्रीकय्यस्वामिनं चक्रे लाटः कय्याभिधो नृपः ॥२०९॥
210 श्रीमान्कय्यविहारोपि तेनैव विदधेद्भुतः । भिक्षुः सर्वज्ञमित्रोभूत्क्रमाद्यत्र जिनोपमः ॥२१०॥
तुःखारश्चङ्कुणश्चक्रे स चङ्कुणविहारकृत् । भूपचित्तोन्नतं स्तूपं जिनान्हैममयांस्तथा ॥२११॥
ईशानदेव्या तत्पत्न्या खाताम्बु प्रतिपादितम् । सुधारसमिव स्वच्छमारोग्याधायि रोगिणाम् ॥२१२॥
ललितादित्यभूभर्तुर्वल्लभा चक्रमर्दिका । सहस्राण्यौकसां सप्त तत्र चक्रपुरं व्यधात् ॥२१३॥
आचार्यो भप्पटो नाम विदधे भप्पटेश्वरम् । अन्येपि रक्कटेशाद्या बहवो बहुभिः कृताः ॥२१४॥
215 अधिष्ठानान्तरेप्यत्र चङ्कुणेनाग्र्यमन्त्रिणा । सचैत्यः सुकृतोदारो विहारो निरमीयत ॥ २१५॥
भिषगीशानचन्द्राख्यः स्यालश्चङ्कुणमन्त्रिणः । विहारमकरोल्लब्धा तक्षकानुग्रहाच्छ्रियम् ॥ २१६॥
एवं हेममयीमुर्वीं स कुर्वन्नुर्वरापतिः । गुणैरौदार्यशौर्याद्यैर्मध्यमानमलङ्घयत् ॥२१७॥
हेलयापि विनिर्यान्ती वक्त्राद्वसुमतीपतेः । न कदाचन तस्याज्ञा देवैरप्युदलङ्घ्यत ॥२१८॥
तथाहि पूर्वपाथोधेस्तटे सकटको वसन् । आनीयन्तां कपित्थानीत्यादिदेश स जातु चित् ॥२१९॥
220 किंकर्तव्यतयान्धेषु पुरोगेषु स्थितेष्वथ । उपानयत्कपित्थानि दिव्यः कोपि पुमान्पुरः ॥२२०॥
अथार्तुपायनं गृह्णन्कृतसंज्ञो भ्रुवा प्रभोः । कस्य त्वमिति पप्रच्छ प्रतीहारः प्रसृत्य तम् ॥२२१॥
सोभ्यधात्तं कपित्थानि दत्त्वा राज्ञः प्रियाण्यहम् । प्रहितोद्य महेन्द्रेण नन्दनोद्यानपालकः ॥२२२॥
रहो महेन्द्रसंदिष्टं वक्तव्यं किंचिदस्ति मे । इति श्रुत्वा प्रतीहारः सभां चक्रे स निर्जनाम् ॥२२३॥
ततो दिव्यः पुमानूचे शक्रस्त्वां वक्ति भूपते । क्षन्तव्यं पथ्यमप्येतत्सौजन्यान्निष्ठुरं वचः ॥२२४॥
225 तुर्ये युगेपि भूपाल दिक्पाला अपि ते वयम् । बिभृमो यत्प्रणम्याज्ञां श्रूयतां तत्र कारणम् ॥२२५॥
पुरा ग्रामगृहस्थस्य कस्यचित्स्वल्पसंपदः । जन्मान्तरे कर्मकरो हालिकोभूर्भवान्किल ॥२२६॥
एकदा तस्य ते ग्रीष्मे वाहयित्वा महावृषान् । श्रान्तस्य निर्जलेरण्ये क्षीणप्रायमभूदहः ॥२२७॥
ततः स्वामिगृहात्क्षुत्तृट्खिन्नस्य भवतोन्तिकम् । वारिकुम्भीमपूपं च गृहीत्वा काचिदाययौ ॥२२८॥
निर्धौतपाणिपादस्त्वं भोक्तुं संप्रस्तुतस्ततः । विप्रं कण्ठगतप्राणमपश्यः पुरतोतिथिम् ॥२२९॥
230 स त्वामवोचद्धन्या भुङ्क्ष्व दुर्भिक्षोपहतस्य मे । कण्ठे यियासवः प्राणा वर्तन्ते भोजनं विना ॥२३०॥
वारितः पार्श्वगेनापि तस्मै त्वं प्रीतिपूर्वकम् । पूपार्धं वारिकुम्भीं च प्रादाः प्रियमुदीरयन् ॥२३१॥
पात्रे प्रसन्नचित्तस्य काले दानेन तेन ते । अखण्डितानामाज्ञानां शतमासीत्त्रिविष्टपे ॥२३२॥
तेन वारिप्रदानेन वाञ्छामात्रेपि दर्शिते । प्रादुर्भवन्ति सुस्वादा नद्यो मरुपथेष्वपि ॥२३३॥
सत्क्लेशप्रतिपादितैः प्रियवचोबद्धालवालावलिर्निर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः ।
दातुस्तत्तदभीप्सितं किल फलन्कालेतिबालोप्यसौ राजन्दानमहीरुहो विजयते कल्पद्रुमादीनपि ॥२३४॥

२०८. ¹) Thus A₁; A₂ कमलेश्व°. २११. ¹) A₁ तु×खार°. २१२. ¹) Thus corr. by A₂ from A₁ सुधारसमिव. २१३. ¹) Thus A₂; A₁ वल्लभादित्य°. G R copy both readings, Edd. follow A₂. २१४. ¹) Emended with Edd.; A भपटो.—²) Thus A₁; A₂ कर्कोटेशा°. २१७. ¹) Thus corr. by A₂ from A₁ उर्वी°. २२०. ¹) A₁; A₂ °पात्रेषु.—²) Thus corr. by A₂ from A₁ °नय आपि°. २२१. ¹) A₂ gloss राज्ञीभि इत्यर्थः. २२९. ¹) Thus corr. by later hand from A₁ प्रार्थे. २३०. ¹) Thus A₂; A₁ भुङ्क्षा (for भुङ्क्ष्या?). २३४. ¹) A₂ °प्रतिरोपित°.—²) A₂ ददौ तत्तदभीप्सितं किल फलं काले ह्यनल्पाद्यसौ.

अल्पावशेषपालास्त्वथ तस्याशास्तव भूपते । यथोत्कर्षं क्षपयतो यत्र तथाविचारतः ॥२३५॥ 235

अपि चेतरभूपालसुलभं महतः सतः । कस्माद्विचारशून्यत्वं तवापि यदि रोहति ॥२३६॥

दिनानि कतिचिद्यानि कश्मीरेषु घनागमे । जायन्ते तानि पूर्वाब्धौ फलानि शिशिरे कुतः ॥२३७॥

निगादते दिशं यां यां तत्र तत्रैव तत्पतेः । स्वदाज्ञाग्रहणे यत्नः पूर्वदानप्रभावतः ॥२३८॥

आशां भित्तस्य माहेन्द्रीमाज्ञा स्वल्पापि तेधुना । गृहीता कथमप्येषा शक्रेणाभ्रमशालिना ॥२३९॥

विना प्रयोजनं मुख्यं तस्मादाज्ञास्त्वया क्वचित् । नैवमेव पुनर्देया विरलाः सन्ति ता यतः ॥२४०॥ 240

इत्युक्त्वान्तर्हिते तस्मिन्भूपालो विपुलाशयः । चिन्तयन्दानमाहात्म्यं परं विस्मयमाययौ ॥२४१॥

ततः प्रभृति सावृत्तयोग्यार्थप्राप्तिलालसः । परिहासपुरे चक्रे स्थिरां गुर्वीं स पार्विणीम् ॥२४२॥

सहस्रभक्तमित्येवं प्रख्यातायां सदक्षिणम् । लक्षमेकोत्तरं भक्तपात्राणां यत्र दीयते ॥२४३॥

अभिप्रायेण तेनैव पत्तनान्यूषरेषु सः । चक्रे यथेषु तृष्णार्तः कश्चिज्जातु पिबेत्पयः ॥२४४॥

संजग्राह स देशेभ्यस्तांस्तानन्तरविस्तरान् । विकचान्सुमनःस्तोमान्पादपेभ्य इवानिलः ॥२४५॥ 245

तेन कङ्कुणवर्षस्य रससिद्धस्य सोदरः । चङ्कुणो नाम तुःखारदेशान्नीतो गुणोन्नतः ॥२४६॥

स रसेन समातन्वन्कोशे बहुसुवर्णताम् । पद्माकर इवाब्जस्य भूभृतोभूच्छुभावहः ॥२४७॥

दृष्टः पञ्चनदे जातु दुस्तरैः सिन्धुसंगमैः । तटे स्तम्भितसैन्योभूद्राजा चिन्तापरः क्षणम् ॥२४८॥

ततोम्बुतरणोपायं तस्मिन्पृच्छति मन्त्रिणः । अगाधेम्भसि रोधःस्थश्चङ्कुणो मणिमक्षिपत् ॥२४९॥

तत्प्रभावाद्विधाभूतं सरिन्नीरं ससैनिकः । उत्तीर्णो नृपतिस्तूर्णं परं पारं समासदत् ॥२५०॥ 250

मणिमन्येन मणिना चङ्कुणोप्याचकर्ष तम् । सलिलं प्रागवस्थं च क्षणेन सरितामभूत् ॥२५१॥

परिभाव्याद्भुतं तस्य प्रशंसामुखराननः । प्रणयाच्चङ्कुणं राजा मणियुग्ममयाचत ॥२५२॥

स तमाह स्म विहसन्कर्मैतौ कुरुतो मणी । योग्यौ मत्पाणिनावेव किं स्यात्स्वीकरणेन वः ॥२५३॥

सामान्येप्येव लभते सोत्कर्षं वस्तु संप्रथाम् । महत्सु तस्य का शोभा विविधोत्कृष्टवस्तुषु ॥२५४॥

प्रस्यन्दनं शशिमणेर्गणयन्ति तावद्यावत्स्थितो जलनिधेः पुलिनैकदेशे ।
सं स्वीक्रियेत यदि तेन ततस्तदास्य स्यन्दः स्फुरन्नपि न तत्सलिले विभाव्यः ॥२५५॥ 255

इत्युक्त्वा विरते तस्मिन्राजा सस्मितमब्रवीत् । संभावयसि किं रत्नमाभ्यामभ्यधिकं मम ॥२५६॥

अतोधिकतरं यद्वा किंचित्स्वं मम पश्यसि । तदादाय प्रयच्छेदं निष्क्रयेण मणिद्वयम् ॥२५७॥

ततो महान्प्रसादोयमित्युक्त्वा चङ्कुणोब्रवीत् । स्वायत्ते स्वामिनो रत्ने मह्यमिष्टं तु दीयताम् ॥२५८॥

गजस्कन्धेधिरोप्यैतन्मागधेभ्यो यदाहृतम् । दत्त्वा सुगतबिम्बं तज्जनोयमनुगृह्यताम् ॥२५९॥

सलिलोत्तरणोपायौ मणी देवेन गृह्यताम् । संसारोत्तरणोपायः सुगतो मह्यमर्प्यताम् ॥२६०॥ 260

---

२३६. [1]) Thus $A_2$; $A_1$ चेतसि भूपाल सु°. २३८. [1]) $A_2$ gloss सचिवपालस्य. २४०. [1]) Thus $A_2$; $A_1$ °दाज्ञा त्वया. २४६. [1]) A तु × खार°.—[2]) Thus corr. by $A_2$ from $A_1$ °देशानीतो. २४८. [1]) Thus $A_1$; $A_2$ स्तिमित°. २५२. [1]) $A_2$ प्र-तिभाव्या°. २५४. [1]) $A_2$ °त्कृष्टभूमिषु. २५५. [1]) $A_2$ gloss चन्द्रकान्तस्य.—[2]) $A_2$ gloss शशिमणिः.—[3]) $A_2$ gloss जलनिधिना.—[4]) Thus corr. by $A_2$ from $A_1$ स्यन्दं.—[5]) Thus corr. by $A_2$ from $A_1$ वभाव्यः. २५७. [1]) Thus $A_2$; $A_1$ ततो.—[2]) Thus $A_1$; $A_2$ in margin कीदृशं स्वं. २५९. [1]) $A_2$ gloss बुद्ध. २६०. [1]) $A_2$ gloss मणी एव संसारतरणोपाय इत्यारोपः। अत एव गृह्यता-मित्येकवचनान्तं क्रियापदम् मणी एव संसारतरणोपायस्त्वया गृह्यतामित्यन्वयः.

इति तेनार्थितो युक्त्या जिनबिम्बं ददौ नृपः । वाग्मिनां कस्य सामर्थ्यं परिपन्थयितुं क्षमः ॥२६१॥
स्वविहारे च भगवान्स तेन विनिवेशितः । कपिशाभिः सकाषाय इव यो भाति कान्तिभिः ॥२६२॥
दृश्यतेद्यापि कटकैरायसैः परिवेष्टितः । गजस्कन्धनिबद्धस्य सूचको यस्य विष्टरः ॥२६३॥
अभिप्रायानुसारेण प्रकटीकुरुते प्रियम् । अहो महाप्रभावाणां भूपतीनां वसुंधरा ॥२६४॥
265 अशिक्षितं कदाचित्स स्वयं दमयितुं हयम् । निनायारण्यमेकाकी हयविद्याविशारदः ॥२६५॥
दूरान्निर्मानुषे तत्र ललनां ललिताकृतिम् । एकां ददर्श गायन्तीं नृत्यन्तीमपरामपि ॥२६६॥
क्षणाच्च ते समापय्य गीतनृत्ते मृगीदृशौ । प्रणम्य किंचिद्गच्छन्त्यावपश्यद्गमयन्हयम् ॥२६७॥
तुरगं तं समारुह्य तत्रागच्छद्दिने दिने । दृष्ट्वा तथैव ते कान्ते गत्वापृच्छत्सविस्मयः ॥२६८॥
तमूचतुस्ते नर्तक्यावावां देवगृहाश्रिते । यः शूरवर्धमानोयं ग्रामस्तत्रावयोर्गृहम् ॥२६९॥
270 इहत्यजीवनभुजां मातॄणामुपदेशतः । अस्मत्कुलेन नियतं नृत्तमत्र विधीयते ॥२७०॥
रूढिः परंपरायाता सेयमस्मद्गृहे स्थिता । आवामन्योपि वा नात्र निमित्तं ज्ञातुमीश्वरः ॥२७१॥
एवं वचस्तयोः श्रुत्वा नृपोन्वेष्टुः सविस्मयः । तदुक्त्या मेदिनीं कृत्स्नां कारुभिर्निरदारयत् ॥२७२॥
दूरं निर्दलितमृद्भिस्तैरथाद्राक्षीन्निवेदितम् । नृपतिः पिहितद्वारं जीर्णं देवगृहद्वयम् ॥२७३॥
उद्घाटितारैर्वर्णैः पीठोत्कीर्णैर्निवेदितौ । अपश्यत्केशवौ तत्र रामलक्ष्मणनिर्मितौ ॥२७४॥
275 परिहासहरेः पार्श्वे पृथक्कृत्वा शिलागृहम् । स रामस्वामिनः श्रीमान्प्रतिष्ठाकर्म निर्ममे ॥२७५॥
देवोपि लक्ष्मणस्वामी तथैवाभ्यर्थ्य पार्थिवम् । चक्रमर्दिकया चक्रेश्वरपार्श्वे निवेशितः ॥२७६॥
दिग्जये पुरुषः कश्चिल्लूनप्रत्यग्रनिग्रहः । अग्रे न्यक्षिपदात्मानं गजस्कन्धस्य भूभुजः ॥२७७॥
तं कृत्तपाणिघ्राणादिव्रणैः शोणितवर्षिणम् । प्राणार्थिनं कारुणिकः स्वोदन्तं पृष्टवान्नृपः ॥२७८॥
स तस्मै सिकतासिन्धुसंनिभस्यस्य भूपतेः । प्रख्यातमूचे सचिवमात्मानं हितकारिणम् ॥२७९॥
280 प्रणतिर्ललितादित्यनृपतेः क्रियतामिति । हितं कथयतः स्वस्य निग्रहं च ततो नृपात् ॥२८०॥ युग्मम् ॥
प्रतिजज्ञे च भूपेन ततस्तत्स्वामिनिग्रहः । स्वव्रणोपगदंकारैः स चाकार्यत सत्कृतिः ॥२८१॥
ततो विहितयात्रं तं स मन्त्री कृतसत्क्रियः । कदाचिदेवमवदद्विजने जगतीभुजम् ॥२८२॥
एवंविधस्य कायस्य राजन्यत्परिरक्षणम् । तत्र वैरविशुद्ध्याशा विडम्बयति मामियम् ॥२८३॥
बाष्पैर्जलाञ्जलिं दत्त्वा दुःखाय च सुखाय च । कृतकृत्यो ध्रुवं जह्यामवमानहतानसून् ॥२८४॥
285 अपकृत्याधिकं शत्रोरपकारं जयेन्मितम् । गम्भीरं प्रतिनद्येव निनादं नदतो गिरिः ॥२८५॥
इतो मासैस्त्रिभिर्गम्या भूः प्राप्या त्वरितं कथम् । यदा वा प्राप्यते वैरी तदा तत्रैव किं वसेत् ॥२८६॥
मासार्धलङ्घ्यं पन्थानं तस्मादुपदिशामि ते । गृहीत्वा स्वं जलं गम्यश्चमूना किं तु निर्जलः ॥२८७॥
तद्भूमिजा बन्धवो मे न वक्ष्यन्ति त्वदागमम् । सामात्यान्तःपुरो राजा कथनानेन गृह्यते ॥२८८॥

---

२६१. ¹) Thus corr. by $A_2$ from $A_1$ यस्य. २६३. ¹) Thus emended with Edd.; $A_1$ °स्कन्ध°.—²) Thus $A_1$; $A_2$ सूचकैर्यस्य. २७०. ¹)²) $A_4$ glosses अस्मत्कुलजेन and देवगृहे. २७२. ¹) Thus corr. by $A_2$ from तदुक्तौ; $A_3$ °क्तां.—²) Thus $A_3$; $A_1$ कृत्स्नां. २७३. ¹) Thus $A_1$; altered by later hand to दूरनि°. २७४. ¹) $A_1$ gloss अक्षरैः. २७९. ¹) Thus corr. by $A_2$ from $A_1$ आख्यातं. २८०. ¹) $A_4$ gloss ललितादित्याय प्रणामं कुर्विति मदुक्तं हितमपि श्रुत्वा तेन राज्ञा मम कर्णनासाद्यवयवाः कृत्ताः. २८२. ¹) Thus $A_2$; $A_1$ °द्विजेन. २८४. ¹) Thus $A_3$; $A_1$ जह्याद°. २८७. ¹) $A_2$ gloss पन्थाः.

इत्युक्त्वा सोऽकरोत्तस्य प्रवेशं वालुकार्णवे । पक्षे क्षीणे च कटको निस्तोयः समपद्यत ॥२८९॥
तत्राप्यहानि द्वित्राणि वहत्स्वेवाभवन्नृपः । तृष्णार्तं वीक्ष्य सैन्यं च मन्त्रिणं तमभाषत ॥२९०॥ 290
उक्तकालाधिका यावद्वासरा गमिताः पथि । मुमूर्षु तृष्णया सैन्यं तदध्वा क्षिप्यते कियान् ॥२९१॥
ततो विहस्य सोऽवादीज्जिगीषो रोषमञ्जनः । किं पृष्टस्त्वारिराष्ट्रस्य यमराष्ट्रस्य वा भवान् ॥२९२॥
त्वं हि स्वामिहितायैव समुपेक्ष्य स्वजीवितम् । मृत्युवक्त्रं सकटको मया युक्त्या प्रवेशितः ॥२९३॥
नेदं मरुमहीमार्गं भीमोऽयं वालुकार्णवः । अम्भोऽत्र लभ्यते क्वापि कस्त्राता तेऽद्य भूपते ॥२९४॥
श्रुत्वेति प्रमना कृत्वा समभूद्धीनसौष्ठवा । करकाभक्षितफला सस्यश्रेणीव शालिभूः ॥२९५॥ 295
संत्यक्तजीविताशानां भीरूणां क्रन्दितध्वनिम् । भुजमुद्यम्य शमयंस्ततो नृपतिरब्रवीत् ॥२९६॥
अमात्य तव कृत्येन प्रीताः स्वामिहितैषिणः । मरावप्यत्र शीतार्ता इव रोमाञ्चिता वयम् ॥२९७॥
अभेद्यसारे मयि तु व्यक्तमेवंविधोऽपि ते । प्रयासः कुण्ठतां यातो लोहं वज्रमणाविव ॥२९८॥
मणिप्रभाहृद्धिकणं गृह्णन्त्यथा इवाङ्गुलीः । त्वं मिथ्यावचनाङ्गुनानय शोचिष्यसि ध्रुवम् ॥२९९॥
निर्देशेनैव मे पश्य पयः स्रुतेयं मेदिनी । रसितेनाम्बुवाहस्य रत्नं वैडूर्यभूरिव ॥३००॥ 300
इत्युक्त्वा सोऽम्बु निष्क्रष्टुं कुन्तेनोर्वीं व्यदारयत् । उज्जिहीर्षुर्वितस्ताम्भः शूलेनेव त्रिलोचनः ॥३०१॥
अथोज्जगाम पातालक्ष्मीलीलास्मितच्छविः । स्रोतस्तस्मात्सरित्साकं सैन्यानां जीविताशया ॥३०२॥
तस्य सेनाचराणां सा क्रमं चिच्छेद वाहिनी । नृपाज्ञवीकृताङ्गस्य मन्त्रिणस्तस्य चेष्टितम् ॥३०३॥
लूनाङ्गोमङ्गलाशंसी स मन्त्री विफलश्रमः । स्वस्य भर्तुर्विवेशारी नगरीमन्तकस्ततः ॥३०४॥
राज्ञापि कुटिलाचारो निगृह्य स महीपतिः । निजस्य मन्त्रिणस्तस्य तुल्यावस्थो व्यधीयत ॥३०५॥ 305
यथोपयोगं तेनैव स्थाने स्थाने प्रवर्तिताः । अद्यापि कुन्तवाहिन्यः प्रवहन्त्युत्तरापथे ॥३०६॥
सहस्रशः संभवन्तोऽप्यपरे भुवनाद्भुताः । अतिप्रसङ्गभङ्गेन तद्वृत्तान्ता न दर्शिताः ॥३०७॥
यान्निःशब्दजला घनागमपरचे देशेऽतिघोरारवा याश्च्छाः समये पयोदमलिने कालुष्यसंदूषिताः ।
दृश्यन्ते कुलनिम्नगा अपि परं दिग्देशकालाश्रिमी तत्सत्यं महतामपि स्वसदृशाचारप्रवृत्तिप्रदी ॥३०८॥
कलेर्वायं प्रभावः स्यादत्वनाशासनस्य वा । यस्तोऽपि भीमकलुषाः प्रवृत्तीः समदर्शयत् ॥३०९॥ युग्मम् ॥
अवरोधसखो राजा परिहासपुरे स्थितः । स जातु मदिराक्षीवः सचिवानेवमन्वशात् ॥३१०॥ 310
कृतं प्रवरसेनेन यदेतत्प्रवरं पुरम् । तन्निर्दहत मन्यध्वे मत्पुरस्येव चेच्छ्रियम् ॥३११॥
घोरामेलङ्घिताज्ञस्य श्रुत्वेत्याज्ञां महीपतेः । गत्वार्धवासकूटानि तेऽदहन्वातुलानके ॥३१२॥
हर्म्याग्राद्वीक्षमाणस्तद्वह्निज्वालोज्ज्वलाननः । उल्कामुख इवाभूत्स हर्षाट्टहसितोत्कटः ॥३१३॥
द्वेषादिवैकृतवतः प्रतिभासतेऽन्यो मिथ्यैव विभ्रमधिको विशदात्मनोऽपि ।
चन्द्रादि पश्यति पुरो द्विगुणं प्रकृत्या तेजोमयं तिमिरदोषहतं हि चक्षुः ॥३१४॥

---

२९५. 1) $A_2$ gloss पुष्टवर्णं. २९८. 1) Thus corr. by $A_2$; $A_1$ °मेवीविधोपि तु.—2) Thus $A_2$; $A_1$ प्रयोग॰. २९९. 1) Thus corr. by $A_2$ from $A_1$ वचकर्णं. ३००. 1) Thus Edd. and G *sec. manu*; A R and G *prima manu* हिलेशैव. ३०४. 1) $A_2$ gloss कलितामित्स एव कमः. ३०८. 1) Thus corr. by $A_2$ from $A_1$ विग्देश°; $A_2$ gloss दिशि देशः दिग्देशः स च कालश्च तौ. ३११. 1) Thus $A_1$; $A_2$ मत्पुरस्यैव. ३१२. 1) Thus corr. by $A_2$ from $A_1$ गत्वाभूपास°.

315 नैवं वेदैकमपि यत्पुरं प्रवरभूपतेः । असंख्यपुरनिर्माता स विवेदाधिकं कुतः ॥३१५॥ युग्मम् ॥
क्षीबत्वेऽप्यथ निर्ध्याय नगरप्लोषकिल्बिषम् । उष्णनिःश्वासधूम्रश्रीः पस्पर्शानुशयाग्निना ॥३१६॥
तत्कुर्वतेऽन्तःशुषिरा गूढं येनाननुक्षयम् । दह्यन्ते जीर्णतरवः कोटरस्थानला इव ॥३१७॥
प्रातस्तमथ शोचन्तं सदुःखं वीक्ष्य मन्त्रिणः । चिन्तानिवर्तनायोचुः पुरप्लोषं मृषैव तत् ॥३१८॥
श्रुतेऽप्यनष्टे नगरे निःशोकोऽभून्महीपतिः । स्वप्नान्तर्मारिते पुत्रे प्रबुद्धोऽथ इव स्थिते ॥३१९॥
320 कार्यं न जातु तद्वाक्यं यत्क्षीबेण मयोच्यते । तान्युक्तकारिणोऽमात्यान्प्रशंसन्निति सोऽब्रवीत् ॥३२०॥
प्रियमनुचितं क्ष्मापण्यस्त्रीक्षणप्रभुरीश्वरो रमयति यतो भिक्षान्भृत्यान्स्ववृत्तिसुखार्थिनः ।
नृपमपथगं पान्ति प्राणानुपेक्ष्य निजानपि प्रसभमिह ये तैः पूतेयं महात्मभिरुर्वरी ॥३२१॥
अतीन्द्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः । अयमन्योऽपि दोषोऽभूदितरक्षितिपोचितः ॥३२२॥
दत्त्वापि यस्य मध्यस्थं श्रीपरीहासकेशवम् । जघान तीक्ष्णपुरुषैस्त्रिग्राम्यां गौडपार्थिवम् ॥३२३॥
गौडोपजीविनामासीत्सत्त्वमत्यद्भुतं तदा । जहुर्यज्जीवितं धीराः परोक्षस्य प्रभोः कृते ॥३२४॥
325 शारदादर्शनमिषात्कश्मीरान्संप्रविश्य ते । मध्यस्थदेवावसथं संहताः समवेष्टयन् ॥३२५॥
दिगन्तरस्थे भूपाले प्रविविक्षूनवेक्ष्य तान् । परिहासहरिं चक्रुः पूजकाः पिहितान्तरम् ॥३२६॥
ते रामस्वामिनं प्राप्य राजतं विक्रमोर्जिताः । परिहासहरिभ्रान्त्या चक्रुरुत्पाट्य रेणुशः ॥३२७॥
तिलं तिलं तं कृत्वा च चिक्षिपुर्दिक्षु सर्वतः । नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे ॥३२८॥
श्यामला रक्तसंसिक्तास्तेऽपतन्निहता भुवि । अञ्जनाद्रिदृषत्खण्डा धातुस्यन्दोज्ज्वला इव ॥३२९॥
330 तदीयरुधिरासारैः समभूदुज्ज्वलीकृता । स्वामिभक्तिरसामान्या धन्या येयं वसुंधरा ॥३३०॥
यन्त्राद्यकृतं भयं विरमति श्रीः पद्मरागाद्यवेलानाकारमपि प्रशाम्यति विषं गारुत्मताद्दश्मनः ।
एकैकं क्रियते प्रभावनियमात्कर्मेति रत्नैः परं पुंरत्नैः पुनरप्रमेयमहिमोत्सेकैर्न किं साध्यते ॥३३१॥
क्व दीर्घकाललङ्घ्योऽध्वा शान्ते भक्तिः क्व च प्रभौ । विधातुरप्यसाध्यं तद्यद्गौडैर्विहितं तदा ॥३३२॥
लोकोत्तरस्वामिभक्तिप्रभावाप्ति पदे पदे । तादृशानि तदाभूवन्भृत्यरत्नानि भूभृताम् ॥३३३॥
राज्ञः प्रियो रक्षितोऽभूद्गौडराक्षसविप्लवे । रामस्वाम्युपहारेण श्रीपरीहासकेशवः ॥३३४॥
335 अद्यापि दृश्यते शून्यं रामस्वामिपुरास्पदम् । ब्रह्माण्डं गौडवीराणां सनाथं यशसा पुनः ॥३३५॥
एवं नानाविधोदन्तैर्वासराः क्ष्मापतेर्ययुः । विरलाः स्वपुरे तस्य भूयांसस्तु दिगन्तरे ॥३३६॥
अनन्याक्रान्तपृथिवीसमालोकनकौतुकी । अपारं प्रविवेशाथ पुनरेवोत्तरापथम् ॥३३७॥
कर्तुं प्रभावजिज्ञासां प्रहितैर्धनदादिभिः । नैर्ऋतैः सह वृत्तान्तास्तस्य ते ते तदाभवन् ॥३३८॥
नाद्यापि या भुवो दृष्टा जाने भानुकरैरपि । राज्ञस्तस्य बभूवाशा तत्र स्वैरविहारिणी ॥३३९॥
340 चिरमज्ञातवृत्तान्तैर्मन्त्रिभिः प्रहितस्ततः । प्रत्यावृत्तस्तस्य पार्श्वाद्दूतस्तानेवमुक्तवान् ॥३४०॥

---

३१७. 1) A2 gloss अन्तश्छिद्राः.—2) A2 gloss मध्ये एव.—3) A2 gloss क्रियाविशेषणम्.—4) A2 gloss कर्मकर्तरि लकारः स्वयमेव दह्यन्ते । अन्तश्छिद्राः पुरुषास्तत्कार्यं कुर्वते । येन कार्येण अननुक्षयं यथा भवति तथा स्वयमेव दह्यन्ते । यथा कोटरस्थानलास्तरवः स्वयमेव गूढं अन्तरेव दह्यन्ते ॥. ३३१. 1) Thus corr. by A3 from A1 कर्मेति°.—2) Thus corr. by A3 from A1 पद्म° ३३३. 1) र supplied by A2. ३३७. 1) Thus corr. by A3 from A1 अनन्याक्रा° ३३९. 1) A2 तत्र.

इत्यादिशति कः स्वामी कोयं मोहो भवादृशाम् । क्ष्मामिमां मे प्रविष्टस्य प्रतीक्षध्वे यदागमम् ॥३४१॥
नवं नवं प्रतिदिनं संत्यज्य विजयार्जनम् । स्वराष्ट्रं संप्रविष्टस्य किं कार्यं मम पश्यत ॥३४२॥
विनिर्गतानां स्वभुवः सरितां सलिलाकरः । न निर्व्याजंजिगीषूणां दृश्यतेवधिः क्वचित् ॥३४३॥
तस्मादाचारसारं वो वक्ष्ये स्वविषयोचितम् । राज्यं तदनुसारेण निश्छिद्रं कुरुतानघाः ॥३४४॥
अत्रस्थैः सर्वदा रक्ष्यः स्वभेदः प्रभविष्णुभिः । चार्वाकाणामिवैषां हि भयं न परलोकतः ॥३४५॥ 345
अपराधं विनाप्यत्र दण्ड्या गह्वरवासिनः । ते हि संभृतवित्ताः स्युर्दुर्भेद्या दुर्गसंश्रयाः ॥३४६॥
वर्षोपभोग्यान्यन्नानि क्षेत्रभूसंमिता वृषाः । ग्राम्याणां नातिरिच्यन्ते यथा कार्यं तथासकृत् ॥३४७॥
अधिकीभूतवित्ता हि वत्सरेणैव ते भृशम् । भवेयुर्डामराः क्रूरा नृपाज्ञातिक्रमक्षमाः ॥३४८॥
वस्त्रं स्त्रियः क्षुधा भोज्यमलंकारा हया गृहाः । आसाद्यन्ते यदा जातु ग्रामीणैर्नगरोचिताः ॥३४९॥
महादुर्गाण्युपेक्ष्यन्ते संरक्ष्याणि यदा नृपैः । यदा चानन्तरज्ञत्वं तेषां भृत्येषु दृश्यते ॥३५०॥ 350
प्रदेशादेकतो वृद्धा यदा वृत्तिश्च शस्त्रिणाम् । अन्योन्योद्वाहसंबन्धैः कायस्थाः संहता यदि ॥३५१॥
कर्मस्थानानि वीक्षन्ते क्ष्मापाः कायस्थवद्यदा । तदा निःसंशयं ज्ञेयः प्रजाभाग्यविपर्ययः ॥३५२॥ चक्कलकम् ॥
चेष्टानुसारेणोन्नीय गूढमाशयसंविदम् । प्रयोक्तं हृदये कार्यमन्तरं राजजीविनाम् ॥३५३॥
प्रत्यासत्तिं मदकरटिनो दानगन्धेन वायुर्गर्जोद्भूतिं प्रकटिततडिच्चञ्चलैवाम्बुदस्य ।
चेष्टा स्पष्टं वदति मतिमन्नैपुणोन्नेयतत्त्वा जन्तोर्जन्मान्तरपरिचितां निश्चलां चित्तवृत्तिम् ॥३५४॥
पुत्रः कुवलयादित्यो वज्रादित्यश्च मे समौ । भिन्नशीला तयोर्भ्रात्रोर्धीर्द्वैमातुरयोः पुनः ॥३५५॥ 355
ज्यायान्राज्येभिषेक्तव्यः स च स्याद्बलवान्यदा । तस्याज्ञातिक्रमः कार्यो भवद्भिर्नियमात्तदा ॥३५६॥
उत्सृजज्जीवितं वापि राज्यं वापि स पार्थिवः । शोचनीयो न केनापि स्मरतेदं वचो मम ॥३५७॥
कार्यः कनीयांश्च नृपः प्रमादात्क्रियते यदि । नोल्लङ्घनीया तस्याज्ञा रक्ष्यश्च विषमोपि सः ॥३५८॥
पौत्रेषु मे कनीयान्यो जयापीडोस्ति दारकः । पितामहसमो भूया इति वाच्यः स सर्वदा ॥३५९॥
भर्तुर्गृहीतनैराश्याः साभिप्रायां प्रणम्य ताम् । आनर्चुः पश्चिमामाशां ते बाष्पार्घकणत्यजः ॥३६०॥ 360
उवाच चङ्कुणो जातु संनिपत्याखिलाः प्रजाः । बाष्पैः पतिवियोगाग्नितप्तां सिञ्चन्वसुंधराम् ॥३६१॥
राज्ये कुवलयापीडो राजपुत्रोभिषिच्यताम् । सुगृहीताभिधो राजा गतः स सुकृती दिवम् ॥३६२॥
सहजे यस्य कृतिनो दैवतैः कोशवृद्धये । रससिद्धिरकस्मान्मे यस्मात्सा समुपागता ॥३६३॥
दूरस्थोपि हि भूभृत्स भाग्यशक्त्या कयाचन । कार्याणि घटयन्नासीद्दुर्घटान्यपि हेलया ॥३६४॥
अम्भोजानि घनाघनव्यवहितोप्युल्लासयत्यंशुमान्दूरस्थोपि पयोधरोतिशिशिरस्पर्शी करोत्यातपम् ।
शक्तिः काप्यपरिक्षतास्ति महतां स्वैरं दविष्ठान्यहो यन्माहात्म्यवशेन यान्ति घटनां कार्याणि निर्यन्त्रणाम् ॥३६५॥ 365
सैकादशदिनान्सप्त मासान्षट्त्रिंशतं समाः । एवमाहृत्य स महीं प्रजाचन्द्रोस्तमाययौ ॥३६६॥

---

३४१. 1) The words from प्रतीक्षध्वे to संप्रविष्टस्य in the following verse have been omitted by $A_1$ and supplied in margin by $A_2$. ३४३. 1) Thus corr. by later hand from $A_1$ निर्व्याजं. ३४६. 1) Thus $A_1$; altered by later hand to दुर्भेदा which is found in R G. ३५४. 1) $A_2$ gloss करटी हस्ती. ३५६. 1) $A_4$ gloss कुवलयापीडः.—2) Emended; A °षिक्तव्यः. ३६५. 1) Thus corr. by $A_2$ from $A_1$ °यन्त्रणम्.

तुषारवर्षैर्बहलैस्तमकाण्डनिपातिभिः । आर्याणकाभिधे देशे विपन्नं केचिदूचिरे ॥३६७॥
राजप्रज्ञां[1] प्रतिष्ठां स रक्षितुं चिरसंचिताम् । संकटे क्वापि दहनं प्राविक्षदिति केचन ॥३६८॥
केषांचित्तु मते भूभृत्स्वीयस्युत्तरापथे । सोमर्त्यसुलभां भूमिं प्रविष्टः कटकान्वितः ॥३६९॥
370 अत्यद्भुतानि कृत्यानि श्रुतान्यस्य यथा किल । विपत्तिरपि भूभर्तुस्तथैवात्यद्भुता श्रुता ॥३७०॥
यातोस्तं द्युमणिः पयोधिसलिलं कैश्चिन्निविष्टोपरैः संप्राप्तो दहनं गतः किल परैर्लोकान्तरं[1] कीर्त्यते ।
जायन्ते महतामहो निरुपमप्रस्थानहेवाकिनां निःसामान्यमहत्त्वयोगपिशुना वार्ता विपत्तावपि ॥३७१॥
ततः कुवलयापीडो भेजे कुवलयेशताम्[1] । जातः कमलदेव्या यः श्रीमाञ्शशाङ्क इवादितेः ॥३७२॥
त्यागेन चक्रे विशदां योनुरक्तां नृपश्रियम् । महोरगस्त्वचमिव स्वभावमलिनामपि ॥३७३॥
भ्रात्रा तुल्यप्रभावेण कंचित्कालं हतप्रभः । स हुताशोष्मणाक्रान्तः प्रदीप इव नारुचत् ॥३७४॥
375 भृङ्गैरिवानुगैर्दानलोभात्पर्यायवृत्तिभिः । श्रीर्दुःस्थाभूत्तयोरन्तर्मत्तेभकटयोरिव ॥३७५॥
अथोभयधनादायिभृत्यचक्रिकया[1] समम् । राजा कुवलयापीडो बभञ्जानुजमञ्जसा ॥३७६॥
राज्यं निष्कण्टकं कृत्वा ततः प्राप्तबलो नृपः । दिग्जयायोर्जितकाङ्क्षः सोभूत्संभृतसाधनः ॥३७७॥
एकस्तस्मिन्क्षणे मन्त्री तस्याज्ञामुदलङ्घयत् । स्मरन्त्या तत्पितुर्वीर्यं भजन्त्या दर्पविक्रियाम् ॥३७८॥
प्राप्तायामथ यामिन्यां तल्पे कोपाकुलो नृपः । तमाज्ञातिक्रमं ध्यायन्न निद्रां क्षणमप्यगात् ॥३७९॥
380 एवं[1] कृतागसं हन्तुं सस्पृहस्य तदाभयात् । बहवः प्रत्यभासन्त वध्यास्तस्योद्यतक्रुधः ॥३८०॥
विचारशैलमथिता तस्य चित्तमहोदधेः । प्रकोपकालकूटस्य पश्चाच्छमसुधोदगात् ॥३८१॥
दध्यौ सोथ गतक्रोधः प्रवृत्तः प्राणिसंक्षयः । एतावान्कस्य नु कृते कर्तव्यः प्रत्यभान्मम ॥३८२॥
अकार्याण्यपि पर्याप्य कृत्वापि वृजिनार्जनम् । विधीयते हितं यस्य स[1] देहः कस्य सुस्थिरः ॥३८३॥
कृतघ्नस्यास्य कायस्य हेतोरगलितस्मृतेः । हन्तव्याः कस्य पन्थानः प्रतिभान्त्यनपायिनः ॥३८४॥
385 विदन्ति जन्तवो हन्त पच्यमानस्य नात्मनः । अवस्थां कालसूदेन कृतां तां तां क्षणे क्षणे ॥३८५॥
ह्यः पश्यद्भिरकारणस्मितसितं पाथोजकोशाकृति श्मश्रूद्भेदकठोरमद्य[1] रभसादुत्तप्तताम्रप्रभम् ।
प्रातर्जीर्णवलक्षकेशविकृतं वृद्धाजशीर्षोपमं वक्त्रं नः परिहस्यते ध्रुवमिदं भूतैश्चिरस्थायुभिः ॥३८६॥
इत्याद्यनित्यताचिन्तादत्तशान्तिसुखादरः । राज्यं संत्यज्य स वनं प्लक्षप्रस्रवणं[1] ययौ ॥३८७॥
गच्छ भद्र वनायैव तपस्याधीयतां मनः । सापायाः क्षणभङ्गिन्य एवंप्राया विभूतयः ॥३८८॥
तेन संत्यजता राज्यं लिखितेन निजासने । वैराग्यवासनोत्सेकः श्लोकेनानेन सूचितः ॥३८९॥
390 अप्रमशमसंवेगलब्धसिद्धिर्नराधिपः । श्रीपर्वतादावद्यापि भव्यानामेति दृक्पथम् ॥३९०॥
तथा याते प्रभोः पुत्रे मित्रशर्मा[1] शुचान्वितः । वितस्तासिन्धुसंभेदे सभार्यो जीवितं जहौ ॥३९१॥
राज्यं समां समासार्धां कृत्वा स वसुधाधिपः । निःश्रेयसाप्तिनिःश्रेणीं सुधीः सिद्धिं समासदत् ॥३९२॥

---

३६८. [1]) Thus $A_1$, $A_2$ °प्रज्ञ°. ३७१. [1]) Thus corr. by $A_3$ from $A_1$ परो°. ३७२. [1]) Thus corr. by $A_2$ from $A_1$ भुवलये°; $A_2$ adds the gloss को भूमेः. वलयः कुवलयः. ३७६. [1]) A चक्रि°. ३८०. [1]) This and the following verse have been omitted by $A_1$ and supplied in margin by $A_2$. ३८३. [1]) $A_3$ देहे तत्कस्य सुस्थिरम्. ३८६. [1]) Thus $A_2$; $A_1$ श्मश्रूद्भेद ३८७ [1]) $A_3$ gloss नैमिषारण्यं. ३९१. [1]) $A_4$ gloss मन्त्री.

वज्रादित्यो बप्पियको ललितादित्य इत्यपि । ज्यायानथ भूभृदभवद्यन्माता चक्रमर्दिका ॥३९३॥
स क्रूरचरितो भ्रातुः प्रजाह्लादविधायिनः । सुधांशोरिव दुर्वासा नूनं विसदृशोभवत् ॥३९४॥
परिहासपुरात्पित्र्यां नानोपकरणावलीम् । स जहार दुराचारो भूभुक्लोभवशंवदः ॥३९५॥
रागिणो भूमिपालस्य भूयस्योन्तःपुरस्त्रियः । बीजाश्वस्येव वडवालालसाः समभवन्प्रियाः ॥३९६॥
विक्रयेण प्रयच्छन्स म्लेच्छेभ्यः पुरुषान्बहून् । म्लेच्छोचितां व्यवहृतिं प्रावर्तयत मण्डले ॥३९७॥
सप्ताब्दान्वसुधां भुक्त्वा सोतिसंभोगजन्मना । जगाम संक्षयं क्ष्माभृत्क्षयरोगेण किल्बिषी ॥३९८॥
तस्मान्मञ्जरिकादेव्यां जातो राजा प्रजान्तकः । ततः पृथिव्यापीडोभूत्समासाश्चतुरः समाः ॥३९९॥
जातो मम्माभिधानायां बप्पियात्सप्त वासरान् । संग्रामापीडनामाथ समुत्साद्याभवन्नृपः ॥४००॥
भ्रातरौ तौ समासाद्य राज्यं नैव व्यराजत । हेमन्तशिशिरावाप्य चण्डांशोरिव मण्डलम् ॥४०१॥
शान्तेथ संग्रामापीडे कनीयान्बप्पियात्मजः । राजा श्रीमाञ्जयापीडः प्राप राज्यं ततः क्रमात् ॥४०२॥
पितामहसमो भूयादित्यमात्यवचः स्मरन् । जिगीषुः संभृतबलो दिग्जयाय स निर्ययौ ॥४०३॥
स्वदेशादेव नयविद्दशा नीतैः समं नृपैः । वृद्धान्पप्रच्छ निर्गच्छन्कश्मीरद्वारगोचरान् ॥४०४॥
पितामहस्य नः सैन्यं कियन्निर्गच्छतोभवत् । इति ब्रूताद्य वाचाद्य यूयं संख्यातसैनिकाः ॥४०५॥
कृतस्मितास्तमूचुस्ते किं प्रश्नेनामुना प्रभो । वस्तु कश्चिदतिक्रान्तं नानुकर्तुं क्षमोधुना ॥४०६॥
कर्णीरथानां तस्यासीत्सपादं लक्षमीशितुः । अशीतिस्तु सहस्राणि देवस्यास्य जयोद्यमे ॥४०७॥
तदाकर्ण्य जयापीडो बहु मेने न निर्जयम् । क्षिप्रं क्षितेः संकुचन्त्याः कालस्य बलवत्तया ॥४०८॥
जिगीषोः क्ष्माभुजस्तस्य भावमालोक्य तादृशम् । बभ्रुर्भावज्ञतां वृद्धा ललितादित्यभूपतेः ॥४०९॥
तस्य दूरप्रयातस्य स्यालो जज्जाभिधो बलात् । द्रोहेणाक्रम्य कश्मीरान्स्वयं भेजे नृपासनम् ॥४१०॥
दिने दिने राजसैन्यात्स्वदेशस्मारिणस्ततः । सैनिकाः संन्यवर्तन्त स्वामिभक्तिपराङ्मुखाः ॥४११॥
प्रख्यापयिष्यन्स्वामेव शक्तिं परिकरं विना । निधिकाय जयापीडो मुक्तां कांचित्तु संविदम् ॥४१२॥
भग्नकूरास्तेभिमानास्तस्यैवासन्मनस्विनः । अन्ववर्तन्त वैरेव वैधात्रीरपि वामताः ॥४१३॥
स विसृज्य भुवं स्वां स्वां भूपतीननुयात्रिकान् । प्रयागमगमत्सैन्यैः परिमेयैर्निजैः समम् ॥४१४॥
तत्रावशिष्टानुद्दिश्य वाजिनः स मनोजवान् । द्विजेभ्यो लक्षमेकोनं प्रददौ भूरिदक्षिणम् ॥४१५॥
संपूर्णमन्यो लक्षं यः प्रदद्यादत्र वाजिनाम् । तन्मुद्रयेयं मन्मुद्रा विनिवार्येत्युदीर्य च ॥४१६॥
श्रीजयापीडदेवस्येत्यक्षरैरुपलक्षिताम् । दिग्देशगामिनो मुद्रां गाङ्गस्य पयसो ददौ ॥४१७॥
तन्मुद्राङ्कं पयः पीत्वा गाङ्गमद्यापि निर्मलम् । चित्ते प्रवर्धते तापो भूपानामभिमानिनाम् ॥४१८॥
स्वदेशगमनानुज्ञां सैन्यस्याप्तमुखेन सः । दत्त्वा निशायामेकाकी निर्ययौ कटकान्तरात् ॥४१९॥
मण्डलेषु नरेन्द्राणां पयोदानामिवार्यमा । गौडराजाश्रयं गुप्तं जयन्ताख्येन भूभुजा ॥४२०॥
प्रविवेश क्रमेणाथ नगरं पौण्ड्रवर्धनम् । तस्मिन्सौराज्यरम्याभिः प्रीतः पौरविभूतिभिः ॥४२१॥

३९३. [1]) A₂ ललितापीड. ३९४. [1]) A₂ दूरं. ४००. [1]) Thus A₁ R G; A₂ वत्सरान्. ४११. [1]) Thus A₂; A₁ स्वा न्यवर्तन्त. ४१९. [1]) Thus corr. by A₂ from A₁ °सहृतोथ सः. — [2]) Thus corr. by A₂ from A₁ कुत्वा (?). ४२१. [1]) Thus corr. by A₂ from A₁ तस्मि° and प्रीति.

लास्यं स द्रष्टुमविशत्कार्त्तिकेयनिकेतनम् | भरतानुगमालक्ष्यन्नृत्तगीतादिशास्त्रवित् ||४२२||
ततो देवगृहद्वारशिलामध्यास्त स क्षणम् |[1] ·························· ||४२३||
तेजोविशेषचकितैर्जनैः परिहृतान्तिकम् | नर्तकी कमला नाम कान्तिमन्तं ददर्श तम् ||४२४||
425 असामान्याकृतेः पुंसः सा ददर्श सविस्मया | अंसपृष्ठेन धावन्तं करं तस्यान्तरान्तरा ||४२५||
अचिन्तयत्ततो गूढं चरत्येष भवेद्ध्रुवम् | राजा वा राजपुत्रो वा लोकोत्तरकुलोद्भवः ||४२६||
एवं ग्रहीतुमभ्यासः पृष्ठस्थाः पर्णवीटिकाः | अंसपृष्ठेन येनायं लसत्पाणिः[1] प्रतिक्षणम् ||४२७||
लोलभोगपुटो मदोत्कमधुपापातात्ययेऽपि द्विपः सिंहोऽस्त्यपि पृष्ठतः करिकुले व्यावृत्य विप्रेक्षिता |
मेघौन्मुख्यशमेऽप्यशान्तवदनोद्गीर्णस्वरो बर्हिणश्चेष्टानां विरमेऽपि हेतुविगमेऽप्यभ्यासदीर्घा स्थितिः ||४२८||
इत्यन्तश्चिन्तयन्ती सा कृत्वा संक्रान्तसंविदम् | सखीमभिमतद्रव्यां विससर्ज तदन्तिकम् ||४२९||
430 प्राग्वत्स्पृष्टे गते पाणौ पूगखण्डांस्तयार्पितान् | वक्त्रे क्षिपञ्जयापीडः परिवृत्य ददर्श ताम् ||४३०||
भ्रूसंज्ञयासि कस्य त्वं पृष्टाया इति सुभ्रुवः | ददत्यां वीटिकास्तस्या वृत्तान्तमुपलब्धवान् ||४३१||
तया जनितदाक्षिण्यस्तैस्तैर्मधुरभाषितैः | सख्याः समाप्तनृत्ताया निन्ये स वसतिं शनैः ||४३२||
अथात्यपेशलालापा तथा तं सा विलासिनी | उपाचरत्परार्घ्यश्रीः सोऽप्यभूद्विस्मितो यथा ||४३३||
ततः शशाङ्कधवले संजाते रजनीमुखे | पाणिनाकृष्य भूपालं शय्यावेश्म विवेश सा ||४३४||
435 ततः काञ्चनपर्यङ्कशायी मैरेयमत्तया | तयार्थितोऽपि शिथिलं विदधे नाधरांशुकम् ||४३५||
प्रवेशयन्निव बृहद्वक्षस्तां सत्रपां ततः | दीर्घबाहुः समाश्लिष्य स शनैरिदमब्रवीत् ||४३६||
न त्वं पद्मपलाशाक्षि न मे हृदयहारिणी | किं तु कालानुरोधोऽयं सापराधं करोति माम् ||४३७||
हृतस्तवायं कल्याणि गुणैः क्रीतोऽस्म्यकृत्रिमैः | अचिराज्ज्ञातवृत्तान्ता ध्रुवं दाक्षिण्यमेष्यसि ||४३८||
कार्यशेषमनिष्पाद्य सज्जं मानिनि केचन | अभोगे कृतसंकल्पं सुखानां त्वमवेहि माम् ||४३९||
440 तामेवमुक्त्वा पर्यङ्कं साङ्गुलीयेन पाणिना | वादयन्निव निःश्वस्य शोकमेतं पपाठ सः ||४४०||
असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः | अनाक्रम्य जगत्कृत्स्नं[1] नो संध्यां भजते रविः ||४४१||
शोकेनात्मगतं तेन पठितेन महीभुजा | सा कलाकुशलाज्ञासीन्महान्तं कंचिदेव तम् ||४४२||
गन्तुकामं च तं प्रातर्नृपं प्रणयिनी बलात् | अर्थयित्वा चिरं[1] कालमप्रस्थानमयाचत ||४४३||
एकदा वन्दितुं संध्यां प्रयातः सरितस्तटम्[1] | चिरायातो गृहं तस्या ददर्श भृशविह्वलम्[2] ||४४४||
445 किमेतदिति पृष्टाथ तमूचे सा शुचिस्मिता | सिंहोऽत्र ग्रामकान्तारी निपत्याहन्ति देहिनः ||४४५||
नरनागाश्वसंहारः कृतस्तेन दिने दिने | त्वय्यभूवं चिरायाते तद्भयेन समाकुला ||४४६||
राजानो राजपुत्रा वा तद्भयेन विशङ्किताः | गृहेभ्यो नात्र निर्यान्ति प्रवृत्ते क्षणदाक्षये ||४४७||
तामिति ब्रुवतीं[1] मुग्धां निषिध्य च विहस्य च | मत्तेभ इव तां रात्रिं जयापीडोऽप्यवाहयत् ||४४८||

---

४२२. [1]) द्रष्टु supplied by $A_2$ in space left by $A_1$.—[2]) $A_1$ gloss [illegible] लास्या. ४२३. [1]) Here two padas seem to be wanting. ४२५. [1]) Thus $A_1$; $A_2$ °पृष्ठेष. ४२७. [1]) $A_2$ पूर्व.—[2]) Emended; A पृहीतु°.—[3]) $A_2$ धावत्पा°. ४२८. [1]) Thus corr. by $A_2$ from $A_1$ सिंह:. ४३१. [1]) Thus corr. by $A_2$ from $A_1$ ददत्या. ४३२. [1]) Thus corr. by $A_2$ from $A_1$ स्व. ४४०. [1]) $A_2$ कथयन्निव. ४४१. [1]) Thus $A_2$; $A_1$ जगत्पिवं. ४४३. [1]) $A_2$ मिनं. ४४४. [1]) $A_2$ स [illegible]—[2]) Thus $A_1$; altered by later hand to °ह्वलाम्. ४४८. [1]) Thus corr. by later hand from $A_1$ ब्रुवती.

अपरेद्युर्दिनापाये निर्गतो नगरान्तरात् । सिंहागमप्रतीक्षोऽभून्महावटतरोरधः ॥४४९॥

अदृश्यत ततो दूरादुत्फुल्लबकुलच्छविः । अट्टहासः कृतान्तस्य संचारीव मृगाधिपः ॥४५०॥ 450

अध्वनान्येन यान्तं तमथ मन्थरगामिनम् । राजसिंहो[1] नरः सिंहं समाह्वयत हेलया ॥४५१॥

स्तब्धश्रोत्रो व्यात्तवक्त्रः कम्प्रकूर्चः[1] प्रदीप्तदृक् । वहलपूर्वकायस्तं सगर्जः समुपाद्रवत् ॥४५२॥

तस्य न्यस्याननबिले कफोणिं पततः क्रुधा । क्षिप्रकारी जयापीडो वक्षः क्षुरिकयाभिनत् ॥४५३॥

शोणितं गन्धगन्धेभसिन्दूराभं विमुञ्चता । एकप्रहारभिन्नेन तेनात्यज्यत जीवितम् ॥४५४॥

आमुक्तव्रणपट्टः स कफोणिमथ गोपयन् । प्रविश्य नर्तकीवेश्म निशि सुष्वाप पूर्ववत् ॥४५५॥ 455

प्रभातायां विभावर्यां श्रुत्वा सिंहं हतं नृपः । मद्गुः कौतुकाद्द्रष्टुं जयन्तो निर्ययौ स्वयम् ॥४५६॥

स दृष्ट्वा तं महाकायमेकप्रहतिसंहतम् । साश्चर्यो निश्चयाम्मेने प्रहर्तारममानुषम् ॥४५७॥

तस्य दन्तान्तरालग्नं केयूरं पार्थिवार्पितम् । श्रीजयापीडनामाङ्कं ददर्शाथ सविस्मयः ॥४५८॥

स्यात्कुतोऽत्र स भूपाल इति ब्रुवति पार्थिवे । जयापीडागमाशङ्कि पुरमासीद्भयाकुलम् ॥४५९॥

ततः पौरान्विमृश्यैवं जयन्तः क्षितिपोऽब्रवीत् । प्रहर्षावसरे मूढाः कस्माद्वो भयसंभवः ॥४६०॥ 460

श्रूयते हि जयापीडो राजा भुजबलोर्जितः । केनापि हेतुना भ्राम्यन्नेकाक्येव दिगन्तरे ॥४६१॥

राजपुत्रः कल्हट इत्युक्ता कल्याणदेव्यसौ । तस्मै नियमिता दातुं निष्पुत्रेण सता मया ॥४६२॥

सोऽन्वेष्यश्चेत्स्वयं प्राप्तस्तत्राहरणेच्छया । रत्नद्वीपं प्रतिष्ठासोर्निधानासादनं गृहात्[1] ॥४६३॥

अस्मिन्नेव पुरे तेन भाव्यं भुवनशासिना । ब्रूयादेनं समान्वेष्य योऽस्मै दद्यामभीप्सितम् ॥४६४॥

प्राप्य सप्रत्ययाः[1] पौरा भूपतेः सत्यवादिनः । अन्विष्य कमलावासवर्तिनं तं न्यवेदयन् ॥४६५॥ 465

सामात्यान्तःपुरोऽभ्येत्य प्रयत्नेन प्रसाद्य तम् । ततः स्ववेश्म नृपतिर्निनाय विहितोत्सवः ॥४६६॥

कल्याणदेव्यास्तेनाथ कल्याणाभिनिवेशिना । राजलक्ष्म्या व्यपास्ताया इव सोऽजिग्रहत्करम् ॥४६७॥

व्यधाद्विनापि सामग्रीं तत्र शक्तिं प्रकाशयन् । पञ्च गौडाधिपाञ्जित्वा श्वशुरं तदधीश्वरम् ॥४६८॥

गतशेषं[1] प्रभुत्यक्तं सैन्यं संवाहयन्स्थितः । मित्रशर्मात्मजो देवशर्मामात्यस्तमाययौ ॥४६९॥

निजदेशं प्रति ततः स प्रतस्थे तदर्थितः । अग्रे जयश्रियं कुर्वन्पश्चात्ते च सुलोचने[1] ॥४७०॥ 470

सिंहासनं जिताहाजौ[1] कान्यकुब्जमहीभुजः । स राज्यककुदं राजा जहारोदारपौरुषः ॥४७१॥

तस्मिन्प्रविष्टे स्वभुवं स्फूर्जदूर्जितविक्रमे । सैन्यैः समं समित्सज्जैरज्जो योद्धुं विनिर्ययौ ॥४७२॥

शुष्कलेत्राभिधे ग्रामे तेन सार्धं सुदारुणः । जयापीडस्य संग्रामः सुबहूनि दिनान्यभूत् ॥४७३॥

अनुरक्तप्रजो राजा अज्जराज्यासहिष्णुभिः । युधि सोऽन्वीयमानोऽभूद्[1]ग्राम्याडविकमण्डलैः ॥४७४॥

श्रीदेवो ग्राममण्डालः ग्रामो ग्राम्यैः समं युधि । कोऽत्र अज्ज इति ग्राम्यान्योधान्पप्रच्छ सर्वतः ॥४७५॥ 475

तृष्णार्ते स्वर्णभृङ्गारात्पिबन्तं वारि तस्य ते । रणमध्ये हयारूढं तं दूरात्समदर्शयन् ॥४७६॥

---

४५१. [1]) Thus corr. by $A_3$ from $A_1$ °सिंहं. ४५२. [1]) Thus corr. by $A_3$ from $A_1$ कम्प°. ४५३. [1]) $A_2$ gloss [illegible]. ४६३. [1]) $A_2$ gloss [illegible]. ४६५. [1]) $A_2$ gloss सविश्वासाः. ४६९. [1]) $A_2$ gloss प्रकृतं कथासम्बन्धं स्मारयति गतशेषमिति. ४७०. [1]) $A_2$ gloss कमलानर्तकीं कल्याणदेवीं च. ४७१. [1]) Thus $A_3$; $A_1$ °हाजौ. ४७४. [1]) Thus $A_3$; $A_1$ सोऽन्वीयमानो.

भ्रमयन्क्षेपणीयं स शिलाश्मानं महाजवी । सोऽयं हतो मया जज्ज इत्यमोचकिषोऽनदत् ॥४७७॥
सोंहायकाय राज्ञेऽर्थं बालीस्तुक्कार्पितावनिः । मातुर्दत्तस्था जज्जस्य प्रतिज्ञापायकी वधम् ॥४७८॥
अश्मसंचूर्णभीमास्यं मुमूर्षुं पतितं हयात् । वितीक्ष्यमाणं मेदिन्यां जज्जं त्यक्ता वसुनिजाः ॥४७९॥
480 स समर्थाहितापायचिन्तासततदुःस्थितः । द्रोहार्जितेन राज्येन त्रिभिर्वर्षैर्व्ययुज्यत ॥४८०॥
न्यासापहाराहरणेजा वेश्यानां कामिवञ्चनात् । द्रोहाच्चोपनता राज्ञामस्थिरा एव संपदः ॥४८१॥
हते जज्जे जयापीडः प्रत्याहृत्य निजां श्रियम् । जग्राह दोष्णा भूभारं कृत्स्नेन च सतां मनः ॥४८२॥
प्रपेदे यत्र कल्याणं स विरोधिवधान्नृपः । देशे कल्याणपुरकृत्तत्र कल्याणदेव्यभूत् ॥४८३॥
राजा मल्हाणपुरकृच्चक्रे विपुलकेशवम् । कमला सा स्वनाम्नापि कमलाख्यं पुरं व्यधात् ॥४८४॥
485 महाप्रतीहारपीडाधिकारं प्रतिपद्य सः । कल्याणदेवीदाक्षिण्यादकरोदधिकोन्नतिम् ॥४८५॥
उत्पत्तिभूमौ देशेऽस्मिन्दूरदूरतिरोहिता । कश्यपेन वितस्तेव तेन विद्यावतारिता ॥४८६॥
वचोमूर्खोऽयमित्येव कस्मैचिद्वदते स्फुटम् । सर्वज्ञानान्वदञ्चक्रे सर्वान्विद्याभियोगिनः ॥४८७॥
देशान्तरादागमय्य व्याचक्षाणान्क्षमापतिः । प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥४८८॥
क्षीराभिधाच्छब्दविद्योपाध्यायात्संभृतश्रुतः । बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ॥४८९॥
490 भूपतेरात्मना स्पर्धां चक्षमे न स कस्यचित् । आत्मनस्तु बुधैः स्पर्धां गुरुधीर्बह्वमन्यत ॥४९०॥
तावत्पण्डितशब्देऽभूद्राजशब्दादपि प्रथा । तैस्तैर्दोषैर्न तु म्लानिं कालान्तरवशाद्ययौ ॥४९१॥
नृपतौ विद्वदायत्ते राजसांमुख्यकाङ्क्षिभिः । गृहा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ॥४९२॥
समग्रहीत्तथा राजा सोऽन्विष्य निखिलान्बुधान् । विद्वद्दुर्भिक्षमभवद्यथान्यनृपमण्डले ॥४९३॥
अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः । विद्वत्तया थक्कियाख्यस्तेन स्वीकृत्य वर्धितः ॥४९४॥
495 विद्वान्दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥४९५॥
स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम् । कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात् ॥४९६॥
मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥४९७॥
स स्वप्ने पश्चिमाशायां लक्षयन्नुदयं रवेः । देशे धर्मोत्तराचार्यं प्रविष्टं साध्वमन्यत ॥४९८॥
सचेताः संस्तवव्यक्ताविवकृत्यो बभूव सः । भावानां भुज्यमानानामास्वादान्तरवित्नृपः ॥४९९॥
500 अपश्यद्भिर्महास्वादान्भावान्स्वातुविवेकिभिः । किं ज्ञेयमशनादन्यत्क्ष्मापैरन्यैरिवोक्षभिः ॥५००॥

---

४७८. 1) $A_2$ indicates by asterisks and the marginal note भ्रमयन्क्षे° सोंहायकाय, a different reading in which this verse followed after verse 474.—2) Thus $A_2$; $A_1$ शितापरा:. ४७९. 1) Thus $A_1$; $A_2$ °संरीच°. ४८०. 1) Thus $A_2$; $A_1$ द्रोहार्जितेन. ४८१. 1) Thus corr. by $A_2$ from $A_1$ °चोपहृता. ४८४. 1) $A_1$ gloss मलरी इति भाषया.—2) Doubtful: thus $A_2$; $A_1$ विरलके°; $A_3$ मरलकेशवम्.—3) Thus corr. by $A_2$ from $A_1$ स्वा.—4) $A_1$ gloss कलमपुरं. ४८५. 1) Thus corr. by $A_2$ from $A_1$ °पेडाधि°. Cf. महाप्रतीहारपीडा iv. 142.—2) Thus $A_1$; $A_2$ °देवी and °न्नताम्. ४८६. 1) Thus G B Edd.; A °हिता. ४८७. 1) देशात्ता supplied by $A_2$ in space left by $A_1$. ४८८. 1) $A_3$ gloss प्रापय्य.—2) Thus $A_2$; $A_1$ °चक्षाण:, ४८९. 1) $A_2$ gloss क्षीरस्वामिनः. ४९२. 1) Thus corr. by $A_1$ from राजस°. ४९४. 1) Thus corr. by later hand from $A_1$ थाकया°. ४९५. 1) $A_2$ gloss महोद्भट आलङ्कारिकः. ४९६. 1) $A_2$ °कारणम्.—2) $A_3$ gloss शुक्र°. ४९८. 1) Thus $A_2$; $A_1$ लुप्स्वत.—2) Thus according to marginal note of $A_2$ देशे धर्मोत्तराचार्यमित्यन्यत्वार्थी; $A_1$ देशे धर्मोत्तराचार्ये. ५००. 1) Thus corr. by $A_2$ from $A_1$ °रन्यैरि°.

आरूढस्य चितां कृतानुमरणो धीमान्प्रियालिङ्गनं[1] पुण्ड्रैश्वर्यपानमुल्बणमहामोहप्रसुप्तस्मृतेः ।
वीताशोकवसन्तमाल्यवलयामोदस्य यात्यन्तवेशान्तानां सुभगः स्वभावमहिमा निर्वेत्तस्तादृशः ॥५०१॥
मन्त्रिविक्रमयोस्तस्य द्वयोर्दर्पणयोरिव । एकैव बिम्बिता मूर्तिः सहजगुणतां ययौ ॥५०२॥
आकुर्वन्निगुणामाज्ञां[1] लङ्केन्द्रोऽत्यस्य[2] राक्षसान् । तेनानयेति जगदे दूतो यातु पुरः स्थितः ॥५०३॥
सांधिविग्रहिकः सोऽथ पक्कपोताम्बुधोन्मुखी[1] । प्राप पारं तिमिग्रासं तिमिमुत्पाट्य निर्गतः ॥५०४॥
मिथमर्त्यौ रामभक्त्या नृपाशालेखदायिनम् । स्वदेशमनयत्तैः रक्षोभिस्तं विभीषणः ॥५०५॥ 505
दूतं निनैः पूरयित्वा सरीमार्थं च रांसवैः । चक्रे जयपुरं कोट्टं त्रिविष्टपसमं नृपः ॥५०६॥
तुङ्गचयं[1] महाकारं विहारं च विधाय सः । नगरान्तर्जयादेवीं पुण्यकर्मा स निर्ममे ॥५०७॥
तत्पुरे चतुरात्मा च शेषशायी च केशवः । विष्णुलोकस्थितिं त्यक्त्वा ध्रुवं भजति संनिधिम् ॥५०८॥
अन्यत्कर्मान्तरं किंचित्कारयित्वा स राक्षसान् । व्यधात्काश्मिरेषाम्भ इति शंसन्ति केचन ॥५०९॥
स हि स्वप्ने जलान्तर्मे कुरु द्वारवतीमिति । उक्तः कंसारिणा चक्रे विनिर्माणं तथाविधम् ॥५१०॥ 510
श्रीद्वारवत्यधिष्ठानं बाह्यं कोट्टं तथा वशी । अभ्यंतरं जयपुरं श्रुतेऽद्याप्यखिलो जनः ॥५११॥
मन्त्री पञ्चमहाशब्दभाजनं जगतीभुजः । तस्मिञ्जयपुरे कोट्टे जयदत्तो व्यधान्मठम् ॥५१२॥
राजसूनुः प्रमोदस्य जामाता मथुरापतेः । आचाभिधो व्यरचयच्छुचिराचिभरं हरम् ॥५१३॥
पुनः संभृतसामग्र्यो दिग्जयाय विनिर्ययौ । बलैर्जलधिवेलाद्रीन्क्षापयञ्जलबुद्बुदैः ॥५१४॥
संनिविष्टापि पूर्वाब्धिमविच्छिन्ना हिमाचले । भगीरथस्य गङ्गेव रेजे तस्यानुगा चमूः ॥५१५॥ 515
सार्धं प्रचण्डैश्चण्डालैरटन्तः कटकाद्बहिः । तस्यासन्धामिका रात्रौ मुम्मुनिप्रमुखा नृपाः ॥५१६॥
नाम्नान्यद्विनयादित्य इति प्रख्यापयन्नृपः । पूर्णाशां विनयादित्यपुरेणालंकृतां व्यधात् ॥५१७॥
अत्युत्सेकेन महसां साहसाभ्यवसायिनाम् । श्रीरारोहति संदेहं महतामपि भूभृताम् ॥५१८॥
भीमसेनाभिधानस्य स दुर्गं पूर्वदिक्पतेः । निःशब्दो व्रतिभिः सार्धं व्रतिलिङ्गी विवेश यत् ॥५१९॥
तं रन्ध्रान्वेषिणं तत्र परिज्ञाय चिरस्थितः । भ्राता जज्जस्य सिङ्गाख्यो गत्वा राज्ञे न्यवेदयत् ॥५२०॥ 520
भूपतिं[1] भीमसेनोऽथ राजाकस्मादबन्ध तम् । नहुषाजगरो भीमामिव भीमपराक्रमम् ॥५२१॥
तस्मिन्वीरे तथा बद्धे धुर्ये पुरुषकारिणाम् । पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः ॥५२२॥
जयापीडस्त्वसंमूढो व्यसनेऽप्यतिदारुणे । तांस्तान्संचिन्तयन्नासीदुपायानुद्यमोन्मुखः ॥५२३॥
अत्रान्तरे नरपतेः पौराणामतिदुस्तरा । लूतामयकृता व्यापदुदपद्यत मण्डले ॥५२४॥

---

५०१. [1]) $A_2$ note in margin : आरूढस्येत्यादिस्थाने पण्डतीन्यावालपङ्क्तु अनुवीपीपत्तनालिङ्गनमित्यपि पाठो रम्यः. ५०३. [1]) The original reading of $A_1$, अकुर्वन्नि°, has been corrected into आकुर्वन्नि° by a later hand, probably $A_2$; $A_2$ explains the latter reading by the gloss त्रिगुणामपि आज्ञामाकुर्वन् आं अङ्गीकारे. $A_2$ gives the interlinear note अकुर्वन्त्रिगुणामित्यन्यावर्तः and explains this reading in margin : कुतः किं कुर्वन् आज्ञां राजसम्बन्धिनीं त्रिगुणां त्रिफलां अकुर्वन् न विरचयन् मान्यताता मित्यर्थः.—[2]) Thus corr. by $A_2$ from $A_1$ लङ्केन्द्रात्मम्. ५०४. [1]) Thus corr. by later hand from $A_1$ °पक्क°. ५०७. [1]) तुङ्ग supplied by $A_2$ in space left by $A_1$; found also in G R; C तुर°. ५११. [1]) Thus A R G; C राजं.—[2]) A gloss अन्तर्कोट इति भाषया. ५१३. [1]) Thus corr. by $A_2$ from $A_1$ मथुरा°. ५१५. [1]) Thus corr. by $A_2$ from $A_1$ °हि. ५१८. [1]) Thus $A_2$; $A_1$ सहसा.—[2]) Thus corr. by $A_2$ from $A_1$ साहसाभ्यवसायिनाम्; $A_2$ gloss साहसेन हिताहितानपेक्षेण कर्मणा अध्यवसायी येषां. ५१९. [1]) Thus $A_2$; $A_1$ °भूपतेः. ५२१. [1]) Thus corr. by $A_2$ from $A_1$ °पतिर्भीम°. ५२४. [1]) $A_2$ gloss लूतानो रक्तवर्णः पिटकाकृतिविस्तरः सञ्चारी च सर्पि रीत्यविशेषः लूतामयः लीन् इति प्रसिद्धः.

525 आमयः स्पर्शसंचारी[1] तत्र व्यापादकश्च सः । देशादेशान्तरे जन्तुर्लूताख्यासो विवर्ज्यते ॥५२५॥

तदाकर्ण्य जयापीडो जातोपायप्रयुक्तधीः । स्वभृत्येनोपयुक्तानि द्रव्याण्यानीतवानजः ॥५२६॥

तैः पित्तोद्रेचकैर्मुक्तैर्ज्वलत्पित्तोत्थवज्ज्वरम् । वज्रघृतपयश्चाङ्गे क्षिप्त्वा सपिटकोऽभवत् ॥५२७॥

तं लूताव्याप्तमाकर्ण्य विपक्षो रक्षिणां मुखात् । विपत्स्यते ध्रुवमिति ध्यात्वा देशाद्बहिर्व्यधात् ॥५२८॥

एत्य स्वमतिमाहात्म्यात्संतीर्णो विपदर्णवात् । व्याप्तव्योमापहीवुर्ग बबाध परिपन्थिनः ॥५२९॥

यः सर्वकालमबुधैः परिहस्यमानो मूलाङ्कुराद्यपि न जातु पुरस्करोति ।
530 व्याप्तस्तु शाखविटपी स फलं प्रसूय पुंसः किलैकपद एव लुनात्यलक्ष्मीम् ॥५३०॥

तमैच्छदभिसंधातुं विद्याविक्रमसंयुतः । मायाव्यरमुडिर्नाम राजा नेपालपालकः ॥५३१॥

अकृतप्रणतिस्तस्य[1] प्रविष्टस्य स्वमण्डलम् । अपास्तुदूरमध्वानं ससैन्योऽपससार सः ॥५३२॥

जिगीषोस्तस्य तु तथा तत्पार्थिवनिर्जयः । पृथक्प्रयत्ननिर्वर्त्यो नाभूत्तदनुसारिणः ॥५३३॥

मग्नं क्वापि क्वचिद्दृश्यं प्रतिदेशं स वैरिणम् । श्येनः कपोतं कक्ष्यान्तरिवान्विष्यञ्जगाम सः ॥५३४॥

535 ततो निःशेषितापाये तस्मिन्कुर्वंश्च दिग्जयम् । आसन्नाब्धेस्तटे सिन्धोः[1] समुपावेशयद्बलम् ॥५३५॥

प्रतस्थे दिवसैर्हीनैरथ पूर्वार्णवोन्मुखः । कर्षन्वेलानिलस्पर्शोत्सृष्टध्वजपटाश्चमूः ॥५३६॥

ततस्तस्मिन्सरित्पारे दक्षिणस्मिन्समापतेः । तस्थावरमुडिः सैन्यं स्वच्छकाङ्गं प्रकाशयन् ॥५३७॥

भूरिभेरीरवोद्गारि प्रबलं वीक्ष्य तद्बलम् । प्रजज्वाल जयापीडः पीतसर्पिरिवानलः ॥५३८॥

स जानुदघ्नं निश्चित्य पश्यन्नग्रे सरिज्जलम् । अपूर्वत्वादभूमिज्ञः क्रुद्धस्तूर्णं[1] व्यगाहत ॥५३९॥

540 मध्यं प्राप्ते नृपे पूर्णा वेलया वर्धमानया । अकालेऽभूदगाधाम्भाः सार्णवाभ्यर्णगा सरित् ॥५४०॥

नरनागाश्वबहुलं तथा सैन्यं महीपतेः । प्रवृद्धया प्लाव्यमानं क्षणात्संक्षयमाययौ ॥५४१॥

नृपतिर्वीचिसंमर्दभ्रंशिताभरणांशुकः । बाहुभ्यां लहरीभिन्दञ्जलैर्दूरमनीयत ॥५४२॥

एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्जितैः । सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ॥५४३॥

क्षिप्रकारी सदृतिभिः[1] संनद्धैः सरितोऽन्तरात् । स चाकृष्य जयापीडं बबन्ध विहितोत्सवः ॥५४४॥

दैवस्याम्बुमुचश्च नास्ति नियमः कोऽप्यानुकूल्यं प्रति व्यक्तान्यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियम् ।
545 क्षिप्रं दीर्घनिदाघवासरविपत्संतापनिर्वापणं प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च यः ॥५४५॥

स कालगण्डिकातीराश्रयात्तुङ्गाश्मवेश्मनि । निचिक्षेप जयापीडमाप्तानां[1] रक्षिणां करे ॥५४६॥

तथा काश्मीरिको राजा निमग्नो व्यसने पुनः । स किंकर्तव्यतामूढः मुन्ना गूढमदृश्यत ॥५४७॥

कलावत्त्वं शशाङ्कोऽपि तेजस्विश्वर्यमापि तम् । न ददर्श यथा धीमान्स ररक्ष तथा नृपः ॥५४८॥

अपश्यन्निर्गतिं[1] किंचिद्वालोकन्यस्तलोचनः[2] । आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन् ॥५४९॥

---

५२५. [1]) Thus corr. by $A_1$ from सर्वस°. ५३२. [1]) $A_2$ gloss अरमुडिः.—[2]) $A_2$ gloss जयापीडस्य.—[3]) Thus $A_2$; $A_3$ अपा. स्तु°; G R have both readings. ५३३. [1]) $A_2$ gloss जयापीडस्य. ५३४. [1]) $A_2$ gloss श्येनः कपोतं भक्षयतीति प्रसिद्धिः.—[2]) Emended; A G R °न्वेष्य°. ५३५. [1]) $A_2$ gloss सरितः. ५३७. [1]) Thus corr. by $A_2$ from $A_1$ तस्याद्भुरमुडेः. ५३९. [1]) Thus corr. by $A_2$ from $A_1$ °स्ततं. ५४२. [1]) Thus corr. by $A_2$ from $A_1$ °मर्ने°. ५४४. [1]) $A_2$ gloss दृतिः जलोत्तरणार्थं खाल इति प्रसिद्धा. ५४६. [1]) Thus corr. by $A_2$ from $A_1$ °पीडं समानां. ५४९. [1]) Thus corr. by later hand from $A_1$ निर्वृतं.—[2]) $A_2$ gloss आलोक्यतेऽनेनेत्यालोक वातायनं । तस्मिन् न्यस्ते लोचने येन सः.

अथास्यावेदकास्तत्र पथिताः पृथिवीभुजा । आक्रान्तःकरणैः लोकाः स्वर्गमन्येऽपि सूरिभिः ॥५५०॥ 550

तथा तस्मिन्स्थिते मानी देवशर्मैव मन्त्रिषु । चिन्तयन्स्वामिसंमानमनिशं पर्यतप्यत ॥५५१॥

भर्तुः स्वदेहत्यागेन स हितं कर्तुमुद्यतः । दूतैररमुडेश्चक्रे प्रियवाग्भिः प्रलोभनम् ॥५५२॥

जयापीडभिया सार्कं राज्यं कश्मीरमण्डले । दास्यामि तुभ्यमित्यस्य दूतैः स आचितोऽभवत् ॥५५३॥

ग्रामेषु प्रतिकूलेषु पूर्णायामथ संविदि । गृहीतकटको मन्त्री नेपालविषयं ययौ ॥५५४॥

स कालगण्डिकासिन्धोरर्वाचि कटकं तटे । स्थापयित्वा परं पारं ययौ मितपरिच्छदः ॥५५५॥ 555

सामन्तैरममायातैस्तां सभां संप्रवेशितम् । सत्कृत्यारमुडिः प्रह्वं न्यवेशयत विष्टरे ॥५५६॥

अध्वश्रान्त इति क्षिप्रं प्रतिमुक्तः क्षमाभुजा । तद्विसृष्टोपचारस्तामिनायावसथे दिनम् ॥५५७॥

स चारमुडिभूभृच्च पीतकोशौ परस्परम् । आसतां निर्जनेऽन्येद्युः कर्तव्यकृतनिश्चयौ ॥५५८॥

नृपमूचेऽथ सचिवो जयापीडार्जितं धनम् । अस्ति सैन्ये तदायानां तस्य मा विदितं च तत् ॥५५९॥

दानेन भविता मोक्षस्तवेत्युक्त्वा विमोहयन् । तस्मात्तं प्रष्टुमिच्छामि क्व वद न्यस्तमित्यहम् ॥५६०॥ 560

अत एव मया सैन्यं संहतं न प्रवेशितम् । यदेतन्मध्यगाः शक्या न बद्धुं न्यासधारिणः ॥५६१॥

तस्मादेकैकमाहूय तेषु बद्धेषु सैनिकाः । कोपमज्ञातहृदया न यास्यन्ति विपक्षतः ॥५६२॥

एवं विमोहितात्तस्मात्प्राज्ञोऽनुज्ञां स लब्धवान् । बद्धस्य प्रययौ पार्श्वं जयापीडमहीभुजः ॥५६३॥

तदालोकनजं शोकं गोपयन्धैर्यसागरः । गृहं तन्निर्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृपम् ॥५६४॥

अपि त्वया निजं तेजो भित्तिभूतं न हारितम् । तस्मिन्हि सति सिध्यन्ति साहसालेख्यकल्पनाः ॥५६५॥ 565

स तं बभाषे निःश्वासो मन्त्रिश्रेष्ठ व्यवस्थितः । अद्भुतं कर्म किं कुर्यां ध्रियमाणेन तेजसा ॥५६६॥

मन्त्री तमूचे तेजश्चेद्राजन्न विसृतं तव । जानीहि तत्क्षणेनैव लङ्घितं विपदर्णवम् ॥५६७॥

अपि वातायनादस्मात्पतित्वा निम्नगाम्भसि । पारं गन्तुं समर्थोऽसि सैन्यं यत्र निजं तव ॥५६८॥

राजा जगाद तं नास्मात्पतितस्योत्थीयतेऽम्भसः । विना दृतिं दृतिश्चात्र दुरपाताद्विदीर्यते ॥५६९॥

तस्मान्नायमुपायोऽत्र न च नाम विमानितः । बहु मन्ये तनुत्यागमनिर्मथ्यापकारिणम् ॥५७०॥ 570

ततो निश्चित्य सोऽमात्यस्तमवादीन्महीपते । बहिः केनाप्युपायेन वहेस्त्वं नालिकाद्वयम् ॥५७१॥

प्रविश्यैकाकिनैवात्र द्रष्टव्यः संभृतो मया । सरिदुत्तरणोपायः सोऽनुष्ठेयोऽप्यशङ्कितम् ॥५७२॥

श्रुत्वेति निर्गतो गत्वा पांसुक्षालनवेश्म सः । सविलम्बं बहिर्वेलां तदुक्तामत्यवाहयत् ॥५७३॥

एकाकी संप्रविष्टोऽथ तं ददर्श च्युतं क्षितौ । विपन्नं गलमुद्बध्य दृढया चेलचीरया ॥५७४॥

---

५५०. ¹) A₂ gloss [illegible]. ५५१. ¹) Thus corr. by later hand from A₁ °स्थितो. ५५२. ¹) स supplied by A₂.—²) Emended; A₁ °रारमुडेश्चक्रे, changed by later hand to °मुडेश्चक्रे.—³) Thus corr. by later hand from A₁ °प्रिय-विलोभनम्. ५५६. ¹) Thus corr. by A₂ from A₁ °डैः. ५५७. ¹) Thus A₁; A₂ प्रतिसितः. ५५८. ¹) A₂ gloss पीतकोशौ कृतशौचिकाविस्यर्थः; to शौचिका° A₂ adds the note शपथः. ५६१. ¹) Thus corr. by A₂ from A₁ यदि तन्म°; A₂ gloss [illegible] संहतसैन्यमध्यगाः इत्यर्थः.—²) Thus corr. by A₂ from A₁ बन्धुं. ५६३. ¹) Thus A₂; A₁ प्राज्ञोप्याज्ञां; R G follow A₂. ५६४. ¹) Thus corr. by A₂ from A₁ धैर्य°. ५७०. ¹) Thus corr. by A₂ from A₁ इति.—²) Thus corr. by later hand from A₁ बहुतरं; A₂ gloss [illegible].—³) A₂ gloss [illegible]. ५७३. ¹) Thus corr. by A₂ from A₁ पार्श्व°.—²) A₂ gloss [illegible].

575 सद्यो व्यापादिततनुः श्वासापूरितविग्रहः । अभेद्योहं तव कृतिर्मोक्षाय तरापगाम् ॥५७५॥

आरोढुकङ्कबन्धाय स्वोर्वोरुष्णीषपट्टिकाम् । बद्धा मया तां प्रविश्य क्षिप्रमेव पताम्भसि ॥५७६॥

नखनिर्भिन्नगात्राक्षरलिखितामिति संविदम् । दृष्ट्वा चावाप्य बलकण्ठनिबद्धांशुकपल्लवे ॥५७७॥ तिलकम् ॥

विस्मयखेदयोः पश्चात्पूर्वं स सरितस्ततः । प्रवाहे पतितो राजा परं पारं समासदत् ॥५७८॥

प्राप्तसैन्यः प्रविश्याथ क्षणेनैव निनाय सः । तमशेषं सभूपालं नेपालविषयं क्षयम् ॥५७९॥

580 रक्षिणोपि न यावत्तमजानन्बन्धनाच्युतम् । तावदेव कथाशेषं विषयं तं चकार सः ॥५८०॥

नृत्यत्कबन्धः स्वर्गस्त्रीमुक्तस्रक्तूर्यघोषवान् । भूपतेर्बन्धनान्मोक्षे बभूव समरोत्सवः ॥५८१॥

दावानलोल्बणभुवो गिरयो निदाघे यत्रैव दुरमितरे परिवर्जनीयाः ।
तत्रैव संभवति सान्द्रहिमप्रवाहैश्चित्रं तुषारशिखरी नितरां निषेव्यः ॥५८२॥

अब्जादीनां क्षणे यत्र जन्म स्वामिकुलामभूत् । तत्रैव मन्त्रिणश्चित्रं कृतिनो देवशर्मणः ॥५८३॥

नाभूद्धि सदृशः सूनुः स पितुर्मित्रशर्मणः । तमोमयो भासुरस्य भानोरिव शनैश्चरः ॥५८४॥

585 रत्नाकरोपमे तस्मिन्सन्निवेशमुपागते । प्राप्तामपि श्रियं मेने नृपतिर्हारितामिव ॥५८५॥

तस्य दिग्विजयस्यान्ते मानम्लानिर्विनिर्ययौ । मानसात्पृथिवीभर्तुर्नामास्योपक्रिया पुनः ॥५८६॥

चित्रं जितवतस्तस्य स्त्रीराज्ये मण्डलं महत् । इन्द्रियग्रामविजयं बहमन्यन्त भूभुजः ॥५८७॥

कर्णश्रीपटमाकृष्य स्त्रीराज्यान्निर्जिताद्भुतम् । धर्माधिकरणाख्यं च कर्मस्थानं विनिर्ममे ॥५८८॥

द्वितीयं चलगञ्जाख्यं कर्मस्थानमपि व्यधात् । उपयुक्तं प्रयाणेषु गञ्जे दूरस्थिते निजे ॥५८९॥

590 किमन्यत्कुञ्जावासनिवासिन्या जयश्रियः । चत्वारोम्बुधयोभूवन्विलासमणिदर्पणाः ॥५९०॥

पुनः प्रविश्य कश्मीरान्स भूपैः परिवारितः । चिराय बुभुजे राजा विजयोपार्जितां श्रियम् ॥५९१॥

तं कदाचिन्नृपं स्वप्ने सर्वाशाविजयोर्जितम् । पुमान्दिव्याकृतिः कोपि व्याजहार कृताञ्जलिः ॥५९२॥

ध्रुवं त्वद्विषये राजन्वसन्नस्मि सबान्धवः । नागेन्द्रोहं महापद्मनामा त्वां शरणं श्रितः ॥५९३॥

द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः । जलाकाङ्क्षिणि वित्तेन विक्रेतुं मरुमण्डले ॥५९४॥

595 तस्माच्चेत्पासि मां तत्ते स्वर्णधातुभुवं गिरिम् । त्वद्देशे दर्शयिष्यामि स्फीतोपकृतिकारिणः ॥५९५॥

राजा स्वप्ने निशम्येति दिक्षु संप्रेरितैश्चरैः । कुतोपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितम् ॥५९६॥

दत्ताभयः स नागोक्तं यथावत्सर्वमुक्तवान् । सविस्मयेन भूभर्त्रा स्वयं भूयोप्यपृच्छ्यत ॥५९७॥

भूरियोजनविस्तीर्णात्सरसोभ्यन्तरात्त्वया । नागः प्रभावोत्कृष्टः स निष्क्रष्टुं शक्यते कथम् ॥५९८॥

स तं व्यजिज्ञपद्राजन्नचिन्त्या मन्त्रशक्तयः । ताश्चेद्दिदृक्षसे क्षिप्रमेत्याश्चर्यं विलोक्यताम् ॥५९९॥

600 अथानुगम्यमानः स राज्ञा प्राप्तः सरोन्तिकम् । अभिमन्त्र्योज्झितैर्बाणैर्द्राविडोशोषयज्जलम् ॥६००॥

---

५७५. [1]) $A_2$ gloss सद्यो व्यापादिततनुरित्यादि पताम्भसीत्यन्ता शिक्षा राज्ञः कृते नखनिर्भिन्नस्वशरीरवर्त्मना लिखिता तेन कृतशैत्य निश्चयेन स्वकीयकण्ठनिबद्धे वस्त्रखण्डे.—[2]) $A_2$ gloss अत एव कृतिवाचित्यर्थः.—[3]) $A_1$ originally कृतेर्मो°; to this reading refers the gloss of $A_2$. कृतेः सकाशादभेद्योऽहमित्यर्थः On altering the reading to कृतिर्मो°, $A_3$ has struck out the first gloss and added a fresh one: अहमभेद्यो कृतिरस्मि.—[4]) $A_2$ gloss मां कृतिरूपं. ५७६. [1]) Thus corr. by later hand from $A_1$ °कच्छबन्धाय.—[2]) $A_2$ gloss उष्णीषपट्टिका वेष्टनाख्यलघुवस्त्रविशेषः. ५८३. [1]) Thus corr. by later hand from $A_1$ क्षणं. ५८४. [1]) Thus A R G; C नाभूद्विसदृश.—[2]) Thus $A_1$; $A_3$ भास्वरस्य. ५९६. [1]) Thus $A_1$, $A_3$ °प्रेषितैश्च°.

राजापश्यदतः पङ्क्तौ सुवर्णं भासुराननम् । विलसितैरवसुरत्नं भूरिहस्तोरणान्वितम् ॥६०१॥
मन्त्रसंकोचितं राजन्मुञ्चाम्यमुमिति ब्रुवन् । मा मंसीरिति भूपेन सोभिधाय न्यषिध्यत ॥६०२॥
मुक्तं राजाज्ञया तेन मन्त्रवीर्येण संवृते । सरोभूत्प्राग्वदस्थं तत्पुनर्व्यालनिरन्तरम् ॥६०३॥
द्राविडं द्रविणं दत्त्वा विसृज्याचिन्तयन्नृपः । दयाचायाप्यसौ नागः कथं स्वर्णाकरं गिरिम् ॥६०४॥
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः । केनोपकारेण गिरिः स्वर्णसूस्तव दर्श्यते ॥६०५॥
स्वदेशोयं विदेशोयमिति बुद्धेः प्रवर्तकः । अन्वयव्यतिरेकाभ्यां स्थिरभ्यासः शरीरिणाम् ॥६०६॥
शरणं त्वामहमगामवमानभयात्पुनः । शरण्येन सता तत्तु भवतैव प्रदर्शितम् ॥६०७॥
उदन्वानिव योक्षोभ्यो त्रायते संश्रितैः प्रभुः । का ह्रीस्ततोन्या सोन्यैर्येषामप्यभिभूयते ॥६०८॥
याभिरन्याभिभूताभिरीक्षितस्त्रातुमक्षमः । तासां केनाभिमानेन स्त्रीणां द्रक्ष्याम्यहं मुखम् ॥६०९॥
वैकारणसधर्माणो व्यामूढस्य भवाम ते । विडम्ब्यमानाः क्रीडार्थे ते वयं प्राकृता इव ॥६१०॥
अथ वा श्रीमदान्धानामप्रेक्षापूर्वकारिणाम् । यत्किंचनविधायित्वं पार्थिवानां किमद्भुतम् ॥६११॥
मन्यन्ते क्ष्माभुजः क्रीडामुन्नतानां विमाननाम् । यावज्जीवं तु सन्तापमरणं तां विदन्ति ते ॥६१२॥
उपेक्ष्यः पक्षे भूपानां मानः स्वार्थस्य सिद्धये । स तु प्राणानुपेक्ष्यापि पाल्यः पक्षे मनस्विनाम् ॥६१३॥
महतो येवमन्यन्ते घटन्ते च विमानितैः । मनःस्वरूपाभिज्ञत्वं तेषां केनानुमीयते ॥६१४॥
भवन्त इव तथापि न वयं व्यर्थदर्शनाः । ताम्रधातुरसस्त्वन्यो दर्श्यते तद्गिरिस्तव ॥६१५॥
इत्युक्त्वा संविदं तस्मै स्वप्न एव स तां ददौ । यया प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिम् ॥६१६॥
स तस्मात्कमराज्यस्थात्ताम्रमाकृष्य निर्ममे । शतं दीनारकोटीनामेकोनं स्वाभिधाङ्कितम् ॥६१७॥
पूर्णं कोटिशतं कुर्याद्यः स मां निर्जयेदिति । दर्पभङ्गाय भूपानां समयं स्थापयन्नृपः ॥६१८॥
समस्या इव स क्ष्माभृत्तावशेषैर्विचेष्टितैः । विधेय तुल्यनिर्माणकुण्ठत्वायेति भूभृताम् ॥६१९॥
अथाकस्मान्महीपालः प्रजाभाग्यविपर्ययैः । त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोध्वना ॥६२०॥
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनम् । इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत् ॥६२१॥
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः । प्रविवर्धितविस्रम्भः सोभूल्लोभवशंवदः ॥६२२॥
काश्मीरिकाणामुत्स्पर्शं निजाज्ञाव्यवधायकम् । कायस्थवक्त्रप्रेक्षित्वं ततः प्रभृति भूभृताम् ॥६२३॥
मन्त्रस्तस्य महीभर्तुर्योभूत्संनृपपदे । वात्सल्यबन्धचिन्तायां स एव स्थैर्यमाययौ ॥६२४॥
यत्सतां प्रशमाधायि पापस्योपदिदेश तत् । जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डताम् ॥६२५॥
स सौदास इवानेकलोकप्राणापहारकृत् । वस्तुत्यकृत्यसौहित्यं स्वप्नेपि न समाययौ ॥६२६॥
कुर्मः किल्बिषमेतदेव हृदये कृत्वेति कौतूहलात्स्वैरिण्यः क्षितिपाश्च चिक्ष्वपलतां क्रौर्यं च कुर्युः सकृत् ।
पापाक्रान्तधियो भवन्त्यथ तथा नात्यन्तमुत्क्रान्त्योपि ता द्रवन्ते न च ते यथा स्वपितरो प्रान्तोपि शान्तत्रपाः ॥६२७॥

---

६०२. ¹) Emended; A सोऽभ्यधात. ६०३. ¹) Thus corr. by A₂ from A₁ वारि. ६०८. ¹) Thus corr. by A₂ from A₁ °भूतये. ६१०. ¹) A₂ वैऽस्कारण°. ६१२. ¹) Thus corr. by later hand from A₁ विमानितान्. ६१३. ¹) A₂ gloss स्वाभिम. ६१७. ¹) Thus A₁; A₂ दीनार°. ६२२. ¹) Thus corr. by A₂ from A₁ °कारिभिः. ६२३. ¹) Thus corr. by A₂ from A₁ काश्मीरिका°. ६२७. ¹) Thus A₂; A₁ यथा.

लोभाभ्यासात्तथा क्रौर्ये स ययौ वत्सरत्रयम् । सह कार्यक्रमेणेव यथाहार्षीत्करत्फलम् ॥६२८॥

लुब्धस्य ध्वस्तधीर्भूभृत्स्वल्पवित्तलवप्रदान् । सर्वस्वहारिणो मेने कायस्थान्हितकारिणः ॥६२९॥

सामुद्रास्तिमयो नृपाश्च सदृशा एके हतारम्भतः स्वस्मादेव कणान्वयस्य जहतो जानन्ति ये हातृताम् ।

630 सर्वस्मात्स्फुटलुण्ठिताहितरतो लेशान्किलान्येपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्यार्हिताधायिताम् ॥६३०॥

सर्वकालं ब्राह्मणानामहो धैर्यमकुण्ठितम् । निस्त्रिंशस्य बभूवुर्ये तस्यापि परिपन्थिनः ॥ ६३१ ॥

देशान्तरं प्रयातेभ्यो ये शेषास्ते व्यरंसिषुः । विक्रोशन्तो न मरणाद्धरणाच्चापि पार्थिवं ॥६३२॥

विप्राणां शतमेकोनमेकाहेन विपद्यते । निवेद्यमेतद्विस्पृष्टे क्रौर्याक्रान्तोथ पार्थिवः ॥६३३॥

विपर्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः । एवं स्तुतिविपर्यासः काव्येष्वपि बुधैः कृतः ॥६३४॥

635 नितान्तं कृतकृत्यस्य गुणवृत्तिविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥६३५॥

भाष्यव्याख्याक्षणे प्रोक्तैर्वैलक्षण्यवदतैः कृतः । सोयं तस्य विपर्यासो बुधैरेव प्रवर्तितः ॥६३६॥

• कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥६३७॥

तुलमूल्यांपदर्शा च चन्द्रभागातटे स्थितः । विप्राणां शतमेकोनमभूणां तज्जले मृतम् ॥६३८॥

ततोग्रहारहरणादेव प्रविरतोभवत् । वास्तव्यानां ददौ भूमिं न तु निःशेषतो जही ॥६३९॥

640 अथ विज्ञप्तिसमये तुलमूल्योकसो द्विजाः । चुक्रुशुर्जातु तस्याग्रे प्रतीहारकराहताः ॥६४०॥

मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः । अन्वभावि तदग्रेपि ब्राह्मणैर्न विमानना ॥६४१॥

सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलम् । निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः ॥६४२॥

तदाकर्ण्यास्त सामन्तन्यस्तपृष्ठः क्षमापतिः । उल्लासितैकभूलेखो दर्पाद्वचनमब्रवीत् ॥६४३॥

भिक्षाकणभुजां कोयं शठानां वो मदज्वरः । येनर्षय इव ब्रूथ प्रभावख्यापकं वचः ॥६४४॥

645 भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ । इट्टिलाख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विजः ॥६४५॥

राजन्युगानुरूप्येण भावाभावानुवर्तिनः । शासितुस्तेनुसारेण न कस्मादृषयो वयम् ॥६४६॥

आह स्म विश्वामित्रो वा वसिष्ठो वा तपोनिधिः । त्वमगस्त्योथ वा किं स्या इति दर्पेण तं नृपः ॥६४७॥

ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्यविग्रहः । स फणीवोत्फणस्ताम्यन्कोपान्नृपतिमब्रवीत् ॥६४८॥

भवान्यदि हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोपि वा । विश्वामित्रमुखेभ्योहं तदैको भवितुं क्षमः ॥६४९॥

650 विहस्येत्याह तं राजा विश्वामित्रादिकोपतः । हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ॥६५०॥

पाणिना ताडयन्नुर्वीं ततः क्रुद्धोभ्यधाद्द्विजः । मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किम् ॥६५१॥

तच्छ्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत् । पततु ब्रह्मदण्डोसौ किमद्यापि विलम्ब्यते ॥६५२॥

नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते । राज्ञः कनकदण्डोङ्गे वितानस्खलितोपतत् ॥६५३॥

---

६३०. 1) Thus A₁; A₂ हतान°.—2) Thus A₁; A₂ °तान्वि°. ६३३. 1) Thus A₁; A₂ °काहे चेति°. ६३६. 1) Thus A₁; A₂ सोके वै°.—2) Thus corr. by A₂ from A₁ विपर्यासे —3) Thus corr. by A₂ from A₁ विवर्तितः. ६३७. 1) A₂ gloss निष्ठामृत्यु इह नाशवाची. ६३८. 1) Thus corr. by A₂ from A₁ तूलमूल्ला°. ६४०. 1) Thus A₁; A₂ तूलमूली°. A₂ gloss तुलमूल्याख्यो ग्रामः. ६४४. 1) Thus corr. by A₂ from A₁ °ख्यापकं. ६४५. 1) Thus corr. by A₂ from A₁ तूर्णी.—2) Thus corr. by A₂ from A₁ इड्डिला°. ६४६. 1) A₂ विप्रा नृपानुवर्तिनः इत्यन्यपाठः. ६४८. 1) Thus A₁; A₂ दुष्प्रेक्ष°. ६४९. 1) A₂ gloss भवान्यदीति विश्वामित्रशापाद्धरिश्चन्द्रो भ्रष्टः स्वपदात् वसिष्ठशापात्त्रिशङ्कुर्भ्रष्टः अगस्त्यशापाच्च नहुषो भ्रष्टः इति तद्वृत्तान्तोऽत्र वचः.

कृतव्रणः स तेनाङ्गे विमर्शक्लिन्नविग्रहः । कीर्यमाणक्रिमिकुलः क्रकचैर्दारितैरभूत् ॥६५४॥
अनुभाव्य व्यथां भाविनिरयक्लेशवार्णिकाम् । गणरात्रेण तं प्राणाः काङ्क्षितापगमा जहुः ॥६५५॥ 655
प्रजादण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः । अकाण्डदण्डसत्राय ययौ दण्डधरान्तिकम् ॥६५६॥
तस्याभिषिक्तचित्तस्य त्रिंशतं परिवत्सरान् । एवं प्रतापिनः सैकान्भूभोगो भूपतेरभूत् ॥६५७॥
तथा भूभुग्मत्स्या द्रविणकलुषान्तःकृततनुः स्थितिं स्वामुज्झन्तो विदधति कुमार्गानुसरणम् ।
क्रियन्ते कार्तान्तानुगविकृतकैवर्तनिवहैर्यथा प्रेतेकस्मात्स्थिरनिरयजालप्रणयिनः ॥६५८॥
कृतपापं तमुद्दिश्य विपन्नममृतप्रभा । मृतोद्धाराय तन्माता व्यधत्तामृतकेशवम् ॥६५९॥
ललितापीडनामाभूत्ततो वसुमतीपतिः । देव्यां दुर्गाभिधायां यो जयापीडादजायत ॥६६०॥ 660
बभूव रागिणो राज्ये राज्यकार्याण्यपश्यतः । यस्य वाराङ्गनाभोग्यं राज्यं दुर्नयदूषितम् ॥६६१॥
दुष्कृतेनार्जितं वित्तं पित्रा निरयभागिना । यं धारणादिषु न्यस्यन्ननुरूपं व्ययं व्यधात् ॥६६२॥
बन्धकीबन्धुभावेन प्राप्तराजगृहाश्रयाः । तं पांसुलीयविद्यानामन्तरङ्गं व्यधुर्विटाः ॥६६३॥
केशान्स्त्रीदशनच्छिन्नान्वक्षस्तलनखलाञ्छितम् । वपुषो मण्डनं मेने किरीटकटकोज्झितः ॥६६४॥
यो यो वेश्याकथाभिज्ञो यो यो नर्मविचक्षणः । स स तत्प्रियतां लेभे न शूरो न च पण्डितः ॥६६५॥ 665
अतृप्तः स्त्रीभिरल्पाभिरुग्ररागः स पार्थिवः । जडं मेने जयापीडं स्त्रीराज्यान्निर्गतं जितात् ॥६६६॥
दिग्विजयव्यसनिनः पूर्वभूपाञ्जहास सः । गणिकाभोगसुखितः स्वसामयिकमध्यगः ॥६६७॥
संकोचकारिणो वृद्धाञ्चर्मोत्सवेऽहेल्य वारयन् । तस्माद्विटजनो लेभे संप्रीतात्पारितोषिकम् ॥६६८॥
अङ्गचेट इव स्वच्छपरिहासविचक्षणः । सोऽलज्जयन्मन्त्रिवृद्धानास्थाने गणिकासखः ॥६६९॥
बन्धकीपादमुद्राङ्कं चारु प्रावरणादि सः । गौरवार्हान्गुरूकारः सचिवान्पर्यधापयत् ॥६७०॥ 670
मानी मनोरथो मन्त्री परं परिजहार तम् । अशक्नुवन्नमयितुं मध्यपातपराङ्मुखः ॥६७१॥
कुकृत्यं योगराहित्यं वैधुर्यं क्रोधवृत्तिता । ...... दुर्वृत्तस्य प्रभोरन्यत्परिहारान्न भेषजम् ॥६७२॥
सुवर्णपार्श्वं विप्रेभ्यो ददत्फलपुरं तथा । भूभुक्स लोचनोत्सं च द्वादशाब्दानभूद्विभुः ॥६७३॥
कल्याणदेव्यां संजातो जयापीडमहीभुजः । संग्रामापीडनामाथ बभूव भुवनेश्वरः ॥६७४॥
पृथिव्यापीड इत्यन्यन्नाम बिभ्रत्स भूपतिः । समाप्तिं सप्तभिर्वर्षैः साम्राज्यस्य समासदत् ॥६७५॥ 675
श्रीचिप्पटजयापीडो बृहस्पत्यपराभिधः । ललितापीडजो राजा शिशुर्देश्यस्ततोऽभवत् ॥६७६॥
रागपरिगृहीतस्य ललितापीडभूपतेः । वेश्यायां कल्यपाल्यां यो जयादेव्यामजायत ॥६७७॥
उष्पाकयस्यासुरग्रामकल्यपालस्य तां सुताम् । रूपलुब्धोऽवरुद्धां स्वामनैषीत्स हि भूपतिः ॥६७८॥
पद्मोत्पलककल्याणमम्मधर्मैः स मातुलैः । बालकैः पाल्यमानोऽभूल्लक्ष्मीभोगभागिभिः ॥६७९॥

---

६५४. ¹) Thus corr. by A₂ from A₁ विसर्प°. ६५८. ¹) Thus corr. by A₂ from A₁ क्रियते. ६६२. ¹) A₁ seems to have read बलात्°; corrected by A₂. ६६५. ¹) Thus corr. by A₂ from A₁ °कथाविज्ञो. ६७१. ¹) Thus corr. by A₂ from A₁ सम्. ६७२. ¹) Thus corr. by A₂ from A₁ योगवाहित्यं.—²) Here seems to be a *lacuna* in the text. ६७३. ¹) A₃ gloss सुवर्णपार्श्व.—²) A₃ gloss परिहासपुरसमीपे. ६७८. ¹) A₃ gloss कल्या सुरा पाल्यतेऽनेनेति कल्यपालः कल्यपाल इति भाषया.—²) Thus corr. by A₃; two aksharas of A₁, corresponding to रुद्धा, are illegible on account of an ink blot. A₃ gloss अवरुद्धा उरद्धा इति भाषया. ६७९. ¹) Thus A₁; A₂ °धर्मैः.

680 तस्य पञ्च महाशब्दाञ्छ्यायानुत्पलकोऽग्रहीत् । अन्ये जगृहिरेऽन्यानि कर्मस्थानानि[1] मातुलाः ॥६८०॥
आयत्तीकृतसाम्राज्यैर्भ्रातृभिर्नन्दिताशया । भूभृज्जनन्या विदधे जयादेव्या जयेश्वरः ॥६८१॥
राज्ञां कृपणवित्तैर्यत्प्रविष्टैर्दुर्व्ययं धनम् । अचिरान्नीयते शान्तिमपूर्वैः कैश्चिदेव तत् ॥६८२॥
जयापीडस्य यत्किंचित्सूनुना हि व्ययीकृतम् । समुत्पलैरशेषं तैः क्रमेण हृतं वसु ॥६८३॥
भगिनीभगसौभाग्यसंभवैर्विभवैः कृताः । तेऽभङ्गुराणां भोगानां भोक्तारो भाग्यभागिनः । ६८४॥
685 निरङ्कुशं चेष्टमानाः शनकैस्त्यक्तधीभयात् । ते स्वकीयान्नृपानाशामकुलीनाः शशङ्किरे ॥६८५॥
अथाभिचारक्रियया मिथः संमन्त्र्य पापिभिः । राज्येच्छया तैः स्वकीयः स्वामी च स नृपो हतः ॥६८६॥
भुक्तासिनौ द्वादशाब्दांस्तस्मिन्व्यापादिते तथा । नैच्छन्नेकस्य ते राज्यं परस्परमहंकृताः ॥६८७॥
तेषामाक्रान्तदेशानां[1] नाममात्रमहीपतीन् । तांस्तान्कर्तुममात्यान्त्विरोधोऽन्योन्यमुद्ययौ[2] ॥६८८॥
अथ मेघावलीदेव्यां जातो वप्पियभूपतेः । अजेयोऽप्यबालिकतया योऽभूद्राज्यविवर्जितः ॥६८९॥
690 सोऽयं त्रिभुवनापीडो जयादेव्यामजीजनत् । राजानमजितापीडं तं बलादुत्पलोऽव्यधात् ॥६९०॥ युग्मम्[1] ॥
शैडाविगणनास्थाननिष्पन्दोऽस्यां नृपाश्च ते । पञ्चमाहणनास्थानादशमाच्छादने ददुः ॥६९१॥
एकसंभाषणात्खेदं यास्यन्त्येषु दिने दिने । पञ्च तुल्यसुखाश्चैच्छुःस्थो राजा तदाश्रितः ॥६९२॥
ते राजन्यजितापीडे राज्योत्पत्त्यपहारिणः । पुरदेवगृहादीनां प्रतिष्ठाकर्म चक्रिरे ॥६९३॥
सापत्न्यास्ते बुभुजिरे राज्यं स्वामिविवर्जितम् । निर्जने महिषं श्रान्तं मिथः सेर्ष्या वृका इव ॥६९४॥
695 उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतम् । पद्मस्य पद्मस्वाम्यास्ते कृतिः पद्मपुरं तथा ॥६९५॥
वधूर्धन्त पद्मस्य गुणादेवी गुणोज्ज्वला । मठमेकमधिष्ठाने द्वितीयं विजयेश्वरे ॥६९६॥
धर्मो धर्मोद्यमी हेतुर्धर्मस्वामिविनिर्मितेः । कल्याणवर्मा सत्कर्मा कल्याणस्वामिकेशवे ॥६९७॥
दीनाराणां सहस्राणि पञ्चोपकरणं कृती । एकैकस्याः सुधीर्धेनोः कृत्वा मम्मो महाधनः ॥६९८॥
पञ्चाशीतिसहस्राणि गवां दत्त्वा प्रकल्पयन् । कुम्भप्रतिष्ठासंभारं यो मम्मस्वामिनं व्यधात् ॥६९९॥
700 तस्यैकस्यैव सामर्थ्यं कः संख्यां कर्तुमर्हति । भ्रातॄणां किं पुनस्तेषां सर्वेषां भूरिसंपदाम् ॥७००॥
द्रोहार्जितास्तु वा लक्ष्मीः सुकृतोपार्जिताथ वा । सर्वेषां स्पृहणीयैव तेषां दातृतया तया ॥७०१॥
कृता देवगृहास्तैर्ये तत्पार्श्वेऽन्यसुरास्पदैः । दिङ्मातङ्गसमीपस्थकलभौपम्यमाश्रितम् ॥७०२॥
एकोननवते वर्षे स्वकीये शान्तिमागते । निर्विघ्नभोगास्तेऽभुञ्जन्षड्विंशाब्दास्त्ययावधि ॥७०३॥
अथ मम्मोत्पलकयोरभूद्दारुणो रणः । रुद्धप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः ॥७०४॥
705 कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः । यमुद्दिश्याकरोत्काव्यं भुवनाभ्युदयाभिधम् ॥७०५॥

६८० [1]) $A_2$ gloss कर्मस्थानानि कारखान इति प्रसिद्धानि. ६८१. [1]) $A_2$ glosses ललितापीडेन and पद्मोत्पलकादिभिः.
६८८. [1]) Thus corr. by $A_3$ from $A_1$ °देशानां.—[2]) $A_1$ wrote °मतामान्याहि°; $A_2$ altered this to °मतन्मत्या; $A_3$ has struck out the reading of $A_2$ and has written above °मतामान्यान्वि°.—[3]) Thus corr. by $A_3$ from $A_1$ °याववौ. ६९०. [1]) युग्मम् added by $A_3$. ६९१. [1]) Thus corr. by a later hand from $A_1$ शैडा°; R Edd. शेडा°; G शेडा°. Cf. viii. 578 (C.).—[2]) $A_2$ gives the marginal note पञ्चमहाशब्दनामस्थानकं विधान नवमामाहि एषां चतुर्णां सम्बन्धी एकोत्पत्तिप्रवेशः स पञ्चमगणनास्थानमिति लोकाचारः. ६९२. [1]) Thus $A_1$; $A_2$ °सुखान्यै° ६९९ [1]) To this verse seems to refer the gloss of $A_2$: मम्मस्वामी.
७०५. [1]) $A_2$ gloss श्रीशङ्कुकाभिधः प्रसिद्ध आलङ्कारिकः यस्य मतं रसनिरूपणे काव्यप्रकाशे चतुर्थोल्लासे श्रीमम्मटाचार्येण निरूपितम्.

मम्मश्चतुर्यशोवर्मा संग्रामार्थे व्यपाहरत् । स यत्र तेजः शूराणां नक्षत्राणामिवार्यमा ॥७०६॥
अथोत्पाट्याजितापीडं संग्रामापीडसंभवः । अनङ्गापीडनामाभूत्कृतो मम्मादिभिर्नृपः ॥७०७॥
मम्मोत्साहासहिष्णुत्वात्संभृतामर्षवैकृतः । तस्य राज्यं ह्यपाशीत्सुखवर्मोत्पलात्मजः ॥७०८॥
वर्षत्रयेणोत्पलके ततः प्रमयमागते । स चकारोत्पलापीडमजितापीडजं नृपम् ॥७०९॥
तेषामाश्वयुजीराजसदृशानां महीभुजाम् । भृत्यापि भृत्याः कृतिनो विभूतिं केपि लेभिरे ॥७१०॥ 710
सांधिविग्रहिकस्तस्य रत्नो नाम विभूतिभाक् । तस्मिन्कालेपि यश्चक्रे रत्नस्वामिसुरास्पदम् ॥७११॥
भेजुर्दार्वाभिसारादीन्देशानुपलभ्य भूपताम् । विमलाख्या ग्रामभुजो नराख्या व्यवहारिणः ॥७१२॥
राज्ञां कार्कोटवंश्यानां क्षीणप्रायमभूत्कुलम् । वंश्यास्तूत्पलकुल्यानां भुवि वैपुल्यमाययौ ॥७१३॥
सामर्थ्योपनतप्रायपार्थिवस्यो व्यपद्यत । विद्वेषात्सुखवर्माथ मुक्ताकण्ठेन स्वबन्धुना ॥७१४॥
ततः शूराभिधो मन्त्री सुखवर्मात्मजेकरोत् । राज्ययोग्योयमित्यास्थां सगुणेवन्तिवर्मणि ॥७१५॥ 715
एकत्रिंशे स वर्षेथ प्रजाविप्लवशान्तये । विनिवार्योत्पलापीडं तमेव नृपतिं व्यधात् ॥७१६॥
यत्कृते विफलक्लेशा आसन्पितृपितामहाः । पौत्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्मणा ॥७१७॥
कुम्भाः पयोनिधिपयोहरणप्रवृत्ता नित्यं वहन्ति किल ये विफलश्रमत्वम् ।
चित्रं क्षणादिह तदेकसमुद्भवेन संदर्शिता निखिलवारिधिपानलीला ॥७१८॥
अभृत तदनु मूर्ध्नि राजलक्ष्मीघटितकटाक्षकृतादिपट्टबन्धे ।
कनकघटमुखाश्रयाभिषेकं झटिति पतन्तमवन्तिवर्मदेवः ॥७१९॥
संप्राप्तावुपदेष्टुमिन्दुतपनावुक्तं स्ववंशोद्भवैर्भूपालैर्नवराज्यतन्त्रमिव स श्रोत्रद्वये धारयन् ।
राजा मण्डनकुण्डलद्वयमिषात्स्वच्छातपत्रच्छलाल्लक्ष्मीविष्टरपुण्डरीकघटितच्छायोदयो विद्युते ॥७२०॥ 720

[1]इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥
समाशतद्वये षड्युते मासेषु षट्सु च । निर्दशाहेषु कार्कोटवंशे समदशाभवन् ॥

---

७०९. [1]) $A_4$ gloss सुखवर्मा. ७१०. [1]) Thus corr. by $A_1$ from °युजो नासन्[2]; $A_2$ gloss आश्वयुजे मासि चन्द्रवंशे ये निर्गच्छन्ति ते देवारका इति प्रसिद्धास्तत्सदृशानां.—[2]) Thus $A_2$; $A_1$ कृतिनः. ७१६. [1]) $A_4$ gloss अवन्तिवर्माणम्. ७१९. [1]) Thus corr. by $A_2$ from $A_1$ तदुह. ७२०. [1]) Thus $A_1$; $A_2$ °तपनौ ढुक्तं. *Colophon.* [1]) $A_2$ inserts before this the following note: रा १० सं ७१६ आश्विनः राज्ञानः ०० सं १९८६

## ॥ पञ्चमस्तरङ्गः ॥

काव्येतेषु रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते गोभिः कण्ठतटस्य हृष्यति पुरो हृक्पद्य चक्षुःश्रुतेः ।
संधानेऽभिनवे मिथो भगवतोर्जिह्वापृथक्स्पन्दिनी[2] भिक्षार्थी सदृशाक्षरामपि वदन्त्येवं गिरं पातु वः ॥१॥
अवन्तिवर्मा साम्राज्यं प्राप्य पाटितकण्टकः । चकार चरितैश्चित्रं सतां कण्टकितं वपुः ॥२॥
आसतां क्षितिपामात्यौ तौ द्वावपि परस्परम् । आज्ञादाने परिवृढौ भृत्यावाज्ञापरिग्रहे ॥३॥
कृतज्ञः क्षान्तिमान्क्ष्माभृन्मन्त्री भक्तः स्मयोज्झितः । अभङ्गुरोऽयं संयोगः सुकृतैर्जातु दृश्यते ॥४॥
5 विवेक्ता प्राप्तराज्यः स क्ष्माभृद्वीक्ष्य नृपश्रियम् । अविलुप्तस्मृतिर्धीमानस्मरेवमचिन्तयत् ॥५॥
गोभुजां वल्लभा लक्ष्मीर्मातङ्गोत्सङ्गलालिता । सेयं स्पृहां समुत्पाद्य दूषयत्युन्नतात्मनः ॥६॥
स नास्ति कश्चित्प्रथमं यः प्रदर्श्यानुकूलताम् । संताप्यते न चरमं नीचमीत्येव नानया ॥७॥
चपलाभिः प्रवृद्धेयं स्ववेश्याभिः सहाम्बुधौ । तदेकचारिणीवृत्तमनया शिक्षितं कुतः ॥८॥
निःस्नेहा नान्वगात्कांश्चिच्चिरं संस्तुताप्यसौ । परलोकाध्वगान्भूपानपाथेयानबान्धवान् ॥९॥
10 हेमभोजनभाण्डादि भाण्डागारे यदर्जितम् । कस्मादस्य न नाथास्ते लोकान्तरगता नृपाः ॥१०॥
अन्योच्छिष्टेषु पात्रेषु भुक्तैतेषु महीभुजः । कस्मान्न लज्जामवहञ्शौचचिन्तां न वा दधुः ॥११॥
स्थूलेषु राजतस्थालकपालेष्ववलोकितैः । प्रेतभूपालनामाङ्कैः शङ्का कस्य न जायते ॥१२॥
कृष्टाः प्रविष्टे ये कालपाशे कण्ठान्मुमूर्षताम् । अशस्ता अपवित्राश्च ते हाराः कस्य हारिणः ॥१३॥
संदूष्य बाष्पैर्दुःखोष्णैस्त्यक्तान्पूर्वैर्मुमूर्षुभिः । स्पृशन्नेतानलंकारान्न कः संकोचमाप्नुयात् ॥१४॥
या वारिराशिसलिलान्तरसंनिधानसंसेवयापि सततं मलिनैव लक्ष्मीः ।
15 पात्रेषु रोरशिखिभागिषु सा विमुक्ता वैमल्यमेति हरिणीव हुताशशौचा ॥१५॥

---

१. [1]) A₃ gloss: काव्येतेषु इति । एतेषु प्रस्तुतविषयेषु फणिनां सर्पाणां कचेषु बन्धनेषु ते कापि रुचिः कश्चिदभिलाषोऽस्ति । अत्र जूट-कक्ष्यादिबन्धनार्थमत्यन्तं सर्पानभिलषसीति देवीवचनम् । बन्धनस्थानानां कण्ठप्रकोष्ठकक्ष्यादीनां बहुत्वाद्बन्धानामपि बहुवचनम् । एतेषु कचेषु केशेषु फणिनां सम्बन्धिनी अर्थान्नोक्तकारिणी कापि रुचिरनिर्वचनीया कान्तिस्तवास्ति तव केशानामञ्जनराशासिव श्यामत्वानीव मोहो जायते इति महादेववचनम् । पुंस्कोकिलस्येव तव कण्ठतटस्य गोभिर्ध्वनैः चक्षुःश्रुतेः सर्पस्य दृक् नेत्रं हृष्यति मोदते । कोकिलरुतमिव तव कण्ठध्वनिं श्रुत्वा सर्पस्य दृग्हर्षः सर्पाणां चक्षुरेव श्रवणस्थानीयमित्यतो दृक् हृष्यतीत्युक्तम् । गीतप्रियो हि सर्पः । उक्तम् । हि श्रुत्वैव पश्चुर्वेत्ति वेत्ति गीतरसं फणी । साहित्यामृतसारस्य शङ्करो वेत्ति वा न वेति ॥ इति महादेववचनम् ॥ देवीवचनं तु । तव कण्ठतटस्य कोकिलस्येव करे पुरो मे नेत्रं हृष्यति । गोभिः किरणैः । कोकिलतुल्यवर्णकण्ठतटनैल्यदर्शनेन सर्पस्य दृग्हर्षः दृग्विकासः कोकिलरुतं श्रुत्वा सर्पाणां नेत्रविकासो जायते शीतसमये तु संकोच इति लौकिकाः ॥.—[2]) Thus A₂; A₁° स्पर्धिनी. ३. [1]) Thus corr. by A₂ from A₁ °धाने. ७. [1]) Thus corr. by later hand from A₁ °कूल्यताम्. १०. [1]) न supplied by A₂. १५. [1]) A₂ gloss रोर: दरिद्रः.—[2]) A₁ °शौचे altered by later hand to °शौचा; A₂ glosses: अभिशौचायां मृगाणां अभिना लोमशुद्धिः अग्निशौचवस्त्रवत्, and हुताशेनाग्निना शौचं शुद्धिर्यस्याः सा हुताशशौचा । हरिणी मृगी इव यथा सा अग्नौ प्रक्षिप्तदेहा सती शुद्धलोमा भवति तद्वत्.

इति निर्धार्य नृपतिर्नीत्वा स्वर्णादि चूर्णताम् । निधेरञ्जलिभिः प्रादाद्विजन्मभ्यः करम्भकम् ॥१६॥
साधु भूपेति सक्तूंश्च हर्षाभिगीरयं द्विजः । प्राश्नन्त्सिक्तविति वदन्नेकः प्रापाञ्जलीन्बहून् ॥१७॥
लक्ष्मीं कृत्वार्थिसात्कृत्स्नां कृतिनावन्तिवर्मणा । विभूतिश्चामरच्छत्रमात्रशेषा व्यधीयत ॥१८॥
अनन्तसंपत्संपन्नभूरिगोत्रगतिद्रवे । राजश्रीर्दुर्जरा तस्य नवत्वे भुभुजोभवत् ॥१९॥
पितृव्यान्समरे भ्रातॄन्भ्रातृव्यांश्च विजित्य सः । चकार भूरिभिर्वारै राज्यं विगतकण्टकम् ॥२०॥ 20
राज्यं निष्पाद्य निर्विघ्नमथ वात्सल्यपेशलः । विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियम् ॥२१॥
भ्राता द्वैमातुरस्तेन शूरवर्माभिधः सुधीः । ज्ञातिप्रियेण वितते यौवराज्येभ्यषिच्यत ॥२२॥
गोधूयांहस्तिकर्णाख्यावग्रहारौ प्रदाय यः । शूरवर्मस्वामिनं च गोकुलं च विनिर्ममे ॥२३॥
संपूर्णः पूर्णमहिमामर्त्यमाहात्म्यमन्दिरम् । पञ्चहस्तामदश्चक्रे मठं सुकृतकर्मठः ॥२४॥
भ्राता व्यधत्त नृपतेरपरः समराभिधः । केशवं चतुरात्मानं समरस्वामिनं तथा ॥२५॥ 25
द्वौ शूरावरजौ धीरविज्ञपाख्यौ निजाख्यया । व्यधत्तां विबुधावासौ द्वावन्यौ गणनापती ॥२६॥
भूत्वा मातुलतां छत्रप्रभावानुभवौ भुवि । मतौ सचिवभावेन हराबासाम्बसभ्यताम् ॥२७॥ युग्मम् ॥
राजद्वारिकः श्रीमाञ्छूरस्यासीन्महोदयः । महोदयस्वामिनो यः प्रतिष्ठां समपादयत् ॥२८॥
रामटाख्यमुपाध्यायं ख्यातव्याकरणश्रमम् । व्याख्यातृपदके चक्रे स तस्मिन्सुरमन्दिरे ॥२९॥
अमात्येन महीभर्तुः श्रीप्रभाकरवर्मणा । कृतं प्रभाकरस्वामिनाम्नो विष्णोर्निकेतनम् ॥३०॥ 30
आयातेन शुकैः सार्धं रत्ना गृहशुकेन यः । मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां शुकावलीम् ॥३१॥
विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा । सत्कृत्य विबुधः सभ्यान्देशेस्मिन्नवतारिता ॥३२॥
युग्यैः क्षितिभुजां योग्यैरुह्यमाना महर्द्धयः । बुधाः प्रवृत्तसत्कारा विविशुर्भूपतेः सभाम् ॥३३॥
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः । प्रथां रत्नाकरश्चागात्साम्राज्येवन्तिवर्मणः ॥३४॥
आस्थाने कृतमन्दारो बन्दी शूरस्य मन्त्रिणः । संकल्पस्मृतिमाधातुमिमामार्यां सदापठत् ॥३५॥ 35
अयमवसर उपकृतये प्रकृतिचला यावदस्ति संपदियम् । विपदि सदाभ्युदयिन्यां पुनरुपकर्तुं कुतोवसरः ॥३६॥
कृतः सुरेश्वरीक्षेत्रे बहुगेहविधायिना । शिवयोर्मिथयोस्तेन प्रासादः सोव्ययस्थितिः ॥३७॥
शूरेश्वरं प्रतिष्ठाप्य स्ववेश्मेव समुन्नतम् । चक्रे शूरमठं धीमान्स भोगाय तपस्विनाम् ॥३८॥
स्वकृते पत्तनवरे तेन शूरपुराभिधे । क्रमवर्तप्रदेशस्थो द्रङ्गोभूमिनिवेशितः ॥३९॥
सुरेश्वरीप्राङ्गणतश्चक्रे भूतेश्वरं हरम् । मठं शूरमठान्तश्च भूराजो रत्नवर्धनः ॥४०॥ 40
काव्यदेव्यभिधा शूरवधूः शुद्धान्वया व्यधात् । सदाशिवं सुरेश्वर्यां काव्यदेवीश्वराभिधम् ॥४१॥

---

१६. ¹) $A_2$ gloss [illegible] मौक्तिकादेः परिग्रहः.—²) $A_2$ glosses [illegible] and करम्भं [illegible] इति भाषया. २३. ¹) $A_2$ gloss [illegible].—²) $A_2$ gloss [illegible].—³) $A_2$ विधाय. २४. ¹) Thus $A_1$; $A_2$ संपूर्णपुण्यमहिमा.—²) Thus $A_1$; $A_2$ मन्त्रणा°.—³) $A_2$ gloss [illegible]. २५. ¹) $A_2$ gloss [illegible]. २७. ¹) तु written above the line by $A_2$; corresponding letter of $A_1$ smeared over. $A_2$ gloss [illegible].—²) Thus corr. by $A_2$ from $A_1$ पुरी. २८. ¹) $A_2$ gloss [illegible]. ३१. ¹) सार्धं supplied by $A_2$ in space left by $A_1$.—²) Thus corr. by later hand from $A_1$ [illegible]°. ३४. ¹) $A_2$ gloss आनन्दवर्धनः [illegible].—²) $A_2$ gloss रत्नाकरः [illegible]. ३६. ¹) Thus corr. by $A_2$ from $A_1$ सदाभ्यु°. ३८. ¹) $A_2$ gloss शूरपुरे. ३९. ¹) $A_2$ gloss [illegible].—²) $A_2$ gloss [illegible].

निर्मत्सरोवन्तिवर्मा सोदरेभ्योनपायिनीम् । शूराय च सपुत्राय नृपतिप्रक्रियां ददौ ॥४२॥
छन्दानुवर्ती भूपालो दैवतस्येव मन्त्रिणः । आ बाल्याद्वैष्णवोप्यासीच्छैवतामुपदर्शयन् ॥४३॥
क्षेत्रे विश्वैकसाराख्ये मृतानामपवर्गदे । भूरिभोगास्पदं राज्ञा तेनावन्तिपुरं कृतम् ॥४४॥
45 अवन्तिस्वामिनं तत्र प्राग्राज्याधिगमात्कृती । विधाय प्राप्तसाम्राज्यश्चक्रेवन्तीश्वरं तदा ॥४५॥
त्रिपुरेश्वरभूतेशविजयेशेषु भूभृता । स्नानद्रोण्या रूप्यमय्या तेन पीठत्रयं कृतम् ॥४६॥
शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतम् । तत्प्रियार्थमुपेक्ष्योभूद्धर्मः प्राणाः सुतोपि वा ॥४७॥
तथा चार्चयितुं जातु यातो भूतेश्वरं नृपः । विभवानुगुणे स्वस्मिन्पूजोपकरणेर्पिते ॥४८॥
ददर्श पीठे देवस्य पूजकैरुपपादितम् । वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितम् ॥४९॥
50 तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निवेदनकारणम् । व्याजिज्ञपन्क्षितिन्यस्तजानुप्राञ्जलयस्ततः ॥५०॥
डामरो धन्वनामास्ति लहरे विषये बली । शूरस्य मन्त्रिणो देव सेवको यः सुतोपमः ॥५१॥
हृतेषु तेन ग्रामेषु निरवग्रहशक्तिना । निवेद्यमेतदेवास्मै भूतेशाय निवेद्यते ॥५२॥
अकाण्डशूलजनितां पार्थिवः कथयन्व्यथाम् । श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोथ निर्ययौ ॥५३॥
पूजां संत्यज्य गमनं शूलं चाकस्मिकं प्रभोः । सहेतुकं वितर्क्य शूरो वृत्तान्तान्वेषकोभवत् ॥५४॥
55 ज्ञाततत्त्वस्ततस्तूर्णं भूतेशाभ्यर्णवर्तिनः । क्रुद्धः समागृहकस्थं भैरवस्याविशद्गृहम् ॥५५॥
निषिद्धजनबाहुल्याद्भूत्वा विरलपार्श्वगः । प्राहिणोद्धन्वमानेतुं ततो दूतान्पुनः पुनः ॥५६॥
स क्षितिं पत्तिपृतनासंमर्देन प्रकम्पयन् । अप्रकम्पतनुः प्राप क्रूरः शूरान्तिकं शनैः ॥५७॥
तस्य प्रविष्टमात्रस्य शास्त्रिणः शूरचोदिताः । मुण्डं सजीवितस्यैव चिच्छिदुर्भैरवाग्रतः ॥५८॥
आसन्ने सरसि क्षिप्त्वा रुधिरोद्गारि तद्वपुः । क्ष्मापतेः क्षालितामर्षो धीरः शूरो विनिर्ययौ ॥५९॥
60 तस्य श्रुत्वा शिरश्छेदं स्वपुत्रस्येव मन्त्रिणा । क्षीणमन्युः क्षितिपतिः सचैलस्न इवाभवत् ॥६०॥
शूरोथ पृष्टकुशलो निर्व्यथोस्मीति भाषिणम् । उत्थाप्य तल्पात्तं देवं पूजाशेषमकारयत् ॥६१॥
इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः । अनुरक्त्येव हितं तत्तत्प्राणांस्त्यक्त्वाप्यसाधयत् ॥६२॥
परस्परमनुत्पन्नमन्युकालुष्यदूषणौ । न दृष्टौ न श्रुतौ याभ्यां तादृशौ राजमन्त्रिणौ ॥६३॥
श्रीमेघवाहनस्येव साम्राज्येवन्तिवर्मणः । अशेषप्राणिनामासीदमारो दश वत्सरान् ॥६४॥
65 जलं जहद्भिः शिशिरं तटानेत्याकुतोभयैः । तत्कालं सेवितः पृष्ठे पाठीनैः शरदातपः ॥६५॥
अनुग्रहाय लोकानां भट्टश्रीकल्लटादयः । अवन्तिवर्मणः काले सिद्धा भुवमवातरन् ॥६६॥
चरित्रे बहुवक्तव्ये येषामेकस्य पावनः । अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते ॥६७॥
देशः प्रबलतोयोयं महापद्मसरोजलैः । कूलिनीभिश्च शबलः स्वल्पोत्पत्तिः सदाभवत् ॥६८॥
ललितादित्यभूभर्तुरुद्योगेन बलीयसा । किंचिदाकृष्टसलिलः प्रापोत्पत्तिं मनाक्ततः ॥६९॥

४४. [1]) A₂ gloss विश्वैकसाराख्ये भारसो इति ग्रामे.—[2]) Thus corr. by later hand from A₁ राजा. ४८. [1]) Thus corr. by later hand from A₁ जातो. ५१. [1]) A₂ gloss लार् इति प्रसिद्धे राष्ट्रे. ५५. [1]) A₂ separates स from the following and gives the gloss शूरः to स. ५६. [1]) Thus A₁; A₂ °बाहुल्यो भूत्वा. ५७. [1]) Thus A₂; A₁ क्रुरः. ६०. [1]) Thus corr. by A₂ from A₁ श्रण°.

जयापीडे क्रमात्प्राप्ते स्वल्पवीर्येषु राजसु । सलिलोपप्लवैरासीत्पुनरेवावृता क्षितिः ॥७०॥ 70

दीनाराणां दशशती पञ्चाशत्यधिकाभवत् । धान्यखारीक्रये हेतुर्देशे दुर्भिक्षविप्लवे ॥७१॥

अवन्तिवर्मणः पुण्यैर्जन्मुज्जीवयितुं ततः । स्वयमन्नपतिः श्रीमान्सुय्यः क्षितिमवातरत् ॥७२॥

यस्याविज्ञातसंभूतेस्तुर्ये कालेऽपि निश्चितम् । अयोनिजत्वं कृतिनश्चरितैर्भुवनाद्भुतैः ॥७३॥

पुरा रथ्यारजःपुञ्जं संमार्जन्ती विधानवत् । सुय्याभिधाना चण्डाली मृद्भाण्डं प्राप नूतनम् ॥७४॥

तस्मिन्पिधानमुद्धृत्य सापश्यन्मध्यशायिनम् । बालं कमलपत्राक्षं चर्वन्तं स्वकराङ्गुलीः ॥७५॥ 75

मात्रा कयापि त्यक्तोऽसौ क्षुत्परो मन्दभाग्यया । अयेति चिन्तयन्त्यासीत्सा स्नेहात्प्रस्नुतस्तनी ॥७६॥

अदूषयन्स्वां स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे । तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत ॥७७॥

स सुय्यनामा मतिमान्प्रवृद्धः शिक्षिताक्षरः । कस्याप्यासीद्गृहपतेरर्भकाध्यापको गृहे ॥७८॥

नतकायादिनियमैस्तं सतां हृदयंगमम् । गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्यवारयन् ॥७९॥

तेषां कथास्ववस्थासु निन्दतां जलविप्लवम् । धीरस्ति मे निरर्थस्तु किं कुर्यामिति सोऽब्रवीत् ॥८०॥ 80

उन्मत्तस्येव वदतस्तस्य तद्वियमादृतः । निशम्य भूभृच्चारेभ्यश्चिरमासीत्सविस्मयः ॥८१॥

ततस्तमानीय नृपः किं ब्रूष इति पृष्टवान् । धीरस्तीत्याह राजाग्रेऽभ्यवोचत्सोऽप्यसंभ्रमः ॥८२॥

वातूलोऽसाविति निजैरुक्तोऽप्यथ महीपतिः । धियं दिदृक्षुर्विदधे तस्यायत्तं निजं धनम् ॥८३॥

कोशाद्दीनारभाण्डानि बहून्यादाय हेलया । ययौ मडवराज्यं स नावमारुह्य रंहसा ॥८४॥

ग्रामे तत्र प्रवृद्धाम्भुनिमग्ने नन्दकाभिधे । एकं निक्षिप्य दीनारभाण्डं व्यावर्तत द्रुतम् ॥८५॥ 85

सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि । वार्तां निशम्य तां राजा तच्चिह्नान्वेषकोऽभवत् ॥८६॥

क्रमराज्यं स संप्राप्य देशे यक्षदराभिधे । अञ्जलिभ्यां निचिक्षेप दीनारान्सलिलान्तरे ॥८७॥

यत्र तीरद्वयालम्बिशैलनिर्लुठिताः शिलाः । चक्रुर्वितस्तां निष्पीड्य पयः प्रतिपयोन्मुखम् ॥८८॥

दुर्भिक्षोपहता ग्राम्या दीनारान्वेषिणस्तदा । शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन् ॥८९॥

एवं दिनानि द्वित्राणि पयो युक्त्या विकृष्य तत् । वितस्तामेकतः स्थानात्कर्मकृद्भिरबन्धयत् ॥९०॥ 90

पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्मणा । सप्ताहमप्रवहता निखिला नीलजा सरित् ॥९१॥

अधः प्रवाहं संशोध्य लुठदश्मप्रतिक्रियाम् । कृत्वा बद्धैः शिलाबन्धैः सेतुबन्धमपाटयत् ॥९२॥

चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति । ततः प्रावर्तत जवाद्गन्तुं सागरगामिनी ॥९३॥

जम्बालाङ्का स्फुरन्मीना भूर्बभौ सलिलोज्झिता । व्यक्तकार्ष्ण्या सनक्षत्रा निर्मेघेव नभःस्थली ॥९४॥

यत्र यत्र विवेदौघबन्धं सलिलविप्लवे । तत्र तत्र वितस्तायाः प्रवाहान्नूतनान्व्यधात् ॥९५॥ 95

मूलस्रोतोऽभ्यनिष्ठ्यूतभूरिस्रोता बभौ सरित् । एकभोगाद्भवानेकफणेवासितपन्नगी ॥९६॥

वामेन सिन्धुस्त्रिग्राम्या वितस्ता दक्षिणेन तु । यान्त्यौ ते समगंसातां प्राग्वैन्यस्वामिनोऽन्तिके ॥९७॥

वर्ततेऽद्य महानद्योः कल्पापायेऽप्यनश्वरः । संगमो नगरीप्रान्ते स सुय्योपक्रमस्तयोः ॥९८॥

---

७१. 1) Thus $A_1$; $A_2$ पञ्चाशदधि?.—2) Thus corr. by $A_2$ from $A_1$ °खारि. ७३. 1) $A_2$ gloss चतुर्थे युगे. ७४. 1) Thus $A_1$; $A_2$ पुञ्जानि°. ७७. 1) Thus corr. by later hand from $A_1$ °स्वसा. ८१. 1) Thus corr. by $A_2$ from $A_1$ °सन्मयः. ८७. 1) $A_2$ gloss [illegible]. ९७. 1) समगं supplied by $A_2$ in space left by $A_1$.

अथाभ्यर्णास्ता फलपुरपरिहासपुरस्थितौ । विष्णुस्वामी संगमस्थ वैन्यस्वामी च तीरयोः ॥९९॥

100 सुन्दरीभवनाभ्यर्णग्रामस्यायतनस्य तु । योगशायी हृषीकेशः सुय्यस्याभ्यर्चितस्तटे ॥१००॥

दृश्यन्तेऽद्यापि सरितां पूर्वस्रोतस्तटोद्भवाः¹ । निपाताकृष्टनौरज्जुरेखाङ्का जीर्णपादपाः ॥१०१॥

स्फुरत्तरङ्गजिह्वाः स नदीर्मार्गमजिग्रहत् । तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव ॥१०२॥

बद्ध्वा शैलमयान्सेतून्वितस्तां सप्तयोजनीम् । महापद्मसरोवारि स चकार नियन्त्रितम् ॥१०३॥

महापद्मसरःकुण्डाद्वितस्ता येन योजिता । जवान्निर्याति¹ कोदण्डयन्त्रादिषुरिवाध्वना ॥१०४॥

105 उद्धृत्य सलिलादुर्वीमिव मादिवराहवत् । अनेकजनसंकीर्णान्ग्रामान्नानाविधान्व्यधात् ॥१०५॥

पालीभिरम्भः संरोध्य यान्कुण्डसदृशान्व्यधात् । कुण्डलानीति सर्वांस्तान्समृद्धान्ब्रुवते जनाः ॥१०६॥

उत्खातकीलनिवहान्नद्योऽद्यापि शरत्कृशाः । व्यञ्जन्ति जलगन्धेभबन्धनस्तम्भसंनिभान् ॥१०७॥

दीनारभाण्डान्यौज्झीत्¹स यदगाधजलान्तरे । नन्दके निर्गतजले स्थलान्तात्तदलभ्यत ॥१०८॥

अदेवमातृकान्ग्रामान्परीक्ष्य विविधाः क्षितीः । संविभेजे विभक्तेन नादेयेन स वारिणा ॥१०९॥

110 असिञ्चच्च जलैर्ग्रामान्ग्रामान्मृदमुपादताम् । या यावता क्षणेनागाच्छोषं तां तावता हृदि ॥११०॥

कालेन मत्वा सेकार्हां प्रतिग्रामं जलप्लुतेः । परिमाणं विभागं च परिकल्प्य निरत्ययम् ॥१११॥

चकार चानूलायाभिः¹ सिन्धुभिः सर्वतो दिशः । सत्फलोदारकेदारसंपत्संपन्नविभ्रमाः ॥११२॥ तिलकम् ॥

न कश्यपेनोपकृतं न यत्संकर्षणेन वा । हेलया मण्डलेऽमुष्मिंस्तत्सुय्येन स्वकर्मणा ॥११३॥

भूमेर्जलादुद्धरणे द्विजक्षेत्रे तथार्पणम् । सेतुबन्धोदमभिस्तोये दमनं कालियस्य च ॥११४॥

115 चतुर्षु सिद्धमिति¹ यद्विष्णोः सत्कर्मजन्मसु । सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि ॥११५॥ युग्मम्² ॥

यस्मिन्महासुभिक्षेषु दीनाराणां शतद्वयी । धान्यखारेः¹ प्राप्तिहेतुरा सर्गादभवत्पुरा ॥११६॥

ततः प्रभृति तत्रैव चित्रं कश्मीरमण्डले । षट्त्रिंशता¹ धान्यखारेर्दीनारैरुदितः क्रयः ॥११७॥

निर्गतायां¹ महापद्मसलिलात्स्वर्गसंनिभम् । वितस्तायास्तटे चक्रे स्वनामाङ्कं² स पत्तनम् ॥११८॥

स्वकृता स्थापिता तेन सरसि व्याघ्रदिक्तटे । आसंसारं स्थितामारं¹मर्यादा क्षयपक्षिणाम् ॥११९॥

120 सुय्या¹कुण्डलनामानं ग्रामं कृत्वा द्विजातिसात् । सुय्यामु²द्दिश्य तन्माता सुय्यासे³तुं स निर्ममे ॥१२०॥

तेनोद्धृताश्च सलिलाद्भूषु ग्रामाः सहस्रशः । अवन्तिवर्मप्रमुखैर्जयस्थलमुखाः कृताः ॥१२१॥

ईदृशैर्धर्म्यवृत्तान्तैः¹ प्रवर्तितकृतोदयः । अवन्तिदेवः पातिस्म मान्धातेव वसुंधराम् ॥१२२॥

प्राणप्रयाणसोद्योगरोगग्रस्तस्ततो ययौ । क्षेत्रं स त्रिपुरेशाद्रिनिकटज्येष्ठेश्वराश्रितम् ॥१२३॥

आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपिताम् । प्राणान्ते प्राञ्जलिः शूरे वैष्णवत्वमदर्शयत् ॥१२४॥

125 तेनान्ते भगवद्गीताः शृण्वता भावितात्मना । ध्यायता वैष्णवं धाम निरमुच्यत जीवितम् ॥१२५॥

---

९९. ¹) Emended; $A_1$ अभ्यर्ण्या°, altered by later hand to अथाभ्या°. १०१. ¹) Thus G and Edd.; A °द्भवः. १०४. ¹) Thus G and Edd.; A °र्यान्ति. १०८. ¹) Emended; A °भाण्डानौ°. ११२. ¹) Supplied by $A_2$. ११५. ¹) Thus corr. by $A_1$ from $A_1$ वसिद्ध°.—²) युग्मम् supplied by $A_2$. ११६. ¹) Thus corr. by $A_1$ from खारी. ११७. ¹) $A_2$ gloss द्वात्रिंशदीनाराणां खारमन्ये इति कश्मीरदेशभाषया परिगणने षट्त्रिंशद्दीनाराः त्रिंशत्पञ्च इति शेषाः. ११८. ¹) Thus corr. by $A_2$ from $A_1$ निर्गता वा.—²) $A_2$ gloss सुय्यपुराख्यम्. ११९. ¹) Thus corr. by $A_2$ from $A_1$ स्थितासार°. १२०. ¹) Thus corr. by later hand from $A_1$ सुय्यकु°.—²) Emended; A सय्या°.—³) Thus corr. by later hand from $A_1$ सय्या°. १२२. ¹) $A_2$ gloss स्थिरम्.

आषाढशुक्लपक्षस्य तृतीयस्यां समापति[1]ः । वर्षे एकोनषष्ठे स क्ष्मापृष्ठात्समुपाययौ ॥१२६॥
तस्मिन्प्रशान्ते प्रत्येकं विभवोत्सिक्तचेतसाम् । तुल्यमुत्पलवंश्यानां राज्येच्छा भूयसामभूत् ॥१२७॥
ततश्चक्रे प्रतीहारः प्रयत्नाद्रत्नवर्धनः । नृपं शंकरवर्माणमवन्तिनृपतेः सुतम् ॥१२८॥
कर्णपो विश्वपामात्यस्तनूजं शूरवर्मणः[2] । तद्भ्रातुः सुखवर्माख्यं यौवराज्येऽप्ययोजयत् ॥१२९॥
ततस्तयोरभूद्वैरं क्षितीशयुवराजयोः । यस्मिन्क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत् ॥१३०॥ 130
शिवशक्त्यादयो वीराः स्वामिकार्योज्झितासवः । यथाभूवन्स्वसत्त्वस्य परीक्षाक्षणलाभिनः ॥१३१॥
कुर्वतां स्वामिशत्रूणां दानमानप्रतिश्रवम् । सत्त्वैकाभ्यास ते यस्मादानुकूल्यमशिश्रयन् ॥१३२॥
पिण्डस्पृहां परित्यज्याहंकृताः शिक्षिताः क्वचित् । तावच्च वीततमसः श्ववृत्तिमनुजीविनः ॥१३३॥
कथंचिदथ निर्जित्य युवराजं महौजसम् । प्राज्यः स्वविजयोंकारश्चक्रे शंकरवर्मणा ॥१३४॥
तस्मात्समरवर्मायौर्वितीर्णसमरोत्सकृत् । कीर्तिं श्रिया प्रणयिनीं लब्धयाधिविवेद सः ॥१३५॥ 135
अथ निर्जित्य दायादांल्लब्ध्वा लक्ष्मीं क्षितीश्वरः । जिष्णुर्दिग्विजयं कर्तुं श्रीमानासीन्महोद्यमः ॥१३६॥
तस्य कालबलाद्देशे प्रक्षीणजनसंपदि । लक्षाणि नव पत्तीनां द्वाराभिष्कामतोभवन् ॥१३७॥
स्वपुरस्योपकण्ठेपि योभूत्कुण्ठितशासनः[1] । स एव रत्नोत्संसेषु राज्ञामाज्ञां न्यवेशयत् ॥१३८॥
गच्छन्नाम्नायविच्छेदसंप्रदायः ककुब्जये । स्वप्रज्ञया समुन्नीतो राज्ञा शंकरवर्मणा ॥१३९॥
तत्सेना नरनाथानां पृतनाभिः पदे पदे । कुलापगेव कुल्याभिर्विश्रान्तीभिरवर्धत ॥१४०॥ 140
दार्वाभिसारराजेन[1] त्यक्तां समुपाश्रिताः । अद्रिद्रोण्यो न बाहिन्यंस्तत्सेनानादमादधुः ॥१४१॥
जनोल्बणैर्हरिगणैर्गुञ्जन्हरिगणं क्षणात् । अमासादितदुर्गं स चक्रे दुर्गान्तरातिथिम् ॥१४२॥
लक्षाणि नव पत्तीनां वारणानां शतत्रयी । लक्षं च वाजिनामासीद्यस्य सेनापुरःसरम् ॥१४३॥
स गूर्जरंजयव्यग्रः स्वपराभवशङ्किनम् । त्रैगर्तं[1] पृथिवीचन्द्रं निन्ये तमसि हास्यताम् ॥१४४॥
पुत्रं भुवनचन्द्राख्यं नीतिं[1] प्रागेव दत्तवान् । स नाभूत्प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः ॥१४५॥ 145
अथ तत्कटकं भ्राम्यद्भूरिमण्डलनायकम् । वीक्ष्य संमुखमायान्तं महार्णवमिवोल्बणम् ॥१४६॥
समागमक्षणे यस्माच्छङ्कमानः स्वबन्धनम् । पलाय्य प्रययौ दूरं निर्वाणौजोविजृम्भितः ॥१४७॥ तिलकम्॥
यमप्रतिमसौन्दर्यमथाप्याहुः पुराविदः । तमेवाप्राप्नुवन्नस्ता नृपाः कालमिवोल्बणम् ॥१४८॥
उच्चखानालखानस्य संक्षये गूर्जरभूभुजः । बद्धमूलां क्षणाल्लक्ष्मीं भुवं दीर्घामरोपयत् ॥१४९॥
तस्मै दत्त्वा टक्कदेशं विनयादङ्गुलीमिव । स्वशरीरमिवापासीन्मण्डलं गूर्जराधिपः ॥१५०॥ 150
हृतं भोजाधिराजेन स साम्राज्यमदापयत् । प्रतीहारतया भृत्यीभूते थक्कियकान्वये ॥१५१॥

---

१२६. 1) Thus corr. by $A_2$ from $A_1$ °पतेः. १२९ 1) Thus $A_2$; $A_1$ °पापस्य°.—2) $A_4$ gloss अवन्तिवर्मभ्रातुः. १३४. 1) $A_4$ gloss सुखवर्माणम्. १३९. 1) Thus $A_1$; altered by later hand to °विच्छेदं. १४१. 1) $A_2$ gloss दर्वाभिसारः नाम ग्रामो इति भाषया.—2) $A_4$ gloss नरवाहननामा.—3) $A_2$ आन्यता.—4) $A_4$ gloss दार्वाभिसारनृपस्य सेनाः. १४४. 1) $A_2$ gloss गूर्जरेति अथ गूर्जरः लघुगोज्यरात इति प्रसिद्धो देशः.—2) $A_2$ gloss त्रिगर्तो नगरकोटः तदधीशः. १४५. 1) $A_1$ writes in margin the gloss: नीतिः । वेष इति देशभाषया ग, which $A_2$ continues with सिद्धः ब: स्वयतिनिधिः न्यूनबलेन माण्डलिकेनाधिकबलस्य राज्ञः प्रतीरक्षर्थं समर्प्यते ॥. १४७ 1) नि supplied by $A_2$ in space left by $A_1$. १५०. 1) $A_2$ gloss तक्कदेश: अट्टिलदीतटे दाकरवी नाम पुरवेष्ट्राहूर्दं वर्तमानो बीजनयिदाशिकेन.

दरत्तुरुष्काधिपयोर्यः केसरिवराहयोः । हिमवद्विन्ध्ययोरासीदार्यावर्त इवान्तरे ॥१५२॥
उद्भाण्डपुरे तस्थुर्यदीये निर्भया नृपाः । पक्षच्छेदभयायस्ता महार्णव इवाद्रयः ॥१५३॥[1]
नक्षत्रेष्विव भूपेषु नभसीवोत्तरापथे । यस्यैव विपुला ख्यातिर्मार्तण्डस्येव मण्डलम् ॥१५४॥
155 स श्रीमांल्लल्लियः[1] शाहिरलखानाभयः क्रुधा । निराकरिष्णोः[2] साम्राज्यात्तस्य सेवां न लब्धवान् ॥१५५॥
एवं दिग्विजयं कृत्वा प्राप्तः स निजमण्डलम् । प्रदेशे पञ्चसत्राख्ये स्वनाम्ना विदधे पुरम् ॥१५६॥
तस्य श्रीस्वामिराजस्य तनयोदकपथप्रभोः । पूर्णिमेव क्षपाशम्भोः सुगन्धाख्याभवत्प्रिया ॥१५७॥
तया समं पुरवरे सुरराजोपमो नृपः । तस्मिञ्शंकरगौरीशसुगन्धेशौ विनिर्ममे ॥१५८॥
द्विजस्तयोर्नायकाख्यो गौरीशसुरसद्मनोः । चातुर्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरम् ॥१५९॥
160 परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्लोठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ॥१६०॥
स्वल्पसत्त्वो नरपतिः स्वपुरख्यापनाय सः । तारापहारमकरोत्परिहासपुरस्य यत् ॥१६१॥
ख्यातिहेतुः पट्टवानं पशूनां क्रयविक्रयौ । इत्यादि यत्पत्तनेऽस्ति तत्तस्मिन्हि पुरेऽभवत् ॥१६२॥
राज्यप्रदेन नृपते रत्नवर्धनमन्त्रिणा । श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ॥१६३॥
चित्रं नराधिपाः पूतमूर्तयः कीर्तिनिर्झरैः । भवन्ति व्यसनासक्तिपांसुस्नानमलीमसाः ॥१६४॥
165 अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा । आधीयमानचित्तोऽभूत्प्रजापीडनपण्डितः ॥१६५॥
आरब्धैर्व्यसनैर्भूत्वा क्षीणकोशः क्षणे क्षणे । देवादीनां स सर्वस्वं जहारायासयुक्तिभिः ॥१६६॥
कर्मस्थाने पुरगृहग्रामादिधनहारिणा । तेनाट्टपतिभागाख्यगृहकृत्याभिधे कृते ॥१६७॥
धूपचन्दनतैलादिविक्रयोत्थं समाददे । द्रविणं देववेश्मभ्यः क्रयमूल्यकलाच्छलात् ॥१६८॥
प्रत्यवेक्षां मुखे दत्त्वा विभक्तैरधिकारिभिः । चतुःषष्टिं सुरगृहान्मुमोषेतरदञ्जसा ॥१६९॥
170 ग्रामान्देवगृहग्राह्यान्राजा प्रतिकरेण सः । स्वयं स्वीकृत्य चोत्पत्तिं क्ष्मां कार्षक इव व्यभात् ॥१७०॥
तुलां कृत्वा विभागीनां वर्षदेयां स पर्षदे । भुक्तिकम्बलमूल्यादिदम्भादभ्यधिकं ददौ ॥१७१॥
दिगन्तरस्थो ग्रामीणानूढभारानुपागतान् । मद्देशार्धभारमूल्यं वर्षमेकमदण्डयत् ॥१७२॥
वर्षेऽपरस्मिंस्त्रिखलान्भारमूल्यं निरागसः । तथैव संख्यया ग्राम्यान्प्रतिग्राममदण्डयत् ॥१७३॥
इत्येषा स्कन्धभारोढिः प्रथमं तेन पातिता । दारिद्र्यदूती ग्रामाणां या त्रयोदशधा स्थिता ॥१७४॥
175 स्कन्धकग्रामकायस्थग्रासभृत्यादिसंपदैः । अन्यैश्च विविधायासैर्व्यधाद्ग्रामांस्तु निर्धनान् ॥१७५॥
तुलापहारोपचयग्रामकण्डादिसंपदैः । इत्येवं तेन संवाहो गृहकृत्ये प्रवर्तितः ॥१७६॥
व्यधत्त पञ्च दिविरांस्तस्मिन्भिन्नकर्मणि । षष्ठं तथा गञ्जवरं शाकचं लवटाभिधम् ॥१७७॥

---

१५३. 1) This verse is added in margin by $A_2$; found in G R. १५४. 1) $A_1$ विपुलख्याति मा°; $A_2$ has altered this to विपुला ख्यातिर्मा°, but has subsequently restored the reading of $A_1$. G follows $A_1$, R reads as $A_2$. १५५. 1) Thus corr. by $A_2$; $A_1$ °ल्लिय:.—2) Thus corr. by $A_1$ from °रिष्णु:; R G °रिष्णो:. १५६. 1) $A_2$ gloss [illegible].—2) $A_2$ gloss [illegible]. १५७. 1) $A_2$ gloss [illegible].—2) $A_2$ gloss [illegible]. १५८. 1) Emended; A गौरीश°. १५९. 1) Thus corr. by $A_2$ from $A_1$ [illegible]°. १६८. 1) Thus $A_1$; $A_2$ °[illegible]°.—2) Thus corr. by later hand from $A_1$ °मूल्ये.—3) $A_2$ gloss कलान्तरम्:. १६९. 1) Thus $A_2$; $A_1$ मुमोषेत°. १७१. 1) Thus $A_1$; $A_2$ भुक्त°.—2) दम्भात् supplied by $A_2$ in space left by $A_1$. १७७. 1) Thus $A_1$. Cf. vi. 130; vii. 111, 119; misread दिविरान्स in R G Edd.

आत्मनो निरयं मूढः सोऽङ्गीकृत्येत्युपक्रियाम् । भाविनामकरोद्राज्ञां पापी वर्त्म नियोगिनाम् ॥१७८॥
निमित्तं मण्डलेऽमुष्मिन्नविद्यानामनादरे । राज्ञां प्रतापहानौ च नान्यः शंकरवर्मणः ॥१७९॥
मुख्येन गुणिनां राज्ञा धनहान्या प्रयापिताः । मूर्खेण येन कायस्था हास्याः पुरः प्रवर्तिताः ॥१८०॥ 180
तथा कायस्थभीत्या भूर्जाता तस्करवेषया । यथा संजायतेऽधर्मो हरणादिव भूभुजाम् ॥१८१॥
तस्मिन्घोरे प्रजादुःखे कृपार्द्रः पृथिवीपतिम् । पुत्रो गोपालवर्माख्यः कदाचिदिदमब्रवीत् ॥१८२॥
मदानुस्तात भवतः पूर्वं न्यासीकृतः स्थितः । वरो वः सत्यसंधस्य सोऽधुना प्रार्थ्यते मया ॥१८३॥
कायस्थप्रेरणाहेतैर्दैवेनाथ प्रवर्तितैः । आयासैः श्वाससंरोधैरिव प्राणवृत्तिः शरीरिणाम् ॥१८४॥
न च नामास्ति तातस्य काचिल्लोकद्वयोचिता । मनागपि हितप्राप्तिरेतया जनपीडया ॥१८५॥ 185
अदृष्टविषयां वार्तां गहनां विवृणोति कः । दृष्टेऽप्यनिष्टादन्यत्र कर्मणानेन दृश्यते ॥१८६॥
एकतो व्याधिदुर्भिक्षप्रमुखा विपदोऽखिलाः । प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः ॥१८७॥
भूभुजोऽभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते । अकालकुसुमस्येव फलसंभावनोज्झिता ॥१८८॥
दानं च सूनृता सत्कीर्तिप्रसवनं प्रभोः । लोभः पूर्वं तयोरेव विनाशाय महोद्यमः ॥१८९॥
प्रतापमायतिं शोभां हेमन्ताह्नस्य वारिदः । स्मृतिशेषां करोत्येव लोभश्च पृथिवीभुजाम् ॥१९०॥ 190
दायादा व्ययभीरुतापरिहतारब्धेर्भवन्त्युन्नता भृत्याः प्रत्युपकारकातरमतेः कुर्युर्न केऽपि प्रियम् ।
राशीभूतधनस्य जीवितहृतौ शश्वत्पतेरर्जिता भूभर्तुः क्रियते द्विषेव रभसाल्लोभेन किं नाप्रियम् ॥१९१॥
राजसंवाहनात्सार्यं यथायातो जनाद्धृतम् । तदेव लोभप्रभवः प्रजानाथ निवार्यताम् ॥१९२॥
श्रुत्वेति राजपुत्रस्य सौजन्येनोज्ज्वलं वचः । स्मितधौताधरो राजा शनैर्वचनमब्रवीत् ॥१९३॥
तथाकृत्यविसंवादि वचः सौजन्यपेशलम् । स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीम् ॥१९४॥
कुमारभावे पूर्वं मे तवेवार्द्रान्तरात्मनः । प्रजावत्सलता वत्स पर्याप्ता पर्यवर्धत ॥१९५॥ 195
सोऽहं घर्मे महाघर्मे शीते दत्त्वाच्छकञ्चुकम् । पदातिरपपादत्रः पित्रा संचारितोऽभवम् ॥१९६॥
मृगव्यादौ हयैः सार्धमटन्तं कण्टकक्षतम् । अन्तर्बाष्पं मां विलोक्य तमस्यपि पुरमगाः ॥१९७॥
स तानुवाच सामान्यो भूत्वाहं राज्यमाप्नुयाम् । काले काले सेवकानां जाने सेवापरिश्रमम् ॥१९८॥
ईदृग्दुःखमयं भुक्त्वा शास्यस्त्वमव्यथां भुवम् । प्राप्तैश्वर्यो भवेन्मूढो गर्भभ्रान्तेर्यथान्यथा ॥१९९॥
उपायैरीदृशैर्योऽहं कृतः पित्रा सुशिक्षितः । तेनापि प्राप्तराज्येन मयैव पीडिताः प्रजाः ॥२००॥ 200
गर्भवासव्यथां जातः शरीरी विस्मरेद्यथा । प्राप्तराज्यस्तथा राजा नियतं पूर्वचिन्तनम् ॥२०१॥
त्वयैव तस्मादेकोऽद्य वरो मह्यं प्रदीयताम् । प्राप्तराज्यः प्रजापीडां मा कार्षीस्त्वमतोऽधिकाम् ॥२०२॥
साध्वयमिति तेनोक्तः कृतान्योन्यस्मितैर्भटैः । राजाग्रे वीक्षितश्चासीत्कुमारो ह्रीनताननः ॥२०३॥
त्यागभीरुतया तस्मिन्गुणिसङ्गपराङ्मुखे । आसेवन्तावरा वृत्तीः कवयो भल्लटादयः ॥२०४॥
निर्वेतनाः सुकवयो भारिको लवटस्त्वभूत् । प्रसादात्तस्य दीनारसहस्रद्वयवेतनः ॥२०५॥ 205

---

१७८. 1) Thus A; *varia lectio* in R G वार्धीयस्य.—2) Thus corr. by A3 from A1 नियोगि°. १८३. 1) A2 gloss अपवयाः. १९४. 1) Thus A3; A1 °वसोचर्न°. १९७. 1) Thus corr. by A3 from A1 °रमगः. २००. 1) Thus corr. by A3 from A1 °शिताः. २०१. 1) A3 °चिन्तितम्.

कल्यपालकुले जन्म सत्येनैव प्रमाणितम् । श्रीवोचितापभ्रंशोक्तैरेव वाग्यस्य नाभवत् ॥२०६॥
वेष्टितश्मश्रुरुष्णीषो प्राणस्थाने प्रदेशिनी । ध्यानैकाग्रा दृगित्यासीत्सुखराजस्य[1] मन्त्रिणः ॥२०७॥
योऽयमार्योचितो वेषो दुर्नयासेविनः प्रभोः । छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनाम् ॥२०८॥ युग्मम् ॥
सोऽनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया । भूरं दार्वाभिसारेशं शर्वर्यां नरवाहनम् ॥२०९॥
210 प्रजाभिशापे पतिते नृपस्योन्मार्गवर्तिनः । त्रिंशात्रिंशाः सुतास्तस्य व्यपद्यन्तामयं विना ॥२१०॥
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजाम् । क्षणादेव क्षयं याति प्रजाविप्रियकारिणाम् ॥२११॥
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत्तु चिन्त्यताम् । प्रनष्टं तस्य नामापि यथा क्रूरेण कर्मणा ॥२१२॥
नाम्ना पत्तनमित्येव प्रख्यातं स्वपुरं कृतम् । कस्याप्यस्याभिधाध्वंसि यथा शंकरवर्मणः ॥२१३॥
स्वकीयः सुखराजस्य तेन द्वाराधिपः कृतः । वीरानकाभिधे स्थाने प्रमादावासदुर्बंधम् ॥२१४॥
215 तत्कोपात्स स्वयं राजा बद्धबाधो मदोर्जितः । वीरानकं समुन्मूल्य प्रविवेशोत्तरापथम् ॥२१५॥
सिन्धुकूलाभयान्देशाञ्जित्वा भूरीन्भयातुरैः । कृतानतिर्महीपालैः प्रत्यावृत्तोऽभवत्ततः ॥२१६॥
उरशां विशतस्तस्य वास्तव्यैरौरशैः समम् । निकेतहेतोः सैन्यानामकस्मादुदभूत्कलिः ॥२१७॥
गिरिभृङ्गाधिरूढेन श्वपाकेन निपातितः । वेगवाही शरस्तस्य प्रमादादविशद्गलम् ॥२१८॥
मुमूर्षुरग्रामान्कटकं संरक्ष्य नयतेति सः । उक्त्वा कर्णीरथारूढः स्थानात्तस्माद्विनिर्ययौ ॥२१९॥
220 हीनदर्शनसामर्थ्यः परिज्ञाय शनैर्गिरा । क्रन्दन्त्या वपुरालिङ्ग्य स्थितायाः क्षामभाषितः ॥२२०॥
पुत्रं गोपालवर्माख्यं न्यासीकृत्य च रक्षितुम् । शिशुदेश्यं महादेव्याः सुगन्धाया अबान्धवम् ॥२२१॥
फाल्गुणे कृष्णसप्तम्यां वत्सरे सप्तसप्ततौ । उत्खायमानविशिखो मार्ग एव व्यपद्यत ॥२२२॥ तिलकम् ॥
सुखराजादयः सैन्यं रक्षन्तः परभूमिषु । वृत्तान्तैर्गोपयन्तस्तं यान्त एवाभवन्पथि ॥२२३॥
तं वस्त्रसूत्रैस्ते मूर्ध्नो नम्रतोन्नततावहैः । प्रतिप्रणामं ग्रामाणां सामन्तानामकारयन् ॥२२४॥
225 षड्भिर्दिनैर्निजे स्थाने ग्रामे बोल्यासकाभिधे । चक्रिरे गतसंत्रासास्ततस्तस्यान्त्यसत्क्रियाम् ॥२२५॥
तिस्रः सुरेन्द्रवत्याद्या राज्ञ्यो राजानमन्वयुः । वेलावित्तः कृतज्ञश्च जयसिंहादयः कृती ॥२२६॥
द्वौ लाडो वज्रसारश्च तं भृत्यावनुजग्मतुः । इति षड्भिश्चिताकुण्डैः सहसाक्रियताग्निसात् ॥२२७॥
ततो जुगोप गोपालवर्मा धार्मिकतोज्ज्वलः । सुगन्धया पाल्यमानः सत्यसंधो वसुंधराम् ॥२२८॥
मध्ये लालितकादीनां दुर्वृत्तानां वसन्नपि । अनतिक्रान्तबाल्योऽपि दुःसंस्कारान्न सोऽग्रहीत् ॥२२९॥
230 भूपालजननी भोगैर्वैधव्येऽधिकमुन्मदा । सा प्रभाकरदेवाख्यमचीकमत मन्त्रिणम् ॥२३०॥
तया निर्भरसंभोगप्रीतया स व्यधीयत । सौभाग्यपरभृङ्गारमौलिचक्रत्रयाङ्कितः ॥२३१॥
कोशाध्यक्षेण राज्ञ्यास्तस्या लुण्ठितसंपदा । उदभाण्डपुरे तेन शाहिराज्यं व्यजीयत ॥२३२॥

२०७. [1]) Thus corr. by $A_2$ from $A_1$ °रागस्व. २१०. [1]) न supplied by $A_2$.—[2]) $A_1$ writes below this word ५०. २११. [1]) $A_2$ gloss पतन्. २१४. [1]) $A_2$ gloss द्वारविषयां वीरानकं.—[2]) $A_4$ gloss सुखराजस्वकीय. २१७. [1]) $A_2$ gloss उशू. २१९ [1]) Thus $A_2$; $A_1$ °कडान्स्या°. २२०. [1]) Thus corr. by later hand from $A_1$ °लिङ्ग्या. २२३. [1]) $A_2$ gloss मन्त्रिणः.—[2]) Thus $A_1$; $A_2$ वृत्तान्तं गो°. २२५ [1]) Thus A R G; $A_2$ gloss वराहमूलसमीपे द्वारवर्त्यां. २२६. [1]) Emended: A R वालावित्त; G वालावित्तु. Cf. वेलावित्त vi. 73, 106, 324. २२९. [1]) $A_2$ gloss लालितकाः पशानयः. २३२. [1]) Thus corr. from $A_1$ उदाभाण्ड° by $A_2$ which adds the gloss वैहन्द; R G read as $A_2$. Cf. उदभाण्डपुरे v. 153.—[2]) Thus $A_1$; $A_2$ व्यधीयत; G R follow $A_2$.

आज्ञातिक्रमिणः शाहेः कृत्वा कमलुकाभिधाम् । तोरमाणाय स प्रादाद्राज्यं लल्लियसूनवे ॥२३३॥
प्रत्यावृत्तोऽथ नगरं विवेश विजयोर्जितः । शौर्यभृङ्गारवसती साभिमानः स्वविग्रहे ॥२३४॥
स राजजननीजारः साहंकारो जयार्जनात् । मानक्षतिमधिक्षेपैर्वीराणां व्यधितान्वहम् ॥२३५॥ 235
क्षुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे । तेनावृते संप्रवेशो नाभूदन्यस्य कस्यचित् ॥२३६॥
शनैर्विश्रान्तवार्तस्य धनमानापहारकृत् । सोऽभूदक्षिगतोऽत्यर्थं राज्ञो गोपालवर्मणः ॥२३७॥
भियते यत्र गञ्जेऽस्मिंस्तस्मै शाहिविग्रहे । गतमित्यब्रवीद्भूपं स कोशगणनोद्यतम् ॥२३८॥
अथ गञ्जाधिपो राजभीतः स्वार्थोपवेदिनम् । रामदेवाह्वयं बन्धुमभिचारमकारयत् ॥२३९॥
तयाभिचारक्रियया भुक्तभूर्वत्सरद्वयम् । गोपालवर्मनृपतिर्जातदाहो व्यपद्यत ॥२४०॥ 240
व्यक्तीभूतकुकर्मा स राजदण्डभयाकुलः । रामदेवोऽवधीत्पापः स्वयमेव स्वविग्रहम् ॥२४१॥
रथ्यागृहीतो गोपालवर्मभ्राताथ संकटः । बभूव प्राप्तराज्यः स दशाभिर्दिवसैर्व्यसुः ॥२४२॥
अथ वंशक्षये वृत्ते राज्ञः शंकरवर्मणः । प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयम् ॥२४३॥
गोपालपुरगोपालमठगोपालकेशवान् । सा पुरं च स्वनामाङ्कं विदधे धर्मवृद्धये ॥२४४॥
गोपालवर्मणो जाया नन्दानिन्द्यान्वयोद्भवा । शिशुरप्यभवन्नन्दामठकेशवधारिणी ॥२४५॥ 245
अन्तर्वत्न्याः क्षणे तस्मिन्पत्न्या गोपालवर्मणः । जयलक्ष्म्यां बबन्धास्थां श्वश्रूः संतानकाङ्क्षिणी ॥२४६॥
तस्यां विपन्नापत्यायां प्रसवान्तेऽतिदुःखिता । साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ॥२४७॥
तस्मिन्काले महीपालनिग्रहानुग्रहक्षमम् । तत्र तन्त्रिपदातीनां कृतसंहत्यभूत्कुलम् ॥२४८॥
ततः समाश्रितैकाङ्गा स्वयं संवत्सरद्वयम् । सुगन्धा विदधे राज्यं सा मिथस्तेन तन्त्रिणाम् ॥२४९॥
योग्याय दातुं साम्राज्यं कस्मैचित्सा किलैकदा । मन्त्राय मन्त्रिसामन्तांस्तन्त्र्येकाङ्गानमीलयत् ॥२५०॥ 250
अवन्तिवर्मवंशान्ते नप्तारं शूरवर्मणः । गग्गायाः स्वकुटुम्बिन्याः संजातं सुखवर्मणा ॥२५१॥
अनुव्रतो मे संबन्धिस्नेहादेवं भवेदिति । राज्ये निर्जितवर्माख्यं कर्तुं तस्या मनोऽभवत् ॥२५२॥ युग्मम् ॥
तथा तदुक्तं विषयव्यसनित्वेन जागरात् । रात्रौ दिवाशयतया योऽप्यनुत्थानदूषितः ॥२५३॥
नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता । इत्युदीर्याभवन्भ्रान्ता यावत्केचन मन्त्रिणः ॥२५४॥
संहतैर्भेदनिर्यातैस्तावन्निर्जितवर्मजः । दशवर्षः कृतो राजा पार्थस्तन्त्रिपदातिभिः ॥२५५॥ तिलकम् ॥ 255
ते[1] गञ्जाधिपवाक्यानां सुगन्धोत्पाटनात्कृतम् । प्रायश्चित्तममन्यन्त मानक्षतिविधायिनाम् ॥२५६॥
सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । कृताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ॥२५७॥
शरणं प्रत्यभाङ्क्ष्यो यो यस्तस्याः क्रमागतः । नं तमैक्षिष्ट निर्यान्ती विपक्षैः सह संगतम् ॥२५८॥
सर्वे एकाङ्गनंवते संभूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरस्थिताम् ॥२५९॥

२३३. [1]) Thus corr. by later hand from $A_1$ °भ्य.—[2]) Thus $A_2$; $A_1$ तोमराणाय. २३५. [1]) Thus $A_2$; $A_1$ °जननीसङ्गात्सा-भिमानी.—[2]) Thus corr. by $A_2$ from $A_1$ मन:°. २३७. [1]) Thus corr. by $A_2$ from $A_1$ °वातप°. २३९. [1]) $A_2$ gloss प्रभाकर-. २४३. [1]) $A_2$ gloss गोपालवर्मसङ्कटयोर्माता सुगन्धा.—[2]) Thus corr. by $A_2$ from $A_1$ पुरम्. २४४. [1]) $A_2$ gloss सुरीपुरम्. २४५. [1]) $A_2$ gloss सम्प्रीमठ. २४८. [1]) Thus corr. by $A_2$ from $A_1$ विग्रह°.—[2]) Thus $A_2$; $A_1$ तत्र. २४९. [1]) Thus emended; A G R तस्मि°.—[2]) $A_2$ v. l. मन्त्रिणाम्; struck out. २५०. [1]) Thus $A_2$; $A_1$ °स्तान्तन्त्र्यै°. २५२. [1]) $A_2$ gloss निर्जितवर्मा. २५६. [1]) $A_2$ gloss कौलरक्षाः. २५७. [1]) Thus corr. by later hand from $A_1$ राज्य°.—[2]) Thus $A_2$; $A_1$ हता°. २५९. [1]) Thus $A_1$; $A_2$ एकोन°.—[2]) $A_2$ gloss वराहमूले.

260 तामापतन्तीमाकर्ण्य पार्थानुगतका भयात् । वैशाल्ये तन्त्रिणः सर्वे निर्ययुः समरोन्मुखाः ॥२६०॥
ते जित्वा नवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान्भूरिसंघातान्बबन्धुस्तां पलायिताम् ॥२६१॥
भिण्पालकविहारान्तस्तैर्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ॥२६२॥
अस्मिन्धनजनक्षैण्यनिमित्ते मण्डलोत्तमे । सर्वतोदिक्समुत्स्थायथानर्थपरंपरा ॥२६३॥
जनकः पालको भूत्वा पङ्गुर्बालस्य भूपतेः । सामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ॥२६४॥
265 शुभुओ नामकायस्था इवान्योन्यविपाटनम् । हस्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ॥२६५॥
यद्राजैः कृत्यकुडजाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां हुण्डिकादानाद्भूभुजां जीविकाभवत् ॥२६६॥
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ॥२६७॥
तदात्मजाः क्षणे तस्मिन्गहनद्रोहयाजिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासैर्धनार्जनम् ॥२६८॥ युग्मम् ॥
सार्धं सुगन्धादित्येन गूढं शंकरवर्धनः । तेषां ज्येष्ठो बडलक्ष्म्यो मुमोष नृपमन्दिरम् ॥२६९॥
270 क्षीणप्रजे क्षणे तस्मिन्क्षारपात इव क्षते । उदीर्णः प्राविताशेषशरच्छालिरजृम्भत ॥२७०॥
खार्यां सहस्रक्रेयायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ॥२७१॥
शवैर्निरवकाशाम्बुसंसेकोच्छूनविमर्दैः । वितस्ता सर्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ॥२७२॥
विश्वतोऽस्थिमये जाते नैविद्यास्थितिमण्डले । सर्वभूतभयाराधि श्मशानैक्यमभावत ॥२७३॥
महार्घधान्यसंभारविक्रयप्राप्तसंपदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यताम् ॥२७४॥
275 आधेयः क्ष्माभुजः सोऽभून्मन्त्री यस्तादृशीः प्रजाः । विक्रीय बाहयन्नासीत्तन्त्रिणां हुण्डिकाधनम् ॥२७५॥
अटव्यां वृष्टिसंपाते वातवैरेदपद्रुतम् । बहिः सर्वं जनं पश्यन्कश्चित्प्राप्तोष्णमन्दिरः ॥२७६॥
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषाधिपम् । राजधानीस्थितः पङ्गुः स्वसुखं बहमन्यत ॥२७७॥ युग्मम् ॥
तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन्क्षणे नीताः संक्षयं राजराक्षसैः ॥२७८॥
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासंपातसंभूता बुद्बुदा इव दुर्दिने ॥२७९॥
280 पार्थः पितरमुत्थाप्य कदाचित्प्राभवत्स्वयम् । कदाचित्स तमुत्थाप्य तन्त्रिभक्तिकयाप्यभूत् ॥२८०॥
अक्षीणवत्पङ्गुवधूर्बद्धामण्डलं मुदा । सुगन्धादित्यवीजाधो व्यवायविधिसेवया ॥२८१॥
राज्ञ्यां बप्पटदेव्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास कण्डूतिं साध्वस्यार्यवणां धनैः ॥२८२॥
भगिनीभगसौभाग्यबद्धराज्याः स्वयं ददुः । यां पङ्गवे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ॥२८३॥
सुगन्धादित्यमौत्सुक्यात्सापि देवी मृगावती । स्वयं संबुभुजेऽभ्यर्थ्य कान्ता कामितकामिनी ॥२८४॥
285 पर्यायेणाभवत्पङ्गुः स तयोर्भोगवृद्धये । दरिद्रयोः पितोरेकं भुक्तिपात्रमिवान्वहम् ॥२८५॥

---

२६४. [1]) $A_2$ gloss निर्जितवर्मा. २६६. [1]) Thus $A_1$; altered by later hand to यद्राजैः. २६७. [1]) $A_2$ gloss पांचहडन इति प्रसिद्धे ग्रामे.—[2]) $A_4$ gloss पङ्गुभ्रात्रुत्रेण. २६८. [1]) $A_2$ gloss निर्जितवर्मणाः तदात्मजाः चक्रवर्मा शूरवर्मा । शम्भुवर्मा: शंकरवर्धनः मेरुवर्धनपुत्राः २६९. [1]) $A_2$ gloss मन्त्रिणा.—[2]) $A_4$ सुगन्धादित्येन सह. २७०. [1]) Thus corr. by later hand from $A_1$ उदीर्णः; $A_4$ gloss स्वोपी (Kaśmiri). २७१. [1]) $A_4$ gives the full date *Saptarshi* ३९९३. २७२. [1]) Thus $A_1$; altered by later hand to दुर्लक्ष°. २७३. [1]) जाते supplied by $A_3$ in space left by $A_1$. २७४. [1]) $A_3$ महार्घ°. २७५. [1]) Thus $A_1$; $A_3$ आधेयः. २७६. [1]) Thus corr. by $A_3$ from $A_1$ वृष्टि°. २८१. [1]) $A_2$ gloss वधूर्नारी.—[2]) $A_2$ gloss व्यवायः मैथुनम्. २८२. [1]) $A_4$ gloss चक्रवर्मणाद्धः. २८५. [1]) $A_4$ gloss तयोर्देव्योर्देवीमृगावत्योः पङ्गुरभूत्.

पुत्रयो राज्यलाभाय स्पर्धयाभ्यां स्वमन्त्रिणे । दत्ता त्रिभुवनभट्टा धनदानैः[1] सदक्षिणा ॥२८६॥

अथ पार्थं समुत्थाप्य सपित्रा पङ्गुराश्रितः । तन्त्रिभिः सप्तनवते वर्षे पैत्र्येभिषेचितः ॥२८७॥

सार्धेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतम् । चक्रवर्माभिधं राज्ये क्षीणपुण्यो व्यपद्यत ॥२८८॥

पैतृके चाक्षमे राज्ये पार्थस्यानुचरा व्यधुः । एकाङ्गैः सह संधानं तत्र तन्त्रिपदातयः ॥२८९॥

मातुर्बप्यटदेव्याः स कंचित्कालं शिशुर्नृपः । मातामह्याः क्षिड्डिकायाः पाल्यस्त्वासीत्समा दश ॥२९०॥ 290

बाल्यादव्यक्तदौःशील्ये तस्मिंस्तत्पालनं तयोः । निर्दोषमासीदण्डस्थफणिलालनसंनिभम् ॥२९१॥

जातः पङ्गोर्मृगावत्यां वत्सरेष्वेव तन्त्रिभिः । चक्रवर्माणमुत्थाप्य शूरवर्मा नृपः कृतः ॥२९२॥

निःकोशा मातुलामात्याः प्रययुः स्वार्थतत्पराः । अदत्त्वा तन्त्रिणां देयं तस्योत्पाटनहेतुताम् ॥२९३॥

अनुवृत्तोपि स क्ष्माभृद्विना भूरिधनार्पणम् । गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः ॥२९४॥

वर्षे गते समुत्थाप्य कृतोत्पक्षितया नृपम् । तद्वर्षे पुनः पार्थं व्यधुस्तन्त्रिपदातयः ॥२९५॥ 295

अभूत्साम्बवती वेश्या साम्बेश्वरविधायिनी । पार्थप्रिया सन्धिपकसंमते ज्ञातवक्रिका ॥२९६॥

कालापेक्षी चक्रवर्मा ततोर्पयद्धनं बहु । एकादशाब्दस्याषाढे कृतो भूयोपि तन्त्रिभिः ॥२९७॥

पार्थादीन्यैः समुत्पाद्य भुक्तं चक्रिकया पुरा । तैस्तैः स्थानैश्च ये तेभ्यो जीवनान्युपलेभिरे ॥२९८॥

पिता भ्राता च वैरस्य राज्यादुत्पाटितोऽभवत् । संबन्धिभ्योपि पैतृभ्यः कन्यां दत्त्वेतरेतरम् ॥२९९॥

अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः । मेरुवर्धनपुत्राणामधिकारसमर्पणम् ॥३००॥ तिलकम् ॥ 300

कृतोऽक्षपटलाधीशस्तेन शंकरवर्धनः । गृहकृत्येप्यसत्कृत्यो धार्मिकः शंभुवर्धनः ॥३०१॥

पैत्रे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणाम् । अदत्तकुण्डिकादेयः पलायिष्ट भयाकुलः ॥३०२॥

स्थिते मडवराज्यान्तस्तस्मिञ्शंकरवर्धनः । राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छंभुवर्धनम् ॥३०३॥

आवर्जितैः स निखिलैरधिकोत्कोचवर्षया । वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत् ॥३०४॥

तीर्थस्थितः स्वकुलजांस्तिमिरत्ति मुङ्क्ते मौनी बकास्तिमिमुपेत्य वनान्तवासी ।
व्याधो निहन्ति तु बकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचञ्चुतायाः ॥३०५॥ 305

भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीढक्कमासिनः । एकदा डामराग्र्यस्य संग्रामस्याविशद्गृहम् ॥३०६॥

ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः । प्रणम्य ग्राहयामास संभ्रमान्निजमासनम् ॥३०७॥

राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहाय्यकार्थिनम् । तं विपत्पेशलं मत्वा विचिन्त्योवाच डामरः ॥३०८॥

तन्त्रिणां वा तृणानां वा राजन्का गणना रणे । स्वसेनसार्थे सामर्थ्यं कस्मिंश्च मम कर्मणि ॥३०९॥

प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि । विस्मरन्त्युपकारं हि कृतकार्या महीभुजः ॥३१०॥ 310

कर्णीरोहे च आलम्बहेतुर्भूभृच्चिमन्वि तम् । कुठारिकस्तरस्कन्धमिवाधोगमनोन्मुखः ॥३११॥

श्रीधैर्यादिप्रकर्षेण येनोपक्रियते नृपः । प्राप्तोदयः स तेनैव पाङ्क्तु वैर्युपकारिणम् ॥३१२॥

---

२८६. [1]) A₂ reads धनधान्यैः. २९०. [1]) Thus corr. by later hand from A₁ तथि°. २९२. [1]) A₄ gloss मेरुवर्धनपुत्र्यां — [2]) Thus A₂; A₁ [illegible]. २९६. [1]) A₂ gloss साम्बेश्वरप्रासादे. २९८. [1]) A₄ gloss अत्र सर्वत्र [illegible] मेरुवर्धनपुत्रपरामर्शः.— [2]) A₄ पार्थादिभ्यः. २९९. [1]) A₄ gloss पङ्गुः.— [2]) A₄ gloss पार्थः शूरवर्मा च.— [3]) A₄ gloss चक्रवर्मणः.— [4]) A₄ gloss कृष्णावती.— [5]) A₄ gloss पङ्गुपुत्रैः. ३०५. [1]) Emended; A मुक्तु°. ३१०. [1]) Thus corr. by A₃ from A₁ °स्मानेव.

अस्मिन्स्थिते विपद्भूदिति संचिन्त्य वर्ज्यते । मूढैः परिवृढैरापत्सेवको मङ्गलेप्सुभिः ॥३१३॥
संपद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः । मन्ये प्रमादस्खलितमुत्पन्नं हृदि कुर्वते ॥३१४॥
315 आमयार्तिरिपुत्रासक्षुदादौ दृष्टवैकृतान् । लब्धोदया ह्रीभयेन क्ष्मापा घ्नन्त्यनुयायिनः ॥३१५॥
राज्ञः सतोपि नाश्वासो वस्त्वेभस्येव कर्णयोः । अविभुग्न[1]प्रकृतयो ध्वनन्ति मधुपा इव ॥३१६॥
दिवसे संनिधानेन पिशुनप्रेरणा प्रभोः । ईर्ष्यालुना स्वैरिणीव रक्षितुं यदि पार्यते ॥३१७॥
राजवजन्मुपाध्यायो देवी यच्छिक्षयेदहः । तत्र प्रजागरः कर्तुमसर्वज्ञैर्न शक्यते ॥३१८॥
कथंचिदह्नि हृदये कुशलैर्विनिवेशिता । शिक्षा गौरंखरेणेव राज्ञा विस्मार्यते निशि ॥३१९॥
320 न के लोभं समुत्पाद्य जिह्वया स्निग्धदीर्घया । पिपीलका इव ग्रस्ताः क्ष्मापालैः शल्यकैरिव ॥३२०॥
जानाति हन्तुं हन्तव्यमासन्नं न तु दूरगम् । एको बकः परः सत्यं द्रोहवृत्तिर्महीपतिः ॥३२१॥
न नाम कण्टकाकीर्णः कौटिल्यं लक्ष्यतां नयेत् । कालापेक्षी क्षितिपतिः शरीरमिव जाहकः ॥३२२॥
नमन्नपि हरिर्हन्त्यादाश्लिष्यन्नपि पन्नगः । विहसन्नपि वेतालः स्तुवन्नपि महीपतिः ॥३२३॥
अद्रोहवृत्त्या तस्मात्त्वं द्रक्ष्यस्यस्मान्सदा यदि । ससैन्यस्ते तदेषोहं प्रातरेव पुरःसरः ॥३२४॥
325 तदाकर्ण्याब्रवीद्राजा लज्जास्मितसिताधरः । स्वार्थमेव यूयं संरक्ष्या मम पूर्वोपकारिणः ॥३२५॥
ततो निक्षिप्य चरणं रक्ताक्ते मेषचर्मणि । कोशं चक्रतुरन्योन्यं सखड्गौ नृपडामरौ ॥३२६॥
अथ संघटितासंख्यचण्डडामरमण्डलः । चक्रवर्माकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ॥३२७॥
तस्मिन्क्षणे पुरस्कृत्य योद्धुं शांकरवर्धनम् । विनिर्ययुः सिताष्टम्यां चैत्रे तन्त्रिपदातयः ॥३२८॥
कालानुवृत्तिमच्छन्नं तेषां संभावनोज्झितम् । स तत्वरे पुरस्कर्तुं चक्रवर्मा स्वविक्रमम् ॥३२९॥
330 अथ प्रवृत्ते संग्रामे घोरे पद्मपुराद्बहिः । जघान प्रेरितहयः पूर्वं शांकरवर्धनम् ॥३३०॥
हते सेनाधिपे तत्र शतधा तन्त्रिवाहिनी । प्रययौ पवनाघातप्रेरिता नौरिवार्णवे ॥३३१॥
पृष्ठानुसरणोद्युक्तो नृपस्तेषामपाहरत् । गतिं तुरगवेगेन शिरःश्रेणिं तथासिना ॥३३२॥
भ्रमतः समरे बभ्रुर्वीरपट्टाञ्चलच्छटा[1]ः । चक्रवर्ममृगेन्द्रस्य सटापटलविभ्रमम् ॥३३३॥
किमन्यत्पञ्चषाण्यासन्सहस्राणि रणाङ्गने । पतितानि क्षणादेव हतानां तत्र तन्त्रिणाम् ॥३३४॥
335 तन्त्रिणो रणसंरम्भपरिश्रान्ताः क्ष्मातले । गृध्रपक्षकृतच्छाये शायिताश्चक्रवर्मणा ॥३३५॥
विशुद्धवंश्यैर्गुणिभिर्निहतै[1]ः संभितैः समम् । अभूषयद्वीरशय्यां भूरः शांकरवर्धनः ॥३३६॥
उदयं संहता एव संहता एव च क्षयम् । प्रयान्तः स्पृहणीयत्वं तान्त्रिणः कस्य नागमन् ॥३३७॥
माननीयानधृष्यांश्च महावंश्यान्महीपतीन् । अहीनिव खिलीकृत्य भिक्षयन्तः क्षणे क्षणे ॥३३८॥

---

३१६. [1]) $A_3$ note न विभुग्ना प्रकृतिर्येषां ते । अविभुग्नप्रकृतयः सूचकाः यस्य राज्ञः कर्णयोर्विषये ध्वनन्ति । तस्य सतोपि साधोरपि स्वयं नाश्वासः । इभस्येव । यथा हस्तिनः कर्णयोर्मलिना मधुपा ध्वनन्ति ॥—[2]) $A_2$ gloss कुटिलाः. ३१९. [1]) $A_3$ गौपस्य°. ३२०. [1]) $A_3$ भोगं. ३२१. [1]) Thus corr. by later hand from $A_1$ परं. ३२२. [1]) Thus $A_1$ and R, misread in G and Edd. आर्यकः; $A_3$ gloss आर्यको धूकमार्जारखट्टाकैरण्डकास्तु चेति विश्वः. ३२६. [1]) $A_3$ gloss विश्वासमित्यर्थः । तथो मैत्रीसम्बन्धार्थे रक्ताक्ते मेषचर्मणि (gloss भस्त्रायां) परस्परं पादप्रक्षेपं कुरुत इति शपथसंप्रदायः । दिव्ये च कोशः पुष्पादिकुड्मलासिपेयानयोरिति मङ्खः. ३३१. [1]) $A_2$ विशीर्णा. ३३२. [1]) Thus corr. by later hand from $A_1$ °सारणो°. ३३३. [1]) $A_2$ gloss अधारयन्.—[2]) $A_2$ gloss शिरस्त्रबन्धनार्थं वस्त्रो यो वीरपट्टः डोपट इति प्रसिद्धः तस्य अञ्चलच्छटाः फिते इति प्रसिद्धाः. ३३६. [1]) Thus $A_1$; altered by later hand to °हताः.

राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरम् । दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे ||३६७||

नृपं हारितचित्तं तं विज्ञायैकः पिता विटः । ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ||३६८||

देव गीतमिदं याते संभाव्यैते मनोरमे । कर्पूरपारीपतितं मैरेयमिव हारिताम् ||३६९||

370 गायन्त्योर्मार्जितामेतां रागावन्त्यचतुष्किकाम् । अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः ||३७०||

करन्यस्तकपोलान्तमुन्नमयन्त्याविमे ध्रुवम् । कटाक्षैः कुरुतो व्योम्नि वैमानिकविमोहनम् ||३७१||

जानत्या स्वाभयां चर्चामनयोरेकयाचयोः । असूयास्मितगर्भोयं कटाक्षः पश्य पातितः ||३७२||

गायन्त्येकानतमुखी कर्णव्यालोलकुण्डला । विपरीतरतोद्रेकहृतारम्भेव शोभते ||३७३||

सफलं तस्य तारुण्यमीदृश्यो निर्जने स्त्रियः । औत्सुक्यादिरहे यस्य गायन्त्येवंविधैः स्वरैः ||३७४||

375 उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः । एकसार्थप्रयातेभ्यः कथमेको विवर्ज्यते ||३७५||

नेत्रस्य रूपं श्रोत्रस्य ध्वनिं संस्पृशतो न चेत् । तदङ्गस्त्वाङ्म्यकान्ताङ्गं स्पृशतो दुष्कृतं कुतः ||३७६||

अभिलाषाङ्कुरः सिक्त इव तैर्विटभाषितैः । राज्ञः स्वभावलोलस्य शतशाखत्वमाययौ ||३७७||

ये[1] विस्तारितवर्णसंकररुचः संदर्श्य गोत्रान्तकृद्बद्धावस्थितिचापलक्रममलं पार्श्वे ध्वनन्त्युद्धताः ।
नीयन्ते विपदावपातपरतां लब्धोदयास्ते क्षणात्स्निग्धा वारिधरैरमी च रभसान्नृपालकैर्हा विटैः ||३७८||

वस्तु क्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा जडान्यदि विमोहयितुं समर्थाः ।
न स्युर्विटा अथ कुतर्कपथस्थिताश्च निस्त्योहसेषु निरयेषु मृगाश्चरेयुः ||३७९||

380 संतोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलम् । अमार्गत्यागराधेयः शुद्धान्तमनयन्नृपः ||३८०||

कान्तोऽस्याः क्षितिवल्लभोयमभिधेत्युर्वीपतेरेकतो भूतेसावतिचण्डताण्डववपुर्डोम्बः स्वनाम्नान्यतः ।
मध्ये यत्किमपीति गीतरचना काव्यं वदेत्तद्विदो लक्ष्मीं क्षपयन्ति ताभिरगणुधान्कीर्त्यर्थिनः पार्थिवान् ||३८१||

वेश्यानुरागस्य महेन्द्रचापधाम्नो हरिद्रारसरञ्जनस्य । उपाङ्गगीतस्य च हारिणोपि सौन्दर्यमस्थैर्यहतप्रकर्षम् ||३८२||

दर्शनाभ्याससंवृद्धचक्षूरागः क्षमापतिः । विना श्वपाककन्ये ते न पुनः प्राप निर्वृतिम् ||३८३||

गायन्त्यौ शयनोपान्ते शनैर्विहितचुम्बनम् । नृपं रतिसुखाभिज्ञं तं हठात्ते प्रचक्रतुः ||३८४||

385 समागमेन नव्येन नर्योर्वैयात्यशोभिना । चक्रे क्षपितसामर्थ्यः स लज्जोद्वहनाक्षमः ||३८५||

रत्यन्तसुलभोद्भेदैर्निःसृतैः स्वेदबिन्दुभिः । भाग्योष्मसंक्षयजडं वपुस्तस्य व्यधीयत ||३८६||

रागान्धेन कृता हंसी महादेवी महीभुजा । भेजे राजवधूमध्ये वालव्यजनवीजनम् ||३८७||

---

३६८. 1) $A_2$ तत्र. ३६९. 1) $A_2$ gloss हरति मन इति हारी तस्य भावः तथा तां यातमिति सम्बन्धः. ३७०. 1) Thus corr. by $A_1$ from $A_1$ गायन्त्यो.—2) Thus $A_2$; $A_1$ कमार°.—3) $A_2$ gloss वन्तपङ्क्तिचतुष्टयं. ३७६. 1) $A_2$ gloss दुष्कृतं.—2) $A_2$ gloss त्वगिन्द्रियस्य. ३७८. 1) $A_2$ gloss वारिधराः विटाश्च.—2) $A_2$ gloss वर्णाः नीलपीताद्याः ब्राह्मणाद्याश्च.—3) $A_2$ gloss गोत्रान्तकृति इन्द्रे बद्धा अवस्थितिर्येन स चासौ चापः धनुः इन्द्रचापः तस्य लक्ष्म । गोत्रान्तकृद्भिः कुलक्षयकारिभिः पापिभिः बद्धा स्थितिर्यस्य । तत् चापलं मर्यादं ध्वनन्ति इति च धर्म निविडं इति चापलविशेषणं.—4) Thus corr. by later hand from नीयन्ते.—5) $A_2$ कुपथाव°.—6) $A_2$ तरसा नृ°. ३७९. 1) $A_2$ gloss निस्त्रपुरुषेषु. ३८०. 1) $A_2$ gloss अपारकस्यायैं कर्णः. ३८१. 1) $A_2$ gloss अयं क्षितिवल्लभः राजा अस्याः कस्याश्चित्कान्तः अस्यां विषये अयं राजा लग्नः इत्यभिधा कथितमेकतः.—2) $A_2$ gloss डोम्बेनोच्चारिता उर्वीपतेः अभिधा नामधेयं एकतः इत्यस्ति इति मायामिति कान्तोस्या इति.—3) $A_2$ gloss उर्वीपतिः.—4) $A_2$ डाम्बस्य नामा°.—5) $A_2$ मध्येन्यत्किम°.—6) $A_2$ gloss यत्किमपीति । यत्किञ्चित्कालकालमात्रं लौकिकं गीतं । तस्य रचना एव काव्यं.—7) $A_2$ gloss एतत् गीतिरचनाकाव्यं विदन्ति एतद्विदः.—8) $A_2$ gloss येषां पार्थिवानां लक्ष्मीः अलक्ष्मीः तां.—9) $A_2$ gloss अपहरन्ति.

स्खलिता तत्कथापापस्पर्शभीत्या सरस्वती । कथंचिच्चतुरस्येव सैव प्रस्ताव्यते मया ॥४१६॥

आसीत्पितृकुलं तस्य मद्यं दुर्नृपरक्षसः । क्षीबाभिधस्य दृष्याद्यविशेषस्येव जीवनम् ॥४१७॥

तस्यासंहतकराघातसटांकारकरोटिकाः । प्राणस्कन्दादिवाघ्राताः सभायां मुख्यमन्त्रिणः ॥४१८॥

तेनात्याचारणत्वेन निर्लज्जास्तमरञ्जनम् । कालान्तरेण दैवेव भूमिपालैर्भविष्यते ॥४१९॥

420 पर्वगुप्तोऽभवत्तस्य सर्वेभ्योऽप्यधिकं प्रियः । आस्थाने नर्तनं कुर्वन्नपाकृतकटीपटः ॥४२०॥

आ सन्निविद्रवाद्दृष्ट्वा कीटप्रायान्महीपतीन् । पर्वगुप्तः सर्वदाभूद्राज्यावाप्तिकृतोद्यमः ॥४२१॥

तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः । पीतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः ॥४२२॥

भूभटः शर्वटश्चौजः कुमुदः सोमृताकरः । पर्वगुप्तेन संबन्धं चक्रिरे कोशपायिनः ॥४२३॥

गवाक्षासरसि ग्रामश्रीजलोद्यागलाब्जजः । संग्रामडामरगृहे यो रक्कः ख्यातपौरुषः ॥४२४॥

425 पदातिमात्रो भूपेन दृष्टशौर्यः स संयुगे । महोदरो महाकायः प्रापितो मुख्यमन्त्रिताम् ॥४२५॥

यादृशी तेन ददृशे देवी श्रीः सरसोऽन्तरे । तादृग्रक्कजयादेवीत्यभिधानेन निर्ममे ॥४२६॥

राज्यं निष्कण्टकं कृत्वा धूर्तेनापजिहीर्षुणा । प्रेरितः पर्वगुप्तेन भूभृच्चक्रे कुलक्षयम् ॥४२७॥

तेन लुण्ठितसर्वस्वः पार्थस्तस्थौ कलत्रवान् । श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः ॥४२८॥

शिशूञ्शंकरवर्मादीन्भ्रातॄन्कारानिरोध्य सः । तत्र स्थितानन्नपानैरुत्क्रान्तासूनकारयत् ॥४२९॥

430 उद्यतः पितरं हन्तुं मन्त्रिणोऽनुमतमदात् । बद्धपट्टान्व्यधाद्दृढनिगडानितरान्पुनः ॥४३०॥

एकदा मन्त्रिसामन्ततन्त्रिकायस्थसैनिकाः । पार्थं तदाज्ञामासाद्य निशायां पर्यवेष्टयन् ॥४३१॥

म्लानक्षीणाम्बरां पत्नीं रुद्धद्वारां निपात्य ते । आलिङ्ग्यमानां क्रन्दद्भिस्तर्णकैरिव दारकैः ॥४३२॥

केशानालम्ब्य कर्षन्तः शार्करोत्पाटिताङ्गकम् । विपन्नं गोकुलाक्रान्तमिव निर्हृत्य तं गृहात् ॥४३३॥

क्षुत्क्षामकक्षं क्रन्दन्तं निजघ्नुर्नग्नविग्रहम् । चण्डाला इव निःशस्त्रं कुमुदाद्या नृपप्रियाः ॥४३४॥

435 पितरं निहतं श्रुत्वा राजा संजातकौतुकः । प्रातः स्वसचिवैः सार्धं गत्वा हृष्टोऽथ दृष्टवान् ॥४३५॥

अथाङ्गेऽस्य प्रहारोऽयं मदत्त इति वादिनः । तस्याग्रे राजपुरुषाः शशंसुर्निजविक्रमम् ॥४३६॥

न्यक्कृत्य स्त्रीकृतो राजा तदा तद्भञ्जनोद्यतः । अबूबुधत्पर्वगुप्तो देवगुप्ताभिधं सुतम् ॥४३७॥

पार्थस्य निहतस्याङ्गे सोऽक्षिपत्क्षुरिकां ततः । रञ्जितो येन भूपालो जातहासोऽभवच्चिरम् ॥४३८॥

डामरैर्लुण्ठितो देशः प्रणाशे चक्रवर्मणः । उत्थाप्य पापान्कायस्थांस्तेन भूयोऽपि दण्डितः ॥४३९॥

440 संप्रेरितः कुसचिवैः शस्त्राभ्यासं चकार सः । पाटयन्क्षुरिकाघातैः कोटवीस्तनकोटरम् ॥४४०॥

गर्भिणीनां च जठरं गर्भान्द्रष्टुमपाटयत् । काठिन्यस्य परीक्षार्थमङ्गं कर्मकृतामपि ॥४४१॥

प्रतिमहामहाङ्गेराद्या वधभयाद्द्विजाः । प्रत्यगृह्णन्प्रहारांस्तस्मादपि नृपाधमात् ॥४४२॥

क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः । ततोऽनुबाध्यमानोऽभूदपर्यन्तव्यथातुरः ॥४४३॥

व्यथया तस्य तादृश्या प्रजा एव न केवलम् । तुतुषुर्निजभुक्तान्तमहिष्योऽपि चतुर्दश ॥४४४॥

---

४२६. [1]) Thus corr. by $A_3$ from $A_1$ तादृक्क°. ४३२. [1]) Thus corr. by later hand from $A_1$ निपत्य. ४४०. [1]) Thus corr. by later hand from $A_1$ कोटवी°. ४४२. [1]) Thus corr. by later hand from $A_1$ द्विज.

## ॥ षष्ठस्तरङ्गः ॥

नेदं पर्णसमीरणाशनतपोमाहात्म्यमुग्रोरगी पश्यैतावत एव संप्रति कृती तन्मात्रवृत्ती[1] बहिः[2] ।
प्रेङ्खन्नैवार्धमिदं चराचरगुरोः प्रायेयमात्मस्तुतीरेवं देवधुनीमुखाच्छुतिसुखाः[3] शृण्वन्नपर्णावतात् ॥१॥

इत्थमलङ्कृतीयत्नमथ कश्यां विलङ्घयन् । प्रतीहारान्निजाः दूरं वार्यन्तामिति लोभवशात् ॥२॥

वेत्रिविज्ञाप्यमानांस्तु तान्कृताञ्जलिरब्रवीत् । राज्यप्रदाश्च पूज्याश्च यूयं नो दैवतैः समाः ॥३॥

राज्यदानाभिमानेन वर्तिष्यत मदोद्धताः । यत्कार्यकालादन्यत्र नागन्तव्यं मदन्तिकम् ॥४॥

तदाकर्ण्याखिलो लोकस्तमधृष्यममन्यत । अस्मरत्स्वहसंवाससंभूतमपि लाघवम् ॥५॥ 5

खिलीभूताः पूर्वराजव्यवस्थाः प्रतिभाबलात् । उन्मीलयांस स्वकविः प्राकविप्रक्रिया इव ॥६॥

अचौराभूत्तथा भूमिर्यथा रात्रौ वणिक्पथाः । अतिलम्बितवृतद्वारा मार्गाश्चाविधिताध्वगाः ॥७॥

प्रत्यवेक्षापदे तस्मिन्नासीत्सर्वापहारिणाम् । कृष्यध्यक्षत्वमुत्सृज्य कृत्यं नान्यन्नियोगिनाम् ॥८॥

ग्राम्याः कृषिपराधीना नापश्यन्राजमन्दिरम् । विप्राः स्वाध्यायसंसक्ता नाकुर्वञ्शस्त्रधारणम् ॥९॥

न विप्रगुरवः साम गायन्तो मदिरां पपुः । न तापसाः पुत्रदारपशुधान्यान्यढौकयन् ॥१०॥ 10

न मूर्खगुरवो[1] मत्स्यापूपयागविधायिनः । चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणम् ॥११॥

नाहरयन्त च गेहिभ्यो गुरुदीक्षोत्सवेषताः । कुर्वाणा भर्तृशीलश्रीनिषेधं मूर्धधूननैः ॥१२॥

कार्तान्तिको भिषक्सभ्यो गुरुर्मन्त्री पुरोहितः । दूतः स्थेयो[1] लेखको वा न तदाभूदपण्डितः ॥१३॥

प्रायोपवेशाधिकृतैर्बोधितेन महीभृता । प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत् ॥१४॥

अहमाढ्योऽभवं पूर्वं वास्तव्योऽत्र महीपते । निर्धिकञ्चनत्वं शनकैरगच्छं दैवयोगतः ॥१५॥ 15

उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे । निश्चयोऽभूदृणं छित्त्वा परिभ्रान्तुं दिगन्तरे ॥१६॥

अथ विक्रीय सर्वस्वमृणं शोधयता मया । महाधनाय वणिजे विक्रीतं निजमन्दिरम् ॥१७॥

भार्यामुद्दिश्य भर्तव्यामेक एव तु वर्जितः । सोपानकूपो विक्रीतान्महतो वेश्मनस्ततः ॥१८॥

निदाघे पुष्पताम्बूलीपर्णाच्छादितशीतले । न्यस्यात्रिमौलिकैर्वस्त्रा जीवेन्नाटकाहिति[1] ॥१९॥

ततो दिगन्तराद्भ्रान्त्वा विंशत्या वत्सरैरहम् । लब्धाल्पवित्तः संप्राप्तो जन्मभूमिमिमां पुनः ॥२०॥ 20

अन्विष्यता मया साध्वी स्ववधूर्ददृशेऽथ सा । विवर्णदेहा जीवन्ती प्रेष्यात्वेनान्यवेश्मसु ॥२१॥

किं वृत्तजीविकापि त्वमीदृशीं वृत्तिमाश्रिता । मयेति सा सदुःखेन पृष्टा स्वोदन्तमब्रवीत् ॥२२॥

---

१. [1]) $A_2$ gloss पर्णवातजीविनी.—[2]) $A_2$ gloss एवी चराचरगुरुणा बहिः कृती इत्यन्वय..—[3]) Thus $A_1$; $A_2$ °सुखाच्छुत्व°.
११. [1]) Thus corr. by later hand from $A_1$ मूर्खा गु°. १३. [1]) $A_2$ gloss विवादपरिनिर्णेता स्थेयः. १४. [1]) $A_2$ gloss मृताश्च
कर्मे पाची काहन्वे सहुरी विग्रु इति कोशः. १९. [1]) $A_2$ gloss पीठिकी.—[2]) $A_2$ gloss भाटी इति भाषया। प्रत्यहं वेतनं भाटी.

सोपानकूपं संप्राप्ते त्वयि याते दिगन्तरम् । लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ॥२३॥
त्वदन्या कास्ति मे वृत्तिरित्युक्त्वा विरराम सा । तदाकर्ण्य निमग्नोऽहमन्तरे शोककोपयोः ॥२४॥
25 कृतमायोपवेशोऽथ स्थेयैस्तैस्तैः पदे पदे । प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः ॥२५॥
जडत्वादेषि न न्याय्यं न विक्रीतो मया पुनः । सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ॥२६॥
सोऽहं विपद्ये क्षीणार्थो हारि शास्तुस्तव ध्रुवम् । वृजिनादस्ति चेद्भीतिर्वस्तु निर्णीयतां स्वयम् ॥२७॥
राजेति तेन विज्ञप्तो हित्वा धर्मासनं स्वयम् । संघट्याखिलान्स्थेयानासीत्स्वयं विचारयन् ॥२८॥
स्थेयास्तमूचुर्बहुशो विचार्यायं पराजितः । ग्राह्यावगणयन्न्यायं दण्ड्यो लिखितदूषकः ॥२९॥
30 सोपानकूपसहितं विक्रीतं गृहमित्यथ । राजा विक्रयपत्रस्थान्स्वयं वर्णानवाचयत् ॥३०॥
ततोऽधिगतमित्येव सभ्येषु निगदत्स्वपि । अन्तरात्मा जगादैव नृपतेरर्थिनो जयम् ॥३१॥
मुहूर्तमिव संचिन्त्य राजान्याभिरभूच्चिरम् । कथाभिरतिचित्राभिर्मोहयन्सभ्यमण्डलम् ॥३२॥
कथान्तराले सर्वेभ्यो रत्नजातानि वीक्षितुम् । हसन्प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकम् ॥३३॥
क्षणाद्देवाखिलैः स्थेयमित्यमेवेति सस्मितम् । वचो ब्रुवाणः प्रययौ पादक्षालनकैतवात् ॥३४॥
35 अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकम् । भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकम् ॥३५॥
स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः । यत्राब्दे पत्रमुत्पन्नं गणनापत्रिकां ततः ॥३६॥
निर्णेयं तया कृत्यमस्ति भाण्डपतेरिति । भृत्यादाद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ॥३७॥
दीनाराणां[1], दशशतीं तस्यां भूभृदवाचयत् । व्ययमध्येऽधिकरणलेखकाय[2] समर्पिताम् ॥३८॥
तस्मै मितधनार्हाय बहुमूल्यार्पणान्नृपः । रेफे[1] सकारं वणिजा कारितं निश्चिकाय सः ॥३९॥
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्त्वाभयं च तम् । आनीय लेखकं सभ्यान्संजातप्रत्ययान्व्यधात् ॥४०॥
सभ्यैरभ्यर्च्यमानेन राज्ञा सार्थं वणिग्गृहम् । वितीर्णमर्थिने देशात्प्रत्यर्थी च प्रवासितः ॥४१॥
कृताह्निकं भोक्तुकामं तं दिनान्ते च भूपतिम् । अकालावेदनाद्बिभ्यत्क्षत्ता जातु व्यजिज्ञपत् ॥४२॥
देवः समाप्तकृत्योऽद्य विज्ञप्तौ भवतु क्षणम् । इत्युक्त्वा दर्शने प्राणत्यागी विप्रो बहिः स्थितः ॥४३॥
दत्तप्रवेशादेशोऽथ रुद्धखेदेन भूभुजा । द्विजः प्रविष्टः पृष्टश्च[1] तीव्रार्तिरिदमब्रवीत् ॥४४॥
45 सुवर्णरूपकशतं भ्रान्त्वा देशान्तरार्जितम् । गृहीत्वा भुक्तदौराज्यः स्वदेशमहमागतः ॥४५॥
त्वयि राजनि निश्चौरैरध्वभिर्विशतः सुखम् । सोऽभवल्लवणोत्से मे दिनान्ते श्राम्यतः स्थितिः ॥४६॥
दीर्घाध्वलङ्घनक्लान्तस्तत्राहमकुतोभयः । मार्गारामतरोर्मूले त्रियामामत्यवाहयम् ॥४७॥
वेतनं ग्रन्थिबद्धं तदुत्थातोरपतन्मम[1] । अरघट्टे समीपस्थे कक्षयोगाद्गलत्सिते ॥४८॥

---

२४ [1]) Thus A. G has sec. manu the conjectural reading शस्त्रा. २५. [1]) Thus A₂, A₁ °दिवा°. २६. [1]) A₂ gloss गणत् वतुर् इति भाषया वही इति मध्यदेशीया. ३८. [1]) A₂ gloss दीनाराः धार् इति काश्मीरभाषया.—[2]) A₂ gloss यस्तत्रिधौ अर्थिप्रत्यर्थिनावुभौ भूमि ... क्रियते सोऽधिकरणलेखकः । अक्षरपरिमाणलेखपत्रकारी सराफ इति भाषया. ३९. [1]) A₂ gloss अधिकरणलेखकाय दीनारदशशतीदानात्.—[2]) A₂ gloss गृहविक्रयिणा वणिजा विक्रयपत्रे लिखितं । सोपानकूपरहितं विक्रीतं गृहमिति । ततस्तेन लुब्धेन वणिजा प्रत्यर्थिना रेफविषये सकारः कारितः अधिकरणलेखकहस्तेन । उत्कोचं दीनारदशशत्यात्मकं दत्त्वा कूपसहितं गृहं विक्रीतमिति लेखितं । ततोऽनन्तरं राज्ञानुमितं लेखपत्रलिखनार्थं किमर्थं दीनारदशशती । बहुमूल्यत्वादिति । रेफस्य सकार एव कृतोऽनेन इति ॥. ४१. [1]) A₂ gloss निर्वासितः कराय. ४२. [1]) A₂ gloss द्वास्थः. ४४. [1]) Thus corr. by later hand from A₁ पृष्टेष. ४८. [1]) Thus corr. by A₂ from A₁ °तद्वि.

तस्मिन्पुरवरोहेतिनिर्वेदाज्जलहद्वपुः । सोहं हारितसर्वस्वः शोचमुक्ताधिरं जनैः ॥४९॥

एकोऽभ्यवासिनः कोपि साहसे[1] पुरुषोऽब्रवीत् । मह्यं दापितवित्तार्थं[2] किं ददासीति मां ततः ॥५०॥ 50

समस्यर्थोर्थं विपन्नस्तस्यार्थस्यास्मि कः प्रभुः । तुभ्यं यद्रोचते मह्यं तत्ततो दीयतां त्वया ॥५१॥

प्रवहणाधिकृतोऽथ कूपकेभ्यो हृतं मम । स मारात्स्वपक्षमेवाष्टानवतिं स्वीचकार तु ॥५२॥

व्यवहारा वचोनिष्ठा एव राज्ञि यशस्करे[1] । निन्दन्व्यवस्थां तां लोकैर्न्यकृतोऽस्मीति वादिभिः ॥५३॥

उपचारोक्तिसारल्यच्छलहारितचेतनः[1] । सोहं जहाम्यसून्द्वारे दुर्व्यवस्थापकस्य ते ॥५४॥

पुंसस्तस्य स राज्ञाथ पृष्टः प्रकृतिनामनी । वचनप्रत्यभिज्ञैव[1] ममास्तीत्यभ्यभाषत ॥५५॥ 55

प्रातस्तवेप्सितार्थं करिष्यामीति भूभुजा । प्रतिज्ञाय कथंचित्स स्वपार्श्वे कारितोऽशनम् ॥५६॥

लवणोत्सोकसां कृताहूतानां स विदां ततः । स्थितमन्तर्हितोऽन्येद्युस्तं राजादर्शयन्नरम् ॥५७॥

पृष्टः स राज्ञा विप्रेण यथैवोक्तं तथैव तत् । सर्वमूचे वाक्प्रतिष्ठं व्यवहारमुदीरयन् ॥५८॥

सत्यवाक्पारतन्त्र्यस्य वस्तुवृत्तस्य चान्तरम् । अलक्षयन्तः प्रैक्षन्त दोलाकुलधियो धराम् ॥५९॥

धर्मासनस्थो राजाथ रूपकाणामभाषत । तमष्टानवतेः[1] पार्श्वे विप्रमन्यं शतस्य तु ॥६०॥ 60

अनुशोकृच्छ्रगादापि दुःसंचिन्त्या महात्मनः । धर्मस्याधर्ममुद्वृत्तं निहन्तुं धावतो गतिः ॥६१॥

सायं हुताशं प्रविशत्यम्मयं[1] चेन्दुमण्डलम् । स्वतेजसा संविभजन्प्रदीपैर्ज्योत्स्नयाप्यसौ ॥६२॥

तदुत्थाय यथा भानुर्निहन्ति ध्वान्तमुद्धतम् । अनन्यकर्मा धर्मोयं तथाधर्मं व्यपोहति ॥६३॥ युग्मम् ॥

दुःसंलक्ष्यस्तु धर्मोसावधर्मं बाधतेऽञ्जसा । तिष्ठन्नित्यमधिष्ठाय[1] दारु काष्ठमिवानलः ॥६४॥

ददाति यद्भवान्दत्तां तदित्याद्युक्तमुज्झतः । तुभ्यं रोचत इत्यादि वचोस्य नियतं तदा ॥६५॥ 65

रुचितास्य बभूवाष्टानवतिर्लोभिनोऽस्य ताम् । नादादस्मायदर्चितं रूपकाणां शतं ददत् ॥६६॥

इत्यादिसूक्ष्मेक्षिकया धर्माधर्मान्तरं विदन् । प्रत्यवेक्षापरः क्ष्माभृद्व्यधात्कृतयुगोदयम् ॥६७॥

इत्थं जनं स विनयन्हास्योभूद्विजदुर्नयैः । परस्योपदिशन्पथ्यमपथ्याशीव रोगहृत् ॥६८॥

श्रोत्रियेणेव तेनापि मृदम्भःशौचशालिना । डोम्बोच्छिष्टभुजो भृत्याः पार्थात्र परिजह्रिरे ॥६९॥

यथोत्तरं संश्रितार्थैरन्योन्यं पृष्ठपातिभिः । नगराधिकृतैश्चक्रे चतुर्भिः सोर्थसंग्रहम् ॥७०॥ 70

लेभिरे निधनं तस्मात्सत्यंकारापद्मादयः । श्रीरणेश्वरपीठामन्यस्तखड्गादपि प्रभोः ॥७१॥

स ज्येष्ठे भ्रातरि मृते तथाभून्मुदितश्चिरम्[1] । तदुपशं[2] यथा माहिलभ्रोत्मीर्षि[3] रसार्पणम् ॥७२॥

नीतस्य मण्डलेशत्वं वेलावित्तस्य[1] भूभुजा । देवीः कामयमानस्य चक्रे गजनिमीलिका[2] ॥७३॥

रागाच्छुद्धान्तकान्तानां मूर्धानमधिरोपिता । लड्डा नामाभवत्तस्य वेश्या वैमनस्यकारिणी ॥७४॥

---

५०. [1]) Thus $A_1$; $A_2$ °सी.—[2]) $A_2$ दापितजनयाय. ५३. [1]) $A_2$ gloss वचसि वाक्य एव निष्ठा येषां । न तु न्यायविचारणे इति व्यवस्थां निन्दन्. ५४. [1]) Thus corr. by later hand from $A_1$ °सारल्यैवछ°. ५५. [1]) $A_2$ gloss वचनमेव केवलं तदीयं चिन्हितं मम न तु नामप्रकृती इत्यर्थः. ६१. [1]) $A_2$ gloss आत्मं. ६४. [1]) Thus corr. by $A_2$ from $A_1$ तिष्ठन्नित्य°. ६६. [1]) Thus $A_1$; $A_2$ °बभैव.—[2]) Thus corr. by $A_2$ from $A_1$ °वृत्तान्ता°. ७०. [1]) $A_2$ gloss दूरवर्तिभिः.—[2]) Thus corr. by $A_2$ from $A_1$ सोर्थसं°. ७२. [1]) Thus $A_2$; $A_1$ °मुदित°.—[2]) Thus corr. by $A_2$ from $A_1$ तदुपशी; Edd. °शेषया.—[3]) Emended; A R G °त्मीर्षि.—[4]) $A_2$ gloss कुत्र. ७३. [1]) $A_2$ gloss दत्तवाणकवशिवस्य; दत्तवाणक struck out again.—[2]) $A_2$ gloss उपेक्षा कृता इत्यर्थः.

75 अवकाशः शुभूतानां हृदयान्तर्न योषिताम् । इतीव विहितौ धात्रा सुवृत्तौ तद्बहिः कुचौ ॥७५॥

उत्तमाधमसंसक्तौ जानन्सदृशवृत्तिताम् । नारीणां शुचिवासानामङ्गमात्रं व्यधाद्विधिः ॥७६॥

सा लालितापि राज्ञा वल्लभा ललितलोचना । चण्डालयामिकेनागाद्यामिनीषु समागमम् ॥७७॥ युग्मम् ॥

शुभंकरणं किंचिच्चण्डालतरुणेऽभवत् । तं तत्प्रभावविवशा भेजे राजवधूरपि ॥७८॥

सा वा चण्डालकुलजा स वा कार्मणकर्मवित् । अन्यथा संगमः किं स्यादसंभाव्यस्तथाविधः ॥७९॥

80 सोऽभूत्केन प्रकारेण तया सह समागतः । इत्येव लेभे वृत्तान्तः प्रतिभेदं न कुत्रचित् ॥८०॥

केवलं प्रत्यभात्तादृग्व्यापिनोः प्रेम तत्तयोः । कृष्णापारेक्षणाश्लिष्टं ह्लादिनाक्षोभिकारिणः ॥८१॥

तमर्थमथ तथ्येन वीक्ष्य प्रणिधिभिर्नृपः । प्रायश्चित्तानुचरणक्षामः कृष्णाजिनं दधौ ॥८२॥

कुपितोऽपि स यन्नैनां न्यवधीद्रागमोहितः । तेनैवागात्पुरोभागिवितर्कातङ्कपात्रताम् ॥८३॥

डोम्बोच्छिष्टानुभावाङ्गादशुचित्वं यशस्करे । संक्रान्तं कुष्ठिसंस्पर्शात्कुष्ठं दुःखमिवाभवत् ॥८४॥

85 सामान्येन सता कैश्चित्सदृशैः शुभकर्मभिः । जन्मान्तरीयैः साम्राज्यं मया प्रापीति चिन्तयन् ॥८५॥

साम्राज्यकामो नृपतिर्भाविन्यपि स जन्मनि । मुक्त्वा प्रादाच्चिरातङ्कां राज्यलक्ष्मीं द्विजन्मने ॥८६॥

भूभुजा दानशौण्डेन पैतृके स्थण्डिले कृतः । छात्राणामार्यदेश्यानां तेन विद्यार्थिनां मठः ॥८७॥

मठाधिपतये तत्र छत्रचामरहासिनीम् । स नरेन्द्रश्रियं प्रादादन्तःपुरवर्जिताम् ॥८८॥

वितस्तापुलिने राजा नानोपकरणान्वितान् । ब्राह्मणेभ्यः सोऽग्रहारान्पञ्चपञ्चाशतं ददौ ॥८९॥

90 अथ जातोदरव्याधिर्मज्ञातो नायमित्यसौ । जानन्संग्रामदेवाख्यं परिवर्ज्य निजात्मजम् ॥९०॥

समर्प्य सचिवैकाङ्गसामन्तानभ्यषेचयत् । रामदेवात्मजं राज्ये वर्णटं प्रपितृव्यजम् ॥९१॥

शक्ये राज्यापकर्तुं शिशावनभिषेचिते । निराशाः समपद्यन्त तदा राज्यजिहीर्षवः ॥९२॥

स पर्वगुप्तकौटिल्यप्रयुक्तोदयोन्मुखः । विपाककालस्तत्राह्नि भङ्गोन्मुख इवाभवत् ॥९३॥

राजधानीस्थितस्यापि वर्णटो राज्यदायिनः । आरोग्यवार्तयाप्यासीन्मुहुर्द्वारनिरीक्षकः ॥९४॥

95 ततः सानुशयो राजा नाम्यन्नैर्षत मन्त्रिभिः । राज्यं संग्रामदेवाय दातुमाश्वासकारिभिः ॥९५॥

राजाज्ञया निशामेकां बद्धोष्टस्तम्भमण्डपात् । बहिर्दत्तार्गलात्प्रातर्वर्णटो निरवस्र्यत ॥९६॥

भयाध्यजागराद्यापि तद्भृत्यानां विवेकिनाम् । आस्थानमण्डपं प्राप पायुक्षालनभूमिताम् ॥९७॥

एकाहराजपुरुषस्तवासि विजयेश्वरे । श्रीवाहेवप्रसादाख्यो राजबीजी समर्पयत् ॥९८॥

अथाभिषिच्य संग्रामदेवं तीव्रीभवद्व्यथः । स राजधान्या निर्गत्य मर्तुं निजमठं ययौ ॥९९॥

100 धीः केशश्मश्रुवपने शिरःशाटकवर्जनम् । काषायग्रहणोद्वेगः शस्त्रत्यागग्रहश्च यः ॥१००॥

राजभृत्यैः प्रतिज्ञातः स तस्मिन्निश्चितव्रते । जीवत्येव कृत[illegible]कैः परिवर्जितः ॥१०१॥ युग्मम् ॥

---

७६. ¹) Thus corr. by $A_2$; reading of $A_1$ illegible; $A_2$ in margin °कृणाकर्ता. ७८. ¹) $A_2$ gloss [illegible]. ७९. ¹) $A_2$ gloss वशीकरण.—²) Thus corr. by $A_2$ from $A_1$ सम्भव:. ८१. ¹) Thus corr. by $A_2$ from $A_1$ °मायादृ°. ८३. ¹) $A_2$ न्यवधीत्र°. ८६. ¹) Thus $A_2$; $A_1$ °कामोपि नृपो भा°. ८७. ¹) Thus $A_2$; $A_1$ स्थित:.—²) Thus corr. by $A_2$ from $A_1$ °देशानां. ८८. ¹) Thus $A_2$; $A_1$ नरेन्द्राभितां. ८९. ¹) $A_2$ gloss [illegible] लोकाः. ९०. ¹) Thus corr. by $A_2$ from $A_1$ नृपा°. ९३. ¹) Thus corr. by $A_2$ from $A_1$ विपाकपाकस्त°. ९५. ¹) Thus corr. by $A_2$ from $A_1$ °ईवस्य. ९६. ¹) Thus $A_1$; $A_2$ निरवास्यत; perhaps to be emended निरवस्यत. ९८. ¹) $A_2$ gloss एकाहं राजभूतस्य वर्णटस्य पुरुषो भृत्यः.

द्वे सहस्रे सुवर्णस्य सार्धे बद्ध्वा पटाञ्चले । यो निर्जगाम राजासौ मुमूर्षुर्निजमन्दिरात् ॥१०२॥
पञ्चभिः पर्वगुप्ताद्यैर्वीतर्कं तस्य मन्त्रिभिः । हृतं सजीवितस्यैव विभक्तान्योन्यमग्रतः ॥१०३॥ युग्मम् ॥
विवेष्टमानः शय्यायां व्याधिदग्धान्तरो नृपः । तिष्ठन्मठाङ्गनकुटीगर्भे ध्वान्तान्धकारिते ॥१०४॥
अजातसंविद्विलोपे पश्यन्द्रोहरतान्निजान् । प्राणैरहानि द्वित्राणि न यदा निरमुच्यत ॥१०५॥ 105
तदा सुहृद्बन्धुभृत्यवेलावित्तैः कृतत्वरैः । जिहीर्षुभिश्च साम्राज्यं विषं दत्त्वा विपादितः ॥१०६॥
अवरोधवधूमध्यात्सती तं पतिमन्वगात् । एका त्रैलोक्यदेव्येव स्वप्रभेव विरोचनम् ॥१०७॥
वर्णाश्रमप्रत्यवेक्षाबद्धकक्ष्यः क्षितीश्वरः । चक्रभान्वभिधं चक्रमेलके द्विजतापसम् ॥१०८॥
कृतात्याचारमालोक्य राजा धर्मवशंवदः । निजमाह श्वपादेन ललाटतटमङ्कयन् ॥१०९॥
तन्मातुलेन तद्रोषाद्वीरनाथेन योगिना । सांधिविग्रहिकेणार्धं स स्वेनैव न्यकृन्तत ॥११०॥ 110
पूर्वाचार्यप्रभावेण स्वमाहात्म्याधिरोपणम् । प्रख्यापयद्भिर्गुरुभिः श्रद्धेति यदुच्यते ॥१११॥
तत्कथापितैव समाहात्म्य विपन्न इति श्रुतिः । दीर्घव्याधिहते तस्मिन्नुपपत्तिः कथं भवेत् ॥११२॥
अथामयान्तरेवाभूत्सा वार्तैस्तूच्यते यदि । वर्णटाभिशापेपि तदायात्यत्र हेतुताम् ॥११३॥
भुक्तैश्वर्यो नव समाश्चतुर्दिनो स शयने । मासि भाद्रपदे कृष्णतृतीयस्यां व्यपद्यत ॥११४॥
पितामहीं शिशोर्गोप्त्रीं विनिवेश्य नृपासने । भूभटाद्यैः समं प्राभूत्पर्वगुप्तोथ पञ्चभिः ॥११५॥ 115
क्रमात्समं पितामह्या तान्व्यापाद्येतरान्बली । एकः स एवमाक्रान्तः प्रबभूव नृपास्पदे ॥११६॥
स पार्थिवत्वमान्त्रित्स्वमिभया चेष्टया स्फुरन् । राजा राजानकश्चेति मिथ्यामेवं धियं व्यधात् ॥११७॥
सेवमानः स्वयं बालभूपं भोज्यार्पणादिभिः । ऋजूनां प्रत्ययमात्पर्वगुप्तो द्रोहबहिष्कृतः ॥११८॥
यान्द्रोहभीरून्संभाव्य संविभेजे यशस्करः । तस्य तत्तनयोच्छेदे त एवासन्प्रयोजकाः ॥११९॥
करभाङ्गरुहापिङ्गे हेमभुवि क्षितिपालवत् । स ददौ कुङ्कुमालेपं वर्चः शाद्वलविस्तृते ॥१२०॥ 120
बिभ्यदेकाङ्गसंघातात्प्रकटोत्पाटनाक्षमः । प्रमापणाय प्रायुङ्क्त शिशोः कर्माभिचारिकम् ॥१२१॥
न्याय्यं ते सान्वयस्यास्ति राज्यं चैत्रादिवासरे । अन्यथाचरतो नाशः क्षिप्रं वंशायुषोर्भवेत् ॥१२२॥
इतीमामपि यामिन्यां श्रुतवान्भूतभारतीम् । अभिचारस्य वन्ध्यत्वं निर्ध्यायाधिकशङ्कितः ॥१२३॥
एकाङ्गेभ्यो विभिन्नेभ्यो बिभ्यदुद्भ्रान्तसंभ्रमः । उदतान्यत्तथा चिन्तालुप्तसंविद्वित्रानिशाम् ॥१२४॥
यदा महाहिमापातनिःसंचारजने दिने । अकस्मात्संभृतबलो राजधानीं निरुद्धवान् ॥१२५॥ 125
विरोधकारिणं बुद्धाभिधेन सह सूनुना । निर्द्रोहमाहवे हत्वा मन्त्रिणं रामवर्धनम् ॥१२६॥

---

१०२. [1]) Thus corr. by later hand from $A_1$ बद्धा. १०८. [1]) $A_4$ gloss, partly effaced: चक्र...जने...करता ...चक्रमेल ...के... . १०९. [1]) $A_2$ gloss अतिक्रान्ताचारम्. ११०. [1]) $A_4$ gloss चक्रभानुद्विजमातुलेन.—[2]) $A_2$ gloss सन्धिविग्रहयुद्धाम्नुष्ठकाधिकारी सान्धिविग्रहिकः कटकपालः. ११४. [1]) नव supplied by $A_2$ in space left by $A_1$. ११५. [1]) $A_4$ gloss सङ्ग्रामदेवस्य.—[2]) $A_2$ gloss प्रभुरभूत्. ११६. [1]) Emended with G Edd.; $A_1$ एव माक्रान्तिः which $A_2$ alters to एवमाक्रान्तिः. ११७. [1]) Thus $A_2$; $A_1$ स्फुरन्.—[2]) $A_2$ gloss राजा पार्थिवः राजानकः मन्त्री । राज्ञः अनः प्राणनं । जीवनं धरित्रीरक्षणलक्षणं । यस्मात्तः राजानः अनन्यप्राणनैः । राजान एव राजानकः । स्वार्थे कः यद्वा अत्र लिङ्गात् । कः शाड्वले देवदत्त एव देवदत्तक इतिवत् । यथा प्राणनं विना देहस्थितिर्नास्ति । तथा धीसचिवं मन्त्रिणं विना पार्थिवानां स्वयं कार्याकार्यविवेककौशलाभावो न सम्भवतीति । राजानैकमपेक्षते राजा ॥ यद्वा राज्ञः अनः प्राण इव राजानक इत्यर्थः॥.

पिङ्गेण वेलावित्तेन प्राभृतार्थमुपाहृताम् । गले पुष्पस्रजं बद्ध्वा पातितं पार्थिवासनात् ॥१२७॥
स तं वक्राङ्घ्रिसंग्रामं हतमन्यत्र मन्दिरे । पातयित्वा वितस्तान्तः कण्ठबद्धशिलं निशि ॥१२८॥
चतुर्विंशस्य वर्षस्य दशम्यां कृष्णफाल्गुने । पापः सङ्ग्रामकवचो न्यविक्षत नृपासने ॥१२९॥ चक्कलकम् ॥
130 पारेविशोकं दिविराज्ज्ञातस्याभिनवाभिधात् । सूनुः संग्रामगुप्तस्य स तदा पार्थिवोभवत् ॥१३०॥
केचित्तं प्रत्यवस्थानं ये पुरा प्रतिजज्ञिरे । ते सर्व एव तद्भीताः मातरेव प्रणेमिरे ॥१३१॥
पार्थिवैकाङ्गसामन्तमन्त्रिकायस्थतन्त्रिणाम् । तद्भीत्या द्रोहवृत्तीनां द्रोहाद्वैतमदृश्यत ॥१३२॥
एकाङ्गस्य तदास्थाने सुय्याभिजनजन्मनः । प्रमादान्मदनादित्यनाम्नो ढक्का व्यदीर्यत ॥१३३॥
हतांशुकेन भूभर्त्रा कुपितेन खलीकृतः । स निष्कलकचश्मश्रुस्तपस्वी समपद्यत ॥१३४॥
135 तादृशस्य पुनस्तस्य सखीपुत्रत्वमीयुषः । अद्याप्यभिजने जाता वसन्ति त्रिपुरेश्वरे ॥१३५॥
कुर्वता पर्वगुप्तेन भूभृता द्रविणार्जनम् । मापिताः पुनरुत्साहं प्रजारोगा नियोगिनः ॥१३६॥
व्यधत्त स्कन्दभवनविहारवप्रभान्तिके । पर्वगुप्तेश्वरं सोपि वृजिनार्जितया श्रिया ॥१३७॥
श्रीयशस्करभूभर्तृशुद्धान्तस्य विशुद्धधीः । कौलीनमलुनादेका गौरीव नृपसुन्दरी ॥१३८॥
अचिराङ्कुरितप्रीतेः पर्वगुप्तस्य याकरोत् । समागमार्थिनो युक्त्या वञ्चनामुचितां सती ॥१३९॥
140 इदं यशस्करस्वामिगृहवेश्मार्धनिर्मितम् । त्यक्त्वा पत्युर्विपन्नस्य कृत्वा निर्माणपूरणम् ॥१४०॥
अमोघमस्मिं नियमाद्विधास्यामि त्वदीप्सितम् । स छुपच्छन्दयन्नेवं सुभ्रुवाभिहितस्तया ॥१४१॥
अथ प्रवृद्धगर्वेण तत्स्वल्पैरेव वासरैः । संपूर्णतां सुरगृहं गमितं तेन भूभुजा ॥१४२॥
सा यागज्वलने राजललना पीतसर्पिषि । पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुम् ॥१४३॥
उपर्यस्या निरस्तासोः पुष्टाः कुसुमवृष्टयः । तत्काङ्क्षिणस्तु न्यपतन्नवर्णमुखरा गिरः ॥१४४॥
145 सुदीर्घसाहसारम्भचिन्तासंरम्भशोषितः । पर्वगुप्तो बभूवाथ तृष्णामयपथातिथिः ॥१४५॥
व्याध्याधिप्रशमायासैर्ज्ञात्वाप्यस्थायिनीं स्थितिम् । मूढाः प्रकृतिं नोज्झन्ति द्रोहश्रीलोभमोहिताः ॥१४६॥
आशङ्क्य तादृक्क्षेपि सोकुण्ठैः प्राक्तनैः शुभैः । कैश्चित्सुरेश्वरीक्षेत्रे परासुः समपद्यत ॥१४७॥
षट्त्रिंशवत्सराषाढबहुलेह्नि त्रयोदशे । द्रोहार्जितेन नृपतिः स राज्येन व्ययुज्यत ॥१४८॥
अतीन्द्रियायां परलोकवृत्ताविहैव तीव्राशुभपाकशंसी ।
दृश्येत मार्गो यदि नाम नाशु न कः कुकृत्येन यतेत भूत्यै ॥१४९॥
150 क्षेमगुप्ताभिधानोभूदथ राजा तदात्मजः । आसवासेवनोत्सिक्तविस्ततारुण्यसंज्वरः ॥१५०॥
सोभूत्स्वभावदुर्वृत्तो नितरां दुर्जनाश्रयात् । कृष्णक्षपाक्षणो घोरमेघान्ध इव भीतिकृत् ॥१५१॥
स्वतुल्यवेषालंकाराः शतं लालितका नृपम् । तं फल्गुणप्रभृतयो दुराचाराः सिषेविरे ॥१५२॥
द्यूतासवाङ्गनासेवाव्यसनेपि स पार्थिवः । विटनिर्लुण्ठ्यमानोपि नाभूल्लक्ष्मीबहिष्कृतः ॥१५३॥

---

१२७. ¹) Thus corr. by $A_2$ from $A_1$ °हृतम्. १२९. ¹) चक्कलकम् added by $A_2$. १३०. ¹) Thus corr. by $A_2$ from $A_1$ विशोके.—²) Thus $A_2$; $A_1$ तथा. १३१. ¹) Thus $A_1$; $A_2$ केचित्प्रत्यव°. १३२. ¹) Thus $A_2$; $A_1$ द्रोहाद्वै°. १३८. ¹) $A_2$ gloss कौलीनं लोकनिन्दां.—²) Thus corr. by $A_2$ from $A_1$ °मलुनात्°. १४०. ¹) Thus corr. by $A_2$ from $A_1$ निर्वाण°. १४१. ¹) $A_2$ gloss अस्मीति निपातः अहमित्यर्थे. १५२. ¹) Thus $A_1$; $A_2$ °वेषा°.—²) $A_2$ gloss पदातयः.

रागी मधुपगणवान्विहितासक्तिर्यः सख्यमेति मधुपैर्दलकोशसारैः ।
पद्मे प्रयाति दिनमात्रमपि प्रसक्तिं श्रीस्तत्र चेत्किमिव तत्र कुतूहलाय ॥१५४॥
विटाः प्रविश्य हृदयं जिष्णुजा वामनादयः । पिशाचस्येव रचितामशुचिं तस्य चक्रिरे ॥१५५॥ 155
परोपहासकुशलः परनारीरतिप्रियः । पराबधाशयस्तस्थौ पार्थिवोऽनर्थतत्परः ॥१५६॥
ष्ठीवनं श्मश्रुमालाग्र गालयः भोजपालिषु । तेन क्षिप्ताः प्रतीक्ष्याणां करोटीषु च टक्कराः ॥१५७॥
कठिलघटनैर्मौर्यो मृगव्यग्रां वनाटनैः । विटाचार्याशीलरटनैर्वाल्लभ्यं तस्य लेभिरे ॥१५८॥
पुंश्चलीजाल्मवैधेयबालकक्रोधभूनिर्भरा । समभूदप्रवेशार्हा राजपर्षन्मनस्विनाम् ॥१५९॥
जिष्णुपुत्रैः क्षेमगुप्तक्ष्माभृद्यन्त्रपुत्रकः । चारणस्त्वगुणाकृष्टः किं न धूर्तैरनर्त्यत ॥१६०॥ 160
तस्य कङ्कणवर्षोऽसीत्यभिधानं विधाय ते । तोषिताश्चासकृच्चक्रुर्दोष्णोः कङ्कणवर्षिताम् ॥१६१॥
निर्दोषदोषाविष्कारे नववस्तुप्रदर्शने । अपूर्व्यटक्कराधाने प्रसादः प्रापि तैर्नृपात् ॥१६२॥
संलक्ष्यकुचकक्ष्यान्ताः कृत्वा निजवधूः पुरः । रागी राजा गृहीतोऽतो द्यूते तैर्निर्धनः कृतः ॥१६३॥
संभोगाभासौभाग्यकृतस्पर्धैः परस्परम् । संभुज्यैता भवान्वक्तु विशेषमिति चोदितः ॥१६४॥
उपभोगं स्वभार्याणां निर्लज्जैस्तैः स कारितः । का हृद्येति च रत्यन्ते पृष्टोऽभीष्टधनप्रदः ॥१६५॥ युग्मम् ॥ 165
तस्य लालितकेष्वास्तां मुद्रौ संभोगढौकने । मात्रोच्चारिश्वरसित्वाक्षिशाकौ[1] हरिधूर्जटी ॥१६६॥
नीत्वा नर्मकथाकुलतां निजवपुर्मुञ्चन्ति मानोन्नतिं संतुष्य स्वयमङ्गनाः शुचितया त्यक्तं कुलं कुर्वते ।
सौख्यं घ्नन्ति दुर्विलेपनसमासक्त्या यदर्थं भ्रमः प्रत्याख्याय तदेव वेत्ति न विटैः किं प्रार्थ्यते सेवया ॥१६७॥
यशस्करस्य भूत्वापि सचिवो भट्टफल्गुणः । तस्याभूदनुजीव्यन्ते धिग्भोगाभ्यासवासनाम् ॥१६८॥
फल्गुणस्वामिमुख्यानां प्रतिष्ठानां विधायिनः । तस्योपदेशो भूभर्त्रा पर्यहास्यसकृद्ग्रहः ॥१६९॥
गृहन्विद्वेषितां[1] हन्तुं टक्करादि बलात्ततः । वृद्धो रक्कः कम्पनेशो दुर्गोष्ठीमध्यगोऽभवत् ॥१७०॥ 170
तीक्ष्णाक्षेपे संप्रविष्टं हन्तुं संग्रामडामरम् । श्रीजयेन्द्रविहारं स निर्घृणो निरदाहयत् ॥१७१॥
सुगतप्रतिमारीतिं हृत्वा दग्धात्ततोऽखिलात् । जरद्देवगृहेभ्यश्च संगृह्य[2] मावसंचयम् ॥१७२॥
स्वप्रतिष्ठया वार्धे मूढः स्वयशसो विदन् । नगरापणवीथ्यन्तः क्षेमगौरीश्वरं व्यधात् ॥१७३॥
एकः प्रयात्युपरमं द्रविणं तदीयं हृत्वापरः प्रसभमुद्वहति प्रमोदम् ।
नो वेत्ति तत्स्वनिधने परकोशगामि विश्वासनामसममोहकृतान्धकाराम् ॥१७४॥
त्यागिना क्षेमगुप्तेन मुक्त्यर्थं खशाभुवे[1] । दत्ता विहाराविर्दग्धग्रामाः षट्त्रिंशदर्पिताः ॥१७५॥ 175
दुर्गाणां लोहरादीनां शास्ता पालमक्लोपमः । नृपतिः सिंहराजाख्यस्तस्मै स्वां तनयां ददौ ॥१७६॥
स तस्यां शाहिदौहित्र्यां दिद्दायां सक्तमानसः । दिद्दाक्षेम इति ख्यातिं ययौ लज्जावहां नृपः ॥१७७॥
मातामहेन भूभर्तृबध्वास्तस्या व्यधीयत । श्रीभीमशाहिनोदारप्रासादो भीमकेशवः ॥१७८॥

१५७. [1]) Corr. by $A_2$ from $A_1$ °पालयः. १५८. [1]) Corr. by $A_2$ from $A_1$ °घटनाम°.—[2]) मृगव्यग्रां supplied by $A_2$ in space left by $A_1$. १६०. [1]) Corr. by $A_2$ from $A_1$ °यन्त्रक. १६५. [1]) कुचक supplied by $A_2$. १६६ [1]) Thus corr. by $A_2$; $A_1$ °रसित्वा शिक्षा°. १७०. [1]) Thus $A_2$; $A_1$ °विद्वेषितां. १७२. [1]) Thus $A_2$; $A_1$ दग्धात् ततो.—[2]) Thus $A_2$; $A_1$ संगृह्य. १७४. [1]) Thus corr. by $A_2$ from $A_1$ हृत्वा. १७५. [1]) $A_4$ gloss सिंहराजाय. १७६. [1]) Thus corr. by $A_4$ from $A_1$ पालमुक्तो° १७८. [1]) Thus $A_2$; $A_1$ श्रीभूमिस्वामिनो°. Cf. *Albêrûnî's Indica* ( trans. by Sachau ), ii. 13.

चन्द्रलेखाभिधां कन्यां राज्ञे[1] दत्तवताभवत् । फल्गुणद्वारपातिना समं दिद्दा समत्सरा ॥१७९॥

180 गुरूपदेशः स्मरहन्कुन्तविद्याश्रमस्तथा । तस्य निर्वहणार्हत्वं[1] भूभुजो हास्यतां ययौ ॥१८०॥

अमोघपतनान्प्रासान्[1]योध्यान्संग्रामकर्मसु[2] । शृगालमृगयासक्त्या स हि श्लाघ्यानमंस्यत[3] ॥१८१॥

तं वृतं वागुरावाहिडोम्बचाटविकपेटकैः । पर्यटन्तं श्वभिः सार्धमपश्यन्सततं जनाः ॥१८२॥

तस्य दामोदरारण्यलल्यानशमिकादिषु[1] । स्थानेषु क्रोष्टुमृगयारसिकस्य वयोगमत् ॥१८३॥

अथ कृष्णचतुर्दश्यां स कुर्वन्मृगयां नृपः । ज्वालामपश्यत्क्रोशन्त्याः शृगाल्या निर्गतां मुखात् ॥१८४॥

185 तदालोकनसंजातत्रासाकम्पितस्ततः[1] । लूतामयज्वरेणाभूत्परीतो मृत्युहेतुना ॥१८५॥

भर्तुं ययौ च वाराहक्षेत्रं यत्र विधायकः । श्रीकण्ठक्षेममठयोरासीद्धुष्कपुरान्तिके ॥१८६॥

मसूरविदलाकारलूताङ्कितकलेवरः । पौषे चाब्दे चतुस्त्रिंशे नवमेह्नि[1] सिते मृतः ॥१८७॥

क्षेमगुप्तात्मजः क्ष्माभृदभिमन्युरभूत्ततः । शिशुर्निर्विशधर्मिण्या दिद्दादेव्यानुपालितः ॥१८८॥

संधिविग्रहमुद्राग्रमुख्यकर्माधिकारिणः[1] । निःसाध्वसं राजवधूमवन्ध्यशयनां व्यधुः ॥१८९॥

190 अभिमन्यौ क्षितिं रक्षत्यकस्मादेव दारुणः । तुङ्गेश्वरापणोपान्तादुज्जगाम हुताशनः ॥१९०॥

वर्धनस्वामिपार्श्वस्थभिक्षुकीपारकावधिः । वेतालसूत्रपातस्थान्स ददाह महागृहान् ॥१९१॥

डोम्बचण्डालसंस्पृष्टभूपसंपर्कदूषितान् । दग्ध्वा महागृहान्वह्निर्भुवः शुद्धिमिवाकरोत् ॥१९२॥

दक्षिणी क्ष्मापतेर्माता स्त्रीस्वभावादिमूढधीः । सारासारविचारेण लोलकर्णी न पस्पृशे ॥१९३॥

राज्ञः प्रतापेणाद्धवैरा तस्थौ पुरा यतः । पतिवत्न्येव[1] सा सार्धं फल्गुणेनाप्यमन्त्रिणा ॥१९४॥

195 पत्यौ[1] मृते सपत्नीनां दृष्ट्वानुमरणं[2] ततः । दम्भेनानुमुमूर्षन्तीमनुमेने स तां द्रुतम् ॥१९५॥

निषिषेधानुबन्धाच्च सानुतापां चिताग्निके । कृपालुर्मरणादेताममात्यो नरवाहनः ॥१९६॥

अतो निसर्गपिशुनो रक्कस्तां मन्युदूषिताम् । फल्गुणाद्राज्यहरणाशङ्कां राज्ञीमजिग्रहत् ॥१९७॥

विरागशंसिभिर्लिङ्गैस्तां ज्ञात्वा विषमाशयाम् । समन्युं साखिलामात्यां फल्गुणोप्यास्त शङ्कितः ॥१९८॥

स हि सर्वाधिकारस्थः सर्वस्वाधिगतोभवत् । दीप्यमानोधिकं मन्त्रशौर्योत्साहादिभिर्गुणैः ॥१९९॥[1]

200 अस्थीनि क्षेमगुप्तस्य गृहीत्वा जाह्नवीं गते । पुत्रे कर्दमराजाख्ये प्रबलैरन्वितो बलैः ॥२००॥

तदभ्यागमपर्यन्तं पर्णोत्से स्थातुमुद्यतः । अविश्वसन्नृपगृहे फल्गुणो वैरिशङ्कितः ॥२०१॥

निर्गत्य नगराद्यावत्सभाण्डागारसैनिकः । काष्ठवाटान्तिकं प्राप[1] तावद्रक्कादिचोदिता ॥२०२॥

आकलय्य द्रुतं दिद्दा संत्यज्य प्रार्थनादिकम् । पृष्ठे प्रत्युत याष्टीकांस्तस्य हन्तुं व्यसर्जयत् ॥२०३॥

नवापमानखिन्नः स मिलितानन्तसैनिकः । प्रत्यावृत्य ततो मानी वाराहं क्षेत्रमाययौ ॥२०४॥

205 श्रुत्वा समेतसैन्यं तं प्रत्यायातं प्रतापिनम् । आस्कन्दशङ्किनी दिद्दा सामात्या समकम्पत ॥२०५॥

---

१७९. [1]) Thus corr. by later hand from $A_1$ राज्ञो. १८०. [1]) Thus corr. by $A_3$ from $A_1$ °ह्यार्भू°. १८१. [1]) Thus corr. by $A_3$ from $A_1$ °प्रतिमान्प्रा°.—[2]) $A_3$ कुम्भाण.—[3]) Thus corr. by $A_3$ from $A_1$ श्लाघ्यानम°. १८३. [1]) Thus corr. by $A_3$ from $A_1$ °दविदवे°. १८५. [1]) Thus corr. by $A_3$ from $A_1$ °तस्थिति:. १८७. [1]) Thus corr. by $A_3$ from $A_1$ नवमेध्ये. १८९. [1]) Thus corr. by $A_3$ from $A_1$ सन्धिवि°. १९४. [1]) $A_4$ gloss सभर्तृकैव सती. १९५. [1]) Thus corr. by $A_3$ from $A_1$ पत्न्यौ.—[2]) $A_1$ °नुसरनं. १९९. [1]) Thus $A_3$; $A_1$ तन्त्र°. २०२. [1]) Thus corr. by later hand from $A_1$ प्राप्य; $A_4$ gloss प्राप इत्यर्थः.

तस्मिन्क्षेत्रे गतं श्रान्तं विलप्य स्वामिनं चिरम् । वराहपादसविधे तेन[1] शस्त्रं समर्पितम् ॥२०६॥
द्रोहसंभावनापायं शस्त्रत्यागेन मन्त्रिणा । स्वस्य संमार्जितं तेन राजमातुश्च साध्वसम् ॥२०७॥
शुक्लाशुक्लविचारवामनमनसः सेवा महद्वैशसं क्रुद्धेऽस्मिन्प्रतिकारकर्म गहनद्रोहापवादावहम् ।
येन न्यूनगुणैरशेषकरणीभावोऽपि तस्मै परं कोपः कोऽपि विवेकिनः समुचितः शास्त्राय शस्त्राय वा ॥२०८॥
पर्णोत्समेव शनकैः ससैन्ये फल्गुणे गते । विगताध्यापका बाला इवाभीरन्त मन्त्रिणः ॥२०९॥
योगक्षेमौ चिन्तयन्ती क्षेमगुप्तवधूरपि । अनिशं प्रजजागार स्वयं कण्टकपाटने ॥२१०॥
राज्यप्रार्थी पर्वगुप्तो मन्त्रिणौ कोशपीथिनौ । आजिमहस्करौ पूर्वं पुत्र्योर्यौ[1] छोजभूभटौ ॥२११॥
तयोः प्रजातौ तनयौ ख्यातौ महिमपाटलौ । अवर्धिषातां यौ राजमन्दिरे राजपुत्रवत् ॥२१२॥
तौ तथावस्थितावेव तत्कालं राज्यलालसौ । संमन्त्र्य समगंसातां मुख्यैर्हिम्मकादिभिः[1] ॥२१३॥
बलिनौ तावबलया राज्ञ्यापास्तौ नृपास्पदात् । समन्यू स्वगृहादास्तां यावत्कृतगतागतौ ॥२१४॥
एकतः पृष्ठतः प्राप्तान्महिम्नो निर्गतस्य सा । निर्वासनाय याष्टीकांस्तावत्प्रकटवैकृता ॥२१५॥
शक्तिसेनाभिधानस्य[1] श्वशुरस्य निवेशनम् । प्रविवेश स तज्ज्ञात्वा तं ते तत्रापि रुरुधुः ॥२१६॥
शक्तिसेनेन याष्टीकाः सान्त्विता नाचलन्यदा । तदा भीतस्य जामातुर्व्यक्तं प्रादात्स संश्रयम् ॥२१७॥
तं[1] लब्धसंश्रयं प्राप हिम्मको मुकुलस्तथा । एरमन्तकनामा च परिहासपुराश्रयः ॥२१८॥
श्रीमानुदयगुप्ताख्योऽप्यमृताकरनन्दनः । ललितादित्यपुरजा यशोधरमुखा अपि ॥२१९॥
एकैके ते[1] मिथः सैन्यैर्भुवनक्षोभकारिणः । संभूय चक्रुर्वैराज्यं महिम्नः पक्षमाश्रिताः ॥२२०॥
तस्मिन्महाभये दिद्दापक्षं मन्त्री सबान्धवः । एक एव तु तत्याज नाद्रोही नरवाहनः ॥२२१॥
प्रवर्धमानपृतना योद्धुं बद्धोद्यमास्ततः । पद्मस्वाम्यन्तिके प्रापुर्दीप्यमानायुधा द्विषः ॥२२२॥
अथ शूरमठे दिद्दा विसृज्यात्मजमाकुला । आपच्छान्तिक्षमांस्तांस्तानुपायान्समचिन्तयत् ॥२२३॥
ललितादित्यपुरजान्द्विजान्स्वर्णेन भूरिणा । तूर्णं स्वीकृत्य विदधे रिपूणां संघभेदनम् ॥२२४॥
एकाक्षेपेऽखिलैः कोपो विधेय इति वादिभिः । महिम्नः पीतकोशैस्तैः संधिर्देव्या समं कृतः ॥२२५॥
गोष्पदोल्लङ्घने यस्याः शक्तिर्नाशायि केनचित् । वायुपुत्रायितं पङ्गु तया संघाब्धिलङ्घने ॥२२६॥
यत्संग्रहो रत्नमहौषधीनां करोति सर्वव्यसनावसानम् ।
त्यागेन तदस्य भवेन्नमोऽस्तु[1] विनम्रभावाय धनाय तस्मै ॥२२७॥
उत्कोचकाञ्चनादानेऽप्युग्रां ध्यायन्त्युपक्रियाम् । दिद्दा यशोधरादिभ्यः कम्पनादि समार्पयत्[1] ॥२२८॥
अभिचारं महिम्नश्च कृतवन्तो मितैर्दिनैः । मण्डलेऽखण्डिताशस्य रुजाया[1]ः समजृम्भत ॥२२९॥
कदाचित्थक्कनाख्यस्य[1] शाहीयस्योपरि क्रुधा । सद्यः स्वयंग्राहैर्भाषां कम्पनाधिपतिर्ददौ ॥२३०॥
तत्रैव निम्नगाशैलदुर्गं प्रविशता जवात् । अखण्डशक्तिना तेन बलादग्राहि थक्कनः ॥२३१॥

---

२०६. [1]) Corr. by later hand from $A_1$ तत्र. २११. [1]) Thus corr. by later hand from $A_1$ यौ. २१३. [1]) Emended; A R G °हिंमका°. २१६. [1]) Thus corr. by $A_2$ from $A_1$ शक्तिसेनाभि°. २१८. [1]) Thus corr. by $A_2$ from $A_1$ तैलैक्य°; $A_2$ gloss तं महिमानं. २२०. [1]) Thus $A_2$; $A_1$ एकैकं तं. २२७. [1]) Thus corr. by $A_2$ from $A_1$ भवेत्स्तु. २२८. [1]) Emended; A R G समर्पयत. २२९. [1]) Thus $A_2$; $A_1$ रिजायाः. Cf. vi. 260. २३०. [1]) Thus corr. by $A_1$ from °चिद्धुक्कना°.

स कृतप्रणतेस्तस्य करमादाय भूपतेः । अभिषेकाम्बुभिश्चक्रे श्रीलताप्यायनं पुनः ॥२३२॥
लब्धप्रवेशैः[1] समये तस्मिन्नक्कादिभिः खलैः । कम्पनाधिपती राज्ञ्या विद्वेषोपाहि मुग्धया ॥२३३॥
सर्वोपलेषु स्फटिकाश्मनश्च शीलोज्झितस्त्रीहृदयस्य चान्तः ।
असंनिधानात्सततस्थितीनामन्योपरागः कुरुते प्रवेशम् ॥२३४॥
स्वचित्तसंधायि वचो वदन्तो धूर्ता वितन्वन्ति मनःप्रवेशम् ।
235 पृथग्जनानां गणिकावधूनां विटाः प्रभूणामपि गर्भचेटाः ॥२३५॥
द्रोग्धायं धक्कनं रक्षन्धनादायीति पैशुनम् । तथ्यमेव तदीयं सा स्वसंवादादमन्यत ॥२३६॥
अथ स्वावसतिं ग्रामे कम्पनेशे जयोर्जिते । याष्टीकान्व्यसृजद्दिद्दा स्फुटं निर्वासनोद्यता ॥२३७॥
तदाक्षेपं समाकर्ण्य स्मरन्तः कोशसंविदम् । ते हिम्मकैरमन्ताद्याः पूर्ववद्विक्रियां ययुः ॥२३८॥
नरवाहनमुख्यास्तु राज्ञीपक्षं न तत्यजुः । बिभेद पूर्ववत्सापदेशं निजबलं पुनः ॥२३९॥
240 प्रविष्टेषु ततः कोपात्पुरं शुभधरादिषु । भट्टारकामठे दिद्दा भूयः पुत्रं व्यसर्जयत् ॥२४०॥
दत्तार्गले नृपगृहे स्थितां तां दैवमोहिताः । ते तदैव विना पुत्रं विमूढा नोदपाटयन् ॥२४१॥
राज्ञ्याः संजघटे लोकः परस्मिन्नेव वासरे । मङ्गलेन तदा स्थैर्यं सा किंचित्समदर्शयत् ॥२४२॥
जयाभट्टारिकापार्श्वाद्यावच्छूरमठान्तिकम् । व्याप्य स्थितैर्द्विषत्सैन्यैरस्य प्रववृते रणः ॥२४३॥
राजधानीं राजसैन्ये प्रविष्टे त्रासविद्रुते । सिंहद्वारे घटाबन्धमेकाङ्गाः समदर्शयन् ॥२४४॥
245 शरीरनिरपेक्षास्ते भीतं संस्तम्भ्य तद्बलं । अधावन्विद्विषां सैन्यं चेलुः केचिच्च शत्रवः ॥२४५॥
तस्मिन्नवसरे राजकुलभट्टः समाययौ । तूर्यघोषैर्द्विषां सैन्यं भिन्दन्नानन्दयन्निजम् ॥२४६॥
तस्मिन्प्राप्ते द्विषां सैन्यं विननाश विनश्वरम् । न द्रोहाविनयं जातु सहन्ते शस्त्रदेवताः ॥२४७॥
चोटयत्यायसान्बन्धान्स्फोटयत्युपलानिति । यः ख्यातिमवहत्संख्ये हिम्मको भीमविक्रमः ॥२४८॥
तस्यासिना राजकुलभट्टदेहार्धपातिना । चर्ममात्रं न तुत्रोट कक्कुटस्यातिसंकटे ॥२४९॥
250 विलोक्य तत्संभाव्यं सैन्ये दैन्यं समाश्रिते । अघानि हिम्मको योधैरवाहम्भिं यशोधरः ॥२५०॥
तथाप्यासीत्स्फुरन्संख्ये च एरमन्तकः क्षणम् । स भ्रमासिश्च्युतो वाहाज्जीवग्राहमगृह्यत ॥२५१॥
नाजौ तैरेष्यताधातुं यः श्रीमाञ्जजबान्धवः । जगामोदयगुप्तः स क्वापि त्यक्त्वा महाहवम् ॥२५२॥
इत्थं लब्धजया राज्ञी तत्क्षणाच्चमहीहुषा । यशोधरं शुभधरं मुकुलं च सबान्धवम् ॥२५३॥
काश्मीरिकाणां[1] यः श्राद्धशुल्कोच्छेत्ता गयान्तरे । सोऽप्येरमन्तकः शूरः परिहासपुराश्रयः ॥२५४॥
255 बद्ध्वा महाशिलां कण्ठे वितस्ताम्भसि पातितः । स्वदुर्नयफलं देव्याः प्रकोपेनानुभावितः ॥२५५॥

---

२३२.[1]) $A_2$ gloss श्रीः एव लता. २३३.[1]) Thus corr. by later hand from $A_1$ °वेशाः; R G as above. २३४.[1]) Thus corr. by $A_2$ from $A_1$ °स्योन्नराग. २३६.[1]) Thus $A_1$; $A_2$ स्वसंवादा°. २३८.[1]) $A_2$ gloss एकाङ्गेषेपिताः कोपो विशेष इत्येवंरूपां. २३९.[1]) मुग्धा supplied by $A_2$ in space left by $A_1$. २४१.[1]) Thus corr. by $A_2$ from $A_1$ नोपपाट°. २४५.[1]) Thus corr. by $A_2$ from $A_1$ अथापरि°.—[2]) The words from चेलुः to सैन्यं in the following verse are omitted by $A_1$ and supplied in margin by $A_2$. २४६.[1]) $A_2$ °भिजात्. २४७.[1]) Thus $A_1$; $A_2$ G R विनेश्वरम्. २४८.[1]) Thus corr. by later hand from $A_1$ चोट°.—[2]) क्ष्मभृत्सु supplied by $A_2$ in space left by $A_1$. २५०.[1]) Emended with C; A R G °रवहम्भिं. २५१.[1]) Thus A; R G ऐर°. २५४.[1]) Thus corr. by $A_2$ from $A_1$ काश्मीरका°.—[2]) Thus corr. by $A_2$ from $A_1$ °शुल्कोच्छेता.—[3]) Thus corr. by $A_2$ from $A_1$ गयान्तरे.—[4]) Thus corr. by $A_2$ from $A_1$ °हार°.

स्थानेश्वरादिभिर्मुख्यैर्डामरैरितरैः समम् । ते भीताः पुरतस्तस्याः पुनरेत्य प्रजृम्भिरे ॥२८३॥
अथ तद्भीतया राज्ञ्या रक्षे प्रभयमागते । आनीतः फल्गुणो भूयो धीरार्थिन्या निजान्तिकम् ॥२८४॥
285 राजकार्याणि कुर्वाणः स भूयः शस्त्रमग्रहीत् । न्यस्तशस्त्रोपि यत्सत्यं दुस्त्यजा भोगवासना ॥२८५॥
महिमा राजपुर्याविजयिनस्तस्य पश्चिमः । अद्भुतो वृद्धबन्धक्या अवरुद्ध इवाभवत् ॥२८६॥
अभूदुदयराजस्य देवीभ्रातुरतिप्रियः । यः सहायोक्षपटले जयगुप्ताभिधः कुधीः ॥२८७॥
अन्येधिकारिणस्तेन सहिताः क्रूरवृत्तयः । कश्मीरेषु व्यधुर्लुण्ठिं दुष्कृतैस्तदुपार्जितैः ॥२८८॥
दौःशील्यभाजो मातुश्च पाप्मभिर्विधुरीकृतः । अभिमन्युः क्षणे तस्मिन्क्षयरोगेण पस्पृशे ॥२८९॥
290 पण्डितः पुण्डरीकाक्षो विद्वत्पुम्भिरुपस्कृतः । कृतश्रुतः स वैदुष्यतारुण्याभ्यां विदिद्युते ॥२९०॥
तथा विशुद्धप्रकृतेस्तस्य दुष्कृतसंगमः । शोषाधायी शिरीषस्य रविताप इवाभवत् ॥२९१॥
अर्धमानः[1] प्रजाचन्द्रस्तृतीयस्यां स कार्तिके । शुक्लेष्टचत्वारिंशाब्दे ग्रस्तो निधनराहुणा ॥२९२॥
तत्पुत्रो नन्दिगुप्तस्तु बालश्चक्रे निजासने । वृद्धस्तनयशोकस्तु दिद्दाया ददधे पदम् ॥२९३॥
सा शोकपिहितक्रौर्या तस्थौ प्रशमशीतला । रविरश्मशलाकेव ध्वान्तच्छन्नोष्मवैकृता ॥२९४॥
295 ततः प्रभृत्यद्भुताभिस्तस्या धर्मप्रवृत्तिभिः । कुकर्मभिरपोढापि लक्ष्मीः प्राप्ता पवित्रताम् ॥२९५॥
नगराधिपतिर्भुय्यः सिन्धुभ्राता शुभाशयः । तदीयधर्मचर्यायां बभूव परिपोषकः ॥२९६॥
सा तेनोत्पादितानर्घजनरागा गतैनसा । ततः प्रभृत्यभूद्देवी सर्वलोकस्य संमता ॥२९७॥
राज्ञः स सचिवः सत्यं दुष्प्रापो लुप्तचण्डिमा । कुर्वाणः सुखसेव्यत्वं हेमन्त इव भास्वतः ॥२९८॥
सा निर्ममौ विपन्नस्य सूनोः सुकृतवृद्धये । अभिमन्युस्वामिनोभूदभिमन्युपुरस्य च ॥२९९॥
300 अथ दिद्दापुरोपेतो दिद्दास्वामी तया कृतः । मठश्च मध्यदेशीयलाटसौडोत्र[1]संभवः ॥३००॥
भर्तुः कङ्कणवर्षस्य पुण्योत्कर्षाभिवृद्धये । चकार कङ्कणपुरं रमणी स्वर्णवर्षिणी ॥३०१॥
श्वेतशैलमयं चान्यं सा दिद्दास्वामिनं व्यधात् । धवलं चरणीभूतगङ्गाम्भःप्लवनैरिव ॥३०२॥
चक्रे काश्मीरिकाणां च दैशिकानां समाश्रयः[1] । तयात्युच्चचतुःशालो विहारश्चारुसंपदा ॥३०३॥
श्रीसिंहस्वामिनं नाम्ना सिंहराजस्य सा पितुः । मठं च विदधे स्थित्यै[1] दैशिकानां द्विजन्मनाम् ॥३०४॥
305 मठप्रतिष्ठावैकुण्ठनिर्माणाद्यैः स्वकर्मभिः । तयातिपावनश्चक्रे वितस्तासिन्धुसंगमः ॥३०५॥
तेषु तेषु प्रदेशेषु किमुक्तैर्भूरिभिः शुभैः[1] । सा प्रतिष्ठा व्यरचयच्चतुःषष्टिमिति श्रुतिः ॥३०६॥
जीर्णोद्धारकृता देव्या भ्रष्टप्राकारमण्डलाः । प्रायः सुरगृहाः सर्वे शिलावप्रावृताः कृताः ॥३०७॥
क्रीडाचङ्क्रमणे राज्ञ्याः पङ्ग्वा विग्रहवाहिनी । वल्गाभिधा वैवधिकी वल्गामठमकारयत् ॥३०८॥
तीर्थसेवनमौनभागपि तिमिः सक्तः स्वकुल्याशने वाताशान्यमते शिखी घनपयोमात्राशनोप्यन्वहम् ।
विश्वस्ताखिलचारिणः प्रकटितध्यानोपि भुङ्क्ते बकः सत्कर्माचरणेपि दोषविकृती[1] न प्रत्ययः पापिनाम् ॥३०९॥
310 चर्वणी[1] वर्षमात्रेण शान्तशोका बभूव सा । भोगोत्सुकार्भके तस्मिन्नपरि व्यभिचारकृत् ॥३१०॥

२९२. 1) Thus A R G; Edd. वर्धमानः, found also *sec. manu* in R G. $A_2$ gloss अर्धचन्द्रः खण्डबिम्बश्च. ३००. 1) Thus A R G. ३०३. 1) Thus corr. by $A_2$ from $A_1$ अनाश्र°. ३०४. 1) स्थित्यै omitted by $A_1$ and supplied in margin by $A_2$. ३०६. 1) Thus $A_2$; $A_1$ शुभाः. ३०९. 1) Thus $A_1$; $A_2$ °विरती. ३१०. 1) $A_2$ gloss चर्वणी असती इत्यर्थः.

वर्षे एकाधपञ्चाशे[1] नीतः पक्षे सिते क्षयम् । स मार्गशीर्षद्वादश्याममार्गेण्यमया तया ॥३११॥
पौत्रस्त्रिभुवनो नाम मार्गशीर्षे[1] सितेहनि । पञ्चमेप्येकपञ्चाशे वर्षे तद्वत्तया हतः ॥३१२॥
अथ मृत्युपथे राज्यमाशि स्वैरं निवेशितः । क्रूरया परमः पौत्रो भीमगुप्ताभिधस्तया ॥३१३॥
तस्मिन्नवसरे वृद्धः फल्गुणोपि व्यपद्यत । निगूढक्रौर्यदौःशील्या दिद्दा यद्भीरवादभूत् ॥३१४॥
बभूव साथ[1] स्वच्छन्ददुष्टचेष्टाशतोत्कटा । अध्वस्तपटा मत्तदन्तिमूर्तिरिवोत्कटा ॥३१५॥ 315
महाभिजनजातानामपि हा धिङ्निसर्गतः । सरितामिव नारीणां वृत्तिर्निम्नानुसारिणी ॥३१६॥
स्रोतोधिराज्यमधिगम्य विराजमानास्सिन्धोः प्रसूय कमलाल्पपयोमिकेते ।
जाते सरस्यविरतं जलजे प्रसक्ता नार्यो महाभिजनजा अपि नीचभोग्याः ॥३१७॥
खशस्य वहिवासांख्यपर्णोत्सग्रामजन्मनः । बाणस्य तनुस्तुङ्गाख्योविशन्महिषपालकः[1] ॥३१८॥
प्रविष्टो जातु कश्मीरांल्लेखहारककर्मणा । सुगन्धिसीहभकटनागाढयिकषण्मुखैः[1] ॥३१९॥
पञ्चभिर्भ्रातृभिः सार्धं सांधि[1]विग्रहिकान्तिके[2] । देव्या दृग्गोचरं यातो हृदयावर्जकोभवत् ॥३२०॥ तिलकम् ॥ 320
रहःप्रवेशितो वृत्त्या स भाग्यर्धबलायुषा । संभुक्तभूरिजाराया अपि तस्याः प्रियोभवत् ॥३२१॥
तुङ्गानुरागिणी राज्ञी पापा लज्जोज्झिता ततः । रसदानेन वैमुख्यभाजं भुय्यमघातयत् ॥३२२॥
धिक्स्त्रीश्वरान्कुपतीन्येषां विषमचेतसाम् । फलभून्या स्तुतिस्तोषे रोषे प्राणधनक्षयः ॥३२३॥
रक्कजो देवकलशो वेलावित्तः कृतस्तया । भुय्याधिकारे कौटिल्यमाचरत्त्रिजपो विटः ॥३२४॥
येपि कर्दमराजाद्या वीरा द्वारादिनायकाः । तेपि कौटिल्यमभजन्[1]न्येषां गणनैव का ॥३२५॥
चतुष्पञ्चानि वर्षाणि तिष्ठन्नृपगृहे शिशुः । भीमगुप्तोभवद्यावत्किंचित्प्रौढीभवन्मतिः ॥३२६॥
राज्यव्यवस्था यात्रश्च पितामह्याश्च वृत्तयः । दुःस्थिताः प्रत्यभासन्त संस्थाप्यास्तस्य चेतसि ॥३२७॥
भङ्गशीलविहीनाया निर्घृणाया निसर्गतः । तावत्तेयधियस्तस्याः स चिन्त्यः समपद्यत ॥३२८॥
अभिमन्युवधूस्तं[1] हि चक्रे गूढमवेशितम् । महाभिजनजं पुत्रं तस्मात्सोभूत्तथाविधः ॥३२९॥
सा देवकलशेनाथ दत्तमन्त्रा विशङ्किता । त्रपोज्झिता स्पष्टमेव भीमगुप्तमबन्धयत् ॥३३०॥ 330
निगूढे नन्दिगुप्तादिद्रोहे लोकस्य योभवत् । संदेहः स तदा तेन व्यक्तकृत्येन वारितः ॥३३१॥
ताभिस्ताभिर्यातनाभिर्भीमगुप्तं निपात्य सा । षट्पञ्चाशेभवद्वर्षे स्वयं क्रान्तनृपासना ॥३३२॥
प्रवृद्धरागया राज्ञ्या दत्तोद्रेको दिने दिने । सर्वाधिकारी तुङ्गोथ बभूवाधरि[1]ताखिलः ॥३३३॥
सभ्रातृकेन तुङ्गेन मीलिताः पूर्वमन्त्रिणः । राज्यविप्लवमाधातुमयतन्त विरागिणः ॥३३४॥
तेथ संमन्त्र्य कश्मीरानानिन्युः कूरपौत्रम् । उग्रं विग्रहराजाख्यं दिद्दाभ्रातुः सुतं नृपम् ॥३३५॥ 335
मुक्त्वाग्रहारान्स[1] प्राप्तो विधातुं राज्यविप्लवम् । धीमान्प्रायोपवेशार्थं द्रुतं प्रावेशयद्[2]द्विजान् ॥३३६॥
विहितैक्येषु विप्रेषु लोकः सर्वोपि विप्लुतः । अन्विवेषान्यदा तुङ्गं तत्र तत्र जिघांसया ॥३३७॥

३११. [1]) Thus $A_1$; $A_2$ एकोनप°. ३१२. [1]) Thus corr. by later hand from $A_1$ मार्गशीर्ष. ३१५. [1]) बभूव साथ supplied by $A_2$ in space left by $A_1$. ३१८. [1]) $A_2$ gloss कोरीर्ष ग्राम:. ३१९. [1]) ख supplied by $A_2$ in space left by $A_1$. ३२०. [1]) Corr. by $A_2$ from $A_1$ सन्धि°.—[2]) Thus $A_1$; $A_2$ °कान्तके. ३२५. [1]) Thus corr. by $A_2$ from $A_1$ कौरिल्य°. ३२९. [1]) Thus corr. by $A_2$ from $A_1$ अभिमन्यव°. ३३३. [1]) धरि supplied by $A_2$ in space left by $A_1$. ३३६. [1]) $A_2$ gloss ग्राम· भोजनस्थान:.—[2]) Thus $A_1$; $A_2$ प्रावेशयद्वि°.

कस्मिंश्चित्पिहितद्वारे तुङ्गं प्रच्छाद्य वेश्मनि । दिनानि कतिचिद्दिद्दा तस्थावास्कन्दशङ्किनी ॥३३८॥
तया स्वर्णप्रदानेन सुमनोमन्तकादयः । ब्राह्मणाः समगृह्यन्त ततः प्रायो न्यवर्तत ॥३३९॥
340 एवं तस्मिन्महाक्षेपे तया दानेन वारिते । ययौ विग्रहराजः स भग्नशक्तिर्यथागतम् ॥३४०॥
अथ दार्ढ्यं समासाद्य तुङ्गाद्याः प्रभविष्णवः । शनैः कर्दमराजादीञ्जघ्नुर्विहितविभ्रमान् ॥३४१॥
सुलक्कनो रक्कसूनुस्तथान्ये मुख्यमन्त्रिणः । दुष्टैर्निर्वासिता देशात्तुष्टैस्तैः संप्रवेशिताः ॥३४२॥
प्रवर्धमानवैरेण गूढदूतैर्विसर्जितैः । प्रायं विग्रहराजेन ब्राह्मणाः कारिताः पुनः ॥३४३॥
उत्कोचादित्सया विप्रा भूयः प्रायविधायिनः । लब्धस्थैर्येण तुङ्गेन संनिपत्यापहस्तिताः ॥३४४॥
345 तेषां मध्ये वसन्गूढमादित्याख्यः पलायितः । हतो विग्रहराजस्य प्रियः कटकवारिकः ॥३४५॥
शस्त्रक्षतः प्रतीहारो वत्सराजाभिधः पुनः । न्यक्कोतकादिभिर्भोजञ्जीवग्राहमगृह्यत ॥३४६॥
ते स्वर्णग्राहिणो विप्राः सुमनोमन्तकादयः । सर्वेऽपि बद्धास्तुङ्गेन कारागारं प्रवेशिताः ॥३४७॥
अथ फल्गुणनाशेन दग्धे राजपुरीपतौ । तां प्रत्यारब्धिरभवत्क्रुध्यतां सर्वमन्त्रिणाम् ॥३४८॥
निपत्य संकटे वीरः पृथ्वीपालाभिधस्ततः । चक्रे राजपुरीराजः काश्मीरिकाबलक्षयम् ॥३४९॥
350 शिपाटको हंसराजो विपन्नौ तत्र मन्त्रिणौ । चन्द्राद्यैर्दुर्गतिर्दृष्टा[1] मरणं यत्र भेषजम्[2] ॥३५०॥
अथान्येन पथाकस्मात्तुङ्गः सार्धं सहोदरैः । कृत्स्नां राजपुरीं वीरः प्रविश्य सहसादहत्[1] ॥३५१॥
ननाश तेनोपायेन पृथ्वीपालः स पार्थिवः । शेषाणां मन्त्रिणां सैन्यं प्राप मुक्तिं च संकटात् ॥३५२॥
अबलः सन्स भूपालस्तुङ्गाय प्रददौ करम् । एवं कृतं तदा तेन नष्टस्यार्थस्य योजनम् ॥३५३॥
प्रविशन्नगरं तुङ्गस्ततः स्वीकृतकम्पनः । चकार डामरग्रामसंहारं सिंहविक्रमः ॥३५४॥
355 दिद्दाप्युदयराजस्य भ्रातुः पुत्रं परीक्षितम् । चक्रे संग्रामराजाख्यं युवराजमशङ्किता ॥३५५॥
सा हि सर्वाञ्छिशुप्रायान्पुरो भ्रातृसुतान्स्थितान् । परीक्षितुं मुमोचाग्रे पालेवतफलावलिम् ॥३५६॥
शक्तः कियन्ति कः प्राप्तुं फलान्यत्रेतिवादिनी । साभवद्राजपुत्राणां तेषां कलहकारणम् ॥३५७॥
गृहीताल्पफलान्सप्रहारांस्तान्ददर्श च । संग्रामराजं[1] स्वस्वल्पफलभाजमविक्षतम् ॥३५८॥
अनन्तफलसंप्राप्तावक्षतत्वे च कारणम् । सविस्मयं तया पृष्टः स तामेवं तदाब्रवीत् ॥३५९॥
360 अन्योन्यकलहव्यग्रानेतान्कृत्वा पृथग्वसन् । समवापं फलान्यस्मिन्न चाभूवं परिक्षतः ॥३६०॥
व्यसनं संप्रवेश्यान्यान्स्थितानामप्रमादिनाम् । न काः क्लेशविहीनानां[2] घटन्ते स्वार्थसिद्धयः ॥३६१॥
श्रुत्वेति तस्य सा वाचमप्रमत्तत्वसूचिकाम् । भीरुर्नारीस्वभावेन राज्येऽमन्यत योग्यताम् ॥३६२॥
शूरस्य लभ्यं शौर्येण भीरोर्भीरुतया यथा । कार्यं हि प्रतिभात्यन्तर्न भवेच्च तदन्यथा ॥३६३॥
काष्ठं बहुघुण्डितमपि भवेच्छीतशान्त्यै कपीनां लोष्टं शुद्ध्यै सलिलमनलधामि[1]शौचेणकानाम् ।
अन्तर्भावा विदधति यथा भाविनः कार्यसिद्धिं तत्त्वं तेषां क्वचन सहजं वस्तुतो नास्ति किंचित् ॥३६४॥

---

३५०. [1]) Thus A₂; A₁ °दुर्गतिं दृष्ट्वा.—[2]) Thus corr. by later hand from A₁ भैष°. ३५१. [1]) सहसा supplied by A₂ in space left by A₁. ३५८. [1]) राजं omitted by A₁ and supplied by A₂. ३६१. [1]) Thus corr. by A₂; A₁ व्यसनं संप्रविश्या°.—[2]) Thus corr. by A₂ from A₁ °विहीनां. ३६४. [1]) A₂ gloss अग्निशौचा वृथा अग्निमभन्ति विषमूषका विषं च न विपद्यन्ते जीविता - - - - -. [2]) A₂ यथाभावन.

तस्यामेकाब्दहीनाशीत्यब्दशुक्लभाद्राष्टमीदिने । देव्यां दिवं प्रयातायां युवराजोऽभवन्नृपः ॥३६५॥ 365

श्रीसंबन्धेन भूपालवंश्यानां भुवनाद्भुतः । तृतीयः परिवर्तोऽयं वर्ततेऽमुष्य मण्डले ॥३६६॥

निर्दष्टकण्टककुले वसुसंपदाढ्ये श्रीसातवाहकुलमाप महीतलेऽस्मिन् ।
शाखाभिरम्यकुसुमो जलदाम्बुसिक्ते चूतप्ररोह इव केलिवने प्रवृद्धिम् ॥३६७॥

अथ स मृदुलयान्तर्गूढधैर्यानुभावः सुखमवनिमशेषां दोष्णि संग्रामराजः ।
बिसकुलनिभशोभानिह्नुतप्राणसारः फणकुलमुरगाणामीशितेव न्यधत्त ॥३६८॥

इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां षष्ठस्तरङ्गः ॥
अत्र वर्षचतुःषष्टी मासेष्वर्धं दिनेषु च । अष्टस्वभुवन्भूपाला दश भूलोकभोगिनः ॥

---

३६६. 1) Thus corr. by later hand from A1 °बंधे°. ३६७. 1) Thus corr. by A2 from A1 [illegible]°.—2) Thus corr. by A2 from A1 [illegible]°; R G as above.—3) A2 [illegible]. ३६८. 1) Thus corr. by A2 from A1 [illegible]. *Colophon.* 1) A2 inserts here the note: [illegible] ॥. —2) A1 adds here: [illegible].—3) A2 [illegible].

## ॥ सप्तमस्तरङ्गः ॥

मातुस्ते जनिर्निर्मले[1] पितृकुले श्लाघ्या तनुर्वेधसा त्वं संध्याहितसंनिधिर्मम जपारम्भेधरे खेलसि ।
संध्यावन्दनसाभ्यसूयगिरिजासूक्त्येति शीर्षाञ्चलैर्यः संध्यामपि वन्दते स्म स जगत्प्रीणातु गौरीश्वरः ॥ १॥
क्ष्मां[1] क्ष्मापतिर्बिभ्रन्मनसा च भुजेन च । गाम्भीर्येण च शक्त्या च सोऽजयद्वाहिनीपतीन्[2] ॥२॥
जाते राज्ञीक्षये भङ्गो यैस्तुङ्गस्य तदाखिलैः । दिनश्रीविगमे संध्याप्रसङ्गस्येव रागिणः ॥३॥
तत्तत्प्रतिभटाटोपत्रोटनात्प्रत्युतास्य तैः । उदयो ददृशे शश्वद्गतिं को वेत्ति वेधसः ॥४॥ युग्मम् ॥
5 नृपेण जातज्ञातेयः शूरः शक्तिसमन्वितः । सर्वाधिकारयोग्योऽगा[1]त्तदा चन्द्राकरः क्षयम् ॥५॥
अन्ये भीमतिकाग्रामदिविरस्योरुसंपदः । पुण्याकरस्य तनयाः शूराः शान्तिं प्रपेदिरे ॥६॥
समर्थमन्त्रिविरहादनिच्छन्नपि वेधसा । निन्ये गत्यन्तरत्यक्तस्तुङ्गपक्षं क्ष्मापतिः ॥७॥
संग्रामराजतुङ्गादीन्देवी कोशमपाययत्[1] । मुमूर्षन्ती पुरा स्थातुमद्रोहेणेतरेतरम् ॥८॥
क्लेशासहो महीपालस्ततः कार्यवशादपि । तुङ्गन्यस्तप्रजाकार्यो भोगाभ्यासालसोऽभवत् ॥९॥
10 पर्याप्तं तस्य भीरुत्वं कियदन्यत्प्रकाश्यताम् । असमैर्यौनसंबन्धैश्चक्षमे यशसः क्षतिम् ॥१०॥
साहायकार्थी यस्मादाच्छीशौर्याद्विमते सुताम् । दिद्दामठाधिपतये प्रेमनाम्ने स लोठिकाम् ॥११॥
क्व लोकोहद्दनोत्पन्नभूभृद्योग्या नृपात्मजा । प्रतिग्रहजलक्लिन्नपाणिः क्वाल्पमना द्विजः ॥१२॥
अथ तुङ्गादिभङ्गाय प्रायं ब्राह्मणमन्त्रिणः । परिहासपुरे विप्रपारिषद्यानकारयन् ॥१३॥
विप्रमन्त्रिमतैक्येन कृतो राज्ञः स विप्लवः । दुःसहः पवमानाग्निसमागमसमोऽभवत् ॥१४॥
15 राज्ञोऽप्युत्पाटने सज्जैः कथंचित्प्रार्थितैर्[1] द्विजैः । मतिः क्षान्तिवदुपाये[2] तुङ्गनिःसारणे कृता ॥१५॥
राज्ञा[1] तुङ्गादिभिर्धैर्यथावत्तेभ्यः प्रतिश्रुतम् । अन्यस्यार्पयितुं लग्नास्तावत्ते शठबुद्धयः ॥१६॥
तुङ्गास्कन्देन विप्रोऽयं यो मृतस्तद्गृहे[1] वयम् । तं निर्दहाम इत्युक्त्वा शवः कोऽप्यरघट्टतः ॥१७॥
तैरुद्धृत्य यदानीतः शठैस्तुङ्गगृहान्तिकं । केशहोमाच्च विहिताद्या कृत्योत्थापिताभवत् ॥१८॥
तया प्रतीपपातिन्या निःशौचानां द्विजन्मनाम् । अकस्मात्सिरगाच्छस्त्रं विनाशायोत्थिते कलौ ॥१९॥ तिलकम्॥
20 ततः पलायिता विप्रा यस्तेषां मन्त्रदोऽभवत् । निगूढं राजकलशस्तद्वेश्म प्राविशद्भयात् ॥२०॥
स व्यक्तीभूतकौटिल्यः संग्रामं सुचिरं व्यधात् । अपहारैस्तु ते विप्राः पलाय्य स्वगृहाण्ययुः ॥२१॥

---

१. [1]) $A_2$ निर्मिते. २. [1]) $A_2$ gloss भुवं क्षान्तिं च.—[2]) $A_2$ gloss सेनापतीन् शत्रुश्च. ५. [1]) गा supplied by $A_2$. ८. [1]) $A_2$ gloss कोशं । दिव्यं । शपथमकारयत् । पीतकोशान् कृतवती इत्यर्थः. १५. [1]) Thus corr. by $A_3$ from $A_1$ प्रार्थितो.—[2]) $A_2$ °प्रायैस्तु°. १६. [1]) Thus corr. by $A_3$ from $A_1$ राज्ञस्तु°.—[2]) $A_2$ gloss निःसारणं. १७. [1]) के supplied by $A_2$.—[2]) $A_4$ gloss तुङ्गगृहे.

विजिते राजकलशे समकार्षी हिजातयः । मन्त्रिणः श्रीधरमुखाः समागत्य व्यधुर्नृपम् ॥२२॥
ते कृत्वा सुभटस्कर्म समाप्तिं समरे गताः । निर्भिद्य मण्डलं सप्त सप्तसप्तेर्दिवं ययुः ॥२३॥
जितः सुगन्धिसीहेन[1] तेषु शान्तेषु संयुगे । बद्धाय राजकलशस्तुङ्गेनानायितो गृहम् ॥२४॥
नीयमानोधिरोप्याशु स्कन्धं मार्गेषु विस्तनः । तुङ्गस्य पुण्यवादैः स नर्तितोपहतायुधः ॥२५॥
अन्योपि भूतिकलशो नाम मन्त्री विनिर्जितः । सुतेन राजकलशेन सह भूरमठं ययौ ॥२६॥
क्रमात्सुगन्धिसीहाद्यैर्मुक्तः करुणया ततः । सपुत्रः शोचमानाभिमानी देशान्तरं ययौ ॥२७॥
परिहासपुरादेवं जातो यो देशविप्लवः । स दैवयोगात्तुङ्गस्य शुभाय प्रत्युताभवत् ॥२८॥
ततः प्रसादिते राज्ञि गुणदेवेन मन्त्रिणा । आययौ भूतिकलशः कृतगङ्गानिमज्जनः ॥२९॥
पुनर्नृपगृहे तस्मिन्किंचिल्लब्धपदे शनैः । तुङ्गं निहन्तुं राज्ञैव गूढं दूताः प्रयोजिताः ॥३०॥
ज्ञातवार्तेन तुङ्गेन तस्मिन्नर्थे प्रकाशिते । सपुत्रो भूतिकलशो राज्ञा निर्वासितः पुनः ॥३१॥
अवष्टम्भं मनाग्लेभे चन्द्राकरसुतः शनैः । यो मध्यामन्तकः सोपि तस्मिन्काले व्यपद्यत ॥३२॥
भुक्त्वा किंचित्क्षणं भूभृत्कन्यासंभोगभाजनम् । राजोपकारकृच्छ्रीमान्प्रेमापि प्रमयं ययौ ॥३३॥
विपेदिरेन्ये गङ्गाद्याः सर्वेपि नृपतिप्रियाः । अवाशिष्यत भोगाय तुङ्गः सभ्रातृकः परम् ॥३४॥
इति यो यो हि वृत्तान्तस्तस्य नाशाय शङ्कितः । स स दैवानुकूल्येन प्रत्युतोद्रेचको[1]भवत् ॥३५॥
कालक्रमत्रुटितसंश्रयभूः स्वमूलमाशाश्रयी तटतरुः सरितोम्बुपूरैः ।
यैः शङ्क्यते निपततीति विकीर्णमृद्भिस्तैरेव तस्य हि भवेत्स्थितिभूमिदार्ढ्यम् ॥३६॥
नीत्युज्ज्वलं व्यवहरन्प्रजाराधनतत्परः । प्राक्पुण्यसंक्षयात्तुङ्गः शनैरासीत्स्खलन्मतिः ॥३७॥
तस्य भाग्यापहाराय हीनजन्मानमाददे । साहायकाय कायस्थं क्षुद्रं भद्रेश्वराभिधम् ॥३८॥
त्रिङ्गाणिज्यं[1] सौनिकत्वं काष्ठविक्रयितादि[2] च । आरामिकस्य यस्यासीत्कृत्यं वंशक्रमोचितम् ॥३९॥
कम्बलोद्वृष्टपृष्ठोथ भोजनार्थमवालगत् । भस्त्रामषीभाण्डवाही यश्च पश्चान्नियोगिनाम् ॥४०॥
अनन्तराजकार्यादिचिन्ताश्रान्तो विधाय तम् । तुङ्गः सहायं नाबुद्ध संसर्गाद्भाग्यसंक्षयम् ॥४१॥
धार्मिकं तेन धर्मार्के विनिवार्यार्यचेतसम् । गृहकृत्याधिकारे[1] स दुष्कृती विनिवेशितः ॥४२॥
देवगोब्राह्मणानाथातिथिराजोपजीविनाम् । अकालमृत्युर्विदधे वृत्तिच्छेदं स दुर्मतिः ॥४३॥
शवाजीवोपि पुष्णाति क्रूरः कापालिको निजान् । भद्रेश्वरस्तु पापोभूद्द्विजानामपि जीवहृत् ॥४४॥
तुङ्गेन चैत्रे सर्वत्र कृते भद्रेश्वरे प्रभौ । सुगन्धिसीहः प्रययावाषाढे मासि संक्षयम् ॥४५॥
परलोकं गते तस्मिन्सर्वभारसहेनुजे । तुङ्गश्छिद्रोपमाकृत्यं सदैन्योमन्यतात्मनः ॥४६॥
श्रीत्रिलोचनपालस्य शाहेः साहायकार्थिनः । तेषां ततो मार्गशीर्षे मासि तं[2] व्यसृजन्नृपः ॥४७॥
राजपुत्रमहामात्यसामन्तादिनिरन्तरम् । सैन्यं तमन्वगाद्भूरि भुवनक्षोभनक्षमम् ॥४८॥

---

२४. [1]) $A_4$ gloss तुङ्गानुजेन. २५. [1]) $A_2$ gloss कृशिकारः. ३५. [1]) Thus emended with C; A R G °सीद्गलम्. ३९. [1]) $A_2$ gloss सोमपाविक्रयित्वं.—[2]) Thus corr. by $A_2$ from $A_1$ °कविक्रयादि. ४०. [1]) The first half of this verse has been omitted by $A_1$ and supplied by $A_2$ in margin. ४२. [1]) Thus corr. by $A_2$ from $A_1$ °कारि. ४७. [1]) $A_4$ gloss गुरुत्वसमये.—[2]) $A_4$ gloss तुङ्गं.

अग्रागतेन सत्वरं[1] शाहिना कृतसत्क्रियः । पञ्चषाणि दिनान्यासीत्तद्देशे स मदोन्मदः ॥४९॥

50 प्रजागरचरन्यासशस्त्राभ्यासादिवासनाः । अभियोगोचिताः शाहिरपश्यंस्तं तदाब्रवीत् ॥५०॥ युग्मम् ॥

तुरुष्कसमरे यावन्न यूयं कृतयुद्धयः । आलस्यविषमालापविश्वस्तास्मिन्गिरेस्तटे ॥५१॥

एवं त्रिलोचनेनोक्तं सोपहाय हितं वचः । तस्थौ परं समं सैन्यैस्तस्सैकाहाहवोत्सुकः ॥५२॥

हम्मीरेण तदा सैन्यं जिज्ञासार्थं विसर्जितम् । तौषीपारे[2] मितप्रायैस्ततस्तीर्त्वावधीद्दलैः ॥५३॥

ततस्तं माहितोत्सेकमपि शाहिः पुनः पुनः । जगादाहवतत्त्वज्ञः पूर्वोक्तामेव संविदम् ॥५४॥

55 स तस्य नाग्रहीद्वाक्यं रणौत्सुक्यवशंवदः । प्रत्यासन्नविनाशानामुपदेशो निरर्थकः ॥५५॥

प्रातस्ततः स्वयं कोपात्तुरुष्कानीकनायकः । सर्वाभिसारेणागच्छच्छलाहवविशारदः ॥५६॥

अथ तुङ्गस्य कटकः सहसा भङ्गमाययौ । शाहिसैन्यं परं संख्ये ददृशे विवरक्षणम् ॥५७॥

शाहिसैन्ये गतेऽप्यासीज्जयसिंहः स्फुरद्रणे । श्रीवर्धनश्च सांग्रामिर्विभ्रमार्कश्च डामरः ॥५८॥

घोरे तुरंगतुमुले प्रहरद्भिस्त्रिभिर्भटैः । वीरक्षेत्रे निजे देशे रक्षितस्तैर्यशःक्षयः ॥५९॥

60 कस्त्रिलोचनपालस्य माहात्म्यं वक्तुमीश्वरः । निःसंख्या अपि यं संख्ये न जेतुमशकन्द्विषः ॥६०॥

शुशुभे रुधिरासारवर्षी युद्धे त्रिलोचनः । कल्पान्तदहनज्योतिर्विसारीव त्रिलोचनः ॥६१॥

स योधयित्वा संग्रामे कोटीः कङ्कटधारिणाम् । एकाकी कार्यमर्मज्ञो निर्ययौ रिपुसंकटात् ॥६२॥

गते त्रिलोचने दूरमशेषं क्षितिमण्डलम् । प्रचण्डचण्डालचमूजालमच्छायमानशे ॥६३॥

संग्रामविजयोऽप्यासीन्न हम्मीरः समुच्छ्वसन् । श्रीत्रिलोचनपालस्य स्मरञ्शौर्यममानुषम् ॥६४॥

65 त्रिलोचनोऽपि संश्रित्य हास्तिकं स्वपदाच्युतः । सयत्नोऽभून्महोत्साहः प्रत्याहर्तुं जयश्रियम् ॥६५॥

यथा नामापि निर्नष्टं शीघ्रं शाहिश्रियस्तथा । इह प्रासङ्गिकत्वेन वर्णितं न सविस्तरम् ॥६६॥

स्वप्नेऽपि यदसंभाव्यं यत्र भग्ना मनोरथाः । हेलया तद्विदधतो नासाध्यं विद्यते विधेः ॥६७॥

ऐश्वर्यभूमिर्वैपुल्यं[1] राज्ञः शंकरवर्मणः । वृत्तान्तवर्णने पूर्वममुत्र प्रकटीकृतम् ॥६८॥

स शाहिदेशः सामात्यः सभूभृत्सपरिच्छदः । किमभूत्किमु वा नाभूदिति संचिन्त्यतेऽधुना ॥६९॥

70 अवतारं तुरुष्काणां रुद्ध्वाशेषे महीतले । प्राप्तभङ्गस्ततस्तुङ्गः स्वदेशं प्राविशच्छनैः ॥७०॥

शृगालायेव तुङ्गाय लब्धभङ्गाय भूपतिः । न तत्रागसि चुक्रोध स धैर्यसरलाशयः ॥७१॥

किं तु खेदाय समभूत्तुङ्गात्ययस्तमीशितुः । परायत्ततया चित्तं पशोरप्युपतप्यते ॥७२॥

तुङ्गात्मजोऽपि कन्दर्पसिंहः श्रीशौर्यगर्वितः । राजोचितं व्यवहरंस्तस्योद्वेगप्रदोऽभवत् ॥७३॥

गूढलेखैः क्षणे तस्मिंश्छिद्रान्वेषी स भूभुजम्[1] । भ्राता विग्रहराजोऽपि प्रैरयत्तुङ्गमारणे ॥७४॥

75 कोशादिस्मरणाद्राजा चिरं दोलायमानधीः । अभीक्ष्णप्रेरणोद्विग्नः प्रेरकानब्रवीत्ततः ॥७५॥

---

४९. ¹) Thus $A_2$; $A_1$ स त्वरा. ५०. ¹) र supplied by $A_2$ in space left by $A_1$.—²) Thus corr. by $A_2$ from $A_1$ ° पश्यन्तं. ५२. ¹) Thus corr. by $A_2$ from $A_1$ °त्सुकाः. ५३. ¹) Thus $A_1$; altered by later hand to हम्मी°; G as above.—²) Thus corr. by $A_2$ from $A_1$ °पात्र; $A_2$ gloss तौषी नाम नदी. ५४. ¹) स्त supplied by $A_2$. ५६. ¹) Thus $A_2$; $A_1$ °रेणोगच्छ°. ५८. ¹) Thus $A_2$, with gloss संग्रामस्यापत्यं सांग्रामिः; $A_1$ संग्रामे. ६१. ¹) Thus $A_2$; $A_1$ रिशुभ°. ६८. ¹) $A_2$ gloss यस्य देशस्य भूमेः वैपुल्यं. ७२. ¹) पशोर supplied by $A_2$ in space left by $A_1$. ७३. ¹) Emended; A राज्ञो°. ७४. ¹) Thus $A_1$; altered by later hand to भूभुजाय which is found also in G R. ७५. ¹) $A_2$ gloss यदा देव्या पीतकोशाः कृता इति स्मरणात्.

मम्मायामथ चड्डायां कन्दर्पो[1] व्यजीजनत् । पुत्रं विचित्रसिंहं च मातृसिंहं च विश्रुतौ ॥१०४॥

105 गृहीत्वा तौ स्नुषां तां च मङ्गला तुङ्गवल्लभा । देशाद्विनिर्गता दीना राजपुर्यां स्थितिं व्यधात् ॥१०५॥ युग्मम्[1]॥

तुङ्गस्थाने ततो राज्ञा पापो भद्रेश्वरः कृतः । भूतेश्वरादिदेवानां चक्रे कोशादिलुण्टनम् ॥१०६॥

कियद्विवेकवैकल्यमस्य राज्ञः प्रकाश्यताम् । तादृशानपि यश्चक्रे पार्थादीनधिकारिणः ॥१०७॥

पार्थः परमदुर्मेधाः कथातो भ्रातृकल्पगः । निर्विचारेण चानेन नगराधिकृतः कृतः ॥१०८॥

वधादिपापं पार्थेन दुष्कृतव्यस्तचेतसा । पवित्रे प्रवरेशस्य रङ्गपीठे प्रवर्तितम् ॥१०९॥

110 चक्रे लुब्धस्य भूभर्तुर्भतङ्गः[1] कृपणाग्रणीः । शिथोः सुतः कोशवृद्धिं प्रजापीडनपण्डितः ॥११०॥

पुरा देवमुखाख्यस्य डिविरस्य किलाजनि । आपूपिकायां वेश्यायां पुत्रश्चन्द्रमुखाभिधः ॥१११॥

यस्तुङ्गोपाश्रयाल्लब्धा लालितत्वं महीपतेः । वराटकास्पदभृत्याढीककोटीनां कृतसंचयः ॥११२॥

विभूतिमध्ये लुब्धस्य प्राभृतायान्यढौकितैः[1] । अपूर्वैर्निजभृत्येषु विक्रयोभूत्कुलोचितः ॥११३॥

प्रभूताचिररोगश्च भूत्वा लब्धोदयः पुनः । यो मन्दाग्निः सरोगश्च निःश्लोकैर्व्यहस्यत ॥११४॥

115 एकमेवाभवद्यस्य सुकृतं मरणक्षणे । कोटेस्त्रिभागं यद्दाच्छूरणेश्वरयोजने ॥११५॥

तदात्मजाः कृता नागभागनन्दिमुखास्त्रयः । अधीशाः पृतनाङ्गस्य राज्ञा तुङ्गोपजीविनः ॥११६॥

हास्यं बभूव भूभर्तुस्तेषां तुङ्गपदार्पणम्[1] । बन्धनं यवकाण्डीनां हेमस्थाने शिशोरिव ॥११७॥

ते तुरुष्काहवे राज्ञा तुङ्गस्यसहिताः पुनः । प्रत्यावृत्य ययुर्देशं निजमेव पलायिताः ॥११८॥

इत्थं मन्त्रिष्वयोग्येषु क्षान्तिशीले च भूपतौ । केचिदुद्रेकमभजन्दरद्डिविरडामराः ॥११९॥

120 सा लोठिकामठं कृत्वा लोठिका नृपतेः सुता । तिलोत्तमाया विदधे मातुर्नाम्नापरं मठम् ॥१२०॥

पापिनामपि हन्तेयं कापि सत्कर्मवासना । भद्रेश्वरोपि यच्चक्रे विहारं प्रकृतोज्ज्वलम् ॥१२१॥

तस्य विवेक्ता संग्रामराजो योन्याय्यतोर्जितम् । निजं ब्रुवाणो द्रविणं प्रपामपि न निर्ममे ॥१२२॥

श्रीलेखा पार्थिववधूः श्रीयशोमङ्गलात्मजा । पत्यौ शिथिलसामर्थ्ये स्वैरिणीत्वमसेवत ॥१२३॥

सुतः सुगन्धिसीहस्य जयलक्ष्म्यां[1] बभूव यः । वल्लभो निर्भरं देव्याः सोस्यास्त्रिभुवनोभवत् ॥१२४॥

125 स जयाकरगञ्जादिगञ्जघटातितीक्ष्णधीः । कोशोपकारकृत्तस्या जारोभ्यासीज्जयाकरः ॥१२५॥

नवग्रामीणगञ्जादिकर्त्री संचयतत्परा । साभूद्भर्तुः प्रसादेन सुभगा भूरिवैभवा ॥१२६॥

स चतुर्थसमाषाढप्रारम्भाहे महीपतिः । हरिराजाभिधं पुत्रमभिषिच्यास्तमाययौ ॥१२७॥

सुमनःसेवितः कुर्वन्नशेषाशाप्रकाशनम् । द्वाविंशाहः स सर्वस्य चैत्रोत्सव इवाभवत् ॥१२८॥

अमोघाज्ञेन तेनेमां निश्चोरां कुर्वता महीम् । पण्यवीथ्यां[1] निशीथिन्यां[2] निषिद्धा द्वारसंवृतिः ॥१२९॥

130 अचिरस्थायिनी राज्ञस्तस्याज्ञाचिन्तितोन्नतिः[1] । धन्या नवेन्दुलेखेव पार्थिवानामजायत ॥१३०॥

---

१०४. [1]) $A_2$ gloss कन्दर्पसिंहः. १०५. [1]) युग्मम् added by $A_2$. ११०. [1]) Emended with G C; A R भूभर्तुः सतङ्गः. ११३. [1]) $A_2$ gloss कोशलिकार्थं. ११७. [1]) Thus $A_1$; $A_2$ °पदेर्पणम्. १२४. [1]) Thus corr. by $A_2$ from $A_1$ °लक्ष्मी. १२५-१२६. [1]) The words from गञ्जादिगञ्जघटा° to नवग्रामीण in the following verse have been omitted by $A_1$ and supplied in margin by $A_2$; they are found in G R. १२८. [1]) $A_2$ gloss पण्डितैः पुष्पैश्च.—[2]) $A_2$ gloss आशाशा दिशश्च.—[3]) $A_2$ gloss दैर्घ्ये तोषश्च. १२९. [1]) [2]) Thus corr. by $A_2$ from $A_1$ पुण्यवेश्यां and निशीथिन्यां. १३०. [1]) Thus $A_2$; $A_1$ °ज्ञाचिन्तनोन्नतिः.

द्वाविंशतिदिनान्युर्वीं स रक्षित्वा क्ष्मापतिः । अस्तं ययौ शुचिमयः शुचिशुक्लाष्टमीदिने ॥१३१॥

प्राणिनां खेलमानानां नक्षत्राणामिव क्षणात् । लक्ष्मीर्यौवनरूपेव संगता भङ्गदायिनी ॥१३२॥

स्वतन्त्रा स्वैरिणीवृत्तिः सुतस्य जननी किल । अभिचारं चकारास्येत्यस्वविज्ञाना[1] जनश्रुतिः ॥१३३॥

राज्योपकरणे सज्जीकृते राज्यार्थिनी स्वयम् । सा राजमाता श्रीलेखा यावत्तावत्समागता ॥१३४॥

मिलितैस्तावदेकाङ्गैर्धीमता धात्रेयकेण च । सागराख्येन तत्सूनुर्[1] बालोऽनन्तो नृपः कृतः ॥१३५॥ युग्मम् ॥ 135

निधिं[1] जिघृक्षोरन्येन हृते तत्र प्रमादतः । तद्रक्षिणोऽहेर्लुब्धस्य नाशायैव यथा किल ॥१३६॥

राजमातुस्तथा राज्यलुब्धायाः पुत्रनाशनम् । अभूदन्यहृते राज्ये वृजिनायैव केवलम् ॥१३७॥ युग्मम् ॥

सा राज्यविप्रलम्भेन तादृशा व्यथिताशया । अस्मरत्तनयस्नेहं धिग्भोगाभ्यासवासनाम् ॥१३८॥

अथाजगाम स्थविरः पितृव्यो बालभूपतेः । राज्यं विग्रहराजाख्यो हर्तुं[1] विततविक्रमः ॥१३९॥

स लोहरात्प्रचलितो गत्वा द्वारमर्गलितः । दिनद्वयेन सार्धेन नगरं सत्वरोऽविशत् ॥१४०॥ 140

श्रीलेखाप्रेरिताः सेनाः प्रविष्टं[1] लोठिकामठम् । वह्निपितामयस्तत्र निजघ्नुस्तं सहानुगम् ॥१४१॥

मठद्वयं ततः कृत्वा स्वस्य भर्तुः सुतस्य च । तस्थौ व्ययवती राज्ञी राज्यद्रोहोद्यतानिशम् ॥१४२॥

ततो नरपतिः किंचिच्छनैः शिथिलशैशवः । अतिव्ययादिव्यसनी धर्मेश्वरतयाभवत् ॥१४३॥

तस्यासन्रुद्रपालाद्याः शाहिपुत्राः परं प्रियाः । अनल्पवेतनादायिराज्योत्पत्त्यपहारिणः ॥१४४॥

कृतप्रत्यहनिर्वाहः सार्धलक्षेण भूभुजा । रुद्रपालो दरिद्रत्वं कदाचिदपि नात्यजत् ॥१४५॥ 145

दिद्दापालः क्ष्मापालाल्लब्ध्वा प्रतिवासरम् । सहस्राणामशीत्यापि शेते स्म न सुखं निशि ॥१४६॥

अनङ्गपालवेतालश्चक्रे क्ष्मापाललालितः । शश्वत्सुवर्णगीर्वाणप्रतिमापाटने मनः ॥१४७॥

रुद्रपालः परित्राता धनप्राणादिहारिणाम् । बभूव वीरचण्डालप्रायाणां[1] वज्रपञ्जरः ॥१४८॥

कायस्था रुद्रपालाद्याः प्रजानां पीडनं व्यधुः । चकारान्धमठं श्रीमानुत्पलाख्यो वरमणीः ॥१४९॥

कियद्रुद्रपालवाल्लभ्यमन्यत्तस्याभिधीयताम् । जालन्धराधिपस्येन्दुचन्द्रस्येन्दुमुखीं सुताम् ॥१५०॥ 150

उपयेमे मनोज्ञत्वाज्ज्येष्ठामासमतिं स्वयम् । यया मठः[1] स्वाभिधया विदधे त्रिपुरेश्वरे ॥१५१॥

तस्याः किंचिद्वयोन्यूनां[1] स्वसारं यो यवीयसीम् । अथ सूर्यमतीं देवीं भूभुजे परिणीतवान् ॥१५२॥

रुद्रेण भूपतिः सख्या स कर्णसुखदायिना । पात्रीकृतो दुर्नयानां कर्णेनेव सुयोधनः ॥१५३॥

कम्पनाधिपतिस्तत्र क्षणे त्रिभुवनो बली । आययौ भूपतेर्हर्तुं राज्यं संभृतडामरः ॥१५४॥

आकृष्टाशेषकटके तस्मिन्योद्धुमुपागते । एकाङ्गाः सहयारोहा राजपक्षं न तत्यजुः ॥१५५॥ 155

असिना लङ्घयन्प्रासानमोघाञ्श्लाघ्यविक्रमः । अजघानानन्तदेवः स्वयं त्रिभुवनं रणे ॥१५६॥

संनाहरक्षिताङ्गः स दृढप्रहृतिपीडितः । विदद्रौ[1] वदनेनासृक्स्वप्रतापमिवोद्वमन् ॥१५७॥

विनयच्छन्नशौटीर्यैः[1] शिशुप्रायः[2] स भूपतिः । दृष्ट्वा बलमसंभाव्यं तस्मिंस्त्यक्ता रणं गते ॥१५८॥

---

१३३. [1]) स्वविज्ञाना supplied by $A_2$ in space left by $A_1$. १३५. [1]) $A_2$ gloss तस्या अपरः पुत्रः. १३६. [1]) Thus $A_2$; $A_1$ हते. १३९. [1]) Thus A R; G C हन्तुं. १४१. [1]) Thus corr. by $A_2$ from $A_1$ प्रविष्टो. १४८. [1]) Thus corr. by $A_2$ from $A_1$ °प्रायको. १५०. [1]) च supplied by $A_2$. १५१. [1]) मठ supplied by $A_2$ in space left by $A_1$. १५२. [1]) Thus $A_1$; $A_2$ किंचिदिव. १५७. [1]) $A_2$ gloss [illegible]. १५८. [1]) $A_2$ gloss शौटीर्यं अभिमानः प्रागल्भ्यं वा.—[2]) $A_2$ gloss शिशुसदृशः.

दंपती राजराजाख्ये मृते पुत्रे गतक्रुधः । सदाशिवान्तिके राजवेश्म संत्यज्य तौ स्थितिम् ॥१८६॥

ततः प्रभृति संत्यज्य पूर्वराजकुलस्थितिम् । तत्रैव क्ष्मां भूपालास्तत्रैव वसतीर्व्यधुः ॥१८७॥

पार्थिवस्याश्वशालीयाः प्रियवाजितया प्रियाः । प्रसादैर्देशलुण्ठ्या च सर्वतः समतां ययुः ॥१८८॥

नर्मेश्वरतया भर्तुर्वल्लभो नर्मकोविदः । अलुब्धवत्सला नित्यं डक्ककी नाम दैशिकः ॥१८९॥

मालवाधिपतिर्भोजः प्रहितैः स्वर्णसंचयैः । अकारयद्येन कुण्डयोजनं कपटेश्वरे ॥१९०॥ 190

प्रतिज्ञा भोजराजेन पापसूदनतीर्थजैः । सततं वदनस्नाने या तोयैर्विहिताभवत् ॥१९१॥

अपूरयत्तस्य यस्तां दुस्तरां नियमाहितः । प्रहितैः काचकलशीकुलैस्तद्वारिपूरितैः ॥१९२॥

स तस्य पद्मराजाख्यः पर्णप्रापकदैशिकः । प्रियताम्बूलशीलस्य त्यागिनो वल्लभोभवत् ॥१९३॥ चक्कलकम् ॥

तेन नागरखण्डादिपर्णविक्रयिणा नृपः । देयोत्पत्तिधनं प्रायो निःशेषं दापितस्तदा ॥१९४॥

पञ्चचन्द्रकशोभाक्रमौलिसिंहासने नृपात् । बन्धायाददस्तन्मध्ये धने स धनिकोधिके ॥१९५॥ 195

तद्राजविक्रमास्थानोपयुक्तं तस्य मन्दिरात् । आनीयमानं मासार्धवासरे मासि मास्यभूत् ॥१९६॥

स्वकोशसंचयं दत्त्वा देवी सूर्यमती ततः । पद्मराजोऋणां देशस्याप्यवस्थां न्यवारयत् ॥१९७॥

शमिते चाश्वशालीयडक्ककादिभये तदा । प्रावर्तन्त पुनर्देशे व्यवस्था निरुपद्रवाः ॥१९८॥

ततः प्रभृति राज्ञ्येव राजकार्योद्यताभवत् । तस्थौ शौर्यकथां त्यक्त्वा राजा कार्यकरः पुनः ॥१९९॥

भर्तुर्नारीविधेयत्वं तस्या भर्तृजयस्तथा । निष्कलङ्केन शीलेन नान्योन्यं गर्ह्यतामगात् ॥२००॥ 200

भवभक्तिव्रतध्यानत्यागशीलादिभिर्गुणैः । कृतिनानन्तदेवेन मुनयोपि विनिर्जिताः ॥२०१॥

राज्ये तस्य महीभर्तुर्वर्षे तांस्तानलक्षयन् । पतिंवरेव राजश्रीर्भृत्यान्नवनवोन्मुखी ॥२०२॥

क्षेमाभिधो राजगञ्जपूर्णं बालभञ्जकः । व्यधाद्द्वादशभागादिप्रकारैर्वर्धयन्धनम् ॥२०३॥

मन्त्री ततोभवत्साधुस्त्रैगर्तः केशवो द्विजः । सौधचन्द्रातपेनेव भूपालो येन भूषितः ॥२०४॥

भ्राम्यन्गतश्रीरेकाकी स एव ददृशे जनैः । भाग्याम्बुवाहतडितो निविडाः कस्य संपदः ॥२०५॥ युग्मम् ॥ 205

भाग्याधीनं धनं ध्यात्वा मुधा मुग्धधियामसौ । कुलविक्रमयोर्दर्पो मिथ्यैव पृथुतां प्रति ॥२०६॥

प्रासादपालवैश्यस्य गौरीशविटशालये । भूतेर्हलधरो वज्रो वराहश्चाभवन्सुताः ॥२०७॥

तेभ्यो हलधरः सूर्यमत्या विहितसेवनः । वृद्धिं दिने दिने गच्छंल्लेभे सर्वाधिकारिताम् ॥२०८॥

विधेयान्बुद्धियुक्तेन कुर्वतः क्षित्यमन्तरान् । सपत्नीकोभवत्तस्य मुखप्रेक्षी क्षमापतिः ॥२०९॥

क्षेमेण मन्त्रितं पूर्वं सपादग्राममुग्रधीः । कर्मस्थानं स्फुटीचक्रे सर्वस्थानधुरंधरम् ॥२१०॥ 210

अभूद्दर्णकमूल्यादिलेखनं कनकस्य यत् । राजायत्तं जनस्यार्थसंचयानां प्रकाशकम् ॥२११॥

स तन्निवारयामास भाविनां भूभुजां चिरम् । त्रासीं संचितवित्तस्य दण्डाद्यायासकारिताम् ॥२१२॥

---

१८७. ¹) Thus corr. by A₂ from A₁ क्ष्मा. १८८. ¹) Thus corr. by A₂ from A₁ °लुण्ठा. १९०. ¹) Thus corr. by later hand from A₁ °भौजैः. १९२. ¹) A₂ gloss यत्तिज्ञां.—²) Thus corr. by later hand from A₁ प्रहितै काचक°.—³) A₂ gloss तोय इति भाषया. १९३. ¹) A₂ gloss पानविशेषः. १९५. ¹) Thus corr. by later hand from A₁ °सनं. १९६. ¹) र्ध supplied by A₂ in space left by A₁. २००. ¹) Thus corr. by later hand from A₁ शीलेना.—²) Thus corr. by A₂ from A₁ गुह्यता°. २०१. ¹) Thus corr. by A₂ from A₁ °ध्यान°. २०३. ²) A₂ gloss वर्धितः. २०४. ¹) Thus corr. by later hand from A₁ केशवो. २०७. ¹) Thus A₁; A₂ भूतिर्है°. २०९. ¹) Thus A₁; A₂ °बुद्धेन.—²) Thus corr. by A₂ from A₁ °न्तरम्. २१०. ¹) Thus A₁; A₂ सर्वकार्यधु°. २१२. ¹) Thus A₂; A₁ ग्रासी.

भर्त्सितानथ शालीयान्धनदारापहारिणः | कांश्चिद्व्यापाद्य स शमं निन्ये लोकस्य विप्लवम् ||२१३||
तनायासहता नीतः कनत्स्वर्णैः सुरालयैः | शोभां मठाग्रहारैश्च वितस्तासिन्धुसंगमः ||२१४||
215 आसंश्च सुताश्चास्य लक्ष्मीपरिचयोन्मदाः | द्विरदा इव न क्वापि दानप्रणयितां जहुः ||२१५||
तद्भ्रातृपुत्रो बिम्बाख्यः श्रीमान्वीरो वराहजः | द्वाराधिकारकार्यासीद्दानप्रलयवारिदः ||२१६||
स डामरकुलाकालमृत्युः स्वल्पानुगोभवन् | खशाहवे जहौ प्राणान्पलायनपराङ्मुखः ||२१७||
चम्पायां सालभूपालमुन्मूल्यानन्तभूपतिः | तत्सूनुजयी नव्यं धराधवमरोपयत् ||२१८||
मन्त्रशून्येन शौर्येण परदेशेषु भूपतिः | हठप्रवेशान्विदधत्सोभूत्कृच्छ्रगतोसकृत् ||२१९||
220 तुक्कात्मजस्य कलशस्यारब्धौ बिम्बसैनिकम् | अमोचयद्धलधरो युक्त्या वल्लापुरादमुम् ||२२०||
उरशां च प्रविष्टस्य वैरिरुद्धाध्वनो व्यधात् | कम्पनाधिपतिस्तस्य मार्गान्संशोध्य निर्गमम् ||२२१||
कालेनन्तमहीभर्तुर्वैरिविग्रहसंकटे | साहसान्युदजृम्भन्त तानि तानि क्षणे क्षणे ||२२२||
राजेश्वरो द्वारपतिः श्रीमान्भद्रेश्वरात्मजः | डामरैः क्रमराज्यस्थैरन्येपि बहवो हताः ||२२३||
वीक्ष्य नीतिदृशा कार्यं भीत्या व्यवहरन्नपि | भृत्यतां निष्परिभवां को भुङ्क्ते नृपमन्दिरे ||२२४||
225 दुष्प्रवादास्पदीभूतो देव्या निबिडसेवनात् | आशाचन्द्रादिभिः क्रुद्धैर्बद्धो हलधरोप्यभूत् ||२२५||
स राज्ञा हृतसर्वस्वो बन्धनक्लेशमन्वभूत् | भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ||२२६||
नृपेण बन्धनात्त्यक्तं तं श्रीः प्रत्यागता पुनः | आलिलिङ्ग सितच्छत्रलज्जास्मितसितानना ||२२७||
स राज्ञ्याः प्रावृष इव प्रणयेन क्षणे क्षणे | कोपप्रसादमेघार्कपर्यायापातमन्वभूत् ||२२८||
ततः सरलचित्तस्य क्रमेण समपद्यत | भार्याजितस्य भूभर्तुर्दुर्विपाकार्पणोन्मुखम् ||२२९||
230 अधिकारपरित्यागाद्दोषाननुशयावहान् | वदद्भिर्वार्यमाणोपि प्राज्ञैर्हलधरादिभिः ||२३०||
पत्न्या संप्रेरितः शश्वत्तनयस्नेहमुग्धया | पुत्राय कलशायाभूद्राज्यं दातुं समुद्यतः ||२३१||
यास्यत्यनुशयं राजन्नेवं वाद्यपि कारितः | सज्जं तेन रणादित्यनाम्ना क्षत्ताभिषेचनम् ||२३२||
एकाधचत्वारिंशस्य वर्षस्य नभसः सिते | षष्ठेह्नि बाहुलस्याभूदभिषिक्तो महीभुजा ||२३३||
अथास्थाने रणादित्यो राजपुत्रान्निवेशयन् | चिन्तयन्राज्यमाहात्म्यं प्रतिपत्तिषु निष्ठुरः ||२३४||
235 अनन्तो राजपुत्रोयं देवेति कथयन्वचः | कृकाटिकान्यस्तहस्तः क्षितिपाले न्यवेदयत् ||२३५||
कुपितेन स भूभर्त्रा परिवृत्यावलोकितः | एवं कृतस्मितो व्यक्तं तमूचे नीतिनिष्ठुरः ||२३६||
इत्थं यत्र निवेद्यन्ते कान्यकुब्जादिभूभुजः | तत्रैव त्यक्तराज्यस्य कान्यास्तु प्रक्रिया तव ||२३७||
दिने दिने सानुशयो नियतं भविता भवान् | नाभिमानपरित्यागः कर्तुं शक्यो मुनेरपि ||२३८||
सुदूरदर्शिनां तत्र मन्त्रिणां हृदयंगमम् | राजा तस्य वचः श्रुत्वा प्रतिवाक्याक्षमोभवत् ||२३९||
240 दृष्ट्वान्येद्युर्नवं भूपं राजचक्रेण सेवितम् | नवेतरं च सहितं परिमेयैः परिच्छदैः ||२४०||

२१४. [1]) Thus corr. by $A_2$ from $A_1$ कञ्चित्स्व°; $A_2$ gloss कचन् दीप्यमानं स्वर्णं येषां तैः. २१७. [1]) Thus corr. by $A_2$ from $A_1$ °भवत्.—[2]) Thus $A_2$; $A_1$ जहत्. २२०. [1]) तुक्क supplied by $A_2$ in space left by $A_1$. २२१. [1]) Thus corr. by $A_2$ from $A_1$ मार्गास्सं°. २३२. [1]) सज्जं supplied by $A_2$ in space left by $A_1$.—[2]) $A_2$ gloss तेनानन्तदेवेन रणादित्यनाम्ना क्षत्ता प्रतीहारः अभिषेचनं सज्जं कारितः इत्यन्वयः कथं भूत एवंवादी अपि. २३३. [1]) $A_2$ gloss कलशः.—[2]) Thus corr. by later hand from $A_1$ बहु°; $A_2$ gloss कार्त्तिकस्य. २२५. [1]) प supplied by $A_2$.

धीमान्हलधरो भुक्त्वा कृतकालत्रयया नृपम् । एवं निर्मत्सरीभूतं तं भक्त्यावोचदल्पुनः ॥२४१॥
विधाय निःसुखं सूनुं राज्यभारार्पणाद्विभुम् । कस्मात्स्वसुखसापेक्षो न जिह्रेष्यत्र वार्द्धके ॥२४२॥
तत्स्वयं राजकार्याणां कार्यमुद्वहनं त्वया । अभुक्तो यौवनाभोगैरयमस्तु सुतस्तव ॥२४३॥
इत्युक्त्वा स पुनर्भूपमधिकारमजिग्रहत् । चक्रे कलशदेवं च कलया युक्तिवञ्चितम् ॥२४४॥
पित्रोरेवान्तिके कुर्वन्नाहाराद्यपि संततम् । ततो बभूव कलशो नाममात्रमहीपतिः ॥२४५॥ 245
सर्वास्थानात्तपूजादिविधाने पार्थिवोचिते । पितुः सहायकल्पः स पौरोहित्यमिवाकरोत् ॥२४६॥
अनिमित्तप्रहृष्टानामनिमित्तानुतापिनाम् । न क्वापि चलचित्तानां तिरश्चामिव निश्चयः ॥२४७॥
दापयित्वा पतिं राज्यं निर्बन्धेनापि तावता । सूनौ बभूव यद्राज्ञी विप्रेमेर्ष्यानुतापिनी ॥२४८॥
सेर्ष्या स्नुषाणामुत्कर्षं पार्थिवप्रमदोचितम् । वेषालंकरणादौ सा रूक्षचित्ता न चक्षमे ॥२४९॥
दासीकृत्यं तया पुत्रमहिष्यः कारिताः सदा । गृहोपलेपने यावच्च वैमुख्यमदर्शयन् ॥२५०॥ 250
पुत्रो विग्रहराजस्य क्षितिराजाभिधस्ततः । राज्ञः पितृव्यजो भ्राता कदाचित्पार्श्वमाययौ ॥२५१॥
तस्मै न्यवेदयत्खेदं स चित्तस्योपतापकम् । पुत्रे भुवनराजाख्ये राज्यलुब्धेऽतिविप्लुते ॥२५२॥
स हि तस्यात्मजो नीलपुरराज्यं समाश्रितः । तद्बलैः पितुरारब्धं विधातुं सोद्यमोऽभवत् ॥२५३॥
नाम भागवतानां च पूज्यानां स्वपितुर्व्यधात् । व्रतयज्ञोपवीतानां शुनामशुचिमानसः ॥२५४॥
क्षितिराजः स्वबन्ध्वां च विरक्तायां विशुद्धधीः । मनस्तापापहे चक्रे सर्वत्यागामृते स्पृहाम् ॥२५५॥ 255
राज्यं कलशपुत्राय ज्येष्ठानन्तरजन्मने । रामलेखाभिधानायां राज्ञ्यां जाताय सत्वरम् ॥२५६॥
दत्त्वा स्तनंधयायापि तदोत्कर्षाभिधाय सः । राजर्षिर्विबुधैः सार्धं विदधे तीर्थसेवनम् ॥२५७॥
भुक्त्वा शमसुखं भूरीन्वर्षान्परमवैष्णवः । स चक्रायुधसायुज्यं ययौ चक्रधरे सुधीः ॥२५८॥
स च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ । सूरी तस्मिन्क्षणे तुल्यं द्वावास्तां कविबान्धवौ ॥२५९॥
पितुः पितृव्यजाद्भ्रातुर्जातस्यानन्तभूभुजा । तन्वङ्गराजस्योत्सङ्गे नप्ता न्यासीकृतः शिशुः ॥२६०॥ 260
तन्वङ्गोऽपि विवृद्धिं तन्नीत्वा राज्ञः शिशुं च तम् । पुनः प्रविष्टः कश्मीरानस्तं चक्रधरे ययौ ॥२६१॥
सर्वसाधारणीभूतभोगानां राजबीजिनाम् । तावज्ज्ञातेयमभवन्नेह द्रोहकलङ्कितम् ॥२६२॥
इन्दुराजात्मजात्सिद्धराजो यो बुद्धराजतः । जातो मदनराजाख्यं वीरं पुत्रमजीजनत् ॥२६३॥
अत्युत्सिक्तः सुतस्तस्य दरं नृपतिमण्डलात् । विधुरे रात्रि निर्यातः शौर्योद्रेकादखण्डितः ॥२६४॥
तदानीं जिन्दुराजाख्यो डामरोद्रेकाखिलया । राज्ञ्या स्वयं गृहं नीत्वा साचिव्यं ग्राहितोऽभवत् ॥२६५॥ 265
काणः शोभाभिधस्तेन गाढोद्वेगावहः प्रभोः । देग्रामस्थो डामरोऽथ हस्त्यास्कन्दं निपातितः ॥२६६॥

---

२४८. [1]) $A_2$ gloss विप्रेमा निस्नेहा ; $A_1$ विप्रमेत्यनुतापिनी इत्यन्यादर्शे. २५१. [1]) ज्ञः supplied by $A_3$ in space left by $A_1$. २५३. [1]) Thus $A_1$ ; $A_2$ नीलपुरराजं.—[2]) Thus corr. by $A_3$ from $A_1$ °रारब्धि ; $A_3$ gloss आरब्धं. २५४. [1]) व्रत supplied by $A_3$ in space left by $A_1$. २५६. [1]) $A_4$ gloss कलशदेवस्य द्वौ पुत्रौ ज्येष्ठो हर्षदेव एकः कनिष्ठ उत्कर्षो द्वितीयः. २५९. [1]) $A_4$ gloss अनन्तदेवः.—[2]) $A_4$ gloss भोजराजश्च. २६०. [1]) $A_4$ gives in margin a genealogical list showing the descendants of the brothers वज्रराज and कान्तिराज: वज्रराज, संग्रामदेव, अनन्तदेव, कलश, and कान्तिराज, जस्सराज, तन्वङ्ग.—$A_4$ gloss ( to पितुः ) संग्रामदेवस्य.—[2]) $A_4$ gloss कान्तिराजपुत्रजस्सराजात.—[3]) $A_4$ gloss तन्वङ्गस्य.—[4]) Thus corr. by $A_3$ from $A_1$ तन्वङ्गराज°.—[5]) $A_4$ gloss पौत्र उत्कर्षः. २६४. [1]) Thus corr. by $A_3$ from $A_1$ इत्यु°.—[2]) $A_3$ दूरं नृपतीस्यन्यादर्शे. २६५. [1]) Thus $A_1$ ; $A_3$ राज्ञा. २६६. [1]) $A_3$ gloss देवग्रामी इति भाषया.

कम्पनाधिपतां दत्त्वा ततस्तस्य प्रतापिनः । पार्थिवो[1] राजपुर्यादीन्देशांश्चक्रे करप्रदान् ॥२६७॥

अनन्तभूभुजो राज्ये तथास्खलितसंकटे । आलम्बयष्टिप्रतिमो ययौ हलधरः क्षयम् ॥२६८॥

मुमूर्षुणा चक्रधरे तेन पार्श्वस्थितो नृपः । सजानिरुपदेशार्थी स तदेत्थमकथ्यत ॥२६९॥

270 मा कार्ष्ट परराष्ट्रेषु रभसारब्धसाहसम् । युष्मा वल्लापुरादौ यो व्यपोढं व्यसनं मया ॥२७०॥

विशङ्क्यो जिन्दुराजोयं पराध्यां वृद्धिमागतः । भेदं वः सह पुत्रेण जयानन्दो[1] विधास्यति ॥२७१॥

कथितं तेन[1] तत्स्मृत्वा जिन्दुराजं महौजसम् । विज्ञेनानन्तवद्राजा युक्तिमांस्त्याजितायुधम् ॥२७२॥

अथ कालेन कलशक्ष्माभृत्कलुषिताशयः[1] । भृत्यैरसाधुसंसेव्ये प्रसक्तिं प्रापितोध्वनि ॥२७३॥

तस्याभवन्बिज्जपित्थराजपाजादयः प्रियाः । तस्यैकदा राजपुत्राश्चत्वारः शाहिवंशजाः ॥२७४॥

275 पुत्रो गङ्गपतेर्नागनाम्नो[1] निकटसेवकः । सोपि तस्य जयानन्दः कौटिल्याध्यापकोभवत् ॥२७५॥

द्विजेन्द्रेमरकण्ठे तु याते शिवसमानताम् । राजा प्रमदकण्ठस्य ययौ तज्जस्य[1] शिष्यताम् ॥२७६॥

दुःशीलस्य प्रकृत्यैव तस्याकृत्योपदेशकृत् । गम्यागम्यविचारस्य परिहर्ताभवद्गुरुः ॥२७७॥

गुरोर्गतविकल्पत्वं तस्यान्यत्किमिवोच्यताम् । त्यक्तशङ्कः प्रववृते स्वसुतास्वरते[1]पि यः ॥२७८॥

महासमयसंचारचतुरैर्वैरभीलितः । गण्यते स्वप्रभावोर्भैर्भैरवोपि न निर्भयैः[1] ॥२७९॥

280 ते भट्टपादास्त्रासेन पतिता भग्नजानवः । बिडाल[1]वणिजा स्वस्याः शिरोहस्तार्पणैः कृताः ॥२८०॥

पुरा कृष्णबिडालाङ्को वणिक्छिहिहाभिधाम् । बिडालवणिगित्यात्मनामाविस्मारिकां[1] दधे ॥२८१॥

[1]यो व्याजमूर्खो वैयात्यगुरुत्वाहंकृतः क्रमात् । पटकुञ्जकादीनां शिल्पिनां गुरुतामगात् ॥२८२॥

स भट्टपादानुज्ञायांश्चक्रे मूर्ध्न्यधिरोपयन् । श्रेष्ठी बिडालविष्ठोपहिङ्गुगन्धोत्कटं करम् ॥२८३॥

एवं प्रकृतिनिःसारैरपि गर्जद्भिरन्वहम् । आन्ध्यं स गुरुभिर्निन्ये विस्रसोम्बुधरैरिव ॥२८४॥

285 ये दीर्घजागरा[1] रात्रौ भूरिभोजनसेविनः । अजीर्णपिशितोद्गारनित्यदुर्गन्धकन्धराः ॥२८५॥

अवस्करप्रणालाभाः पृष्ठे क्षिप्रमधःपथैः । शौचपात्र इव क्षिप्रमुज्झन्ति[1] मधुनिर्झरम् ॥२८६॥

नक्तमातोद्यवाद्यज्ञैस्तैः सार्धं कृतसेवनः । चारणो वेणुवाद्यज्ञो योषितां धर्षयन्हठात् ॥२८७॥

कनकाख्ये मठोद्यामे कुड्ये हलधरात्मजे । स्तम्भे निबद्ध्य तद्भृत्यैश्छिन्ननासो व्यधीयत ॥२८८॥

यो विटश्वमको नाम लूनाङ्गोमङ्गलावहः । शनैर्लेभे स वाल्लभ्यं कौतुक्यान्नवभूपतेः[1] ॥२८९॥

290 प्रसादवित्तो भूभर्तुरन्तरे मन्त्रिणामपि । लब्धप्रतिष्ठः स प्राप ठक्कुराख्यां नृकुक्कुरः ॥२९०॥

प्रथां[1] प्राप्तस्त्रपाहेतुं स भञ्जन्वंशमञ्जसा । प्रागेव नासावंशस्य भञ्जनं बहमन्यत ॥२९१॥

तेनोद्दीपितदौःशील्यः स यथांके[1] त्रपोज्झितः । अश्राव्यमपि वृत्तान्तं मध्यपातात्तदुच्यते ॥२९२॥

कक्कनाख्या स्वसा राज्ञो नागाख्या च तदात्मजा । परदारप्रसक्तेन संभोक्तुं नावशेषिता ॥२९३॥

---

२६७. 1) Thus corr. by $A_2$ from $A_1$ सपर्यो and °न्देशाश्चके — 2) $A_4$ gloss राजविर्. २७१. 1) $A_4$ gloss कलशेन. — 2) $A_4$ gloss अनन्तदेवगङ्गपतेर्नागनाम्नो भृत्यस्य पुत्रः. २७२. 1) $A_4$ gloss हलधरेण. २७४. 1) Emended; A R G °भवाद्रिज्ञ°. २७५. 1) $A_4$ gloss कुञ्जभातुः. २७६. 1) Thus corr. by $A_2$ from $A_1$ तज्जामरि°. २७८. 1) र supplied by $A_2$; $A_3$ gloss स्वा आत्मीया याती पुत्री तस्याः सुरते सम्भोगे. २७९. 1) Thus $A_1$; $A_2$ निर्भयः. २८०. 1) Thus corr. by $A_2$ from $A_1$ बिडाव°. २८१. 1) Thus corr. by $A_2$ from $A_1$ बिडालनाम इत्या°. २८२. 1) This verse has been omitted by $A_1$ and added in margin by $A_2$; found in R G. २८५. 1) Thus $A_2$; $A_1$ °जागराहारो. २८६. 1) Thus corr. by $A_2$ from $A_1$ क्षिप्रम°. २८९. 1) Thus corr. by $A_2$ from $A_1$ कौत°. २९१. 1) Thus $A_3$; $A_1$ कथामासो पाहेतुं. २९२. 1) Thus R G; A यच्चके.

320 आकारितस्ततस्ताभ्यां प्रातः कलशभूपतिः । क्षणे विज्जजयानन्दौ साशङ्कौ जनकाश्रयम् ॥३२०॥
तन्मतेन जयानन्दश्चलहस्तः कथंचन । अन्वीयमानो विज्जेन स पितुः प्राविशद्गृहम् ॥३२१॥
पिता प्रविष्टमात्रं तं वक्षे हस्तचपेटकः । क्षमाध्वमागिक्षाहिरि छुरिकामित्यथाब्रवीत् ॥३२२॥
एवं भाषयितुर्वाक्संधिमालम्ब्य पाणिना । तावदन्यं स्पृशन्स्वस्थं विज्जो राजानमब्रवीत् ॥३२३॥
राजन्मानवतां धुर्यो भवन्नपि भवान्कथम् । नालोक्य मानिनां वेत्ति मानमहत्महानतम् ॥३२४॥
325 गृहीतवेतनेनार्थं राजपुत्रेण शस्त्रिणा । संकटेऽस्मिन्मया स्वामी जीवता त्यज्यते कथम् ॥३२५॥
पिता भवानयं पुत्रः क्षणेऽन्यस्मिन्महीपते । मध्यसंनिहितेऽमुष्य वचोऽन्यं तद्विधीयताम् ॥३२६॥
मुग्धं विमोह्य नृपतिं वचोभिः स्निग्धकर्कशैः । विज्जः स्वामिनमाराच्च निराकामदवल्लिकात् ॥३२७॥
विज्जस्यापूजयन्धीरास्तद्धैर्यमतिमानुषम् । अनन्तदेवस्याप्यन्ये वरेयं स व्यजृम्भत ॥३२८॥
चण्डी नरपतेः[1] पत्नी भाग्यधैर्यबलपत्रया । मत्ताज्यमपनीमत्ता तस्मिन्नवसरेऽभवत् ॥३२९॥
330 सा वेदासिन्यतोऽयुक्ता नाभविष्यत्तदेतरत् । विषमास्त्रवैनाश्याशा बन्धनात्कलशस्य वा ॥३३०॥
ततो विज्जेन कलशः सत्वरेण प्रवेशितः । भट्टन्दिल्हाभिधानाया वल्लभाया निवेशनम् ॥३३१॥
शिरोर्तिरस्य संजातेत्युक्त्वा भीतं पतिं न्यधात् । सा प्राज्ञा ज्ञातवृत्तान्ता तैलेनाभ्यक्तमस्तकम् ॥३३२॥
व्याजेन तेन सर्वस्य संप्रवेशं निषिध्य सा । पतिं जुगोप विन्यस्य विज्जं द्वारस्य रक्षणे ॥३३३॥
ततः क्षमाधर्मविरता राज्ञी निर्भर्त्स्य भूपतिम् । कुशलान्वेषणमिषात्तनयस्यान्तिकं ययौ ॥३३४॥
335 वक्तुं[1] क्व रोधनो राजा तयैव प्रययौ सदा । दत्तप्रवेशो विज्जेन तदैकाक्येव सोऽभवत् ॥३३५॥
निषेधादनुगन्तॄणां ततः क्रुद्धो धराधवः । रुषित्वा विजयक्षेत्रं गन्तुं प्रावर्ततोद्यतः ॥३३६॥
तं प्रयान्तं सपत्नीकं प्राप्तं पद्मपुरान्तिकम् । अवोचन्नेत्य तत्रस्था विशदाशावयो द्विजाः ॥३३७॥
अधिकारं स्वयं त्यक्त्वा राजन्किमनुतप्यसे । कृतस्यानुशयो युक्तो न सतो नासतोऽपि वा ॥३३८॥
न च ते दुर्मतौ त्यक्ताः प्रजा एता भवेत्यपि । ध्यात्वा सूनोः समुचिता कर्तुं दुष्टस्य वाच्यता ॥३३९॥
340 न यन्त्रपुत्रकस्येव शक्तिः कापि हि भूभुजः । भवेत्साधुरसाधुर्वा स प्रजानां शुभाशुभैः ॥३४०॥
उज्झन्ति यत्पयोवाहा जलानि तडितोऽथ वा । वनस्पतीनां तत्तत्कर्मपाकस्य तत्फलम् ॥३४१॥
यथापथस्थितं पुत्रं त्यक्त्वैकस्यासितुं सुखम् । कोशं त्यक्त्वा प्रस्थितस्य घटते तत्कथं तव ॥३४२॥
धाराधिरूढसामर्थ्यः सद्वंशः शुचिमानपि । संस्पृश्यते क्षीणकोशः कृपाण इव कैः पुमान् ॥३४३॥
श्रुत्वेत्येवं नृपो यावत्प्रत्यावृत्तिं विचारवान् । तावत्स पुत्रेणाभ्येत्य सभार्येण प्रसादितः ॥३४४॥
345 अथ प्रविश्य नगरं स प्राकारोपवर्जिताम् । अशान्तमन्युरादाय लक्ष्मीं भूयो विनिर्ययौ ॥३४५॥

३२०. ¹) A₄ gloss जयानन्दः नागपुत्रः ज्ञातृभ्रातृपुत्रः. ३२४. ¹) Thus corr. by A₃ from A₁ न स्वात्वं. ३२९. ¹) चण्डी नरपतेः and अवसरेऽभवत् supplied by A₃ in space left by A₁. ३३०. ¹) सिन्यतो supplied by A₃ in space left by A₁.— ²) वैनाश्याशा बन्ध supplied by A₃ in space left by A₁. ३३५. ¹) Emended: A₁ वक्तुं; A₃ वक्तुं. ३३६. ¹) क्रुद्धः supplied by A₃ in space left by A₁. ३३७. ¹) Emended; A विरशाव°. ३३८. ¹) कृतस्या supplied by A₃. ३३९. ¹) Thus corr. by A₃ from A₁ त्यक्ता.—²) A₃ gloss, partly effaced, दुर्मतौ दुष्टबुद्धिविषये पुत्रे मया एताः प्रजाः त्यक्ता[:] पुत्र एव राजा[स्या]त्सता-विस्यपि [ध्या]त्वा दुष्टस्य पुत्रस्य वाच्यता निन्दा कर्तुं न समुचिता ते"रसम्पत:. ३४२. ¹) A₃ gloss भाण्डागारं. ३४४. ¹) Emended: A प्रसादा°; C प्रसादा°.

अभ्यागतमथ मध्याह्ने निजामिषि विसृज्य सा । तन्मुखेनातिवात्सल्यादिदमूचे रहः सुतम् ॥३७३॥

विनाशयांस्त्वयं पुत्र कस्ते मतिविपर्ययः । तीव्रशौर्येण पित्रा यदेवं योद्धुमिच्छसि ॥३७४॥

375 यस्य भ्रूभङ्गमात्रेण दरदराजादयो हताः । तत्कोपानले कस्मादीहसे शलभायितुम् ॥३७५॥

अस्मिंस्तु वीतिर्मांकण्डे वीतिहोत्रसमे नृपे । कस्त्राता स्यात्स्वहितानां तृणानामिव शस्त्रिणाम् ॥३७६॥

सेनाङ्गैः कतमैः केन शौर्येण कतमैर्धनैः । भवाक्रान्तशक्तिमतां धुर्यं योद्धुमेनं प्रधावति ॥३७७॥

दैवात्संत्यक्तमेतेन भुक्तं राज्यमखण्डितम् । पित्रा तीर्थोपविष्टेन किमिवापकृतं तव ॥३७८॥

ईर्ष्यालुभिः पात्यमानो व्यसनेऽस्मिन्सुदारुणे । प्रयास्यसि दिनैरेव रिक्तोऽप्यत्यन्तरिक्तताम् ॥३७९॥

380 यच सेनाः पितुर्भीतिर्जीवन्त्यां मयि नास्ति ते । तदमुमेनं नमस्यार्थं प्रत्युतानुनयोक्तिभिः ॥३८०॥

इति दूतमुखैर्गूढं पुत्रो मात्रा कृतार्थनः । सर्वाशाभ्योऽनयत्सैन्यं राजावेन निजान्तिकम् ॥३८१॥

भुतापसारं सैन्यानां दूतैरस्य प्रसारितम् । उपालेभे पतिं भ्रातर्धृष्टा प्रत्युत वल्लभा ॥३८२॥

राज्ञ्या मिथस्तयोरेवं शमितासेपयोरपि । पिशुनप्रेरणात्प्राप कालुष्यं धीः क्षणे क्षणे ॥३८३॥

वैरस्य रूपमेतद्धि भेदं याति मुहुर्मुहुः । संधीयमानमपि यत्सिक्ताम्बरमिवाशयम् ॥३८४॥

385 बाबाल्यादौ सुतोदन्तं श्रुत्वा तमाशयो नृपः । गृहं प्रविष्टो धृष्टस्त्रीभाषितैर्जडतां ययौ ॥३८५॥

एवं प्रतिदिनं तप्तस्त्यक्तलापः प्रतिक्षपम् । स्वच्छाशयः शरत्पुष्कतडागौपम्यमाययौ ॥३८६॥

चकार पितृपक्ष्याणां पुत्रो वेश्मादिनाशनम् । पिता तु पुत्रपक्ष्याणां न किंचित्स्त्रीवशीकृतः ॥३८७॥

पुत्रस्नेहान्धया पत्न्या बाधितश्चानुयायिभिः । रूक्षोक्तिभिस्ताड्यमानस्तस्थौ दुःस्थः सदा नृपः ॥३८८॥

राज्यं जिहीर्षुः पुत्रस्य निःशूरं तद्बलं विदन् । ईषत्स जिन्दुराजस्य गणनां पौरुषेऽकरोत् ॥३८९॥

390 पुत्राज्जिहीर्षुणा राज्यं तेन तन्वङ्गनन्दनाः । प्रार्थ्यन्ते स्म तदा राज्यकृतये तत्पराङ्मुखाः ॥३९०॥

संप्रेर्य तं तदा राज्ञी स्वान्वयाशर्मशङ्किनी । हर्षं देवी नृपं कर्तुं दूतैराहूतवत्यभूत् ॥३९१॥

स पितामह्योर्दूतैराहूतः साहसोन्मुखः । बाबाल्यां निर्गतः सज्जैः रक्ष्यमाणोऽपि रक्षिभिः ॥३९२॥

दत्तपार्ष्णिकशाघातः क्षणार्धेनोदलङ्घयत् । मनोजवेनाप्रमौजा वाजिना पञ्चयोजनीम् ॥३९३॥

वाजिनं विजिताभ्यासमनुगन्तुं समुद्यताः । अगच्छन्बहवो मार्गे दीनाः सेनाहयाः श्रमम् ॥३९४॥

395 प्राप्तस्य पादयोस्तस्य पतितस्य पितामही । आनन्दाश्रुजलस्यन्दैरभिषेकं प्रचक्रतुः ॥३९५॥

पुत्रे तन्निकटं प्राप्ते कलशः कम्पिताशयः । अभियानरणात्पित्रोः संधिस्थः स व्यवर्तत ॥३९६॥

स तस्य नगरात्पत्नीः पार्श्वं प्राज्ञो व्यसर्जयत् । अकरोद्विप्लुते राष्ट्रे स्वभेदस्याप्रकाशनम् ॥३९७॥

एवं प्रवर्धमानेऽपि वैरे कलशभूपतिः । कंचित्कालं गते मातुरवर्तिष्ट मनागिव ॥३९८॥

ख्यशालाः कलशादेशाद्विद्याधरः कम्पनापतेः । तया प्रावर्तितमतेर्मार्गे संस्थापितः पतिः ॥३९९॥

400 अत्रान्तरे शमयितुं वैरं देशोपघातकृत् । तावुद्दिश्य पितापुत्रौ द्विजाः प्रायं प्रचक्रिरे ॥४००॥

---

३७५. 1) Thus corr. by $A_2$ from $A_1$ °वीक्षिते. ३७३. 1) $A_2$ gloss अन्ये. ३७८. 1) Thus corr. by $A_2$ from $A_1$ भुक्त. ३८३. 1) $A_2$ gloss अनन्तकलशयोः. ३८४. 1) रूप supplied by $A_2$ in space left by $A_1$. ३८५ 1) Thus corr. by $A_2$ from $A_1$ बाबाल्या°. ३८६. 1) °पुष्क supplied by $A_2$ in space left by $A_1$. ३८८. 1) Thus $A_2$; $A_1$ तया. ३९१. 1) Thus corr. by $A_2$ from $A_1$ स्वस्व°. ३९२. 1) $A_2$ gloss पितामह्योः पितामहपितामह्योः.

संधिबन्धे समुत्पन्ने ततस्तदनुरोधतः । दंपती संप्रविष्टौ तौ सार्धं भासवदं पुरम् ॥४०१॥
अथानन्दादिपुत्रयाथ बुद्ध्वा बन्धोद्यतं सुतम् । भूयोपि ययतुः खेदान्निर्गत्य विजयेश्वरम् ॥४०२॥
तस्याश्ववासकुटानि पुत्रो राजावदाहयत् । व्यापादयत्पदातींश्च विषशस्त्राग्नियुक्तिभिः ॥४०३॥
तथा प्रवर्धमानेपि विरोधे सत्यरोधयत् । वात्सल्यविवशा राज्ञी भर्तुः प्रतिचिकीर्षितम् ॥४०४॥
त्सुक्काभिधाभूत्कैवर्तबन्धकी तद्विधेयधीः । चक्रडामरनामा च तज्जारः खलतिस्तदा ॥४०५॥ 405
स तयाश्चैव दुष्टात्मा कथ्यमानौ समीपगैः । शुश्राव पितरौ[1] नित्यं लीलास्मितसितानतः ॥४०६॥ युग्मम् ॥
तौ दंपती पुनर्हेमतुलापुरुषयुग्मदौ । चिन्ताभिर्धर्मचर्याभिर्मनस्तापममुञ्चताम् ॥४०७॥
यदा पुनस्तयोर्वार्धमादरश्च व्यहीयत । तदा सेर्ष्यः स दुष्पुत्रो राज्ञो वह्निमदापयत् ॥४०८॥
तेनाग्निनोर्वरीशस्य सर्वोपकरणैः समम् । भस्मावशेषमभवद्विजयेश्वरपत्तनम् ॥४०९॥
सर्वनाशशुचा दीना राज्ञी भर्तुं समुद्यता । तन्वङ्गपुत्रैश्चकृपे कथंचिज्ज्वलतो गृहात् ॥४१०॥ 410
त्यक्तांशुकानि शय्याभ्यो निशायां सुप्तमुत्थितम् । निःशेषं राजसैन्यं तदजायत दिगम्बरम् ॥४११॥
तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । तोषादनृत्यज्ज्वालौघैर्गगनालिङ्गिभिः समम् ॥४१२॥
अतरद्भ्रष्टसर्वस्वः स पारं सरितो नृपः । निममज्ज सजानिस्तु दुस्तरे शोकसागरे ॥४१३॥
संप्राप्य प्रातरमुद्धं रत्नलिङ्गं[1] नृपाङ्गना[2] । व्यक्रीणाल्लक्षसमस्या टाकानां पार्श्वमीयुषाम्[3] ॥४१४॥
क्रीत्वा च[1] प्रददौ पूर्वं भृत्यानां भोजनांशुके । धनेन तेन निर्दग्धान्यपि धामान्यशोधयत् ॥४१५॥ 415
भस्मकूलतलाद्यावल्लब्धं स्वर्णादि भूभुजा । कथापि यावतो हन्त प्रथयत्यद्य कौतुकम् ॥४१६॥
राजा शून्याटवीभूते पत्तने तत्र सानुगः । नडस्वग्[1]ग्रथितच्छत्रपटलाच्छादितेऽवसत् ॥४१७॥
तावत्यप्यर्थसामर्थ्ये चिकीर्षोस्तत्पुरं नवम् । विना राजोचितामाज्ञां न सिद्धं वृद्धभूपतेः ॥४१८॥
अदृष्टाभिभवो मातुरानुकूल्यात्ततो नृपः । परितापं पितुस्तैस्तैर्दुःसंदेशैः सदाकरोत् ॥४१९॥
निर्बन्धादथ पुत्रेण पर्णोत्सगमनं पिता । निर्वासनोत्सुकेनोक्तः शश्वद्भृत्यमुखैर्यदा ॥४२०॥ 420
प्रभवन्त्या यदा चासीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये प्रेर्यमाणः साधिक्षेपं क्षणे क्षणे ॥४२१॥
तदा जातु रहः कुप्यंस्तन्वङ्गे चक्रने स्थिते । उवाचानुक्रपूर्वं तामेवं स परुषं वचः ॥४२२॥ तिलकम् ॥
अभिमानो यशः शौर्यं राज्यमोजो मतिर्धनम् । मया जायाविधेयेन हन्त किं किं न हारितम् ॥४२३॥
मिथ्योपकरणं नारीर्गणयन्ति नृणां जनाः । परिणामे तु नारीणां क्रीडोपकरणं नराः ॥ ४२४ ॥
द्वेषोन्मेषात्प्रसक्ताभिर्विरक्ताभिरसूयया । के नाम नाथ कान्ताभिः कृतान्तस्यातिथीकृताः ॥४२५॥ 425
रूपं काश्चिद्बलं काश्चित्प्रज्ञां काश्चिच्च कार्मणैः । पुंस्त्वं काश्चिदसून्काश्चि[1]द्भर्तृणां जहुरङ्गनाः ॥४२६॥
हरन्ति मायाभिरिव क्ष्मां पुत्रैरन्यगोत्रजैः । मत्ताः पयोधरोत्सङ्ग्यास्तरङ्गिण्य इवाङ्गनाः ॥४२७॥
पर्यन्ते वेतनमिमे किं जीर्णैरीदृशैरिति । पोषयन्ति सुतान्भर्तॄञ्शोषयन्ति तु योषितः ॥४२८॥
सर्वकालं विदित्वापि दोषान्योषित्कृतानमून् । प्रतिपत्त्यनुरोधेन मयैवं नावधीरिता ॥४२९॥

---

४०६. [1]) $A_2$ gloss पितराविति पितरौ राजा राज्ञी च राजा चक्रडामरनाम्ना समीपगैः कथ्यमानः राज्ञी च त्सुक्काभिधा कैवर्ती नाम्ना कथ्यमाना उपहासार्थमित्यर्थः. ४१४. [1]) Thus corr. by $A_2$ from $A_1$ नृपाल्लजा.—[2]) Thus corr. by $A_2$ from $A_1$ पिचौ°. [3]) Thus $A_2$; $A_1$ पूर्वमीयु°. ४१५. [1]) Thus $A_1$; $A_2$ तस्य°. ४१७. [1]) नडस्वक् । दिपू इति भाषया. ४२६. [1]) असून्काश्चि supplied by $A_2$ in space left by $A_1$.

430 प्रभविष्णुर्निहन्त्येवमैहिकीः सुखसंपदः । परलोकसुखस्याशामपि हन्तुं समीहते ॥४३०॥
वलीपलितयुक्तस्य नेदीयोमरणावधेः । विहाय विजयक्षेत्रं कुत्र गन्तुं ममोचितम् ॥४३१॥
क्षपाकरकलामौलेः किल्बिषक्षपणक्षमा । हारोपकण्ठसंसेवोत्कण्ठा कुण्ठीभवेत्कथम् ॥४३२॥
पुत्रो लोकद्वयत्राता कस्यान्यस्येदृशो भवेत् । तीर्थादस्थापयन्मां यः कुपथे मृतमिच्छति ॥४३३॥
प्रतिभात्यधुनैवायं प्रवादो मेऽद्य चेतसि । अनयान्यकुलोद्भूतो यदयं संप्रवेशितः ॥४३४॥
435 विसंवादिममाकाराचारैर्बन्धुविरोधिनम् । पुत्रं पितुरसंक्लिष्टं जानीयादन्यरेतसम् ॥४३५॥
सुचिराविष्कृताकूतां त्यक्त्वा प्राणाय यन्त्रणाम् । एवं वदन्पतिस्तस्याश्चक्रे मर्मसु ताडनम् ॥४३६॥
गोत्रजस्य पुरः पुत्रोत्पत्तिगुह्ये प्रकाशिते । आमृष्टचित्रप्रियालापा साभूदधिकलज्जिता ॥४३७॥
महत्तमस्य पुत्रो हि प्रशस्ताख्यस्य सोऽभवत् । विपक्षापत्ययोपात्तस्तयेत्यासीज्जनश्रुतिः ॥४३८॥
उत्सिक्तभाषितं भर्तुर्योषितो जितभर्तृकाः । जानन्त्यन्त्याङ्कुशसंवृत्तशिरस्ताडनसंनिभम् ॥४३९॥
440 अतः सा सुदृढं प्रौढिसंस्कारपरुषं वचः । प्राकृतप्रमदेवोच्चैरित्युवाच रुषा पतिम् ॥४४०॥
गतभीस्तापसो मन्दो जातभाग्यविपर्ययः । वृथा वृद्धः क किं वाच्यमिति मूढो न वेत्त्ययम् ॥४४१॥
बाल्योत्थितस्य यस्यास्य नाभूत्प्रावरणं पुरा । लोको जानात्ययं किं न तेन मां प्राप्य हारितम् ॥४४२॥
स्वकुलस्त्रीसमुचितं यत्किंचिन्मामभाषथाः । क्रियते किं न कालोऽयं यत्प्रायश्चित्तसेवने ॥४४३॥
अकर्मण्यो गतवया देशात्पुत्रेण वारितः । पत्न्यापि त्यक्त इत्यस्मात्परिवादाद्धि मे भयम् ॥४४४॥
445 कुलदोषादिवृत्तान्तगर्भोपालम्भनिर्भरैः । वचोभिर्व्यथितस्तस्यास्तस्थौ तूष्णीं यदा नृपः ॥४४५॥
तदा तस्याः समायान्त्याः सुतः ससंरम्भवहिः । निर्विकाराकृतेरस्य ददृशे रक्तनिर्झरः ॥४४६॥
संभ्रान्तायां ततो राज्यामपश्यत्स्वजनो रुदन् । असिधेनुं गुदे तेन क्रुधा राज्ञा प्रवेशिताम् ॥४४७॥
ततोऽतिधीरो राजैव तं लज्जाचकितोऽन्वशात् । राज्ञो रक्तातिसरणं जातमित्युच्यतां बहिः ॥४४८॥
विधेया नारीणां वनवनिहिताशेषविभवाः कृतम्लानौ भृत्ये पुनरुदितविस्रम्भरभसाः ।
नयन्तो गण्यत्वं प्रसभमभियोगैर्लघुमतीन् नयत्यक्ताः क्ष्मापाः प्रलयमुपगच्छन्ति न चिरात् ॥४४९॥
450 नृपनिर्वाहितद्वयः शरदातपखेदितः । तृष्यन्निपीय पान्याम्बु च्युतासृग्जात इत्यभूत् ॥४५०॥
गम्भीरैः राजपुरुषैस्तथा वार्ता प्रवर्तिता । यथा नाबुध वृत्तान्तमेतं कोपि बहिर्जनः ॥४५१॥ युग्मम् ॥
वत्सरे सप्तपञ्चाशे पौर्णमास्यां स कार्तिके । विजयेशाग्रतो राजा जीवितेन व्ययुज्यत ॥४५२॥
पत्न्याः पुत्रस्य चोद्वेगैस्त्यक्तो राजा सुखोचितः । प्रसार्य पादौ निद्रातुं प्राप सोऽवसरं चिरात् ॥४५३॥
सुकोपासौ न कस्मैचित्सुकोपास्मै न कश्चन । चक्रे सुखी विमन्युश्च मरणेन महामनाः ॥४५४॥
455 संग्रामराजदायादो न कस्यचिदिव प्रियः । अंशुकाच्छादितो भूमावनाथ इव सोऽस्वपत् ॥४५५॥
न प्रियाक्रन्दितैः खिन्नः कुप्यन्नप्रियोक्तिभिः । सर्वत्यागी वशी राजा दीर्घनिद्रारसज्ञताम् ॥४५६॥
दाक्षिण्योल्लङ्घनप्रायश्चित्तायेव त्यजन्नसून् । कृतज्ञया पतिः पत्न्या ततो निन्ये सनाथताम् ॥४५७॥

---

४४९. [1]) Thus $A_2$; $A_1$ °वीनं लघु°. ४५०. [1]) $A_2$ gloss पान्यं पानिका पान्यवत् इति भाषया। सत्सु. ४५२. [1]) Thus corr. by $A_3$ from $A_1$ सप्तात्रिके. ४५५. [1]) Thus corr. by $A_3$ from $A_1$ सोमवत्.

आराजपुत्रचण्डालं देयं प्रत्यहवेतनम् । ददौ स्वस्येव भृत्येभ्यः सा कर्तुमनृणं पतिम् ॥४५८॥
गृहीतवेतना भृत्याः कोशं सर्वे तया स्वयम् । पुरस्ताद्विजयेशस्य प्रभोः क्षेमाय याचिताः ॥४५९॥
पादन्यस्तशिराः पौत्रो हस्तार्पितकोशया । मूर्धन्याघ्राय कथितो मा पितुर्विश्वसीरिति ॥४६०॥ 460
उत्थितैव ततो भूत्वा स्वयमाचलतां सती । प्रातिहार्यं व्यधाद्भर्तुः कारयन्त्यन्तमण्डनाम् ॥४६१॥
सादिनां शतमादिश्य नप्तुस्तत्रैव रक्षणे । सा पुनः शिबिकारूढमथ प्रास्थापयत्पतिम् ॥४६२॥
क्षपामेकां दिनार्धं च स्थित्वैवं पतिदेवता । प्रणम्य विजयेशानं पुण्याकूता विनिर्ययौ ॥४६३॥
निर्यान्तीं वीक्ष्य तां प्रेमतूर्यकल्लोलमिश्रितैः । लोकस्याक्रन्दतुमुलैर्भग्ना इव दिशोऽभवन् ॥४६४॥
विमानस्योत्पताकस्य परिष्कारेषु बिम्बिताः । प्रजा राज्ञोऽन्तिके रेजुरनुगन्तुमिवोद्यताः ॥४६५॥ 465
राज्ञां वितीर्णस्कन्धानां मदलोलाः शिरोरुहाः । विमानस्थस्य नृपतेरवहंश्चामरश्रियम् ॥४६६॥
पश्यन्ती[1] पश्चिमां सेवां सैन्यानां नृपतिप्रिया । अस्ताभिलाषिणि दिने प्रपेदे पितृकाननम् ॥४६७॥
दुस्त्यजात्सुतवात्सल्याद्यद्वा केनापि हेतुना । सा बभूव क्षणे तस्मिंस्तनयालोकनोत्सुका ॥४६८॥
जानन्ती पवनोद्धूतं रजः सेनासमुत्थितम् । चकितोत्कण्ठिता साभूत्कलशागमनाशया ॥४६९॥
तस्मिन्क्षणे जनाः केचिदायाता नगराध्वना । अङ्ग किं कलशः प्राप्त इति पृष्टास्तया स्वयम् ॥४७०॥ 470
स तु पुत्रः क्षणे तस्मिन्यियासुर्मातुरन्तिकम् । दत्त्वा बिभीषिकास्तास्ता निरुद्धो द्वैधकारिभिः ॥४७१॥
ततो गृहीतनैराश्या राज्ञी पुत्रावलोकने । सा प्रार्थयित्वा वैतस्तं वारि श्लोकमथापठत् ॥४७२॥
वैतस्तेन तु तोयेन जठरस्थेन ये मृताः । मोक्षं गच्छन्त्यसंदेहं ते यथा ब्रह्मवादिनः ॥४७३॥
उपनीतं वितस्ताम्बु पीत्वोपस्पृश्य चाथ सा । एवं शशाप पिशुनान्स्नेहसंक्षयकारिणः ॥४७४॥
जनितं प्राणदद्वैरं यैः पुत्रेण सहावयोः । सान्वयानां क्षयस्तेषां भूयात्परिमितैर्दिनैः ॥४७५॥ 475
तस्यास्तेनोपपन्नायाः शापेनाव्यभिचारिणा । क्षिप्रमेव जयानन्दजिन्दुराजादयो मृताः ॥४७६॥
अर्के हलधरामात्यजातकौलीनशान्तये । परलोके पणीकृत्य युक्त्या च शपथं सती ॥४७७॥
एवं विशुद्धशीलत्वं संप्रकाश्य शुचिस्मिता । कर्णीरथाददाज्झम्पां ज्वलिते जातवेदसि ॥४७८॥
अजायत नभो वह्निज्वालावलयमालितम् । तदागमोत्सवे दत्तसिन्दूरमिव निर्जरैः ॥४७९॥
साक्रन्दैर्न घटत्कारी दुःखोत्तप्तैर्न सोष्मलः । परमालेख्यलिखित इव ज्ञातो शिखी जनैः ॥४८०॥ 480
गङ्गाधरश्चक्रिकुट्टो युग्यवाहश्च दण्डकः । तादृशा नोणिका वल्गा चेति दास्यस्तदान्वयुः ॥४८१॥
बप्पटोड्डटयोः कुल्यौ सेनटक्षेमटावुभौ । भूपालवल्लभावास्तां वैराग्याद्विजयेश्वरे ॥४८२॥
भाषा यस्य निसर्गभङ्गुरतरा स्निह्यन्ति मैत्रे चिरं चेतःकाव्यघटस्य तस्य घटते शैत्योयमेको गुणः ।
यत्कस्मिन्निहितप्ररूढि न गलत्यायाति न म्लानतां धत्ते नापचयं चमत्कृतिरसो गीर्वाणगङ्गापयः ॥४८३॥
एकषष्टिमतिक्रम्य वर्षान्भूपतिरायुषः । सपत्नीकः पुरारातिगौरीसायुज्यमासदत् ॥४८४॥

---

४५९. [1]) $A_2$ gloss रिक्तं. ४६१. [1]) हरिय supplied by $A_2$ in space left by $A_1$.—[2]) $A_2$ gloss आत्मा गृहीता लता यथा.—[3]) $A_2$ gloss शास्यस्त. ४६६. [1]) $A_2$ gloss वितीर्णाः दत्ताः स्कन्धाः शुभाविरोति शिविकावाहनार्थं थैः तेषां. ४६७. [1]) Thus corr. by $A_2$ from $A_1$ पश्यन्त्यपश्चि°. ४६९. [1]) Thus corr. by $A_2$ from $A_1$ °गमनाशया. ४८३. [1]) $A_2$ gloss चेतोरूपे काव्यघटे शैत्य इति प्रसिद्धि.

485 अथास्थीनि समादाय चतुर्थे दिवसे तयोः । पुत्रास्तन्वङ्गराजस्य सर्वे गङ्गां प्रतस्थिरे ॥४८५॥
पैतामहेन कोशेन परिवारेण चान्वितः । पित्रा विरोधं जग्राह हर्षस्तु विजयेश्वरे ॥४८६॥
आस्ते पिता पुरवरे[1] पिता श्रीविजयेश्वरे । तस्मिन्पुत्रस्तु तत्रासीत्पिता तु नगरान्तिके ॥४८७॥
ततोतिव्यथितं पुत्रं दरिद्रो नीतिमान्पिता । अभ्यर्थ्यानर्थभीतश्च संधिं दूतैरयाचत ॥४८८॥
स तैरसकृदायातैरुत्सिक्तो युक्तवादिभिः । राजपुत्रः समं पित्रा संधिं निन्ये कथंचन ॥४८९॥
490 रक्षां पैतामहे कोशे शरीरे चात्मजन्मने । प्रतिभूभाव जनकः कृतसत्यहवेतनः ॥४९०॥
नृपतेः पुत्रमानेतुं विशतो विजयेश्वरम् । दृष्टिः दुष्टैर्गृहैर्दग्धा श्रुतिश्च जनगर्हया ॥४९१॥
स पीतकोशः संगृह्य तनयं प्राविशत्पुरम् । कोशं चास्थापयन्मुद्रां दत्त्वा तदभिधाङ्किताम् ॥४९२॥
अत्रान्तरे तस्य राज्ञो धार्मिकी धीरजायत । दारिद्र्यच्छेदिनी धर्म्या धनवृद्धिश्च सर्वतः ॥४९३॥
तनयो नयनाख्यस्य कल्यः सेल्यपुरौकसः । कुटुम्बिनो जय्यकाख्यः क्रमाद्भामरतामगात् ॥४९४॥
495 स्थलोत्पत्तिः स दिग्देशविक्रीताब्जो वणिज्यया । संभृतार्थः शनैर्लुब्धो धनेशस्पर्धितां दधे[1] ॥४९५॥
सार्धं कोशं खनित्वा स नित्यं दीनारराशिभिः । पूरितायाः क्षितेः पृष्ठे बहून्व्रीहीनवापयत् ॥४९६॥
दीनारन्यसनं भृत्यैः कारयित्वा प्रतिक्षपम् । बहवो भेदभीतेन तेन गूढं निपातिताः ॥४९७॥
स भाङ्गिलं लब्धुमिच्छन्बलेकस्मात्पलायिते । द्राक्षालतानिरुद्धाश्वो हतः केनापि पत्तिना ॥४९८॥
तदीयेनोपलब्धेन धनेन वसुधातलात् । पर्याप्तेनात्यजद्राजा यावदायुर्दरिद्रताम् ॥४९९॥
500 समृद्धं क्षाल्यमानेषु तदीनारेष्वहर्निशम् । कलुषाम्भा बहून्मासान्वितस्ता समपद्यत ॥५००॥
दानोपभोगरहिताः काले क्लेशेन भूयसा । अन्यार्थमर्थान्रक्षन्ति चित्रं लुब्धा महाशयाः ॥५०१॥
प्राणान्धारयते निपीय मरुतः शेते तमोन्धे बिले संभोगे परहस्तमिच्छति पटं नमस्त्रपाशान्तये ।
विस्तार्येति कदर्यतामहिरवत्यन्यस्य हेतोर्निधीनान्यः कोपि परं परोपकृतिषु प्रौढोस्ति लुब्धं विना ॥५०२॥
अन्यैश्च बहुभिर्मार्गैर्नद्यः सिन्धुमिवाविशन् । नानार्थसंपदस्तास्तां भाग्यभाजं महीभुजम् ॥५०३॥
अर्था भाग्योदये जन्तुं विशन्ति शतशः स्वयम् । दिग्भ्योभ्युपेत्य सर्वाभ्यः सायं तरुमिवाण्डजाः ॥५०४॥
स्रोतांसि प्रबलत्वमेत्य वसुधां मूलेषु पुष्णन्त्यधो व्योम्नोम्भः पतति त्यजन्ति हरितो वारि प्रणालीमुखैः ।
505 इत्थं शुष्कसरः पयोदसमये संपूर्यते सर्वतो भाग्यानामुदये विशन्ति शतशो द्वारैर्न कैः संपदः ॥५०५॥
जनरक्षणदाक्षिण्ये ततः[1] पितुरिवान्वहम्[2] । कुशला कलशस्यासीत्प्रजापुण्योदयैर्मतिः ॥५०६॥
स्वयं वणिग्विचार्याणां गणनाकुशलोपि सः । विवेक्ता तत्पयस्त्यागे मुक्तहस्तः सदाभवत् ॥५०७॥
उपस्थितौ भाविनौ च पश्यन्नायव्ययौ स्वयम् । अन्तिकात्यजद्गञ्जखटिकादि नियोगिवत् ॥५०८॥
तस्य स्वरूपमूल्येन रत्नादि क्रीणतः स्वयम् । नाशकन्वञ्चनां कर्तुं केपि विक्रयकारिणः ॥५०९॥
510 त्रिवर्गं सेवमानः स विभज्य समयं सुखी । मध्याह्नादूर्ध्वमभवद्दृश्यः सर्वकार्थिणाम् ॥५१०॥
तस्य स्वेषां परेषां च कृत्यमन्विष्यतश्चरैः । अज्ञातः स्वप्रवृत्तान्तः प्रजानामभवद्यदि ॥५११॥

---

४८७. [1]) Thus emended with G; A पुत्रवरे. ४९५ [1]) दधे supplied by $A_3$ in space left by $A_1$.—[2]) Thus corr. by $A_2$ from $A_1$ धेनामवाह्. ५००. [1]) Emended; A तदीना°. ५०३. [1]) Thus corr. by $A_2$ from $A_1$ °स्तास्ता. ५०६. [1]) ततः supplied by $A_2$ in space left by $A_1$.—[2]) Thus corr. by $A_2$ from $A_1$ °वान्विकम्.

स्ववेश्मेव गृहस्थस्य ध्यायतश्चास्य मण्डलम् । अन्नो जनपदे जातु न कश्चिन्न्यमलम्बयत् ॥५१२॥
कौलीनचकितो राजा कुर्वन्कण्टकशोधनम् । प्रकटं नास्यजहन्ड चौरेभ्योपि स जातु चित् ॥५१३॥
न तस्यार्थः कोपि नष्टो मन्त्रिणो वमयोजयन् । मन्त्रिणां च पुनश्चक्रे नष्टस्यार्थस्य योजनम् ॥५१४॥
विवाहयज्ञयात्रादिमहोत्सवशताकुलः । नित्यप्रहृष्टो निर्दैन्यस्तद्राज्ये ददृशे जनः[1] ॥५१५॥ 515
तेन नीतिविदाक्रान्ताः क्ष्माभुजः क्षित्यनन्तराः । आहारावरणेष्वासंस्तद्ध्यानान्विताक्षमाः ॥५१६॥
तन्त्रक्रस्थस्थक्कनादींस्त्वीनायातान्दिगन्तरात् । व्यचितैकानुजान्मल्लप्रमुखान्गुङ्गजानपि ॥५१७॥
अपीणयद्बन्धुभृत्यान्स भव्याभिर्विभूतिभिः । कलाभिरमृतार्द्राभिः सोमः सुरपितॄनिव ॥५१८॥ युग्मम् ॥
अवाप्तपरिपाकोपि दौःशील्येन न भूपतिः । कुदैशिकोपदिष्टेन दुष्टाचारेण चोज्झितः ॥५१९॥
टक्केन वुल्लियाख्येन कन्यकाः समुपाहृताः । क्रीतास्तस्य तुरुष्केभ्यो नानादिग्देशसंभवाः ॥५२०॥ 520
स ताभिः परदारैश्च रूपलोभादुपाहृतैः । अवरोधपुरंध्रीणां शतमतिमहीकयत् ॥५२१॥
बह्वीः कामयमानस्य योषितः प्रतिवासरम् । मत्स्ययूषादिभिर्वृष्यैर्नास्य पुष्टिरहीयत ॥५२२॥
महासमयपूजासु व्ययः स गुरुभिः समम् । महाचरुणामाहारं नीतिमुत्सृज्य चाकरोत् ॥५२३॥
एवं शाबलकृत्येन पुरं तेन नवीकृतम् । निर्दग्धे विजयक्षेत्रे शिलावेश्म न शूलिनः ॥५२४॥
विजयेशशिलावेश्मलीलातपवारणम् । नृपोम्बरशिरश्चुम्बि जाम्बूनदमयं व्यधात् ॥५२५॥ 525
व्ययस्थितिं चानपायां व्यधत्त त्रिपुरेश्वरे । पिनाकिनश्च प्रासादं स स्वर्णामलसारकम् ॥५२६॥
ततः सत्कर्मकुशलश्चकार कलशेश्वरम् । निःसंख्यहाटकघटीपटलप्रांशुशिलागृहम् ॥५२७॥
कलशेशोपरि छत्रं चिकीर्षोः काञ्चनान्वितम् । तुरुष्कदेशजः शिल्पी राज्ञोभ्यर्णमुपाययौ ॥५२८॥
सहस्रैर्भूरिभिर्हेम्नश्छत्रसिद्धिं वदन्कलाम् । स भावयन्निजां ताम्रे काञ्चनारोपणं विदन् ॥५२९॥
कानिचिद्दिवसान्यासीत्प्रामुखनृपसत्क्रियाम् । ततोतितीक्ष्णप्रज्ञेन नोनकाख्येन मन्त्रिणा ॥५३०॥ 530
अभ्यूह्य शिक्षितकलो विलक्षोगाद्यथागतम् । तच्च छत्रं ययौ सिद्धिमस्यल्पैरेव काञ्चनैः ॥५३१॥
अनन्तेशाभिधं बाणलिङ्गमन्यांश्च भूपतिः । प्रतिष्ठा विविधाश्चक्रे स शक्राधिकवैभवः ॥५३२॥
नृपे सङ्गजपालाख्ये शान्तिं यातेभ्यषिच्यत । ततः संग्रामपालाख्यो राजपुर्यां तदात्मजः ॥५३३॥
राज्यं जिहीर्षुर्बालस्य पितृव्यस्तस्य भूपतेः । भेजे मदनपालाख्यो बलीयानुद्यमं महान् ॥५३४॥
तद्भयाच्छरणं प्रायान्नृपं साहायकार्थिनी । स्वसा संग्रामपालस्य[1] जस्सराजश्च ठक्कुरः ॥५३५॥ 535
कृतप्रसादो नृपतिः साहायककृते ददौ । तयोः पश्चाज्जयानन्दं भूरिबिज्जादिभिः समम् ॥५३६॥
तत्र विद्रावितामित्रः स[1] स्फूर्जन्क्रान्तमण्डलः । संग्रामपालामात्यानां कार्यान्ते शङ्कुतां[2] ययौ ॥५३७॥
काकुन्तो गमने तस्य दत्त्वा तास्ता विभीषिकाः । ते त्रासमेच्छन्नाधातुं स वीरो न व्यकम्पत ॥५३८॥
मतिं राजपुरीयाणामसावेतामदादिति । शङ्कमानेन तेनाथ बिज्जे मन्युरुपाहृतः ॥५३९॥

---

५१५. [1]) Thus corr. by $A_1$ from जनैः. ५१७. [1]) Doubtful; thus A. ५१८. [1]) न. supplied by $A_2$ in space left by $A_1$. ५२०. [1]) Thus $A_2$; $A_1$ तुरुष्केन. ५२२. [1]) $A_2$ gloss वृष्यैः वाजीकरणैः. $A_2$ quotes: कृष्णकल्पतरौ पारिभद्ररसेनैव हिङ्गुलं वाममात्रकम् । मर्दयित्वा पारदस्यात्रयेत्पूर्वङ्गुम्भितः । योजयेत्सर्वयोगेषु सवकञ्चुकवर्जितम् ॥. ५२४. [1]) न supplied by $A_2$ in space left by $A_1$. ५३३. [1]) $A_2$ gloss राजविद् इति भाषया. ५३५. [1]) Thus corr. by $A_2$ from $A_1$ संग्रामराजस्य. ५३७. [1]) $A_2$ gloss जयानन्दः.—[2] Thus emended with G *sec. manu*; A शङ्कतां.

540 तैस्तत्र दत्तहृदयैः प्रार्थितोथ महामतिः । रक्षापदेशात्स्वं सैन्यं स्थापयित्वा न्यवर्तत ॥५४०॥
एवं राजपुरीं तस्मिन्स्वीकृत्यान्तिकमागते । तुतोष कार्यमर्मज्ञः प्राज्ञः कलशभूपतिः ॥५४१॥
क्रमाद्राजायमानेषु बिज्जादिष्वथ पस्पृशे । आमयेन जयानन्दो दैवात्प्रमयहेतुना ॥५४२॥
स्वास्थ्यवार्तोपलम्भाय भूपतिं गृहमागतम् । वाच्यमस्ति रहः किंचिदित्यूचे स कथान्तरे ॥५४३॥
निर्यातेष्वथ सर्वेषु किंचिन्नैवाब्रवीद्यदा । तदा ताम्बूलमित्यक्षाव्याजाद्बिज्जो विनिर्ययौ ॥५४४॥
545 आप्तेनोक्तोपि निर्गच्छन्किं प्रयासीति भूभुजा । मन्त्रिणा नैत्य स प्राज्ञो बहिरेव व्यलम्बत ॥५४५॥
जयानन्दोऽभ्यधाद्भूपमुक्त्वा राजपुरीकथाम् । व्यक्तं नास्त्येव ते राज्यं बिज्जे वृद्धिमुपागते ॥५४६॥
आदीयमानाद्बिज्जेन कार्येभ्यो वेतनादपि । दर्शयामास गणनां बहुमूल्यां महीभुजे ॥५४७॥
प्रातः कलुषतां राजा प्रयातः स्वगृहांस्ततः । याचितो गमनानुज्ञां बिज्जेनेङ्गितवेदिना ॥५४८॥
निषेधन्निव दाक्षिण्यलेशान्निर्बन्धकारिणः । तस्यानुज्ञां ददौ गन्तुं सान्तस्तोषो महीपतिः ॥५४९॥
550 लब्धादेशो गृहान्गत्वा सर्वोपकरणैः समम् । प्रस्थाप्य सोमतो भ्रातॄनाप्रष्टुं नृपतिं ययौ ॥५५०॥
राज[1]धर्मगभीरत्वक्रूरयोः स्वामिभृत्ययोः । काप्येव क्षणे तस्मिंश्चेष्टाभूदद्भुतावहा ॥५५१॥
न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्तयत् । उपालेभे समन्युश्च न यद्भृत्यः प्रियं प्रभुम् ॥५५२॥
सहोत्थितेन कतिचित्पदानि सह भूभुजा । चिरं कृत्वा कथां नीचैर्हसन्बिज्जो विनिर्ययौ ॥५५३॥
जिन्दुराजं हलधरो मुमुर्षुर्दूषयन्यथा । तथा बिज्जं जयानन्दः स व्यवारोपयत्पदात् ॥५५४॥
555 तल्लक्ष्मीमात्रशेषां क्ष्मां कृत्वा गच्छन्विधीयताम् । कृतार्थो बिज्ज इत्युक्तिं नासहीन्मन्त्रिणां नृपः ॥५५५॥
निवर्तयिष्यति क्ष्माभृन्नियतं गमनादमुम् । इत्याशयान्वगाद्बिज्जं राजवर्जं जनोखिलः ॥५५६॥
आस्कन्दं शङ्कमानोस्माद्बिज्जाद्राजा बलोर्जितात् । तृणस्पन्देपि चकितो निर्निद्रः पञ्च यामिनीः ॥५५७॥
तस्मिञ्शूरपुरा[1]द्याते निवृत्तेष्वनुगन्तृषु । निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणाम् ॥५५८॥
ते तदाकर्ण्य यं मन्त्रं बिज्जार्थहरणेब्रुवन् । तस्याविधाने भूभर्तुरमन्यन्त नयज्ञताम् ॥५५९॥
560 बिज्जादयस्तु निर्द्रोहा यं यं देशमशिश्रयन् । तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे ॥५६०॥
बिज्जोधिकं प्रवृद्धोपि दैवतस्येव भक्तिमान् । पत्न्यां कलशदेवस्य सत्यंकारः सदाभवत् ॥५६१॥
एवं निर्वास्य बिज्जादीनचिरावाप्तवैभवः । क्षिप्रं सूर्यमतीशापाज्जयानन्दः क्षयं ययौ ॥५६२॥
राज्ञो विरोधकृद्वक्तुं शापस्याप्यभिचारिताम् । प्रमयं जिन्दुराजोपि तस्मिन्नेव क्षणे ययौ ॥५६३॥
तेपि बिज्जादयः क्षिप्रमचिरावाप्तसंपदः । प्रापुः शापोचितं सर्वे प्रमयं गौडमण्डले ॥५६४॥
565 आकस्मिकेथ प्रमये[1] बिज्जः प्रमयमाययौ । सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि ॥५६५॥
पलायितेषु कारायास्तेषु व्याघ्रेण पाजकः[1] । हत[2]स्तदनुजाः शेषा भुक्तक्लेशाः क्षयं ययुः ॥५६६॥
द्विजास्त[1]द्वैधकाराणां नानयन्मदनादयः । अदीर्घेणैव कालेन दुरन्तैर्वै[2]र्भाविष्यते ॥५६७॥
जयानन्दसहायोथ तत्पुत्रान्परिपालयन् । सर्वाधिकारी भूपेन वामनाख्यो व्यधीयत ॥५६८॥

---

५५१. [1]) Thus corr. by later hand from A₁ राज्य°. ५५८. [1]) A₂ gloss शूरपुर. ५६५. [1]) A₂ gloss आकस्मिके प्रमये मारीतीव इत्यर्थः. ५६६. [1]) Thus A₁; A₂ R G पाजकाः.—[2]) Thus A₁; A₂ ततस्त°. ५६७. [1]) Thus A₁; A₂ द्विजास्तु द्वै°.—[2]) Thus corr. by A₂ from A₁ --दैवैर्भावि°.

यस्य तासां व्यवहृतीर्नीतिज्ञस्याद्भुतावहाः । वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि[1] धीमताम् ॥५६९॥

ग्रामानवन्तिस्वाम्यादिभोग्यानाहृत्य लुब्धधीः । राजा कलशगङ्गाख्यं कर्मस्थानं विनिर्ममे ॥५७०॥ 570

मन्त्रिणे सोमकायासौ धनोत्पादविदेऽददात् । कौर्यवस्तो न पापार्तं जनरक्षणदक्षिणः ॥५७१॥

मन्त्रिणो राजकलशापत्यान्यस्यान्तरङ्गताम् । लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः ॥५७२॥

सुताः स्वाध्यक्षविशशाधीराः संग्रामादिसंभवाः । युक्त्या निदधिरे राज्ञा निबद्धस्याधिकारिणः ॥५७३॥

पुनर्मदनपालेन क्रान्ते राजपुरीपतौ । साहायकाय व्यसृजत्सेनान्यं बप्पटं नृपः ॥५७४॥

प्रतापैर्भूपतेस्तेन भूत्यांशेनापि[1] निर्जितः । बद्ध्वा मदनपालोपि कश्मीरान्संप्रवेशितः ॥५७५॥ 575

भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा । कृतो द्वाराधिपो वीरो विदधे डामरक्षयम् ॥५७६॥

बभूव जिन्दुराजात्स शिक्षितो नयविक्रमौ । भूम्यनन्तरसामन्तमुकुटस्पृष्टशासनः ॥५७७॥

स राजपुर्यां विजयी द्वारं परमकोपनः । क्षणे क्षणेत्यजद्राज्ञा प्रसाद्य ग्राहितः स्वयम् ॥५७८॥

मदनः[1] क्षितिपालेन प्रापितः कम्पनेशताम् । लब्धप्रकर्षान्बोपादीन्डामरान्बहुशोवधीत् ॥५७९॥

सेवावशीकृतः दर्शनपालं स[1] नगराधिपम् । चक्रे विजयसिंहाख्यं हताशेषमलिम्लुचम् ॥५८०॥ 580

कन्दर्पोदयसिंहाद्यैः[1] क्षपिते लोहरे सकृत् । राजा भुवनराजस्य दूरं निःसारणं व्यधात् ॥५८१॥

कीर्तिराजस्य तनयां स च नीलपुरप्रभोः । लब्ध्वा भुवनमत्याख्यां रिपोर्भिक्षामवाभवत्[1] ॥५८२॥

कार्यप्रतिग्रहे कर्तुं प्रवृत्तिं ग्राहितोभवत् । हत्वा विजयसिंहाख्यो नृपेण नगरेशताम् ॥५८३॥

गुङ्गात्मजः स मल्लोथ तेन द्वारपतिः कृतः । राज्ञां मौलिमणिस्थाने स्वप्रतापमरोपयत् ॥५८४॥ युग्मम् ॥

शौर्ये निष्परिवारस्य पार्थस्योत्तरगोमहे । उरशासंप्रवेशो वा भुजं मल्लस्य मानिनः ॥५८५॥ 585

पञ्चाशीस्तुरगैर्यस्य कृष्णां तीर्त्वा व्यपाहरत् । राज्यं वाजिव्रजैः सार्धमभयाख्यस्य भूभुजः ॥५८६॥

एवं वशीकृतभुवो भूपतेर्नयवेदिनः । सममेवाष्टभूपालास्त्रिषष्टेब्देविशन्पुरम् ॥५८७॥

कीर्तिर्बब्बापुराधीशश्चाम्पेयो भूभृदासटः । तुक्कात्मजस्तु कलशो वल्लापुरनरेश्वरः ॥५८८॥

राजा संग्रामपालाख्यः स च राजपुरीपतिः । उत्कर्षो लोहरोर्वीभृद्वीर्वशो मुङ्गजो नृपः ॥५८९॥

गाम्भीरसीहः कान्देशः काष्ठवाटधराधिपः । श्रीमानुत्तमराजोपि राजानमुपतस्थिरे ॥५९०॥ तिलकम् ॥ 590

राजलोकः प्रवृद्धोपि घने जनपदेभवत् । दुर्लक्ष्यो वार्षिकसरित्पूरो वारिनिधाविव ॥५९१॥

तस्मिन्क्षणे शिलीभूतविलसत्सासलिले नृपैः । शीतक्षणेप्यसंक्षीणं सुखं तैरन्वभूयत ॥५९२॥

मनसापि हि भूपाला वशे किंचिदचिन्तयन् । धाममेव पुरेपश्यन्वामनेन तदाहृतम् ॥५९३॥

कौशलं मन्त्रिणस्तस्य रराजेतरदुर्लभम् । निमित्तं मदसंभ्रान्तो नित्यवयोत्यवाहयत् ॥५९४॥

पार्थिवेष्वथ यातेषु मल्ले कार्यपराकुले । क्षितिपालेन कन्दर्पो द्वारं स्वीकारितः पुनः ॥५९५॥ 595

अभिमानधनो मन्त्री कृतार्थैर्धर्मजैर्धनैः[1] । दुर्गं स[2] स्वापिकं[3] नाम युक्त्या दुर्गहमग्रहीत् ॥५९६॥

स प्रविष्टोपि नगरं खिन्नः केनापि हेतुना । पार्थिवाभ्यर्थ्यमानोपि कार्यं नैवाग्रहीत्तदा ॥५९७॥

---

५६९. [1]) पि supplied by $A_2$. ५७५. [1]) Thus corr. by $A_1$ from $A_1$ °शेनाति. ५७९. [1]) $A_2$ gloss मदनपालः. ५८०. [1]) स supplied by $A_2$. ५८१. [1]) Thus corr. by $A_1$ from $A_1$ कन्दर्पोन°. ५८२. [1]) Thus corr. by $A_1$ from $A_1$ °रिभक्षाभयो°. ५९६. [1]) $A_2$ gloss अर्जुनदत्त.—[2]) $A_2$ gloss कलशो चित्राङ्गपुत्रः.—[3]) Thus $A_1$; $A_3$ दुर्गं.

तदा प्रशान्तकलशो[1] नित्यं वृत्तं समाचरन् । तदुत्थितक्रोधसंतमः संस्पृशन्नभिमानिताम् ॥५९८॥

निजभिख्यातिभूयस्त्वाद्भूरीन्संगृह्य मन्त्रिणः । तत्पदे रत्नकलशं स्वभ्रातरमकारयत् ॥५९९॥

600 शौर्यैः कीर्तिमथोप्यासीच्च कन्दर्पसमः क्वचित् । किं चित्रोल्लिखितः सिंहः सत्यसिंहक्रियां स्पृशेत् ॥६००॥

ततः क्रमेण भूभर्ता भृत्यवर्गं कथंचन । राजस्थानाधिकारे स नगरे याहितः पुनः ॥६०१॥

अतिताडनतश्चौरे विपन्नेऽथ कृपाकुलः । त्यक्त्वा तमप्यधीकारं विषण्णो जाह्नवीमगात् ॥६०२॥

पटान्तकृतसंरोधस्ताडयित्वा करं प्रभोः । कोपाद्देशान्तरं यातस्तं प्रत्यासे[1] स्म मन्युमान् ॥६०३॥

अत्यन्तखेदितोप्यासीदानीतस्यान्तिकं पुनः । दर्पं हर्तुं नृपस्तस्य संनद्धो न तु जीवितम् ॥६०४॥

605 इत्थं पुरुषसिंहानां प्रौढदार्यो विलोकयन् । आरोहमवरोहं च सोन्तरज्ञः क्षमापतिः ॥६०५॥

उपाङ्गगीतव्यसनं नर्तकीसंग्रहादरः । देशान्तरोचितं राज्ञा तेनैवेह प्रवर्तितम् ॥६०६॥

ततो जयवनोपान्ते निरन्तरमहागृहम् । स्वनामाङ्कं पुरं कर्तुं प्रावर्तत विशांपतिः ॥६०७॥

मठाग्रहारप्रासादमहागृहपरंपराः । सतोयोपवनास्तत्र ययुः सिद्धिं सहस्रधा ॥६०८॥

अत्रान्तरे राजसूनुर्हर्षः सोत्कर्षपौरुषः । गुणैर्लेभे प्रकाशत्वमन्यभूपालदुर्लभैः ॥६०९॥

610 सोशेषदेशभाषाज्ञः सर्वभाषासु सत्कविः । कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि ॥६१०॥

लुब्धेन पित्रा संत्यक्ता जना नानादिगागताः । गुणशौर्योज्ज्वलास्तेन गृहीताः कृतवेतनाः ॥६११॥

अपर्याप्ते पितृकृते वेतने व्ययशालिनः । एकाहान्तरितं तस्य भोजनं त्यागिनोभवत् ॥६१२॥

पितरं गायन इव व्यक्तं गीतैः स रञ्जयन् । भर्तव्यभरणं चक्रे तद्दत्तैः पारितोषिकैः[1] ॥६१३॥

उद्गायति पुरस्तस्मिन्कदाचिदथ पार्थिवः । सभ्येषु प्रीयमाणेषु शौचायोत्थाय निर्ययौ ॥६१४॥

615 तेन प्रसङ्गभङ्गेन जाततेजोवधः सुधीः । क्षुभ्यन्[1]वैलक्ष्यकोपाभ्यां कुमारः[2] क्षितिमैक्षत ॥६१५॥

प्रभुर्वीतक्षान्तिः सुहृदतिशठः स्त्री प्रणयवान्सुतो गर्वोन्नद्धः परिजन उदासमतिवचाः ।

इयान्सोढुं शक्यो ननु हृदयदाही परिकरो न तु श्रोतावज्ञालुलितनयनान्तं परिभवन् ॥६१६॥

पितुरेव तदा भृत्यो विश्वावट्टाभिधो विटः । शाधि राज्यं निहत्येमं नर्मणेत्युवाच तम् ॥६१७॥

अधिक्षिपन्स तं रोषाद्यानेनोक्तमसांप्रतम् । इत्यासन्नेन हसता धम्मटेना[1]प्यकथ्यत ॥६१८॥

अथ भोगेच्छया छन्नाः कुमाराननुगान्पितुः । केऽहं मदर्थं स्वीकुर्युर्वेश्या कामिसखीरिव[1] ॥६१९॥

620 पुनः सभां संप्रविष्टस्तं पिता पर्यतोषयत् । प्रीतिदायैस्ततस्तैस्तैः साधुवादैश्च मानिनाम् ॥६२०॥

अन्येद्युस्तु पितुः पार्श्वात्स भुक्त्वा स्वगृहान्गतः । अभ्येत्य विश्वावट्टेन तदेव जगदे रहः ॥६२१॥

उपपन्नं तदप्युक्त्वा तेनाभीक्ष्णं निषेधता । निर्बध्नन्नपि हस्तेन सोथ कोपादताड्यत ॥६२२॥

तलाभिघातं रुधिरं वमन्तं घ्राणवर्त्मना । तं वीक्ष्य सोभिजातोभूत्सदाक्षिण्यो नृपात्मजः ॥६२३॥

भृत्यैः प्रक्षालयन्नङ्गं तस्येदृक्पाप्मनो भवेत् । उक्तेनापीति कथयन्स्वीयवासांस्यदापयत् ॥६२४॥

---

५९८. [1]) Emended; A R G °कलशं. ६००. [1]) Thus $A_1$; $A_2$ कीर्त°.—[2]) Thus corr. by later hand from $A_1$ कन्दर्पः समः. ६०२. [1]) जाह्न supplied by $A_2$ in space left by $A_1$. ६०३. [1]) Thus corr. by $A_1$ from $A_1$ प्रत्यासे. ६०४. [1]) Thus $A_1$; $A_2$ °खेदितस्त्वासीदा°. ६१३. [1]) Emended; A °तोषकैः. ६१५. [1]) Thus $A_1$; $A_2$ क्षुभ्यद्वै°.—[2]) Thus corr. by $A_2$ from $A_1$ कुमारः. ६१८. [1]) Emended; A धर्मटेना°. ६१९. [1]) Thus $A_1$; $A_2$ कामी स°.

अनिच्छोरपि तस्येच्छा दानात्सेनान्वमीयत । दुःशीलैर्नान्यकामिन्याः स्मितमात्रादिव स्पृहा ॥६२५॥ 625

असकृत्कृतयत्नः स ततः कालेन भूयसा । तं प्रैरयत्तत्र कृत्ये मध्ये स्वीकृत्य धम्मटम् ॥६२६॥

स दोहद्रोहसंकल्पजन्मना पाप्मना श्रितः । संमन्त्र्य पितरं हन्तुं तीक्ष्णान्प्रायुङ्क्त सर्वतः ॥६२७॥

शश्वत्स गोचरीभूतस्तेषां खेदलवस्पृशाम् । न घातितः सूनुना च वर्जिता न च तत्कथा ॥६२८॥

आप्तत्वं तीक्ष्णवर्गेण प्रतिभेदभयाहृते । तां विश्वावह एवाशु वार्तां राज्ञे न्यवेदयत् ॥६२९॥

बुद्ध्वाथ राजपुत्रस्तस्मिन्नहनि आत्तभीः । भोक्तुं नागात्पितुः पार्श्वमपि दूतैः कृतार्थनः ॥६३०॥ 630

सोऽपि तस्मिन्ननायाते तत्रार्थे शान्तसंशयः । दिने तत्र मनस्तापान्नाभुङ्क्त सपरिच्छदः ॥६३१॥

सधातुकस्य प्राप्तस्य प्रातर्दुःखं न्यवेदयत् । सुचिरं थक्कनस्याङ्के शिरो विन्यस्य सोऽरुदत् ॥६३२॥

उक्त्वा च धम्मटोदन्तं बद्धुं तस्य समर्पणम् । विधेहीत्यभ्यधाच्चापि तं भङ्गीभणितिक्रमैः ॥६३३॥

न कृताधिगमा वार्ता कृत्यस्यास्येत्युदीर्य तम् । अभाषेतां भ्रातुरर्थे पुनस्तन्त्र्यङ्गनन्दनौ ॥६३४॥

स्वत्प्रसादबलाद्राजप्रापप्राणदीक्षितौ । यात्रायां तत्प्रवेशार्थे व्यक्तद्वारं निशास्वपि ॥६३५॥ 635

कथं नु पृथिवीपाल प्राप्ते प्राणात्ययक्षणे । निर्दोषो वा सदोषो वा ताभ्यां संत्यज्यतेऽनुजः ॥६३६॥ युग्मकम् ॥

स्वामिद्रोहापवादश्च भवेत्तद्रक्षणाद्ध्रुवम् । देशत्यागं तदुत्सृज्य शरणं नान्यदावयोः ॥६३७॥

इत्यादि संभाष्य तयोः पादन्यस्तोत्तमाङ्गयोः । रुदित्वा गमनानुज्ञां कथंचित्पार्थिवो ददौ ॥६३८॥

पथि कश्चिदमुं हन्यात्मध्यीकृत्येति धम्मटम् । तौ विनिर्जग्मतुर्देशात्ततः सबलवाहनौ ॥६३९॥

तन्वङ्गजेषु यातेषु विविक्तीकृतमन्दिरः । सुतमानीय नृपतिः सान्त्वयन्निदमब्रवीत् ॥६४०॥ 640

आसंसारं जगत्यस्मिन्सर्वतः ख्यातकीर्तिना । जनकेनैव जन्यस्य प्रसिद्धिरुत्पाद्यते जनैः ॥६४१॥

पुत्र शीतांशुनेवात्रि दिग्द्वीपख्यातकीर्तिना । भवता तु सुपुत्रेण मां जानात्यखिलो जनः ॥६४२॥

स त्वं गुणवतामग्र्यो निरर्गलयशा भवन् । असाधुसेव्यमध्वानं वद कस्माद्विशेवसे ॥६४३॥

पैतामहं निजं चार्थं यत्र तुभ्यं समार्पयम् । तत्र हेतुमनाकर्ण्य नासूयां कर्तुमर्हसि ॥६४४॥

रिक्तः स्वेभ्यः परेभ्यश्च प्राप्नोत्यभिभवं नृपः । इति निर्धार्य हि मया क्रियते कोशरक्षणम् ॥६४५॥ 645

पुरप्रतिष्ठां निष्पाद्य क्षिप्त्वा राज्यधुरं त्वयि । वाराणस्यां गमिष्यामि नन्दिक्षेत्रेऽथ वा पुनः ॥६४६॥

तद्राज्यकोशयोः स्वामी बुभुक्षुर्न चिराद्भवान् । अतितात्पर्यतः कस्मादनार्योचितमीहसे ॥६४७॥

संभाव्यते त्वयि न तद्यन्ममावेदितं खलैः । यथार्थकथनात्तस्मात्कौलीनं विनिवार्यताम् ॥६४८॥

विभुद्रोहे करोत्येव स्वकुलस्याप्रतिश्रवम् । स्नेहादितीर्यंस्तद्राजा साभिप्रायं वचोऽभ्यधात् ॥६४९॥

अपलापवचोमात्रं निनीषुस्तस्य हेतुताम् । जनप्रत्यायने सोऽभूद्यस्मात्क्षान्तिसमुत्सुकः ॥६५०॥ 650

हर्षस्तु साधुवादैस्तत्पितुः संपूज्य भाषितम् । वक्ष्याम्यग्रमुखे तत्त्वमित्युक्त्वा निर्ययौ बहिः ॥६५१॥

सामान्यप्रेरणादेषा चिकीर्षाभूदिति ब्रुवन् । स पितृप्रहितं दूतं प्रीतः स्वावसथं ययौ ॥६५२॥

---

६२५. ¹) Thus corr. by A, from A₁ दुःशीलान्य°. ६२७. ¹) द supplied by A₂. ६३०. ¹) Thus corr. by A₂ from A₁ °पुत्रस्तस्मि°. ६३१. ¹) A₁ तत्रार्थेऽशान्त°. ६३३. ¹) Emended; A धम्मटो°.—²) Emended; A बुद्धा. ६३४. ¹) A₄ gloss धम्मटस्य. ६३५. ¹) यात्रायां तत्प्रवेशार्थ supplied by A₂ in space left by A₁. ६३९. ¹) Emended; धम्मटम् supplied by A₂ in space left by A₁. ६४१. ¹) A₄ gloss पुत्रस्य. ६४४. ¹) A₄ gloss अनन्तदेवसमर्पितम्.—²) Emended with C; A समर्पयम्. ६४६. ¹) Thus R G C; A पुनः. ६५२. ¹) Emended; A स्वावसथं.

सुतं म्लानाननं वीक्ष्य पाणिभ्यां ताडयञ्छिरः । हा पुत्रेति वदन्राजा तस्यास्कन्दमदापयत् ॥६५३॥
हन्तेऽस्मिन्स्वशिरश्छेत्स्यामीति प्रोक्तवतः प्रभोः । निदेशाद्वेष्टयित्वैव तस्थुस्तद्वेश्म शस्त्रिणः ॥६५४॥
655 तीक्ष्णास्तु पिहितद्वाराः परिवार्य नृपात्मजम् । ऊचुः सुपरुषां वाचमेवं निश्चितमृत्यवः ॥६५५॥
अस्मान्घृणी प्रमादी च विरुद्धं क्व कारयन् । घातयित्वा दुराचार क्व जीवन्स्थातुमिच्छसि ॥६५६॥
रक्षिष्यति सुतं स त्वां स पिता रक्षितस्त्वया । ज्ञातेयं युवयोरस्ति वयमेव हताः पुनः ॥६५७॥
युध्यस्व मध्यगोऽस्माकं त्वां निहन्मोऽन्यथा वयम् । एवं सर्वप्रकारं ते व्यक्तं नास्त्येव जीवितम् ॥६५८॥
तां वार्तां भूपतेः श्रुत्वा व्याकुलस्याग्रतः स्थितः । हर्षान्तिकं दण्डकाख्यः प्रायान्निजमहत्तरः ॥६५९॥
660 तीक्ष्णैर्निजतया दत्तप्रवेशः स नृपात्मजम् । प्रहस्योवाच मतिमानेवं सर्वान्विमोहयन् ॥६६०॥
क्षत्रियापुत्र जीवित्वा कल्पानल्पेतरानपि । कारणैरपि गन्तव्यं नियमाद्धि यतेर्वशम् ॥६६१॥
तदेतस्मिन्समासन्ने मरणेऽव्यभिचारिणि । यदर्थं गृह्यते शस्त्रं स मानः पाल्यतां त्वया ॥६६२॥
कृतभुजः ख्यातयशा युवा क्षत्रियो भवान् । तदाहवविलम्बेन कार्यं किमिव पश्यसि ॥६६३॥
एतेषु सुसहायेषु मयि चाग्रेसरेऽधुना । विपत्तिर्विजयो वापि प्रतापिंस्तव शोभते ॥६६४॥
665 तदिह नखकेशादियोजनं कारय द्रुतम् । वीरपट्टं बधानापि स्वःस्त्रीपरिणयक्षमम् ॥६६५॥
इत्युक्त्वा क्षुरकर्मार्थं राजपुत्रं सनापितम् । प्रावेशयत्पूज्यमानस्तीक्ष्णैराभ्यन्तरं गृहम् ॥६६६॥
न्यस्तासिधेनुर्हर्षेण दत्तझम्पः क्षणात्स्वयम् । पश्चात्प्रविश्य तद्वेश्म चक्रे सुनिहितार्गलम् ॥६६७॥
ततः स राजस्थानीयं तमाराद्ब्रवीद्वचः । रक्षितो राजपुत्रोऽयं क्रियतां स्वोचितं त्वया ॥६६८॥
भुजगमहाद्रिभवमोषधिभिर्विरोधिजातं बलैः प्रहरणप्रभवं तनुत्रैः ।
निर्वाप्यते प्रतिभयं पृथिवीपतीनां सार्वत्रिकं तु रभसाद्भुवि बुद्धिवृद्धैः ॥६६९॥
670 नदन्तस्तुमुलं योधास्ततो राजसुतास्पदे । आरोढुमाययुर्वेश्महर्म्यादि प्रविविक्षवः ॥६७०॥
तीक्ष्णा द्वारगृहस्थितं त्यक्त्वा नृपात्मजम् । यावन्निर्गन्तुमिच्छन्ति हन्यमाना युयुत्सवः ॥६७१॥
चित्राः प्रसङ्गसांनिध्यान्मध्यपातं समाश्रिताः । तावद्विनिर्ययुर्वीरा निर्द्रोहा अभिमानिनः ॥६७२॥
ते निर्याताः सूर्यमतीगौरीशाश्रयिणो गृहात् । सदाशिवान्तिकं प्रापुर्घ्नन्तो युधि विरोधिनः ॥६७३॥
रक्ष्यमाणोऽपि भूभर्तुर्गिरा ज्ञातेयशालिनः । राजज्ञानिर्हतस्तेषु प्रथमं सहजाभिधः ॥६७४॥
675 द्विजस्तिलक्याभिधो वीरः पण्डितः शौर्यमण्डितः । रामदेवश्च केशी च कर्णाटोऽरिभटैर्हतः ॥६७५॥
केचित्त्यजन्तः शस्त्राणि स्वं घ्नन्तः केऽपि च स्वयम् । लेभिरे वधबन्धादि पापाः कापुरुषोचितम् ॥६७६॥
सितषष्ठ्यां सहस्यस्य चतुःषष्टे स वत्सरे । वैरं नीत्वा पितापुत्रौ विप्लवः कारितौ विटैः ॥६७७॥
हठस्यागासक्तिः प्रिययुवतिसंप्रेरणवचः खलासङ्गः पूर्वप्रणयपरिहारो जनयितुः ।
अमात्येन भ्रात्रा सममपरमात्राय कलहः कुमाराणां बुद्धिं पितरि विपरीतां प्रतनुते ॥६७८॥
एवं स खलसंगत्या कुमारो लब्धलाघवः । बन्धं कारागृहे प्रापदसुखानि सुखोचितः ॥६७९॥

---

६५५. 1) A₄ gloss स्वकीया एव पूर्वं राजवधं प्रति प्रोत्साहिताः. ६६१. 1) A₂ gloss कारणानि ब्रह्मादीनि पञ्च. ६६७. 1) Fol. 166 of A ends with पश्चात्प्र: fol. 167 which ended with verse 688, is now lost. ६७५. 1) Thus R; G कोशाख्य.

राज्ञी भुवनमत्यस्मिन्नब्दे माध्यस्थ्यसंविदि[1] । स्थापिता मानिनी कण्ठच्छेदं कृत्वा जहावसून् ॥६८०॥ 680
रक्षिणो मन्त्रिणामाप्तांस्तस्य विन्यस्य भूपतिः । ग्राहिणोदुर्मितान्भोगान्भुक्तस्नेहाखिले दिने ॥६८१॥
भक्तिकायामशक्तोयमिति संचिन्त्य भूभुजा । भृत्यः प्रयागनामास्य निजः पार्श्वाच्च वारितः ॥६८२॥
नोनको हर्षमुद्दिश्य स्तेनान्वैथ महीभुजम् । जीवितं लोचने चास्य कृष्येतामित्यभाषत ॥६८३॥
नृपः स शीलवैकल्ये पशुतुल्ये श्रियं त्यजन् । रिपोरिव तनूजस्य चकमे कतिचित्प्रियाः ॥६८४॥
तासु श्वशुरवात्सल्यमवाप्य सुगलाभिधा । बभूव तुक्कभूर्भर्तृनप्त्री भर्तृवधार्थिनी[1] ॥६८५॥ 685
संमन्त्र्य नोनकः सा च द्वौ सूदावशनान्तरे । रसं[1] प्रदातुं हर्षस्य पापं प्रैरयतां ततः ॥६८६॥
अन्यसूदमुखाद्वार्तां प्रयागस्तामवाप्तवान् । प्रभुं तदाप्यमानान्नपरिहारमकारयत् ॥६८७॥
तेनान्नेन[1] परीक्षार्थं दापितेनापजीवितौ । हर्षः श्वानौ निशाम्याभून्निराशो निजजीविते ॥६८८॥
प्रयुक्तिं गूढदण्डस्य पितुरेव स तां विदन् । ततः सर्वाणि भोज्यानि स्पृष्ट्वैवोज्झद्दिने दिने ॥६८९॥
प्रयागोपहृतेनासीत्परं खाद्येन सर्वदा । भोज्येन येन केनापि कुर्वञ्जीवितधारणम् ॥६९०॥ 690
अथास्याभोजनं श्रुत्वा राजा सूदैर्निवेदितम् । ततः प्रयागमानीय तत्र पप्रच्छ कारणम् ॥६९१॥
प्रयोजकौ च सूदौ च सोपलभ्य न्यवेदयत् । रसार्पणकथां कृत्स्नां तज्ज्ञानं च स्वयं प्रभोः ॥६९२॥
अथान्येष्वपि सूदेषु पित्रा दत्तेषु शङ्कितः । राजसूनुर्न बुभुजे प्रयागोपहृतं विना ॥६९३॥
स सर्वेषु विरुद्धेषु यद्यत्तत्राप्यवाहयत् । मेने तत्तद्दिनं लब्धं दोषेष्वास्थापराङ्मुखः ॥६९४॥
अत्रान्तरे समुदभूदकस्मादाशयप्लवकः । अदृष्टपूर्वो भूभर्तुः सदाचारविपर्ययः ॥६९५॥ 695
उत्पाद्य ताम्रस्वाम्याख्यं पूर्वं ताम्रमयं रविम् । स रीतिप्रतिमाः स्वैरं विहारेभ्योप्यपाहरत् ॥६९६॥
धनानि निरपत्यानामाहर्तुं व्यवसायिना । न्यवार्यतार्यमर्यादा शौर्याक्रान्तेन भूभुजा ॥६९७॥
ततोतिशापसंतापव्यञ्जकेनाञ्जसाभवत् । अतिसंभोगजातेन धातुक्षैण्येन सोर्दितः ॥६९८॥
कुम्भप्रतिष्ठासंभारं चिकीर्षोर्हरमन्दिरे । तस्यापतन्महाकालकुम्भे नासापुटादसृक् ॥६९९॥
आकस्मिकं दुर्निमित्तं तत्प्रतीकारसंविदा । न मनागप्यगाच्छान्तिं प्रवृद्धिं प्रत्युताययौ ॥७००॥ 700
अतत्तुर्यनुबन्धेन[1] तेन ग्लपितसौष्ठवः । शनैः शय्याप्रणयितामन्तः स प्रत्यपद्यत ॥७०१॥
बलमांसकृतक्षैण्यमभिमान्द्याद्युपद्रवैः । कलाशेषेण शशिना तद्वपुः साम्यमाययौ ॥७०२॥
राज्यं स दित्सुर्हर्षाय वृद्धामात्यान्पराङ्मुखान् । ततोभिषेकमौत्कर्षमानिन्ये लोहराचलात् ॥७०३॥
उच्चावचास्तेन सर्वे संविभक्ता मुमूर्षुणा । परमीर्ष्याविधेयेन न भुक्तान्तवधूजनः ॥७०४॥
कृत्वा धनार्पणं कुर्यां देशादस्य प्रवासनम् । इत्युक्त्वा हर्षमानेतुं तेनाप्रार्थ्यन्त मन्त्रिणः ॥७०५॥ 705
ते तु गौर्गभिक्षार्याख्याठक्कुराल्लोहराश्रितान्[1] । विन्यस्य रक्षिभावे तमुत्कर्षाय न्यवेदयन् ॥७०६॥
स नाथमण्डपान्तेन निष्कृष्टः क्षामविग्रहः । निवेशितश्चतुःस्तम्भे बद्धा बान्धववर्जितः ॥७०७॥
अथोज्जिगमिषुप्राणानिःसामर्थ्यो[1] विरक्तनृपः । मुमूर्षुरभवत्तीर्थप्रस्थानाय कृतत्वरः ॥७०८॥

६८०. [1]) Thus R G sec. manu; C G prima manu माध्वस्थ्य°. ६८५. [1]) Emended; G R °भूर्भर्तृनप्त्रीभर्तृवधार्थिनी; C °भूर्भर्तृनप्त्रभर्तृवधा°. ६८६. [1]) Thus G C; R रसे. ६८८. [1]) Thus emended with C; A R G तेनासैन. ७०१. [1]) Emended; A अनु°. ७०६. [1]) Emended with C; A गोग्राभि°. ७०८. [1]) Emended with C; A अथोज्ज°.

स आनन्दैवसक्रोधं ताम्रस्वामिनिपाटनात् । इयेष शरणं कर्तुं मार्ताण्डं प्राणलब्धये ॥७०९॥

710 संत्यज्य विजयक्षेत्रमत एवापवर्गदम् । महीश्वरोपि प्रययौ तत्र त्रासवशंवदः ॥७१०॥

अधीकारप्राप्त्या तृणमिव विदन्विश्वमखिलं नियोगी जातार्तिर्नमति गृहदासीरपि रुदन् ।
भवन्मूर्खो ज्ञानी बहुगुरुपदेशाधिगमतः करोति प्राणान्ते शिशुरिव च किं किं न विगुणम् ॥७११॥

तादृश्या कृपणप्रायसेव्यया क्लैब्यसंविदा । गुरूपदेशाहंकारस्तस्य हास्यत्वमाययौ ॥७१२॥

शुक्लायां मार्गशीर्षस्य तृतीयस्यां निशामुखे । तलादेवाश्रितो युग्यं भूभृन्मर्तुं विनिर्ययौ ॥७१३॥

स भेरीतूर्यनिर्घोषैर्जनाक्रन्दं तिरोदधत् । सामात्यान्तःपुरो नौभिः प्रतस्थे जलवर्त्मना ॥७१४॥

715 यामशेषे दिनेन्यस्मिन्प्राप्तस्य चरणान्तिके । मार्ताण्डस्य स्वजीवान्ये सौवर्णीं प्रतिमां व्यधात् ॥७१५॥

भृत्यैरगणिताज्ञस्य दिदृक्षोर्ज्येष्ठमात्मजम् । औत्सुक्येनारतिस्तस्य व्यथितस्याधिकाभवत् ॥७१६॥

बहिर्हर्षकृतं गीतं गायनानां स गायताम् । विवृतद्वारविवरः शृणोति स्म विनिःश्वसन् ॥७१७॥

प्राणावसानसमये परिसंकुचन्ती स्वप्नप्रसङ्ग इव धावनशक्तिराज्ञा ।
प्राप्तुर्यदा खलु रुजो मरणोद्भवाया मर्मव्यथां प्रथयते पृथिवीपतीनाम् ॥७१८॥

प्रजाज्येष्ठं तनुजं च संविभक्तुं कृतार्थनः । उत्कर्षं पाठयञ्छिक्षां बद्धजिह्वोभवत्ततः ॥७१९॥

720 अव्यक्तं वदतो हर्ष इति वाचं पुनः पुनः । निह्नोतुं नोनको भावं तस्यादर्शमढौकयत्[1] ॥७२०॥

स तन्निवार्य विहसन्दष्टौष्ठः कम्पयञ्छिरः । जपन्किमपि सार्धे द्वे बद्धवागभवद्दिने ॥७२१॥

आसन्नप्राणनिर्याणः संज्ञयाहूय मन्त्रिणः । ततः स्वं तैरसंमूढैर्मार्ताण्डाग्रमनाययत् ॥७२२॥

वर्षानेकानपञ्चाशद्भुक्तवान्स सितेहनि । मार्गस्य पञ्चषष्टेऽब्दे षष्ठ्यां निष्ठामयासदत् ॥७२३॥

सप्त मम्मनिकामुख्या देव्यः परिणयाहृताः । अवरुद्धापि जयमत्यभिधाना तमन्वगुः ॥७२४॥

725 प्रसादवित्तया तस्य पुनः कय्याभिधानया । अवरुद्धिकया कृत्वा स्त्रीजातिरपवित्रिता ॥७२५॥

सर्वावरोधप्राधान्यप्रदानं नास्मरद्यदि । मा स्मार्षीन्नाम भर्तुस्तदनुयाभिजनोद्भवा ॥७२६॥

संश्रित्य विजयक्षेत्रं क्रमाद्ग्रामनियोगिनः । भेजे यत्त्ववरुद्धात्वमतो दुःखाकरोति नः ॥७२७॥

भूपालभोग्यं स्ववपुः सा भोगाभ्यासभासुरम् । निनाय ग्राम्यभोग्यत्वं धिङ्नारीर्नीचचेतसः ॥७२८॥

उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु । अन्त्येष्टिमकरोद्राज्ञः कृतज्ञो वामनः परम् ॥७२९॥

730 घोषोभिषेकतूर्याणामेकतो गीतमङ्गलः । साक्रन्दः प्रेततूर्याणां नादोन्यत्र समुद्ययौ ॥७३०॥

जातः पद्मश्रियो देव्याः पुत्रः कलशभूभुजा । ततो विजयमल्लाख्यो भ्रातुर्वैमत्यमादधे ॥७३१॥

यद्ददाद्धर्षदेवस्य पिता प्रत्यहवेतनम् । प्रतिशुश्राव तस्मै स तदेवोत्कर्षभूपतिः ॥७३२॥

आश्वासाय च मध्यस्थान्ददौ सामन्तमन्त्रिणः । कय्यात्मजस्य चक्रे च जयराजस्य वेतनम् ॥७३३॥

अन्विष्यन्ति हृदस्य एव तरला गत्यन्तरं योषितो योगक्षेमकथां चितान्तिकगता एवात्मजाः कुर्वते ।
अन्येषां हतशोवसानसमये चर्चा विचार्येदृशी स्त्रीपुत्रादिकृते कुकर्मभिरहो संचिन्वतेर्थं जडाः ॥७३४॥

---

७११. [1]) Emended with C; A °देशोधि°. ७२०. [1]) A₂ gloss हर्षे आनीतवानिति राज्ञो भावमभिप्रायं निह्नोतुं आदर्शो नोनकेनानीत इत्यर्थः हर्षः आदर्श इति पाठमाशंसाभ्यामिदमर्थः. ७२४. [1]) A₂ gloss उरङ्गा इति देशभाषया. ७२९. [1]) Emended with C; A अन्त्येष्टि°. ७३१. [1]) ज supplied by A₂. ७३२. [1]) Emended; A तदेवो°.

प्रविवेश ततः श्रीमान्नगरं नृपतिर्नवः । न तु हर्षोदयाकाङ्क्षि हृदयं नगरौकसाम् ॥७३५॥ 735

तद्राज्यलाभदिवसो जनस्याभोगदूषितः । सत्यपि प्रत्यभासैव स रोगार्तैरिवोत्सवः ॥७३६॥

हर्षदेवस्तु पितरि प्रयाते मर्तुमातुरे । नवबद्धचतुःस्तम्भे न तस्मिन्नह्नि भुक्तवान् ॥७३७॥

सार्धमष्टभिराक्रन्द्यमन्यस्मिन्नह्नि ठक्कुराः । ते शोकमूकं संप्रार्थ्य कथंचित्तमभोजयन् ॥७३८॥

राज्यं दातुं निजे देशे चक्रुश्चास्य प्रतिश्रवम् । राज्यद्वयं नायमर्हत्येक एवेति वादिनः ॥७३९॥

एवं मिलितचित्तस्तैर्विपत्तिं श्रुतवान्पितुः । कृतोपवासः सोऽन्येद्युः शुभावोत्कर्षमागतम् ॥७४०॥ 740

बाष्पैः पित्रे प्रयच्छन्तं निर्वापसलिलाञ्जलीन् । तं दूतैरनुजो राजा स्नातुं प्रार्थयताथ सः ॥७४१॥

तस्य स्नानक्षणे राज्ञि सज्जे राज्याभिषेचने । घोषोऽभिषेकतूर्याणामुदभूत्सजयध्वनिः ॥७४२॥

स तेन दुर्निमित्तेन प्राप्तां मेने निमित्तवित् । विद्युद्द्योतेन जीमूतगर्जामिव नृपश्रियम् ॥७४३॥

ततः प्रभृत्युन्मुखता दुर्निमित्तैरगृह्यत । तस्यात्यासन्नराज्यस्य भृत्यैरिव दिने दिने ॥७४४॥

स भोजनं कारयितुं दूतान्भ्रात्रा विसर्जितान् । देशान्निर्वासयतु मां राजा संत्यज्य बन्धनात् ॥७४५॥ 745

स्थातुमप्रत्ययस्थिरयां विरुध्यां कोशसंविदम् । म्रियेऽन्यथा निरशनैः संदिश्येति व्यसर्जयत् ॥७४६॥

स तन्मिथ्या प्रतिश्रुत्य तं दूतैः प्रहितैस्ततः । कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत् ॥७४७॥

नित्यं च भो विधास्ये तदर्थ्यमान इति ब्रुवन् । कालापहारं कुर्वाणः शङ्कां तस्योदपादयत् ॥७४८॥

विश्वासाय स्वताडङ्कपाणिं कृत्वा प्रयागकम् । पार्श्वं विजयमल्लस्य सोऽथ गूढं व्यसर्जयत् ॥७४९॥

तदेवोक्त्वा तमूचे स त्वां ब्रूते दुःस्थितोऽग्रजः । कुमारे त्वयि राज्येऽस्मिन्नभ्युत्थामी बन्धने वयम् ॥७५०॥ 750

संक्रान्तदुःखः संचिन्त्य चिरेणापि तमब्रवीत् । कार्यं कुर्यात्कथमिदं मद्गिरा नीतिमान्नृपः ॥७५१॥

तथाप्यस्मिन्यथाशक्ति यतिष्ये त्वद्विमोक्षणे । त्वया तु सावधानेन रक्षणीयं स्वजीवितम् ॥७५२॥

तं पार्श्वं हर्षदेवस्य संदिश्येति व्यसर्जयत् । उपायांश्चिन्तयन्नासीत्तस्य कार्यस्य सिद्धये ॥७५३॥

उत्कर्षः प्राप्तराज्यस्तु दैवतैरिव मोहितः । नादधे किंचिदारम्भं व्यवस्थापयनक्षमम् ॥७५४॥

समर्पिताधिकारोऽपि कन्दर्पादीन्स मन्त्रिणः । राज्यकृत्यं न पप्रच्छ विदधे स च न स्वयम् ॥७५५॥ 755

परिमातुं परीमाणं कोशसंचयवीक्षणे । परं क्षमापतेस्तस्य दिनकृत्यमजायत ॥७५६॥

कर्मणा निश्चयेनास्य चिन्त्यमानस्य येन वा । सुदीर्घदर्शी लोकोऽभूत्तेन लुब्धत्वनिश्चयी ॥७५७॥

सा तस्य लुब्धताख्यातिः समुद्गाप्रदायिनः । भूभर्तुः पितृपत्नीभिः स्वैरिणीभिः प्रवर्धिता ॥७५८॥

स श्रोत्रिय इवोत्कम्पी व्यवहारमिताशयः । महाव्ययभोग्यानां प्रजानां नाभवत्प्रियः ॥७५९॥

ततो नियमितां वृत्तिं तस्माल्लुब्धाद्वनामुवन् । कुप्यन्विजयमल्लोऽभूद्देशान्यन्तुं कृतोद्यमः ॥७६०॥ 760

स्वं रक्षितुं स मध्यस्थाननुमज्याकुलेऽखिलान् । प्रार्थयामास तेनापि सज्ज्ञास्तमनुवव्रजुः ॥७६१॥

लवणोत्से निशामेकां पुरान्निर्गत्य तस्थुषः । मध्यस्थसैन्यास्तस्यैवं योधाः पक्षमशिश्रयन् ॥७६२॥

---

७३७. 1) Thus corr. by $A_2$ from $A_1$ °अस्मिन. ७३९. 1) Thus corr. by $A_2$ from $A_1$ राज्यास्तस्य°. ७४६. 1) स्था supplied by $A_2$ in space left by $A_1$. ७४८. 1) Emended; A °अर्थमान. ७४९. 1) साथ supplied by $A_2$ in space left by $A_1$. ७५७. 1) येन वा supplied by $A_2$ in space left by $A_1$. ७५९. 1) $A_2$ gloss उत्कम्पी वाक्यमवे सकम्प इत्यर्थः. ७६१. 1) $A_2$ gloss हेतुना. ७६२. 1) मध्यस्थ supplied by $A_2$ in space left by $A_1$. —2) Thus corr. by $A_2$ from $A_1$ °स्तस्या °.

हर्षे बद्धे त्वयि गते कृतकृत्यो भवेन्नृपः । तत्त्वं निष्क्रम्य कारायाः गमनं तव सांप्रतम् ॥७६३॥
इति तैः प्रेर्यमाणः स राजसूनुरुदायुधैः । विनिवृत्याकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ॥७६४॥
765 श्रुत्वा चिकीर्षितं तस्य व्यावृत्तस्य तथाविधम् । सहायाः समपद्यन्त कतिचिड्डामरा अपि ॥७६५॥
अकरोन्मधुरावर्तो वप्तसेनापतिः सुतम् । राजसूनुर्यियासुर्यं मध्यस्थाननुयात्रिकम् ॥७६६॥
नागाख्यो द्रोहहीनो राजपक्षमसंत्यजन् । कैश्चित्सह हयारोहैः स पद्मपुरवर्त्मना ॥७६७॥
आगच्छन्नन्तिकं राज्ञो दुर्निमित्तहतत्वरः । न यावन्नगरं प्राप क्षिप्रकारी नृपात्मजः ॥७६८॥
शकुनैराहितोल्लासैः शालाग्नोद्दीपिताग्निभिः । सैन्यैर्गृहान्दहंस्तावद्राजधानीमवेष्टयत् ॥७६९॥ चक्कलकम् ॥
770 समयाय विनिर्यातं त्यक्त्वोत्कर्षं महीभुजम् । तत्पक्षं जयराजोपि राजसूनुरशिश्रियत् ॥७७०॥
हस्तस्थितौ राजपुत्रौ तस्याचिन्तयतां गतिम् । नवौ कवी व्यवहर्तिं सिद्धयानः कवेरिव ॥७७१॥
हर्षदेवे परित्यक्ते यास्याम इति वादिनः । स हस्तिमाहिषादीनां शालाः सैन्यैरदाहयत् ॥७७२॥
त्यागमलयजीमूतो हर्षदेवोभिषिच्यताम् । लुब्धः खशो वणिक्प्रायो राज्यादेष निवार्यताम् ॥७७३॥
एवं वदन्तः सन्तोपि हर्षमेत्य पुरौकसः । पुष्पैः प्राच्छादयन्बद्धं तमोरिविवरार्पितैः ॥७७४॥
775 उत्पिञ्जे तत्र संजाते भग्नसैन्यस्य भूपतेः । संप्रेष्य ठक्कुरान्हर्षस्तटस्थं तद्बलं व्यधात् ॥७७५॥
इत्थं बद्धोपि तत्कृत्वा वैरिकार्याविरोधिनः । संदेहवेपमानाङ्गस्ततस्तानेवमब्रवीत् ॥७७६॥
वर्तेथ संकटे दुष्टे तन्मां मुञ्चत बन्धनात् । न चेदाशु महीपालादनिष्टं नियमाद्भवेत् ॥ ७७७॥
इत्युच्यमानास्ते यावद्विमृशन्ति स्म तन्मुहुः । पादप्रहारा न्यपतंस्तावद्द्वारगृहाद्बहिः ॥७७८॥
उच्चचार स किं द्रोहः प्रक्रान्तोयं दुराशयैः । रे ठक्कुरा विवृणुत द्वारमित्युच्चकैर्वचः ॥७७९॥
780 ठक्कुरेष्वथ भीतेषु धैर्यादगणयन्भयम् । अकारयद्धर्षदेव एव द्वारमपावृतम् ॥७८०॥
नेत्रमात्रस्थितप्राणो ददर्श त्रिशतस्ततः । लौहरान्शस्त्रिणो हन्तुं प्राप्तान्षोडश वारिकान् ॥७८१॥
ते हि छिन्नोज्झिते हर्षशीर्षे सर्वमिदं क्षणात् । शाम्येदिह भयं मन्त्रं नोनकस्येति जल्पतः ॥७८२॥
उत्कर्षेणासकृच्छ्रुत्वा तं निहन्तुं विसर्जिताः । विमृश्य नोक्ता गच्छन्तः कार्यशेषं विमुञ्चता ॥७८३॥
कदाचित्तेन कृत्यं स्यादहतेनेति तत्क्षणम् । निवार्य ठक्कुरानस्यो हन्तव्यस्य यदोर्मिकाम् ॥७८४॥
785 इमां वध्यामभिज्ञानं यदा चेयं विसृज्यते । तदा तु बन्धनात्त्याज्य इत्युदीर्याङ्गुलीयकम् ॥७८५॥
पाणौ दर्शयता चोक्ता विलम्बालम्बनं यतः । निवार्य ठक्कुरांस्तस्मिन्क्षिप्रं न प्राहरंस्ततः ॥७८६॥ कुलकम् ॥
स तु प्रत्येकमाहूय नामग्रहणपूर्वकम् । अजिग्रहत्तांस्ताम्बूलमप्युपावेशयत्पुरः ॥७८७॥
जहुस्ते कृतसत्कारास्ताम्बूलग्रहणक्षणे । ह्रीताः करागाच्छस्त्राणि प्रजिहीर्षां च मानसात् ॥७८८॥
धत्ते श्रियं सृजति कीर्तिमघं लुनीते मित्रत्वमानयति हन्त विरोधिनोपि ।
यात्यच्छभिः प्रतिपदं सुमनोनुकूलैर्गीः कामधुक्कमिव नापहरत्यनर्थम् ॥७८९॥
790 राजपुत्रः स तानूचे किं ह्रीता इव तिष्ठथ । निर्दोषाः सर्वथा प्रेष्याः स्वाम्यादेशानुपालने ॥७९०॥

---

७७०. [1]) Thus corr. by $A_3$ from $A_1$ त्यक्त्वोत्क°. ७७६. [1]) Emended; A वैरि—वि°; C वैरिकार्यवि°. ७८१. [1]) Thus A; R °वार्तिकान्.

विलम्बयतां तथाप्यत्र दृष्टत्वं मदद्भुतम् । यथोदेष्यत्त्वंवस्थानामन्यथात्वं क्षणे क्षणे ॥७९१॥
शिवहीपिक्रव्याकुरगतुरगादिभ्रमकृतो यथाभ्यां भिद्यन्ते दिवि किल न एवाम्बुदलवाः ।
तथा सौम्यक्रूरक्रमविकृतिभाजस्तनुभृतां क्षणानां भागाभ्यावनु हृदि विकारोर्मय इमाः ॥७९२॥
क्षणानुवृत्तिं कुर्वाणास्तथथाच स्थिता वयम् । तथा सन्तु भवन्तोपि कार्यान्तरविरक्षवः ॥७९३॥
अपि चैवंविधा एव विलम्बन्तो हयान्तरम् । आसन्नराज्यप्राप्तीनां राज्ञां स्युः प्राणसंशयाः ॥७९४॥
ग्रीष्मस्योष्मा व्रजति घनतां नूनमासन्नवृष्टेर्नैशं गाढीभवति तिमिरं संनिकृष्टप्रभातम् ।
जन्तोरेवं प्रसभविभवस्फारसंपन्नवाराशिक्रामन्ती विपदुपचितोपद्रवोद्रेकमेति ॥७९५॥ 795
प्राणचारेण शकुनं निश्चिन्वेति वदंस्तताम् । आचचक्षे शुभोदर्काः स्वोदन्तसदृशीः कथाः ॥७९६॥
कालं क्षेप्तुमुपन्यस्तभुजिष्यस्तीभवद्रसाम् । तेभ्यश्च कथयामास हरिश्चन्द्राश्रयां कथाम् ॥७९७॥
तद्रञ्जने स्वरक्षायां बाह्यवार्तागवेषणे । व्यापृतत्वं गभीरस्य न तस्य समलक्ष्यत ॥७९८॥
अत्रान्तरे समुद्दिश्य मते जाते नवे नवे । राजभियश्च काल्यार्थं शतशोभूत्तदागतम् ॥७९९॥
उत्कर्षो भूमिपस्तस्य परित्यागं समन्यत । आदिदेशानुगांस्तांस्तान्भूरिशश्च प्रमापणे ॥८००॥ 800
अभिज्ञानोर्मिकादानं यथादेशे तु नास्मरत् । ते नोर्मिं तस्य दूतानामन्वतिष्ठन्त रक्षिणः ॥८०१॥
स तान्वन्ध्यश्रमान्वीक्ष्य स्मृत्वाभिज्ञानसंविदम् । स्वात्मजं राजपुत्रं भूराख्यं व्यसृजत्ततः ॥८०२॥
अभिज्ञानं वितरतस्तस्करे तस्य मुग्धतः । दैवयोगात्क्षणे तस्मिन्नूर्मिकाव्यत्ययोभवत् ॥८०३॥
यः पातार्थमुपार्जितोन्यशिरसस्तेनैव सिन्धुप्रभुर्वृद्धक्षेत्रधराधवः स्वशिरसः पातं वरेणान्वभूत् ।
दिष्ट्या स्वैव गदा श्रुतायुधनृपं हन्त्वावधीदाहवे यत्त्राणाय विगण्यते विधिवशात्तेनैव नाशो भवेत् ॥८०४॥
तथा चैकस्य विस्मृत्या व्यत्ययेनापरस्य च । अभिज्ञानस्य स नृपो नाशं प्रत्युत लब्धवान् ॥८०५॥ 805
आभिजन्येन हर्षस्य ते क्षणादेव रक्षिणः । प्रपेदिरे हितैषित्वमुत्कर्षाज्ञाविरोधिनः ॥८०६॥
द्वारमाक्रान्तमुत्क्रोधो वधायायमुपागतः । इति निर्ध्याय ते भूरं हन्तुमैच्छन्नुदायुधाः ॥८०७॥
उद्घाटितारपुटा दृष्ट्वा तस्योर्मिकां करे । तेनैव साकं नृत्यन्तो हर्षं समुपतस्थिरे ॥८०८॥
पादन्यस्तोत्तमाङ्गैस्तैर्निर्गच्छेत्यर्थितस्ततः । अविश्वसन्राजसूनुः क्षणमासीत्स चिन्तयन् ॥८०९॥
तस्मिन्क्षणे हर्षदेवं हतं ज्ञात्वा रणे स्थितः । क्रुध्यन्विजयमल्लोभूदधिकोद्रिक्तपौरुषः ॥८१०॥ 810
तं बन्धुमुद्यतं राजधानीं जीवति तेऽग्रजः । अभिधायेति रुरुधुः कथंचित्पार्थिवानुगाः ॥८११॥
प्रत्ययार्थं ततस्तस्य राज्ञा हर्षवधूर्द्रुतम् । गृहीतभर्तृताडङ्का सुगला प्रैष्यतान्तिकम् ॥८१२॥
तां विलोक्यैव विरते बहिर्द्वारान्नृपात्मजे । राजा भयप्रतीकारं हर्षत्यागादमन्यत ॥८१३॥
गत्वामात्याः स्वयं नोनप्रशास्तकलशादयः । हर्षं निर्गमितं कृत्वा कारागारात्ततोत्यजन् ॥८१४॥

---

७९१. 1) Thus corr. by later hand from $A_1$ °द्भुताम्.— 2) देष्यत्त्व supplied by $A_2$ in space left by $A_1$. ७९५. 1) Thus corr. by $A_1$ from °प्रतापन; $A_2$ °प्रभाते. ७९६. 1) Thus corr. by $A_2$ from $A_1$ शुभोद°. ७९९. 1) $A_2$ gloss काली यमली. ८०२. 1) Doubtful; thus A R G. ८०४. 1) $A_2$ gloss यः पातार्थमिति एतत्सिन्धुपाख्यानं महाभारते द्रोणपर्वणि ज्ञेयम्. ८०६. 1) $A_2$ gloss आभिजात्यम् इति वैयाकरणाः. ८०८. 1) के नृत्यन्तो supplied by $A_2$ in space left by $A_1$. ८११. 1) Emended; A R G तेनुजः.

815 मन्त्रः स तेषां शोकेन वक्त्रात्कृतगतागतः । अन्त्यक्षणे श्वास इव प्रससार बहिश्चरन् ॥८१५॥
हर्षः प्रच्छाद्यमानस्तु पौराणां पुष्पवृष्टिभिः । हयमारुह्य सामात्यो रणस्थं नृपमासदत् ॥८१६॥
अभिनन्द्यानुजो राजा तमूचे भ्रातरं रणात् । निवार्यागम्यतां कुर्मः प्राप्तकालं ततो वयम् ॥८१७॥
तथेति प्रस्थिते तस्मिंस्त्यक्त्वा तस्य रणाजिरम् । प्राविशन्मन्त्रिभिः सार्धं कोशं हेमादिसंभृतम् ॥८१८॥
उत्तीर्णे महतः कृच्छ्राद्धर्षदेवमुपस्थितम् । दृष्ट्वा विजयमल्लोभूत्प्रहर्षान्निष्क्रियः क्षणम् ॥८१९॥
820 ततो ववन्दे तत्पादौ स चोत्कान्ध्यालिलिङ्ग[1] तम् । तास्ताः कथास्तयोरासन्नुपकर्तृपकार्ययोः[2] ॥८२०॥
व्यापादयैनमेवादौ हर्षोत्कर्षं ततो नृपः । निष्कण्टकोसि भवितेत्यामस्योपांशु जल्पतः ॥८२१॥
ततो विजयमल्लेन नाग्रहेणादृतं वचः । ज्ञात्वेङ्गितज्ञो हर्षस्तत्तस्तु चकितः क्षणम् ॥८२२॥ युग्मम् ॥
स्वदेहमामिषीभूतं स भ्रात्रोः श्येनयोरिव । निष्पक्षपक्षप्रतिमो ररक्षार्थगतश्चरन् ॥८२३॥
आसन्नाभ्रजलस्य दावविगमे विद्युद्भयं शाखिनो नक्रास्याद्गलतश्च मज्जनमयी शङ्का भवेद्वारिधौ[1] ।
भोक्तव्यस्य विधिः शुभस्य रभसात्स्वादुत्वनिष्पत्तये जन्तोः संतनुते निराकृतभियो भीत्यन्तरोत्पादनम् ॥८२४॥
825 तं हयभ्रमणव्याजाद्रक्षितुं निजजीवितम् । ज्ञातवार्ता निजाः केचित्पत्तयः पर्यवारयन् ॥८२५॥
सार्धं विजयमल्लेन ततः संमन्त्र्य स क्षणात् । चचाल विप्रवापायमाख्यातुं तं महीभुजे ॥८२६॥
अथ तद्देहमनः प्राप्तं विनिर्यान्तं नृपात्मजात् । ततो विजयसिंहस्तं संप्रवेशाद्व्यवारयत् ॥८२७॥
ऊचे च मरणात्तीर्णो भर्तुं विशसि किं पुनः । निष्पक्ष गत्वोपविश त्यक्तशङ्कं नृपासने ॥८२८॥
एवमुक्तवतस्तस्य भृत्यैः कोशादुपाहृते । सिंहासने हर्षदेवस्ततस्तूर्णमुपाविशत् ॥८२९॥
830 वैयात्यच्छादितानन्तप्रातिकूल्या तदन्तिके । उपाविशच्च सुगला महादेवीत्वसिद्धये ॥८३०॥
तस्याभिषेकशब्देन समधावन्त सर्वतः । रसितेनाम्बुवाहस्य चातका इव मन्त्रिणः ॥८३१॥
तद्वार्ताश्रवणेनार्तमुत्कर्षं मन्दिरात्ततः । धूर्तो विजयसिंहोपि कृष्ट्वान्यमनयद्गृहम् ॥८३२॥
आस्थानस्थस्य भूभर्तुरग्रेण स मितानुगः । नष्टश्रीरीदृशो गच्छन्स्थिराः कस्य विभूतयः ॥८३३॥
तस्य वेश्मप्रविष्टस्य बहिर्विन्यस्य रक्षिणः । राज्ञो विजयसिंहस्तत्कृतं कार्यं न्यवेदयत् ॥८३४॥
835 कारायां संस्तुतान्राजपार्श्वमानीय ठक्कुरान् । तत्सैन्येपस्थितेत्यासीद्भयं विजयमल्लतः ॥८३५॥
सोप्यभजं ग्रामराज्यं भुक्त्वा तत्सविधं व्रजन् । निन्ये संमान्य तद्दूतैः स्वामेव वसतिं क्षणात् ॥८३६॥
तत्सैन्यं स्वान्तिकं प्राप्तमथ वीक्ष्य क्षमापतिः । आनिनाय तमभ्यर्णं क्षणमात्रेण नीतिवित् ॥८३७॥
मम प्राणाश्च राज्यं च त्वया दत्तमिति ब्रुवन् । स प्राञ्जलिस्तमकरोत्क्लेशसाफल्यदायिनम् ॥८३८॥
तस्य दैवानुकूल्येन नीत्येव क्रमयुक्तया । तत्कालमेव तद्राज्यशय्यायां समुपाविशत् ॥८३९॥
840 कारागृहान्तःसंवीतान्येव वासांसि धारयन् । सिंहासनेन शुशुभे श्रीसांनिध्यागतो नृपः ॥८४०॥
तादृक्साहससंरम्भपरिश्रान्तो दिनात्यये । कृतारोहोथ शय्यायां स्वच्छभार इवापतत् ॥८४१॥

---

८२०. [1]) स्कान्ध्या supplied by $A_2$ in space left by $A_1$.—[2]) Emended with C; A °मुपकर्तृप°. ८२३. Thus A; perhaps, °पक्षि°?. ८२४. [1]) The same hand which has supplemented the marginal note of $A_2$ in i. 110, writes here: नक्रास्याद्गलतश्च मज्जनमयी शङ्का व्यपस्यान्बुधौ इत्यन्यार्थं, with the gloss नक्रः जलचारिविशेषः यो जलहस्तिनामपीरयति तन्मुखात्तत्कालाद्गलतः चलितस्यापि मज्जनमयी शङ्का उद्भवत्त स्यादित्यर्थः.

कारुण्योत्सेकसुभगा हिंसोत्सेकभयंकरी । सत्कर्मोत्सेकललिता पापोत्सेककलङ्किता ॥८७१॥

स्पृहणीया च वर्ज्या च वन्द्या निन्द्या च सर्वतः । निध्येया चोपहास्या च काम्या शोच्या च धीमताम् ॥८७२॥

आश्चर्या चापकीर्त्या च स्मार्या त्याज्या च मानसात् । हर्षराजप्रभा सर्वाकथ्या व्यावर्णयिष्यते ॥८७३॥ कुलकम् ॥

नूनं स तैजसैरेव ससृजे परमाणुभिः । कुतोन्यथाभूत्सभये दुष्प्रेक्ष्यो महतामपि ॥८७४॥

875 न मर्त्येषु न देवेषु तादृशो दृश्यते क्वचित् । दानवेन्द्रेषु स प्रांशुः परमुत्प्रेक्ष्यते यदि ॥८७५॥

प्रतिमार्कपरीमाणज्वलत्कुण्डलमण्डितः । उत्तुङ्गमुकुटानद्धविकटोष्णीषमण्डलः ॥८७६॥

प्रसन्नसिंहविप्रेक्षी नीचश्मश्रुच्छटाञ्चितः । वृषस्कन्धो महाबाहुः श्यामलोहितविग्रहः ॥८७७॥

व्यूढवक्षाः क्षाममध्यो मेघघोषगभीरवाक् । सोमानुषाणामपि यत्प्रतिमाभङ्गकार्यभूत् ॥८७८॥ तिलकम् ॥

सिंहद्वारे महाघण्टाश्चतुर्दिक्कमबन्धयत्[1] । ज्ञातुं विज्ञप्तिकामान्स प्राप्तांस्तद्वाद्यसंज्ञया ॥८७९॥

880 आर्तां च वाचमाकर्ण्य[1] तेषां तृष्णानिवारणम् । प्रावृषेण्यः पयोवाहश्चातकानामिवाकरोत् ॥८८०॥

आच ब्रवतो निर्हेमभूषणोल्पपरिच्छदः । ददृशे विगतो--[1] न कश्चिद्राजमन्दिरे ॥८८१॥

सिंहद्वारे नरपतेर्नानाजनसमन्विते । सर्वदेशश्रियोभान्तमासंराशीकृता[1] इव ॥८८२॥

अपेतसंकथाः सौवर्णशृङ्खलाकटकाञ्चिताः । भेमुर्मन्त्रिप्रतीहारमुख्याः क्ष्मापतिमन्दिरे ॥८८३॥

एवं स्फुरन्स नृपतिर्नवसाम्राज्यडम्बरः । अभूद्विजयमल्लस्य गुरोरिव मते स्थितः ॥८८४॥

885 आदीयमानवचसः कृतज्ञेन महीभुजा । तस्याभूत्पार्थिवस्येव सेवकैः संकटा सभा ॥८८५॥

स्वसेवकाननादृत्य रक्षन्संस्थाव्यतिक्रमम् । पित्र्येभ्य एव मन्त्रिभ्यः सोधिकारान्समर्पयत् ॥८८६॥

द्वारे चकार कन्दर्पं मदनं चापि कम्पने । अन्यान्विजयसिंहादीन्कर्तव्ये च निजे निजे ॥८८७॥

तेन प्रशस्तकलशप्रमुखाः शान्तमन्युना । बन्धात्संत्यज्य कार्येषु निजेष्वेव नियोजिताः[1] ॥८८८॥

स्मृत्वापकारान्बहुनमात्यो नोनकः परम्[1] । धावेयेण समं भ्रात्रा कोपाच्छूले निपातितः ॥८८९॥

890 काले काले तु कार्येषु संकटेषु महामतिम् । संस्मरन्स्वामिभक्तं तं पश्चात्तापेन पस्पृशे ॥८९०॥

योग्यः कृतापकारोपि कदाचिदुपयुज्यते । विहितागारदाहोग्निः शरणं भोज्यसिद्धये ॥८९१॥

संदर्शने स्वभार्यायाः कर्णनासावकर्तनम् । विश्वाभट्टो[1] राजभृत्यैः शूलेनैव विपादितः ॥८९२॥

उदये संविभेजे स भृत्यान्काराविनिर्गतान् । मधौ प्रफुल्लः शालीव भृङ्गान्भूविवरोत्थितान्[1] ॥८९३॥

राज्ञः क्षेमस्य यः पौत्रो वज्रजः स महीभुजा । सर्वामात्यप्रधानत्वं निन्ये सुग्गः सहानुजः ॥८९४॥

895 राज्ञो यात्राविसमये प्रेक्षकाणां पदे पदे । एक एकोभवन्मन्त्री महीपालश्रमप्रदः ॥८९५॥

सर्वप्रतीहारघटामूर्धानमधिरोपितः । जयराजोनुजस्तस्य जीविताद्धिकोभवत् ॥८९६॥

आज्ञर्वायाचया भ्रातोराम्रुदंस्वा ----[1] । धम्मटः सोपि ताम्यग्रैर्भ्रातृपुत्रैः सहायवी ॥८९७॥

---

८७९. [1]) Thus corr. by $A_2$ from $A_1$ यथा°. ८८०. [1]) कर्ण्य and तृष्णा supplied by $A_2$ in space left by $A_1$. ८८१. [1]) $A_1$ indicates here a *lacuna* of two *aksharas*; C विगतोत्सवे; perhaps, विगतोद्वेगे (?). ८८२. [1]) Emended; A °नासीनाषी°. ८८८. [1]) Thus corr. by $A_2$; $A_1$ ------सकलकत्र कार्येषु नियोजिताः. ८८९. [1]) Thus corr. by later hand from $A_1$ स्मृत्वैव°. ८९२. [1]) Thus A; perhaps, to be read विश्वावर्तो; cf. vii. 617, 621, 630. ८९३. [1]) $A_2$ gloss मधौ वसन्ते भूविवरोत्थिता भृङ्गा नीलकण्ठाश्चर इति भाषया प्रसिद्धाः ये अस्तादर्शनेनापि सूर्यं भूमेर्भ्यः भूविवरेभ्यः वसन्तसमये उत्तिष्ठन्ति शालतरौपरि सञ्चरन्ति ॥. ८९७. [1]) Here $A_1$ indicates a *lacuna*; C °भुजस्यापि चिन्तनः.

संमान्य तं नरपतिः स्वकृते हारितात्मजम् । तथानुपुत्रमासीत्स्वाविशेषेण सर्वदा ॥८९८॥

विभज्य भुञ्जतो राज्यं तस्यैवं प्रेरितः खलैः । क्रमाद्विजयमल्लोथ बुभुक्षुर्विकृतिं दधे ॥८९९॥

राज्यं मत्तः किमन्यस्मै गिलेत्पुत्रः स दुर्जनैः । तल्लिप्सुर्मन्त्रयामास वधं प्रथमजन्मनः ॥९००॥ 900

विजने मन्दिरे हन्यामिति संमन्त्र्य भूपतिः । यागं विधाय व्याजेन तेनायन्तु निमन्त्रितः ॥९०१॥

मन्त्रे श्रुतिं गते राज्ञः सोथास्कन्दविशङ्कितः । आविवेश स्वसैन्याग्रो द्रुतं संनहनोद्यमम् ॥९०२॥

संनद्धे राजसैन्येपि द्रुतं निर्गत्य भूपतेः । हता विजयमल्लेन मन्दुराभ्यस्तुरंगमाः ॥९०३॥

संहरंस्तुरगान्वीक्ष्य प्रहरन्नृपतेर्बलम् । कुर्वन्महाहवं वीरो निर्यन्नु त्वरे पुरात् ॥९०४॥

आक्षिप्य पृष्ठे तिष्ठन्त्या जायया सहितो व्रजन् । स चकार तुरंगस्थः संग्राममतिमानुषम् ॥९०५॥ 905

धारासारैः क्षणे तस्मिन्नकालजलदोज्झितैः । विपर्यस्तेव पृथिवी सर्वतः समलक्ष्यत ॥९०६॥

झांकारमारुतारब्धभूरिभेरीरवे रणे । आसारेण हरिद्वालीच्छाद्यमानो नृपात्मजः ॥९०७॥

तं क्षीयमाणपृतनं यान्तं हन्तुं समुद्यताः । कर्माणि प्राकृतानीव न चण्डकृतता जहुः ॥९०८॥

भग्नसेतुं पयोवेगैर्वितस्तासिन्धुसंगमम् । तत्रानिरंतरोर्म्यौघमवतीर्य स वाजिनः ॥९०९॥

अश्ववारैरकरोत्पत्न्या मज्जनं रिपुसंकटे । सिन्धुं प्रवृद्धामुत्तीर्य तुरंगोपि समन्वगात् ॥९१०॥ 910

द्विषां दृग्गोचरात्यातः स तमारुह्य वाजिनम् । दरदेशोन्मुखो वीरः प्रायाल्लहरवर्त्मना ॥९११॥

कन्दर्पहारपतिना सर्वतो रुद्धपद्धतिः । गिरीन्दुर्लङ्घ्य नाविक्षद्गिरिगुप्तां दरत्पुरीम् ॥९१२॥

दरदाभ्यर्थितं तत्र श्रीविद्याधर हिना । केचिन्निजाः परिजनाः शनकैस्तं प्रपेदिरे ॥९१३॥

श्रुत्वा स्वीकार्यमाणं च संरम्भे डामरादिभिः । प्रायुङ्क्त हर्षपन्नीमुदुपायांश्चकितोन्वहम् ॥९१४॥

तेषु बन्धेषु शीतर्तुं सोतिवाह्य दरत्पुरे । डामरैः प्रहितालापश्चैत्रे मार्गमवाप्तवान् ॥९१५॥ 915

उत्तीर्य संकटास्तिष्ठन्मार्गान्तः पटमण्डपे । अकस्मादभवत्प्राणी हिमानीहतजीवितः ॥९१६॥

यदुल्लासाय संरम्भो धीरैर्विस्तार्यते महान् । कृत्यं हिनस्ति तद्दैवमत्यल्पेनैव वस्तुना ॥९१७॥

उन्मीलनं तिग्मरुचिः प्रयत्नादेषां सहस्रेण करैः करोति ।

उन्मूलयत्येककरेण तानि पद्मानि धाता कुपितो द्विपेन ॥९१८॥

वैराज्यशङ्कया कंचित्कालं संकुचितं ततः । भूयः प्रमथतो लब्धं राज्यं हर्षमहीभुजः ॥९१९॥

राजशब्दस्तदा सेहे न कुमाराधिरोपणम् । अत्युद्धततया तस्मिन्नत्युत्सेकान्धराजसु ॥९२०॥ 920

सुशोभादायिनीर्भङ्गीः प्रावर्तयत मण्डले । निर्मत्सरो नरपतिः पुष्पर्तुरिव कानने ॥९२१॥

मुक्तकेशा निरुष्णीषा निष्कलाभरणाः पुरा । त्यक्त्वैकं महीपालमभवन्निह देहिनः ॥९२२॥

धम्मिल्लप्रथनाचार मदनः कम्पनापतिः । अयानन्तेष्वमात्येष्वविधाधोरुकधारणात् ॥९२३॥

---

९०२. 1) स्कन्द supplied by $A_2$ in space left by $A_1$.—2) Emended; A °नोद्यतम्. ९०४. 1) संहर supplied by $A_2$ in space left by $A_1$. ९०८. 1) Thus A; perhaps, to be read प्राकृतानीव. ९०९. 1) तत्रानिर supplied by $A_2$ in space left by $A_1$.—2) Thus corr. by $A_2$ from $A_1$ °तरम्भो°.—3) Thus corr. by $A_2$ from $A_1$ °तार्य. ९१०. 1) Thus corr. by $A_2$ from $A_1$ °वापक°.—2) पत्न्या and स supplied by $A_2$ in space left by $A_1$. ९१३. 1) Thus corr. by $A_2$ from $A_1$ दरदा°.—2) $A_1$ indicates a *lacuna*; C °धरशाहिना. ९१४. 1) प्रायुङ्क्त supplied by $A_2$ in space left by $A_1$. ९१६. 1) Thus corr. by $A_2$ from $A_1$ कुत्र°. ९१९. 1) प्रमथतो लब्धं राज्यं supplied by $A_2$ in space left by $A_1$.

अन्यभूपार्थिवक्रोधमविशेषेण मण्डले । तेन राज्योचितो वेषस्तत्र राज्ञा प्रवर्तितः ॥९२४॥ युग्मम् ॥

925 स केषांचिदमात्यानामाकल्पोज्ज्वलशोभिनाम् । निर्मत्सरः स्वदासीभिरारात्रिकमकारयत् ॥९२५॥

दाक्षिणात्याभवद्भङ्गिः प्रिया तस्य विलासिनः । कर्णाटानुगुणष्टङ्कस्ततस्तेन प्रवर्तितः ॥९२६॥

लम्बतालीदलाः स्थूलचन्दनस्थाससुन्दराः । रेजुर्जनास्तदास्थाने ताम्बूलीपोसिधेनवः ॥९२७॥

स्वर्णकेतकपत्राङ्कजूटलम्बोर्जितस्रजः । चटुलातिलकाश्लिष्टविलोलतिलकाङ्कुराः ॥९२८॥

अपाङ्गभोगयोर्बद्धसंधयोऽञ्जनरेखया । निर्नीरङ्गिककेशाग्रबद्धहेमोपवीतकाः ॥९२९॥

930 अधराम्बरपुच्छान्तैर्लम्बैश्चुम्बितभूतलाः । प्रच्छादितार्धदोर्लेखकञ्चुकाङ्कपयोधराः ॥९३०॥

कर्पूरोद्धूलनस्मेरा भ्रमन्त्यस्तारलभ्रुवः । मधुराभितपुंवेषां स्त्रणाङ्कुञ्चलवङ्कलाम् ॥९३१॥ चक्कलकम् ॥

अन्योपजीव्यतां प्रापुस्तस्यार्थित्वेन मार्गणाः । विश्वाप्यायकतां मेघाः प्रणयेनेव वारिधेः ॥९३२॥

प्रसादैस्त्यागिनस्तस्य राज्ञः कनकवर्षिणः । समस्ता गायकगणाः पार्थिवस्पर्धितां ययुः ॥९३३॥

विद्वच्चूडामणिर्भूभृत्पण्डितानलमण्डितान् । चकार युग्यतुरगच्छत्रादिप्रक्रियाभृतः ॥९३४॥

935 काश्मीरेभ्यो विनिर्यान्तं राज्ये कलशभूपतेः । विद्यापतिं यं कर्णाटश्चक्रे पर्माडिभूपतिः ॥९३५॥

प्रसर्पतः करटिभिः कर्णाटकटकान्तरे । राजाग्रे ददृशे तुङ्गं यस्यैवातपवारणम् ॥९३६॥

त्यागिनं हर्षदेवं स श्रुत्वा सुकविबान्धवम् । बिल्हणो वञ्चनां मेने विभूतिं तावतीमपि ॥९३७॥

सौवर्णामलसाराढ्यां राजधान्यो धरापतेः । सुबह्वभ्रंलिहगृहा भेजिरे भुवनाद्भुताः ॥९३८॥

तदीये नन्दनवने द्रुमेभ्यो नो व्यधुः स्थितिम् । त्यागिना निर्जितास्तेन केवलं कल्पपादपाः ॥९३९॥

940 विविधाभिरमुष्याम्बु विहंगमृगजातिभिः । तेन व्याप्तदिगाभोगं चक्रे पम्पाभिधं सरः ॥९४०॥

सोऽज्ञासीद्यावतीर्विद्यास्तासां नामापि निश्चितम् । वक्तुं नास्त्येव सामर्थ्यं व्यक्तं वाचस्पतेरपि ॥९४१॥

गीतमाकर्ण्यतेयापि तस्य वाग्गेयकारिणः । विपक्षैरपि पक्ष्माग्रलुठद्बाष्पोदबिन्दुभिः ॥९४२॥

स्वपतो दिनयामौ द्वौ सर्वकालं विलासिनः । हस्तस्थामस्य तस्यासीद्यामिनीषु प्रजागरः ॥९४३॥

तस्य दीपसहस्राङ्के स्थितस्यास्थानमण्डपे । विद्वद्गोष्ठीगीतनृत्तप्रस्तावेन क्षपा ययुः ॥९४४॥

945 कथान्ते शुश्रुवे तत्र पर्णचर्वणजः परम् । कान्ताधम्मिल्लशेफालीत्रुटिजन्मा च मर्मरः ॥९४५॥

वितानैः सपयोदेव साग्निकेव दीपकैः । हस्तदण्डैः सशम्पेव सधूमेवासिमण्डलैः ॥९४६॥

साप्सरा इव कान्ताभिः सनक्षत्रेव मन्त्रिभिः । सर्षिसंघेव विबुधैः सगन्धर्वेव गायनैः ॥९४७॥

निर्व्यसंकेतवसतिर्धनदस्य यमस्य च । एकं विहरणारण्यं दानस्य च भयस्य च ॥९४८॥

क्षपास्थानस्थितिस्तस्य राज्ञः शक्राधिकश्रियः । कस्य वाचस्पतेर्वाचा वक्तुं कार्त्स्न्येन शक्यते ॥९४९॥ चक्कलकम् ॥

950 रैक्मैश्च राजतैश्चासीद्व्यवहारस्तदा जनः । मण्डले विरलामुष्मिन्दीनारैस्ताम्रजैः पुनः ॥९५०॥

दण्डनायकतां प्राप्य सुजः सर्वोन्नतिं भजन् । तस्मिन्काले स्वभूलोमाधीचो मुष्टिपचः परम् ॥९५१॥

निजा जयवने सूर्यामूलके विजयेश्वरे । आख्यान्ति यस्य लुब्धस्य निर्व्ययस्थितयो मठाः ॥९५२॥

---

९२८. [1]) A₂ gloss मलारलम्बमालचूडाच्चटुलातिलको मतः. ९३१. [1]) Emended; A° पुंवेषा. ९३७. [1]) Thus corr. by A₂ from A₁ °रथे. ९३८. [1]) Thus corr. by later hand from A₁ सौवर्णामल°.—[2]) राजधा supplied by A₂ in space left by A₁.

क्षुधितस्याशितानाथवतीनामार्तिनिवारणम् । दुस्स्पर्शं प्राप पापस्य राज्यलक्ष्मीः कृताञ्जलम् ॥९५३॥

नन्दिक्षेत्रे व्ययीकृत्य प्रत्यब्दं सप्त वासरान् । चम्पकः सफलां चक्रे सर्वकालार्जितां श्रियम् ॥९५४॥

कृष्णाजिनोभयमुखीमुख्यैर्दानैः क्ष्माभुजा । अदरिद्रीकृता विप्रा निःशेषार्तिविकर्शिनाम् ॥९५५॥ 955

राज्ञी वसन्तलेखाख्या शाहिवंश्याभिधाकरोत् । मठामहाराजगरे पुण्ये च त्रिपुरेश्वरे ॥९५६॥

माहेश्वर्यमयी काचिदियं ज्वालेव सोषधी । उदारव्यवहारं तु न तन्नाम्नं प्रपद्यते ॥९५७॥

अथ प्रवृद्धिं संप्राप्ताः दानकैर्नवमन्त्रिणः । पूर्वामात्यद्विषो राज्ञो मतिमोहं प्रचक्रिरे ॥९५८॥

कुण्ठार्ताङ्घ्रियुगः खिन्नो बहुपदं गृह्णाति धावन्नहिं भानुः पावकसहजभाग्यमतिपदं संचार्यतेनूरुणा ।
बध्यन्ते बलिनोपि यत्प्रभुबलैः सामर्थ्यहीनैश्च भ्राम्यन्ते परिपूर्णवृत्तय इदं दैवस्य लीलायितम् ॥९५९॥

स सर्वशास्त्राधिगमप्रौढः परिवृढो विशाम् । सम्मोहितमतिश्चक्रे वैधेयैरपि मन्त्रिभिः ॥९६०॥ 960

विपक्षस्य पितुर्वैरप्रतिकारविधित्सया । स राजधानीमाक्रम्यवादि निरलोठयत् ॥९६१॥

त्यागी तत्कोशसंभारं व्ययीकुर्वन्नितस्ततः । लुब्धस्य चाभिधां तस्य पापसेन इति व्यधात् ॥९६२॥

शुद्धान्ते शुद्धशीलानां ढौकितं मूढचेतसा । स्पष्टं षष्ट्यधिकं राज्ञा स्त्रीणां तेन शतत्रयम् ॥९६३॥

यादृशीस्तादृशीस्तत्र नारीर्विन्यस्यतानिशम् । नागृह्यन्त परं डोम्ब[1]जनंगमकुलाङ्गनाः ॥९६४॥

अत्रान्तरे पूर्यमाणो गूढं कोटपदातिभिः । पुनर्भुवनराजोभूल्लहरालम्भिलुब्धधीः ॥९६५॥ 965

स दर्पितपुरं प्राप्तः कन्दर्पद्वारनायकम् । श्रुत्वा योद्धुं विनिर्यातं ययौ भूयोप्यदृश्यताम् ॥९६६॥

तस्मिन्प्रसङ्गेपि नृपो दृप्यद्राजपुरीपतिः । संग्रामपालः केनापि हेतुना विक्रियां ययौ ॥९६७॥

कन्दर्पे कोटभृत्यानां भिन्नानां संप्रहीयते । कुध्यन्राजपुरीं राजा व्यसृजद्दण्डनायकम् ॥९६८॥

स महद्भिः समं सैन्यैर्गच्छन्लोहरवर्त्मना । अधीरः कोटकच्छेषु सार्धं मासं व्यलम्बत ॥९६९॥

प्रत्यासन्नाच्छुचेर्मासात्प्रतापाच्च विरोधिनाम् । त्रस्यतस्तस्य यात्रायां न संकल्पोप्यराजत ॥९७०॥ 970

अविशेषज्ञभावेन भर्तुस्तिष्ठन्निरुद्यमः । ततो जगाम कन्दर्प एवोपालम्भमात्रताम् ॥९७१॥

कृतप्रतिज्ञोनाहारतया राजपुरीजये । उपालम्भार्दितः सोथ निःसामग्र्योप्यचाचलत् ॥९७२॥

निराहारस्य वसतः कन्दर्पस्याद्रिगह्वरे । षष्ठेह्न्यभूद्राजपुरी योजनेभ्यधिके स्थिता ॥९७३॥

अव्याहतः सोरिबलाद्विपक्षस्त्राणि पातयन् । कदलीपल्लवान्मृद्नन्वनं सिंह इवाविशत् ॥९७४॥

दण्डनायकसैन्येभ्यः परमेकस्तमन्वगात् । सेनानीः कुलराजाख्यो बुद्धराजकुलोद्भवः ॥९७५॥ 975

तं वाह्याल्यां राजपुर्या हतासंख्याहितं द्विषः । निहत्य शुक्लच्छत्राङ्कं कन्दर्पं मेनिरे हतम् ॥९७६॥

मध्याह्ने स तु कन्दर्पः स्वयं संप्राविशद्बली । राजधानीं राजपुर्या विंशाविंशैः समं भटैः ॥९७७॥

द्विषां त्रिंशत्सहस्राणि योधानामनिवर्तिनाम् । ररोध राजपुर्यग्रे तत्पदातिशतत्रयम् ॥९७८॥

काश्मीरिकाणां[1] निहतं रणे तत्र शतद्वयम् । चत्वारि तु शतान्युर्व्यां खशानामप्यशेरत ॥९७९॥

भग्ने रिपुबले दूरमसंख्येयैश्चिताग्निभिः । संस्कुर्वद्भिर्हतानासीद्रणो मृत्योर्महानसः ॥९८०॥ 980

तेनैव स्वाम्युपालम्भवेतालो रभसार्पितः । रणश्मशाने वीरेण शमितो मांसशोणितैः ॥९८१॥

९६४. 1) Emended; A डौम्ब°. ९७९. 1) Emended; A काश्मीरका°.

वाममाचावशेषेहि पुनरेवाथ संहताः । द्विषः परिभवोत्तमाः कन्दर्पं योद्धुमाययुः ॥९८२॥
ततस्तानथ नाराचान्निचिक्षेप स संयुगे । लिप्तानौषधितैलेन विद्धा यैः प्राज्वलन्द्विषः ॥९८३॥
आग्नेयं वैरयसायकमिति मूढा विशङ्किताः । ते दूरं प्रययुर्भीता निन्दन्तः पुनरागमम् ॥९८४॥
985 प्रगल्भभावः प्रतिभानमोजः प्रयोगचातुर्यमसंभ्रमश्च । महाशयानामतिसंकटेषु धैर्योपनद्धा न धियं जहाति ॥९८५॥
राजधान्यां प्रविष्टः स मानावस्तामिलाषिणि । भूयोप्यपश्यत्स छन्नां बाष्पालीं बहलैर्मलैः ॥९८६॥
योद्धुं पिपासुः शुश्राव प्राप्तं तं दण्डनायकम् । घोरां रणाटवीं दृष्ट्वा भयात्स्थगितसैनिकम् ॥९८७॥
स्वीयैर्दृष्टैः क्षतैः केचिद्दृप्यन्त्यधिकमाहवे । पारकीयैस्त्रसन्त्यन्ये कोन्तरं वेत्ति देहिनाम् ॥९८८॥
आनीतोथ विनिर्गत्य तेनैव स भये क्रुध्यन् । स्पर्धमानो यथाम्भोधौ मज्जन्हंसेन वायसः ॥९८९॥
990 रक्तप्रजं क्षीणसैन्यमभिन्नं बहुकोशवत् । परराष्ट्रं विशोदेत्रं स्ववीर्येणैव कोपरः ॥९९०॥
प्रणतात्करमादाय ततो राजपुरीपतेः । मासमात्रेण कन्दर्पः पुनः सं भुवमाययौ ॥९९१॥
प्रत्युद्गमादिसत्कारैः कृतपूजो महीभुजा । स दण्डनायकादीनां शिरःशूलावहोभवत् ॥९९२॥
परिहासपुरे पारिपाल्यं कुर्वन्कठोरधीः । कालगण्डाख्यया ख्यातिं निन्ये यस्तत्र पर्षदा ॥९९३॥
प्रभूतोत्कोचसंप्रीतसचिवप्रेरणस्पृशा । अपास्य वामनं राज्ञा पादाग्रादौ नियोजितः ॥९९४॥
995 आनन्दः स क्षणे तस्मिन्निच्छन्द्वाराधिकारिताम् । कन्दर्पद्वेषिणामासीन्मन्त्रिणामतिसंमतः ॥९९५॥
तस्येरितस्ततः पातुं लोहरं विभुताहितम् । मण्डलेश्वरतां दत्त्वा कन्दर्पं प्राहिणोन्नृपः ॥९९६॥
मन्त्रविक्रमसंपन्नः कुभृत्यैः स्वोदयेप्सुभिः । युक्त्या तया राजपशोः समीपात्सोपवाहितः ॥९९७॥
दूरस्थोयमिति प्रहाय निकटादेशान्तरं वाग्मिनं सूरिं बन्धुवियोगकृन्ननु वचोमुष्येति संत्यज्य च ।
भूरो राज्यमसौ हरेदिति तथा हित्वा विचारोज्झितो धूर्तप्रेरणयाबुधो नृपपशुर्नायाति नाशं चिरात् ॥९९८॥
अदर्शनात्तदत्रापि कन्दर्पप्रीतिराशयात् । राज्ञो जगाल कालेन सा मुष्टेरिव वालुका ॥९९९॥
1000 उत्कर्षं पुत्राचादाय चिकीर्षुर्लोहरेशताम् । कन्दर्पो वर्तत इति क्षितिपं मन्त्रिणोवदन् ॥१०००॥
तथेति नृपतिर्गृह्णन्बन्धुं हन्तुमथाशु तम् । ससैन्यं व्यसृजत्पार्श्वं टक्कं चासिधराभिधम् ॥१००१॥
तयोः संग्रामयोग्यौ तां लेखव्यत्ययाद्विदन् । विमुखश्चकितात्मा च कन्दर्पोभूद्यथा मुहुः ॥१००२॥
केलिद्यूतक्षणे हस्तं मृद्नन्सेवककंपुरः । आसीदसिधरस्तस्य बन्धुमभ्युद्यतस्तदा ॥१००३॥
ततः पाणिं विनिष्कृत्य सोङ्गुष्ठाग्रेण तस्करम् । अमूढ़ायेन निस्त्वक्कं छिन्नः पक्षीव सोगमत् ॥१००४॥
1005 अनन्तरज्ञो भूभृच्च तेनात्मा च नृपाश्रितः । विगर्हते स्म सिंहेन पट्टश्चैवमकथ्यत ॥१००५॥
नैवाशयो नरपतिः कुटुम्बं प्रहिणोतु मे । अर्पयित्वा ततः कोटं प्रयास्यामि दिगन्तरम् ॥१००६॥
आनीय दत्तांस्तैर्ज्ञातीनादाय द्रोहवर्जितः । स विमुक्ताधिकारोथ मन्त्री वाराणसीं ययौ ॥१००७॥
हत्वा गयायां सामन्तमेकमन्त्यं निवेश्य च । काश्मीरिकाणां चक्रे स भाटशुल्कनिवारणम् ॥१००८॥

---

९८२. 1) Emended; A °भवो सता:. ९९१. 1) Thus A; perhaps, to be read स्वभुवं. ९९४. 1) Thus $A_1$; $A_2$ वामनं. ९९८. 1) Thus corr. by $A_2$ from $A_1$ सूरिरिव. १००१. 1) $A_2$ gloss बन्धिबर.—2) Thus $A_2$; $A_1$ टक्कि. १००२. 1) तां supplied by $A_2$ in space left by $A_1$. १००३. 1) Emended with C; A °त्सेवकस्पुर.—2) Emended; A बन्धुत्र°. १००४. 1) Doubtful emendation; A apparently निस्त्वचको; R G निस्त्वचकं. १००८. 1) Emended; A काश्मीरकाणां.

स हत्वा वीरसेनाख्यं ससैन्ये दुर्गमेध्वनि । पूर्वाशामध्यमीनां च व्यधान्निर्धूतकण्टकाम् ॥१००९॥

व्याघ्रं निहत्योमसख्यं वाराणस्यां निरस्यता । पूर्वा दिग्भूषिता तेन भट्टैः सुकृतकर्मठैः ॥१०१०॥ 1010

ते तन्निर्वासनादेव लब्धलक्षाः कुमन्त्रिणः । अन्योन्यासूयया जघ्नुरथ कार्याणि भूभुजः ॥१०११॥

स्वैराहारोदितगुरुमदाः शृङ्गकण्डूतिशान्त्यै दुर्वारेर्ष्याकलुषमतयो यत्र दुर्मन्त्रिमेषाः ।
घ्नन्त्यन्योन्यं भवति गणितैर्वासरैरेव कैश्चिन्मध्यस्थाणोरिव नरपतेस्तत्र सर्वाङ्गभङ्गः ॥१०१२॥

अतिक्रामति कालेथ पार्थिवं हन्तुमुद्यमम् । दुर्बुद्धिर्जातराज्येच्छस्तान्वाक्यैर्धम्मटोभजत् ॥१०१३॥

द्रोहापवादभागेव भवेद्राज्यमिदं पुनः । मामेव वैद्यापुत्रत्वादनर्हेस्मिन्नुपेष्यति ॥१०१४॥

इति संमन्त्र्य सुचिरं निहन्तुं पृथिवीभुजम् । प्रेरितो जयराजोभूत्तेनासरलचेतसा ॥१०१५॥युग्मम्॥ 1015

त्रिलावग्रामजान्क्षिप्त्वा तीक्ष्णान्द्रोहाय भूपतेः । सोवरोधवधूर्द्वित्रा विदधे मध्यपातिनीः ॥१०१६॥

क्रमात्सिद्ध्युन्मुखे तस्मिन्कार्ये राजपुरीं नृपः । दूत्याय व्यसृजज्जातु बहुमानेन धम्मटम् ॥१०१७॥

सहलमङ्गलगृहे सुदिनापेक्षया स्थितम् । तं सिद्धिभङ्गचकितो जयराजः समाययौ ॥१०१८॥

समर्थं मण्डपे गूढं तयोर्मन्त्रायमाणयोः । प्रयागानुचरः कश्चिद्भित्तिव्यवहितोशृणोत् ॥१०१९॥

तदावेदिततद्वार्तात्प्रयागात्सकथां ततः । बुद्ध्वा निवर्तयामास धम्मटं गमनान्नृपः ॥१०२०॥ 1020

कुलक्षयभयात्सिद्धंस्तत्प्रतीकारमन्थरः । स्वमेव केवलं रक्षन्नासीत्स चकितोन्वहम् ॥१०२१॥

असिद्धिं जयराजस्तु दृष्ट्वा दूतैः स्वसंमुखौ । शमालडामरौ वीरौ वागपाजाभिधौ व्यधात् ॥१०२२॥

स्वभृत्यैर्भेदनिर्यातैर्यियासुं तं निवेदितम् । श्रुत्वा क्षपायां क्षितिभृद्दिक्षु चिक्षेप रक्षिणः ॥१०२३॥

व्याजायायां वदन्सज्जः प्रातस्तान्वाक्यैरेव तम् । चतुष्कं पूजने धूर्तौ जयराजमुपानयत् ॥१०२४॥

राज्ञो दत्तार्गले धाम्नि स्थितस्य स्नानमण्डपम् । सह स भ्रातृपुत्रेण धम्मटेन ततोविशत् ॥१०२५॥ 1025

रक्षिणोथ बहिर्न्यस्य प्रयागः पार्थिवाज्ञया । जयराजं वधानेति नीचैर्धम्मटमभ्यधात् ॥१०२६॥

धम्मटे विश्वसच्छस्त्रं जयराजस्त्यजेद्ध्रुवम् । निर्देशेनामुना वेत्ति स्वमज्ञातं च धम्मटः ॥१०२७॥

द्वयोरेकस्य वा युद्धे तयोर्मृत्यौ हितं च नः । व्यक्तीकृतैक्ययोर्वापि वधो लोकेप्यगर्हितः ॥१०२८॥

इति निर्ध्यायतः शश्वदविरोधेन वेधसः । प्रज्ञास्य सत्यभाग्राज्ञो मन्त्रो गुप्ततमस्तथा ॥१०२९॥तिलकम्॥

नावुद्ध मां ध्रुवं राजा तान्वाक्यैरिति विश्वसन् । जयराजमुपागत्य ततो धाष्टर्याद्वचोब्रवीत् ॥१०३०॥ 1030

अप्रसन्नस्त्वयि नृपो यद्द्रोहोसि निश्चयात् । तत्त्वयाशु विभुज्यार्थमसिधेनुः समर्प्यताम् ॥१०३१॥

दैवेन वा मोहितः स तद्विश्वासेन नात्यजत् । आक्षिप्यमाणः शस्त्रास्त्रकोविदः शस्त्रमन्ववत् ॥१०३२॥

वैक्लव्यदर्शनात्स्वेर्ष्यैसतः स परुषां गिरम् । तन्वत्रपीभट्टश्लाघ्यस्तं जगाद्रज्जकात्मजः ॥१०३३॥

न त्वं निःसत्त्व कल्याया जातः कलशभूभुजा । आसीज्जनयिता नूनं क्लीबो यः कश्चिदेव ते ॥१०३४॥

निशायां पैषचर्याणां परिणाममजानता । तेनेत्युक्तः स शीताम्बुसिक्तक्षमोपमोभवत् ॥१०३५॥युगलकम्॥ 1035

द्रोहोद्यन्तं पृच्छ्यमानो धीरस्तन्मध्यपातिनम् । यातनाक्लेशितोप्यूचे स्वमेव न तु धम्मटम् ॥१०३६॥

---

१००९. [1]) च has been erased by $A_1$. १०१२. [1]) Thus $A_1$; corr. by later hand दुर्मन्त्रिवेषाः. १०१४. [1]) Thus corr. by later hand from $A_1$ वैवर्य°. १०१८. [1]) Thus corr. by later hand from $A_1$ स्थितिम्. १०२४. [1]) Thus corr. by $A_2$ from $A_1$ पूर्जने; $A_2$ in margin भोजने. १०२९. [1]) Thus corr. by $A_2$ from $A_1$ प्रावन.

विषघ्नमन्त्रवीर्येण मोघीकृतविषाशनः । रज्ज्वा निपीड्य ग्रीवायां ततो निशि निपादितः ॥१०३७॥
अल्पकेन प्रतीहर्त्रा शिरश्छित्त्वोज्झितं ययौ । भट्टारनड्वलातीर्थे तद्वपुर्मत्स्यभोज्यताम् ॥१०३८॥
तमेकसप्तते वर्षे हत्वा भाद्रपदे नृपः । वधं गम्भीरहृदयो धम्मटस्याप्यचिन्तयत् ॥१०३९॥
1040 आदिदेशाथ तत्सिद्ध्यै रहः शस्त्रभृतां वरम् । शूरं कलशराजाख्यं ठक्कुरं लोहराभवम् ॥१०४०॥
प्रहिणोति यदा दूतं प्रयागस्ते तदा त्वया । संपाद्यमेतदित्यूचे तं चोपचितसत्क्रियम् ॥१०४१॥
असिद्धिभीत्या स्वं दूतं स प्रहिण्वन्प्रयागकः । संमन्त्र्य क्रियतामेतदित्यूचे कुपितो नृपम् ॥१०४२॥
राज्ञि मन्त्र्यमाणेथ पञ्चानीयान्यमन्त्रिणः[1] । वामनः सार्गले द्वारे स्वच्छदेहोब्रवीदिदम् ॥१०४३॥
मन्त्रश्च मन्त्रिणश्चैते न यावन्निःसृता बहिः । तावत्क्रियेत चेदेतन्न भद्राणि दरिद्रति ॥१०४४॥
1045 राजाज्ञया प्रयागेन[1] ततो दूते विसर्जिते । तीक्ष्णः कलशराजाख्यस्तनयाभ्यां सहाययौ ॥१०४५॥
तस्मिन्प्रसङ्गे तान्वाग्भिः श्येनस्य हरतातपम् । राजधान्यन्तरेवासीद्द्वित्रैरनुचरैः समम् ॥१०४६॥
पुरः कलशराजं तं दृष्ट्वा पश्चाच्च तत्सुतौ । यावत्साशङ्कमाचष्टौ[1] तावद्भृत्यैर्निजैर्जहे ॥१०४७॥
शक्तोपि धम्मटः कर्तुं कृपाणीमिति वादिनम्[1] । हन्तुं कलशराजं तु यावच्छस्त्रे व्यधात्करम् ॥१०४८॥
तावत्तेनाग्रतः पश्चात्तत्सुताभ्यां कृताहतिः । आसनात्तुमुलस्यैव क्षिप्रं प्राणैरमुच्यत ॥१०४९॥
1050 मुमूर्षुणा क्षतस्तेन ज्यायान्कलशराजजः । विषमायुधवैगुण्यादाभीक्ष्णक्षणितोभवत् ॥१०५०॥
तस्य त्वभाग्ययोगेन तेष्वेवाहःसु शस्त्रिणः । निजा कृपाणी[1] तुत्रोट तेनाभग्नायुधोभवत् ॥१०५१॥
निहत्य पातितः पृष्ठात्स तैर्व्याधैरिवाण्डजः । शुनां ग्रासाय संत्यक्तः श्वपाकैः पार्थिवाज्ञया ॥१०५२॥
राज्ञा तन्वङ्गनप्तारौ स्वयं रल्हणमल्हणौ । आगत्य प्राङ्गणे त्यक्तकृपाणौ परिरक्षितौ ॥१०५३॥
हत्वास्कन्दास्तु[1] टुक्काद्याः संरम्भेण युयुत्सवः । माययोदयसिंहेन दाम्भिकेनैत्य वञ्चिताः ॥१०५४॥
1055 यूयं पुत्रा ममेत्युक्तवतस्ते धार्मिकस्य यत् । प्रत्ययात्तस्य शस्त्राणि तत्यजुर्जीवितेच्छवः ॥१०५५॥
राज्ञो विशुद्धिः क्रियतां पार्श्वमेत्येति तद्वचः । तैः समागत्य जगृहे मार्गो राजगृहान्प्रति ॥१०५६॥
तन्वङ्गजगुल्लोच्छिष्टैर्बाल एव विवर्धितः । टुक्कं ततो विहस्यैवं स्वच्छन्नमाहकोवदत् ॥१०५७॥
तन्वङ्गनप्तर्यत्पूर्वं[1] जयराजमभाषथाः । न त्वं निःसत्त्व कल्याया इति तद्विस्मृतं तव ॥१०५८॥
स ते तादृश एवायं वर्तते संकटः क्षणः । किं धैर्यावसरे मूढ वैक्लव्यमवलम्बसे ॥१०५९॥
1060 तस्माज्जातोसि नियतं मत्पित्रोच्छिष्टमुष्टिना । अहं तु तेन वीरेण त्वत्पित्रा कीर्तिभागिना ॥१०६०॥
इत्युक्त्वा स रणे गृह्णन्खड्गधाराजलाञ्जलम् । पपात जन्ममालिन्यं मानी प्रक्षालयन्निव ॥ १०६१ ॥
नृपान्तिकं प्रयास्याम इति निश्चयतस्ततः । टुक्कादीन्राजपुरुषाः कारागारे निचिक्षिपुः ॥ १०६२ ॥
ते यौवनभरोन्मत्ता द्रुमा वासन्तिका इव । प्रत्यभासन्त कारुण्याद्रक्षणीयाः क्षमाभुजः ॥ १०६३ ॥
टक्कस्तु बिम्बियो नाम पापः संप्रेक्ष्य भूभुजम् । न्यजिघ्नत्तान्ग्रीवासु निशि पाशान्निवेशयन् ॥१०६४॥
1065 टुक्को विजयराजश्च बुल्लो गुल्लश्च तेलुवन् । तन्वङ्गपौत्राश्चत्वारो हता वध्यमहीतले ॥ १०६५ ॥

१०४३. [1]) Emended; A मन्त्रित°. १०४५. [1]) A here and elsewhere प्रयागेण. १०४७. [1]) Emended; A ° स्साशङ्कमा° १०४८. [1]) Thus A; perhaps, to be emended कृपाणीमसिवादिनीम्. १०५१. [1]) कृपा supplied by $A_2$ in space left by $A_1$. १०५४. [1]) Emended; A °स्कन्दाशास्तु. १०५८. [1]) Emended; A °नप्ती वत्पूर्वं.

इमानामपि सौन्दर्यं येषामद्यापि वर्ण्यते । कथान्तरे वयोवृद्धैर्मदाघूर्णन्त्युपर्युदिनैः ॥१०६६॥

सततभ्यस्तताम्बूलैः कलैस्तद्दशनाङ्कुरैः । कीर्णशोणाश्ममालेव सुचिरं बभ्रुभूरभूत् ॥१०६७॥

वृद्धिमानीतयो राज्ञाप्युत्कर्षापत्ययोस्ततः । ज्यायान्प्रमिम्ये डोम्बाख्यो गूढदण्डैः कुलच्छिदा ॥१०६८॥

स्फुलिङ्गमिव संभाव्य तेजोविस्फूर्जितं शिशुम् । जघान जयमल्लं च तद्द्विजयमल्लजम् ॥१०६९॥

गोमृन्स्वगोत्रजान्हत्वा भोक्तुमेकस्य कस्यचित् । कुर्वन्ति दैवोपहता राज्यं निष्कण्टकं नृपाः ॥१०७०॥ 1070

संरूढं मधुगोलमुद्यविटपव्यूहावलीगह्वरे मूढः कर्तुमकृष्णहार्यमभितः कस्यापि भव्यात्मनः ।
दैवप्रेरणया प्रकम्पविवशः वज्रप्रहारैर्दृढं नद्दोर्मूर्ध्नमधुपाविलस्य शमयत्यथस्थपृथ्वीधरः ॥१०७१॥

ज्ञातिद्रोहमहापाप्मनष्टधीरथ पार्थिवः । डिम्बानामप्यसंभाव्याममज्जद्दिष्टभोज्यताम् ॥१०७२॥

वामनस्यात्मजः क्षेमस्तं जानञ्जनकद्विपम् । प्रैरयत्कलशाशस्थकक्षहेमनिबर्हणे ॥१०७३॥

तामिच्छामद्विजनस्तस्य भक्तो युक्त्या प्रयागकः । धावतः प्रपातेच्छां धीरो यन्तेव दन्तिनः ॥१०७४॥

अनिशं नष्टचेष्टानां शवानामिव भूभुजाम् । अन्तःप्रवेशकुशलो यो वेताल इवाभवत् ॥१०७५॥ 1075

भ्रष्टा हलधरस्याथ विटो लोष्टधराभिधः । जगाद निर्जने जातु राजानं रञ्जनेच्छया ॥१०७६॥ युग्मम्॥

ह्रियतां धामहेमादि कलशेश्वरसंभवम् । तत्पाषाणाश्मभिः सेतुं वितस्तायां करोमि ते ॥१०७७॥

आलेख्यं गगने लिखामि बिसिनीसूत्रैर्वयाम्यम्बरं स्वप्नालोकितमानयामि कनकं बध्नामि वर्ष्म हिमैः ।
इत्याद्युक्तमपि स्फुटं जडमतिर्जानाति सत्यं नृपो यस्तादृक्कृपया न वक्ति स गतव्रीडैः परं वञ्च्यते ॥१०७८॥

निषिषेध चिकीर्षां तु प्रयागस्तामपि प्रभोः । सदुपस्थायिकोपथ्याभ्यर्थनामिव रोगिणः ॥१०७९॥

अथ लोष्टधरो हास्यावसरे जातु भूपतिम् । बद्धस्य मोक्षो देवस्य क्रियतामित्यभाषत ॥१०८०॥ 1080

स्मित्वा किमेतदित्युक्तवन्तं तं स व्यजिज्ञपत् । उदभाण्डपुरे – –[1] भीमशाहिरभूत्पुरा[2] ॥१०८१॥

विरोधात्पारिपथ्यानां[1] तत्कृतो भीमकेशवः । राज्ये कलशदेवस्य बद्धहारोऽभवच्चिरम् ॥१०८२॥

तैः शान्तवैरैर्विदधे यदाथ विवृतारतिः । चौरापहृतदुर्वर्णकवचो ददृशे तदा ॥१०८३॥

भूयोऽपि चक्रे तद्रीत्या कोशसामग्र्यभागिति । ततः प्रभृत्यथ बद्धद्वारारिः स्फुटम् ॥१०८४॥

आहीयतां तदीयस्तत्कोशचौरभयावहः[1] । सोऽपि बन्धाद्विमुक्तोऽस्तु पुष्पदीपादिभोगभाक् ॥१०८५॥ 1085

इति संप्रेरितस्तेन तथा चक्रे स भूपतिः । कोशं ततः प्रपेदे च मणिस्वर्णादिनिर्भरम् ॥१०८६॥

अचिन्तयच्च यद्येदृग्वस्तु[1] भून्यस्तरास्पदे । कीदृक्काञ्चपरेषु[2] स्यादाद्येषु सुरवेश्मसु ॥१०८७॥

कृतप्रायः स तत्रस्थैः पारिपथ्यैस्ततो नृपः । निष्क्रयं स्वधभारोद्धिहारणेन प्रदापितः ॥१०८८॥

क्रमेण सेनानानाकृत्व्ययव्यसनशालिनः । सुरार्थहरणे[1] स्वा धीः संभावनया तथा ॥१०८९॥

पूर्वराजार्पितान्कोशांस्ततः स भुवनाद्भुतान् । सर्वगीर्वाणवेश्मभ्यो लुब्धबुद्धिरपाहरत् ॥१०९०॥ 1090

---

१०६७. [1]) Thus A1; altered by later hand into °शोणाश्म°. १०६८. [1]) Emended; A प्रमिम्ये. १०७०. [1]) Emended; A गोमृ°. १०७१. [1]) Emended; A नद्दोर्मू°. १०७३. [1]) Emended; A जान जनक°.—[2]) त supplied by A2. १०८१. [1]) Two *aksharas* are wanting; A does not indicate the *lacuna*.—[2]) Emended; A भीमशाहिर°. Cf. vi. 178. १०८२. [1]) Doubtful emendation; A °त्यरिपत्याना. Cf. vii. 1088. १०८५. [1]) Emended; A °त्कोशचौर°. १०८७. [1]) Emended; A यद्येदृस्तु.—[2]) Emended with C; A कीदृक्कुला°. १०८९. [1]) Thus A; G C सुराकुहरणे.

रत्नेषु कोशेष्वानेतुं देवानां प्रतिमा अपि । चकारोदयराजाख्यं देवोत्पाटननायकम् ॥१०९१॥
वदनेषु स नग्नाटैः शीर्णघ्राणाङ्घ्रिपाणिभिः । मूर्तिनाशाय देवानां शकृन्मूत्राण्यपातयत् ॥१०९२॥
स्वर्णरूप्यादिघटिता गीर्वाणाकृतयोलुठन् । अध्वस्विन्धनखण्डाल्य इव सावस्करेष्वपि ॥१०९३॥
विबुधप्रतिमाश्चक्रुराकृष्टा गुल्फदामभिः । थूत्कारकुसुमच्छन्ना भ्रमन्नग्नाटकादयः ॥१०९४॥
1095 ग्रामे पुरेथ नगरे प्रासादो न स कश्चन । हर्षराजतुरुष्केण न यो निष्प्रतिमीकृतः ॥१०९५॥
तस्य देवावधृष्यौ द्वौ परमास्तां प्रभाविनौ । नगरे श्रीरणस्वामी मार्तण्डः पत्तनेष्विव ॥१०९६॥
द्वौ महाप्रतिमामध्याद्बुद्धबिम्बाववक्षताम् । दानप्रसङ्गे यं जातु याचित्वा त्यागिनं नृपम् ॥१०९७॥
परिहासपुरे जन्ममेदिन्यां कनकाभिधः । गायनः कुशलश्रीश्च श्रमणो नगरान्तरे ॥१०९८॥
अधिगतवतां लोके विश्वाद्भुतामपि संपदं न खलु विरतिर्दुष्कर्मभ्यो धनार्जनकाङ्क्षिणाम् ।
किमपि कमलावाप्त्यै पद्माकरोद्धृतिपातकं भजति कमलालीलावासो भवन्नपि हि द्विपः ॥१०९९॥
1100 पैतामहेन पित्र्येण तथा राज्यचिकीर्षया । लोहरादाहृतार्थस्य कोशेनोत्कर्षभूपतेः ॥११००॥
मुक्तोपि पूर्वराजार्थं देवीकोशेभ्यो जहार यः । ऐच्छद्धनार्जनं हा धिक्सोपि वात्सल्यपीडया ॥११०१॥युग्मम्॥
तदाशामात्रमादाय सचिवैरथ पापिभिः । ते ते नवनवायासनामाङ्का नायकाः कृताः ॥११०२॥
कालानुवृत्तिप्रवतां धिग्व्याजोपजीविनाम् । यत्र मन्त्री वयःस्थः सन्सदाचारोपि गौरकः ॥११०३॥
सर्वदेवगृहग्रामसर्वस्वापहृतिक्षमम् । स्वीचकाराशया भर्तुरर्थनायकतामपि ॥११०४॥ युग्मम् ॥
1105 पार्षदः समरस्वामिदेवागारे सहेलकः । भ्राता विजयमल्लस्य यो राज्ञो द्वेष्यतां ययौ ॥११०५॥
द्विगुणोत्पत्तिदानेन सोर्थनायकतां गतः । लब्धावकाशो राजाग्रे क्रमेणासीन्महत्तमः ॥११०६॥
किमन्यद्धरता तेन सर्वार्थान्सर्वनायकैः । व्यधीयत धनावाप्त्यै पुरीशस्यापि नायकः ॥११०७॥
श्रीगर्भपदपर्यायच्छत्रजाद्यप्रभावतः । तथार्जितस्य कोशस्य सोनुरूपव्ययोभवत् ॥११०८॥
मृगीदृशां दुर्लभतां हयानां श्वासान्विटानां कुवचःसहत्वम् ।
वैतालिकानां च विकत्थनत्वं क्रेतुं क्षितीशाः क्षपयन्ति लक्ष्मीम् ॥११०९॥
कोपप्रसादैर्दयिताजनस्य हयादिवृत्तान्तगवेषणेन ।
1110 भृत्यानुवृत्त्या मृगयाकथाभी राज्ञां शिशूनामिव याति कालः ॥१११०॥
विलासहासासनयानदानपानाशनाद्या असतीः सतीर्वा ।
छायेव चेष्टाः क्षितिपालवर्गः परानुकारेण करोति सर्वाः ॥११११॥
अमानुषत्वं पुरुषाधिराजा विटस्तवैः स्वस्य विचिन्त्य सत्यम् ।
तृतीयमक्ष्यभ्यधिकं भुजौ वा ममेति मत्वा न विदन्ति मृत्युम् ॥१११२॥
निशासु येषां प्रभवन्ति दारा दिनेष्वमात्या नियताधिकाराः ।
अहो भ्रमः स्वस्य यदत्र तेपि विदन्ति भूपा प्रभविष्णुभावम् ॥१११३॥

---

१०९१. [1]) Emended with R C; A °त्पाटनायकम्. १०९३. [1]) Emended; A °रूप्या°. १०९४. [1]) Thus corr. by later hand from A₁ हसन°. ११००. [1]) Emended; A °भूपतिः. ११०५. [1]) Emended; A च हेलकः. Cf. vii. 1170, 1319, 1358, 1359.

स्वादूचितं स्वादुतयैव भुङ्क्ते थूत्कृत्य मुञ्चत्यपि थूत्कृतानि ।
पिपासितस्यासमुत्थितकस्मात्तूष्णीं भूय कालश्च समाप्तभावः ॥११११४॥
ज्ञातमित्यादि यत्किंचिल्लिखितिपानां कटाक्षितम् । तत्सर्वं हर्षदेवस्य आज्ञेन लघुतां ययौ ॥१११५॥ 1115
तुष्टः पटहवाद्येन डयातोद्यविदे ददौ । भीमनायकनाम्ने स करिणं करिणीशतम् ॥१११६॥
स्वशिष्यस्तेन नत्यासीद्गायनः कनकोथ सः । चम्पकावरजः खेदाद्गीताभ्यासकृतोद्यमः ॥१११७॥
प्रसादीकृतमस्मै च खेदच्छेदनमिच्छता । तेन काञ्चनदीनारलक्षमक्षतचेतसा ॥१११८॥
कर्णाटभर्तुः पर्माण्डेः सुन्दरीं चन्दलाभिधाम् । आलेख्यलिखितां वीक्ष्य सोभूत्पुष्पायुधक्षतः ॥१११९॥
उत्तेजयन्ति संवर्ये हास्ये जडमतीन्विटाः । सारमेयानिवाजस्रं प्रोत्साह्य प्राकृताशयाः ॥११२०॥ 1120
स विटोद्वेजितो नीलवपथक्रे सभान्तरे । प्रतिज्ञां चन्दलाप्राप्त्यै पर्माण्डेश्च विलोडने ॥११२१॥
कृत्वापश्चिमकर्पूरपरित्यागं प्रतिज्ञया । तं च स्तुतिमिषादेवं जहसुः कविचारणाः ॥११२२॥
आचार्यचविशेषणः परिगतस्त्वं दाक्षिणात्योऽभवो गन्धाद्यप्यवधारितं ससुन ते कर्पूरकोले करे ।
पक्कं वेद्मि दमद्य हर्षनृपतेस्तत्कल्पयोपायनं नो चेन्निष्ठुर नालिकेरकुहरे संभस्य मुग्धमन्यतः ॥११२३॥
आ कर्णाटवसुंधराधवधावा चन्दलालिङ्गनादा कल्याणपुरप्रवेशनविधेरा पिम्मलादर्शनात् ।
आ राजाश्रयकाननान्तवसुधापारर्द्धिकौतूहलाद्वेगेन प्रतिविद्धमिद्धमहसा पोतासंसर्वगम् ॥११२४॥
विटः प्रसाद्य नृपतिं मदनः कम्पनापतिः । महत्तरत्वं जग्राह तस्याभिसार्पिताकृते ॥११२५॥ 1125
वस्त्रालंकारनिर्वाहकृतेमुष्याश्च वेतनम् । नित्यमाहृत भूपालात्पायमीर्ष्याप्रशमाय च ॥११२६॥
विदत्वे निस्त्रपत्वे च मदनस्य कथाक्रमः । मौग्ध्ये पारिप्लवत्वे च नृपस्य निकषोऽभवत् ॥११२७॥
मातेयं चम्पिका नाकात्समानीतेति वादिभिः । संदर्श्य जरतीं नारीं मुषितः सोपरैर्विटैः ॥११२८॥
दासीश्च देवता एता इत्युक्त्वान्यैः प्रवेशिताः । उपर्तिं च श्रियं चौज्झत्क्षणमप्सरसे जनैः ॥११२९॥
दास्यो मदनसंलापमन्त्राद्युद्वेगकारिभिः । अध्यापिता विटैस्तस्य मतिमोहं प्रचक्रिरे ॥११३०॥ 1130
ताभ्यः काभिरपि क्ष्माभृत्सुरतं समयोचितम् । वाञ्छन्तीभिः कृतः स्वाङ्गस्पर्शाद्राग्योदयोज्झितः ॥११३१॥
आयुष्कामाय भूयांसं कालं जीवितकाङ्क्षिणे । आयुर्वर्षशतान्यस्मै ता मूढमतये ददुः ॥११३२॥
डोम्बेन पिण्डसिद्ध्यर्थी केनाप्येतद्रसायनम् । पिण्डसिद्धिकृदित्युक्त्वा पेयं किमपि पायितः ॥११३३॥
किं तस्य कथितैरन्यैर्मौग्ध्यैर्यो याचितो विटैः । म्रियमाणादिव धनादायुषोऽपि व्ययं व्यधात् ॥११३४॥
बलरूपेच्छुरपरानुपायान्यानसेवत । कथयेत्कः सदाचारस्तागतोऽपि त्रपावहान् ॥११३५॥ 1135
स एवमन्धतामिस्रे निक्षिप्तः शाश्वतीः समाः । मुग्धबुद्धिः स्वजाड्येन दुर्नीतैश्च कुमन्त्रिभिः ॥११३६॥
मेघवाहनमुख्यानां कृत्ये लोकोत्तरे यथा । सम्यक्त्वात्पार्थिवः केचित्संदिहान्दोलिताशयाः ॥११३७॥
तथास्मिन्नपि दुष्कृत्ये वर्ण्यमानेऽद्भुतावहे । भविष्यतीव कालेन नूनमप्रत्ययो जनः ॥ ११३८ ॥
राज्ये बहुफले तावद्दुर्नीत्योपहतोऽप्यभूत् । आयुःशेषेण न वशो स रन्ध्रान्वेषिणां द्विषाम् ॥११३९॥

---

११२८. [1]) Emended; A वञ्चिका. Cf. vii. 319. ११३६. [1]) Emended; A °नामवे.—[2]) Emended; A स्वजात्येन; C स्वजाड्येन.

1140 नर्तकीः शिक्षयन्नाशागुल्याद्याभिनयं स्वयम् । तिष्ठन्दीपोज्ज्वले धाम्नि दूरात्केनापि शत्रुणा ॥११४०॥

क्षिप्तेषुरपि नाभूद्यद्विहतो भणितोऽथ वा । फलं तस्यायुःशेषस्य प्रजानां सुकृतस्य वा ॥११४१॥

कश्चिदेवाथ शुद्धान्ते पातयन्तो महीपतेः । सर्वाशुद्धिनिधेः प्रादुरासीद्वारिचविभ्रमः ॥११४२॥

ते युवानो मदोन्मत्तास्ताः स्त्रियो यौवनोन्मदाः । नाशाय हर्षदेवस्य तस्मिन्नेवाभवन्क्षणे ॥११४३॥

निगृहीतास्तेन रोषात्सजाराः काश्चन स्त्रियः । काश्चित्स्वाकृष्य शुद्धान्ताज्जारैर्नीता दिगन्तरम् ॥११४४॥

1145 स्वेन दौःशील्यदोषेण सर्व एव विशङ्किताः । भृत्यास्तस्याशुभान्यैच्छन्नयतन्त च शान्तये ॥११४५॥

तस्यापि शीलवैकल्यं तावत्सर्वत्र पप्रथे । यावत्कलशभूपालात्संजातस्योपपद्यते ॥११४६॥

शैशवे वर्धितो याभिरङ्कमादाय मातृभिः । सोऽङ्कमारोप्य ता एव चुम्बन्संबुभुजेऽनिशम् ॥११४७॥

संभोगं भगिनीवर्गे कुर्वता दुर्मचोरुचा । निगृहीता च भुक्ता च नागा पुत्री पितृस्वसुः ॥११४८॥

स तुरुष्कशताधीशाननिशं पोषयन्धनैः । निधनावधि दुर्बुद्धिर्बुभुजे ग्राम्यसूकरान् ॥११४९॥

1150 अथ सेवाभिसारेण कदापि कुपितो नृपः । स मन्दबुद्धिरास्कन्दमदाद्राजपुरीं प्रति ॥११५०॥

विलोक्य सैन्यसामग्रीमनन्यसदृशीं पथि । त्रैलोक्याक्रान्तिसामर्थ्यं पार्थिवैस्तस्य शङ्कितम् ॥११५१॥

स तु पृथ्वीगिरिं दुर्गं दृष्ट्वा तद्ग्रहणोद्यतः । अप्रविष्टो राजपुरीं तन्मूले समुपाविशत् ॥११५२॥

मासमभ्यधिकं तेन तस्थुषा परिपीडिताः । प्रक्षीणाम्बादिसंभारा बभूवुर्दुर्गरक्षिणः ॥११५३॥

त्रातुं संग्रामपालस्तानूरीचक्रे धरापतिः । कियन्तं न करं भीतः कियतीर्न च संविधाः ॥११५४॥

1155 उपोढदार्ढ्ये नृपतौ स तदप्रतिगृह्णति । लुब्धमुत्कोचदानेन स्वीचक्रे दण्डनायकम् ॥११५५॥

अमन्यमाने[1] नृपतौ व्यावृत्तिं प्रेरिता रहः । प्रवासवेतनं भूरि मार्गितुं तेन शस्त्रिणः ॥११५६॥

तैः प्राये प्राकृतप्रायैः कृते सोल्लुण्ठभाषितैः । राज्ञो दूरस्थकोशस्य कटकः क्षोभमाययौ ॥११५७॥

स तत्समर्थनां यावच्चक्रे तावद्विभीषिकाम् । तुरुष्कास्कन्दजामन्यां प्रददौ दण्डनायकः ॥११५८॥

अथाल्पधैर्यो नृपतिरुत्थाप्य कटकं ययौ । कृत्स्नां च कोशसामग्रीं तत्याजाध्वसु साध्वसात् ॥११५९॥

1160 अपरीक्ष्यादृतो भृत्यः स्वामिनामतिसंकटे । करोति व्यसनापातमजास्योऽसिरिवाहवे ॥११६०॥

तेन स्वयमयोग्येन योग्यानन्याननिच्छता । कलङ्किता नरेन्द्रश्रीः क्षुद्राश्वेनेव मन्दुरा ॥११६१॥

ततः प्रभृति निर्वाणप्रतापस्य महीपतेः । प्रतापचक्रवर्त्याख्या सर्वतो म्लानिमाययौ ॥११६२॥

म्लानाननो न यत्सिद्धं स्वेन भृत्यैस्तथाखिलैः । तत्कर्म कृतवन्तं स कन्दर्पं बह्वमन्यत ॥११६३॥

आनिनीषोश्च तं तस्य जडस्याकृत भूपतेः । दण्डनायक एवेच्छाच्छेदं पैशुनकर्मणा ॥११६४॥

1165 ज्ञातद्रोहोऽथ नृपतिरबध्नाद्दण्डनायकम् । प्रातिपस्यानुरोधेन न क्रुधा न्यग्रहीत्पुनः[1] ॥११६५॥

दुर्गे[1] संदिग्धजीवोऽपि निवसन्संचिकाय सः । लुब्धस्ताम्बूलवस्त्रादि प्रहितं भृत्यबान्धवैः ॥११६६॥

आत्मनः सर्वनाशाय संजातं दैवमोहितः । वधार्हं प्रत्युत पुनर्निन्ये तं स्वपदं नृपः ॥११६७॥

तं विड्डाभ्रातृभिर्भूयो राजानमुदतेजयन् । घोषयात्राजितं स्तोत्रैः कर्णाद्या इव कौरवम् ॥११६८॥

---

११४२. [1]) Emended; A सर्वशुद्धिनिधेः. ११५६. [1]) Emended, A प्रमन्यमाने. ११६५. [1]) Emended; A न्यवृती°. ११६६. [1]) Conjectural reading; A दुर्गे.

भावी भावपराजितः प्रतिभटं गालीभिरत्याक्षिपन्योषिन्नष्टसतीव्रता कुकलहैरुद्वेजयन्ती पतिम् ।
कायस्थश्च हताखिलार्थमहिमा कृच्छ्रे नृपं पातयन्स्वस्यासन्नपराभवस्य कुरुते भूयः समुत्तम्भनम् ॥११६९॥
भुक्तदेयधनो बिभ्यत्तं सहेलमहत्तमः । सर्वोपतिं दुर्व्यसने प्रेरयन्स्वार्थपण्डितः ॥११७०॥ 1170
बन्धुमन्विष्य दरदां लवन्यैः सह लाहरैः । दुर्गपाताभिधं दुर्गं ग्रहीतुं तमचूचुदत् ॥११७१॥
तस्मि लक्ष्मनचन्द्राख्ये पुरा गोप्तरि डामरे । जनकद्वारपतिना हतेनन्तनृपाज्ञया ॥११७२॥
प्रायोपविष्टया द्वारे तत्पत्न्यापि समर्पितम् । कलशक्ष्माभुजा क्रमोपेक्षं प्राप दरन्नृपः ॥११७३॥
तद्बलाहारदैः क्रान्तानन्तग्रामेत्र मण्डले । राज्ञा च मन्त्रिणा चाथ बभूव स्वीकृतोद्यमः ॥११७४॥
निर्ह्रदे¹ तत्र गोभूणां वृत्तये संभृतं हिमम् । अवग्रहेण तत्तस्मिन्क्षणे निःशेषतां ययौ ॥११७५॥ 1175
चारैस्तद्रन्ध्रमालक्ष्य तद्वधाय महत्तमः । अभीक्ष्णं प्रेरयन्क्ष्मापं स च तत्रोद्यमं व्यधात् ॥११७६॥
वासगण्डं¹ तदुद्योगे प्रतिष्ठासुं नृपाज्ञया । चम्पको द्वारकार्यस्थमभिसंधातुमैहत ॥११७७॥
द्वारं निर्याय भूपेन प्रापितो मण्डलेशताम् । सर्वैः सहाभजद्द्वारं स हि द्वाराधिकारिभिः ॥११७८॥
विस्रम्भितोपि¹ कटके तेन द्वारपतिस्ततः । तीर्त्वा मधुमतीं सिन्धुं सैन्यैर्दुर्गमवेष्टयत् ॥११७९॥
समस्तानपि सामन्तान्प्रहिण्वन्सर्वतः स्वयम् । एकप्रयाणान्तरितः कोटेपि न्यवसन्नृपः ॥११८०॥ 1180
त्यजद्भिर्गण्डशैलादि दुर्गसंश्रयदुर्जयैः । काश्मीरिकाः¹ सह दरत्सैनिकैः समरं व्यधुः ॥११८१॥
विदधे प्राजिमठिकानाम्न्याघातपदे वसन् । सपुत्रो गुङ्गजो मल्लः संभ्रमानतिदुःसहान् ॥११८२॥
तत्पुत्रौ¹ दैवविस्मेरराज्यप्राप्ती तदिच्छया । मानं व्यवर्धिषातां यौ वीरावुच्चलसुस्सलौ ॥११८३॥
अत्युद्दामस्तयोर्ज्यायान्निषण्णपि नृपासनम् । आसीच्छ्लाघ्यधैर्यमाहात्म्यायात्रायां तत्र निर्गतः ॥११८४॥
अवग्रहेण भूपालप्रतापेन च शोषिताः । यथाकथंचित्तद्दुर्गे ररक्षुर्दारदा भटाः ॥११८५॥ 1185
अथाज्ञेव विधेर्दुर्गतापपरिपन्थिनी । पपात महती वृष्टिरेकीकृतजलस्थला ॥११८६॥
दुर्गभृङ्गं हिमैः कृत्स्नं दुर्भेद्यैः पर्यवार्यत । अनुकूलेन विधिना संनाहैर्निहितैरिव ॥११८७॥
उत्थाने पातयन्कांश्चित्पतने कांश्चिदुत्क्षिपन् । वेधाः कन्दलयस्येव कन्दुकक्रीडितभ्रमम् ॥११८८॥
ततः स्मृत्वा गृहान्वृष्टिदुःस्थास्ते दुष्टमन्त्रिणः । चक्रिरे पूर्ववद्राज्ञः स्कन्धावारे विस्रम्भणम् ॥११८९॥
ऊर्ध्वस्रोतोनुसारीव तिमिः शैलहताननः । ततोपि चक्रे व्यावृत्तिं राजा जयपराङ्मुखः ॥११९०॥ 1190
मुक्तापणः शीर्णकोशः त्यक्तभीकञ्चुकायुधः । कटकः सर्व एवाभूत्पलायनपरायणः ॥११९१॥
धावतः पथिभिस्तैस्तैः साक्रन्दाजाजसैनिकान् । पृष्ठलग्नारिपुन्दीर्घा मार्गमसिष्यतापणा ॥११९२॥
क्षौमैः सहंसमालेव साब्जषण्डेव खेटकैः । सशैवलेव लहीचैः सशिलेव तुरंगमैः ॥११९३॥
सौवर्णैः सरथाङ्गेव राजनैर्भाजनैरपि । सफेनेव जनस्यकेरासीन्मधुमती सरित् ॥११९४॥
नीतानां च हतानां च दरदैः प्रसृतोदयैः । अभूद्गलितानां च संख्या काचिन्न देहिनाम् ॥११९५॥ 1195
अनाथवत्तया भूतं सैन्यं त्रातुं कृतोद्यमः । एकस्तु सानुजो मानी नाचलन्माल्लिरुच्चलः ॥११९६॥

---

११७५. ¹) Emended; A निह्रदे. ११७७. ¹) Emended; A वासगण्डस्तदु°. ११७९. ¹) Thus or, perhaps, विस्रम्भितेपि to be read for A विस्रम्भितापि. ११८१. ¹) Emended; A काश्मीरकाः. ११८३. ¹) Emended, A तत्पुत्रो.

दरद्कुलाम्बुधिर्धावन्स विश्वाक्रमणोद्यतः । ताभ्यां वेलागिरीन्द्राभ्यामिव संस्तम्भितोखिलः ॥११९७॥
तौ रक्षित्वा बलं प्राप्तौ प्रसिद्धिमतुलां गतौ । पतिंवरेव राजश्रीर्भेजे लक्ष्येण तेजसा ॥११९८॥
ततः प्रभृति लोकस्य सर्वस्यासीदसौ मतिः । राज्यार्हौ मानिनावेतौ क्लीबोयं न तु भूपतिः ॥११९९॥
1200 तथा कृत्वापि यद्राज्ञे दर्शनं परिजह्रतुः । तौ प्रीतिदायविमुखौ बबन्धास्थां ततो जनः ॥१२००॥
अथ शान्तरिपुत्रासो नगरं प्राविशन्नृपः । प्रतापस्तु दिशः प्रायान्मल्लराजतनूजयोः ॥१२०१॥
तौ रामलक्ष्मणावेताविति सर्वस्तदाब्रवीत् । रावणप्रतिमे राज्ञि भाव्यर्थानुगुणं वचः ॥१२०२॥
राजा तु गतलज्जः स नित्यकृत्योपमं जडः । कर्तुं प्रारभताखिन्नः पुनर्मण्डलपीडनम् ॥१२०३॥
अल्पापकारमपि पार्श्वगतं निहन्ति नीचो न दूरमसमागसमप्यरातिम् ।
श्वा निर्दशत्युपलमन्तिकमापतन्तं तस्यागिनं न तु विदूरगमुग्ररोषः ॥१२०४॥
1205 ततः प्रविष्टः संप्रीतः सेवया दत्तकम्पनम् । मदनं सोशृणोत्स्वैरं शंसन्तं तत्पराभवम् ॥१२०५॥
तद्रोषेण जिघांसुस्तमागो जगाद सोपरम् । तस्य देवीविसृष्टाशालेखोल्लङ्घनलक्षणम् ॥१२०६॥
प्राप्तो मडवराज्यात्स क्ष्माभुजादत्तदर्शनः । भीतो लक्ष्मीधरस्यागान्मन्दिरं टक्क[1]मन्त्रिणः ॥१२०७॥
राजा प्रसाद्यमानोपि तत्कृतेन्येन मन्त्रिणा । सस्मितं वीक्षितं सैन्यैस्तं सपुत्रमघातयत् ॥१२०८॥
कोपस्मितं नरपतेरकालकुसुमं तरोः । वेतालस्याट्टहसितं नैवमेव प्रशाम्यति ॥१२०९॥
ये संप्ररूढविपुलप्रणयाभिमाना निःशङ्कमीश्वरनिषेवणमाचरन्ति ।
1210 मन्त्रानुषङ्गरभसाद्भुजगेन्द्रसख्यं प्रख्यापयन्त इव ते प्रलयं प्रयान्ति ॥१२१०॥
कर्णेजपकुले तावन्मदनमलयावधिः । शापः सूर्यमतीदेव्याः प्रसारितभुजोभवत् ॥१२११॥
विक्रमालोकनोत्कम्पी निचिक्षेप क्षमापतिः । बद्ध्वा कलशराजं तं लक्ष्मीधरनिवेशने ॥१२१२॥
विरुद्धं तस्य बद्धस्य शिक्षापेक्षामिषान्नृपः । तेजोवधाय सविधमुदयाख्यं व्यसर्जयत् ॥१२१३॥
लक्ष्म्या जाज्वल्यमानं तं वीक्ष्य प्रज्वलितः क्रुधा । लब्धासिधेनुः कस्माश्चिन्मनस्वी सहसावधीत् ॥१२१४॥
1215 तद्भृत्यैरथ संक्रुद्धैर्निपत्य स विपादितः । दुर्बुद्धेस्तस्य भूभर्तुरेवं भृत्या विपेदिरे ॥१२१५॥
मण्डले राजदण्डेन क्षतेनेव परिक्षते । क्षारपातोपमान्यापि प्राभूद्दुःखपरंपरा ॥१२१६॥
अहारि काञ्चनस्थाली यैः पार्थिवगृहादपि । सत्यप्यहस्करे जघ्नुस्तस्करास्तादृशा विशः ॥१२१७॥
प्रवर्धमाने मरके क्रन्दितध्वनिनिर्भरः । निर्घोषः प्रेतवाद्यानां न व्यरंसीद्दिवानिशम् ॥१२१८॥
उदीपज्ज्वलितग्रामे वत्सरे पञ्चसप्तते । अखण्डं सर्वभाण्डानां दुर्भिक्षमुदजृम्भत ॥१२१९॥
1220 दीनाराणां धान्यखारिः प्राप्याभूत्पञ्चभिः शतैः । दीनारेणाभवत्क्रय्यं मार्द्वीकस्य पलद्वयम् ॥१२२०॥
ऊर्णापलस्य दीनारैः क्रयः षड्भिरजायत । लवणोषणहिङ्ग्वादेरभिधाप्यासत दुर्लभा ॥१२२१॥
प्रावैर्नष्टोभवत्तम्भःसंसेकोच्छूनविग्रहैः । क्षततोया गिरिसरस्तैम्भिक्षदारुवनैरिव ॥१२२२॥
एतद्व्यवहिता[1] राजधानी दूरान्न दृश्यते । ध्यात्वेति सर्वतो राजा द्रुमाणां छेदमादिशत् ॥१२२३॥

---

१२०७. [1]) Emended ; A दक्क°. १२२३. [1]) Emended ; A व्यवहृता.

समग्रनफला वृक्षा गृहस्था इव पातिताः । कुटुम्बैरिव रौलम्बैरशोच्यन्त पदे पदे ॥१२२४॥
प्राणापहं महादण्डं तथार्तेपि जने नृपः । हलावहणे वृद्धोसौ मण्डशैलमिवाक्षिपत् ॥ १२२५॥
निपीड्य लोकं कायस्थैर्महादण्डव्यवस्थया । पुरग्रामादिषु क्वापि न मृदप्यवशेषिता ॥१२२६॥
अथोल्बणत्वं संग्रामान्निहन्तुं सर्वडामरान् । स दण्डभृदिव क्रुध्यन्नाविक्षन्मण्डलेश्वरम् ॥१२२७॥
पूर्वं मडवराज्योर्व्यां होलडान्तः स डामरान् । दवास्कन्दोवधीत्तांस्तान्कुलाये विहगानिव ॥१२२८॥
प्रता लवन्यानुग्रककुन्तलोविकटाकृतिः । जीवन्मडवराज्यान्तस्तेन पिशोपि नोज्झितः ॥१२२९॥
लावन्यबुद्ध्या शूलानि पान्थैरप्यथ रोपितैः । भीमरूपाभवद्भूमिर्भैरवस्य महानसः ॥१२३०॥
शूले लवन्यस्यैकस्य क्रूरां विन्यस्यतो वधूम् । ययुः सर्वे दिशो भीता लवन्या मण्डलेश्वरात् ॥१२३१॥
केचिद्बुभुजिरे तेषां गोमांसं म्लेच्छभूमिषु । अरघट्टघटद्वारिविकृष्टाः केचिदवालगन् ॥१२३२॥
प्राहिणोत्प्राभृतं भूरि भैरवाय महीभुजे । लवन्यमुण्डमालालीरखण्डा मण्डलेश्वरः ॥१२३३॥
तोरणावलयो राजद्वारेष्वदृश्यन्त सर्वतः । डामराणां करोटीभिर्घटीभिरिव निर्भराः ॥१२३४॥
द्वारे कङ्कणवत्स्वादि लभ्यमाने नृपौकसः । नेता डामरमुण्डस्य यः कोपि स किलासदत् ॥१२३५॥
भोक्तुं डामरमुण्डानि श्यामविस्तीर्णतोरणाः । विदधुर्गृध्रकङ्काद्या राजद्वारोपसेवनम् ॥१२३६॥
यत्र यत्रास भूपालस्तत्र तत्र व्यधुर्जनाः । लवन्यमुण्डैरखण्डैर्विस्तीर्णास्तोरणस्रजः ॥१२३७॥
गन्धेनाशुचिना घ्राणं कर्णौ भीमैः शिवारुतैः । अखिद्यन्त शवाकीर्णे श्मशान इव मण्डले ॥१२३८॥
बलेरकम्पपामन्त्रालोकपुण्यावधि व्यधात् । एकभेरीं मण्डलेशो डामरैः शूलकीलितैः ॥१२३९॥
एवं मडवराज्यं स कृत्वा निर्नष्टडामरम् । अधावत्क्रमराज्योर्वीं कर्तुं तामेव पद्धतिम् ॥१२४०॥
अवध्यं न भविष्याम इति निश्चित्य डामराः । चक्रिरे क्रमराज्यस्था लौलाहे सैन्यसंग्रहम् ॥१२४१॥
तैः सर्वैर्देशसंप्राप्तैः कुर्वद्भिः कदनं महत् । आस्ते स्म तत्र सुचिरं निरुद्धो मण्डलेश्वरः ॥१२४२॥
किमन्यद्राक्षसः कश्चित्सुरतीर्थर्षिपूजितम् । निहन्तुं मण्डलमिदं हर्षव्याजादवातरत् ॥१२४३॥
उल्लासो रात्रिषु दिने स्वापः क्रौर्यमुग्रता । अवाङ्मुखत्वं कर्तव्ये दक्षिणेशोचिते रतिः ॥१२४४॥
इत्यादयस्तस्य केचिद्धर्मा नक्तंचरोचिताः । तथा हि तत्कालभवैः प्रियाः प्राज्ञैः प्रकीर्तिताः ॥१२४५॥
अत्रान्तरे मल्लसूनुः कनीयान्यौवनोन्मदः । लक्ष्मीधरस्य गेहिन्या हृदयाह्लादकोभवत् ॥१२४६॥
सा हि राजसुते तस्मिन्संसक्ता प्रातिवेश्मिके । नारज्यत निजे पत्यौ वानरप्रतिमाकृतौ ॥१२४७॥
ज्ञातीनगण्यान्हत्वान्यान्कस्माद्राज्यार्हलक्षणौ । नावधीरुद्धतावेतौ राजसूच्चलसुस्सलौ ॥१२४८॥
इति लक्ष्मीधरेणेर्ष्यारोषादुक्तोपि भूपतिः । न चुक्रोधानुतापार्ति पूर्वशास्तिव भाषितः ॥१२४९॥
स्वयमन्यमुखेनापि स तेनोक्तस्ततोसकृत् । ⁻⁻ याते तदीहस्य ध्यात्वा साध्वसमादधे ॥१२५०॥
ज्ञातिभीत्यनुवृत्त्यादि तेन विस्मरता ततः । संमन्त्र्य मन्त्रिभिः सार्धं दधे तद्वधनिश्चयः ॥१२५१॥
आसन्नचारवनिता धक्कनाख्याय तं व्यधात् । भूभर्तुर्दुरभिप्रायं तयोः कर्णपथातिथिम् ॥१२५२॥

---

१२२४. ¹) Emended; A रौलम्बैर°. १२३२. ¹) Thus A3; A1 °बालगन्; G °बागलन्. १२३६. ¹) Emended; A श्यामा विस्तीर्णतोरणा. १२४५. ¹) A3 gloss शूलन्--- वापञ्चीकाभवनं (three *aksharas* illegible). १२४९. ¹) Emended; A प्रक्रोधा°. १२५०. ¹) A3 indicates a *lacuna* of two *aksharas*.

सख्या दर्शनपालेन तत्रार्थे छिन्नसंशयौ । निरगातां निशीथिन्यां द्वित्रैस्तावनुगैः समम् ॥१२५३॥
षट्सप्ततेऽब्दे नगरान्मार्गशीर्षेऽथ निर्गतौ । उच्चासंवसतेः प्राप्तौ डामरस्योपवेशनम् ॥१२५४॥
1255 प्रशास्तराजो दुधुक्षुः सिल्हराजं निजानुजम् । सोऽभिसंधाय तौ निन्ये लवन्यो मण्डलान्तरम् ॥१२५५॥
ततो राजपुरीं ज्यायान्प्रायात्कल्हस्य भूपतेः । कनीयान्प्रययौ पार्श्वं कालिञ्जरधरेशितुः ॥१२५६॥
तयोर्निर्गतयो राज्यं न कैश्चिच्छ्रद्धीयत । निमित्तज्ञेन राज्ञैव दुर्निमित्तैस्त्वशङ्क्यत ॥१२५७॥
लक्ष्मीधरमुखेनैव प्रार्थनां हन्तुमुत्कलम् । चक्रे संग्रामपालस्य सोऽङ्गीकृत्य धनं ततः ॥१२५८॥
स त्वन्तिकागतस्येषन्मल्लसूनोः कृतादरः । तया विशङ्कया शत्रोरासीदधिकगौरवः ॥१२५९॥
1260 आसन्नाभ्युदयं शत्रुं दृष्ट्वैव विधिचोदितः । शङ्काविष्करणाल्लोके नयेत्संभावनाभुवम् ॥१२६०॥
राजपुर्याः प्रकृत्यैव काश्मीरानर्थकाङ्क्षिताः । गर्भिण्यौ रिपौ प्राप्ते चक्रिकायां किमुच्यताम् ॥१२६१॥
कांश्चिन्निकृतिकप्रायान्पार्श्वयातानथोत्कलः । गतागतान्कृतोद्योगो डामराणामकारयत् ॥१२६२॥
डामरास्तु महोत्साहांस्तमानेतुं व्यसर्जयन् । राज्ञा विप्रकृतान्दूतान्वितीर्णोपायनान्बहून् ॥१२६३॥
तं सूर्यवर्मचन्द्रस्य तनयो जनकाभिधः । चकारोपचितोत्साहं मायादूतैर्विसर्जितैः ॥१२६४॥
1265 वीक्ष्य डामरदूतांस्ताञ्जहता राजतो भयम् । व्यक्तं संग्रामपालेन निन्ये माहात्म्यमुत्कलः ॥१२६५॥
स कार्यगौरवात्प्राज्ञो मूर्ध्नि कर्पूरचूर्णनम् । कृत्वा तमविनाशाय यावद्विसृष्टुमैहत ॥१२६६॥
तावत्कलशराजाख्यस्तद्वंश्यो मुख्यठक्कुरः । हर्षदेवार्पितोत्कोचस्तमेत्य विजनेऽब्रवीत् ॥१२६७॥
राज्ञः प्रसादनं त्यक्त्वा त्वयोत्कलविरोधिणः । कामधेनुं विनिर्धूय छागकण्ठग्रहे ग्रहः ॥१२६८॥
कोऽयं काश्मीरभूपानां कास्य शक्तिस्तपस्विनः । आराधनेन तद्राज्ञो विधेहि स्वमसाध्वसम् ॥१२६९॥
1270 अयं राजगिरौ दुर्गे स्थाप्यतां मार्पितस्ततः । त्वन्मनीषितवर्षी तद्वासान्निध्यं च सर्वदा ॥१२७०॥
तेनेति प्रभुराख्यातः खशानां स मिताशयः । तद्गीतः स्वार्थलुब्धश्च तथेति प्रत्यपद्यत ॥१२७१॥
तमभ्यधात्स नो गन्तुं शक्तोऽहममुमुद्यतम् । त्वयैव बध्यतामेष मिषतः प्रेषितोऽन्तिकम् ॥१२७२॥
इत्युक्त्वा तं स्ववसतिं विसृज्यावददुत्कलम् । प्रातः कलशराजस्य त्वया गन्तव्यमन्तिकम् ॥१२७३॥
इह प्रधानामात्योऽसौ तेन ते स्यादनत्ययः । ततो विपक्षोच्छित्त्यै त्वां प्रतिमोक्ष्यामि सानुगम् ॥१२७४॥
1275 अथ तद्वसतिं गन्तुं चलितोऽन्येद्युरुत्कलः । प्राग्दुर्निमित्तैस्तत्कृत्यमाप्तैश्च विबोधितः ॥१२७५॥
मन्त्रे भिन्ने निवृत्तं तं श्रुत्वा खशनृपान्तिकम् । कुप्यन्कलशराजोऽथ सज्जसैन्यः समाययौ ॥१२७६॥
समास्कन्दाय संप्राप्तं जानञ्शस्त्रभृतां वरः । ऐच्छद्रणाय निर्गन्तुं निजभृत्यैः सहोत्कलः ॥१२७७॥
क्षोभे संप्रसृते तं स सान्त्वयित्वा खशाधिपः । तिष्ठन्कलशराजेन सहानिन्ये निजां सभाम् ॥१२७८॥
निषेधाध्यायिनो भृत्यान्स विधूयौजसां निधिः । सज्जः खशसमाजं तं कोपकम्पाधरोऽविशत् ॥१२७९॥
1280 द्रष्टुं तं नाशकत्कश्चित्कल्पान्तार्कमिवोल्बणम् । क्रुद्धं कलशराजो वा राजा वा तेजसां निधिम् ॥१२८०॥
स विविक्तीकृते भाति खशाधीशं समन्त्रिणम् । सान्त्वयन्तं महातेजाः कोपकम्पाक्षरोऽब्रवीत् ॥१२८१॥

---

१२५४. [1]) Thus $A_1$; $A_2$ gloss उच्चसौ, corr. by later hand into उच्चास; $A_3$ reads उच्चास. १२५६. [1]) Thus corr. by $A_1$ from कालि°. १२५७. [1]) Emended; A कश्चि°. १२६३. [1]) Thus $A_1$; a later hand corrects डामरांस्तु महोत्साहांस्त° and विप्रकृतान्दू°. १२८०. [1]) Emended; A तमाश°. १२८१. [1]) Emended; A कृतो.—[2]) Emended; A खशाधीशं.

पूर्वं दार्वाभिसारेभूद्भारद्वाजो नरो नृपः । नरवाहननामास्य सूनुः फुल्लमजीजनत् ॥१२८२॥
स सातवाहनं तस्माच्चन्द्रोभूत्तत्सुतः कृती । गोपालसिंहराजाख्यौ चन्दुराजोप्यथात्मजान् ॥१२८३॥
बह्वात्मजः सिंहराजो दिद्दाख्यां तनयां ददौ । क्ष्माभुजे क्षेमगुप्ताय सा वीरा भ्रातृनन्दनम् ॥१२८४॥
राज्ये संग्रामराजाख्यं व्यधादुदयराजजम् । भ्रातापि कान्तिराजोस्या जस्सराजमजीजनत् ॥१२८५॥ 1285
पितानन्तस्य संग्रामो जस्सस्तन्वङ्गगुङ्गयोः । अनन्तात्कलशक्ष्माभृद्गुङ्गान्मल्लोप्यजायत ॥१२८६॥
कलशाद्धर्षदेवाद्या जाता मल्लात्तथा वयम् । कोयमित्यादि तन्मन्त्रैः क्रमेस्मिन्कथ्यते कथम् ॥१२८७॥
पृथिव्यां वीरभोज्यायां क्रमो वा कोपयुज्यते । वीरस्य च सहायोस्तु कः स्वबाहुद्वयात्परः ॥१२८८॥
दिष्ट्या मदनुकम्प्यानां मूर्ध्नि हस्तमिवास्पृशन् । काश्मीरिकाणां भूपानां नाभूवं कुलपांसनः ॥१२८९॥
तस्माद्बुध्यध्व मे शक्तिमित्युक्त्वा निर्गतस्ततः । विजयाय स पत्तीनां शतेनानुगतोचलत् ॥१२९०॥ 1290
निहतं शत्रुमाशाय तस्याग्रे कश्चिदाययौ । स तेन सुनिमित्तेन प्राप्तां मेने रिपुश्रियम् ॥१२९१॥
अरघट्टघरट्टादिकृष्टिमुत्सृज्य निर्गताः । डामरा वाहृदेवाद्यास्तं प्रान्तमुपतस्थिरे ॥१२९२॥
कटकस्थस्य संग्रामपालस्यायातमन्तिकात् । तेभ्यो राजपुर्यन्तः क्षिप्रं निन्युः प्रसह्य ताम् ॥१२९३॥
भुक्त्वा तद्दत्तैर्गच्छन्स्वावासं स दिनात्यये । सैन्यैः कलशराजस्य दत्तास्कन्दोभवद्बहिः ॥१२९४॥
राज्ञीभिर्निर्गमात्तस्मिन्द्वारं संरोध्य वारिते । तदीयाः सैनिका युद्धे लोष्टाग्रहादयो हताः ॥१२९५॥ 1295
मध्यं प्रविश्य शमिते प्रधनैस्तत्र संयुगे । सोल्पसैन्योपि संवृत्तः सुतरामल्पसैनिकः ॥१२९६॥
चैत्रस्य पौर्णमास्यन्तः कृष्णमप्यनुभूतवान् । वैशाखासितपञ्चम्यां यात्रामग्रस्तधीर्व्यधात् ॥१२९७॥
विसृज्य वाहृदेवादीन्विप्रवाय स्ववर्त्मभिः । आललम्बे प्रवेशेच्छां क्रमराज्याध्वना स्वयम् ॥१२९८॥
यं राजोदयसिंहान्ते कपिलं क्षेमजात्मजम् । अस्थापयल्लोहरोर्व्यां स विशान्तं मुमोच तम् ॥१२९९॥
स्वयमग्रे सममाणां खड्गचर्मधरो व्रजन् । पलायने पूर्वशिष्यान्पर्णोत्से तद्भटान्व्यधात् ॥१३००॥ 1300
बद्ध्वा निःशङ्कमासीनं द्वारेशं सुज्जकाभिधम् । कश्मीरानामिषाकाङ्क्षी क्षिप्रं श्येन इवापतत् ॥१३०१॥
तं डामराश्च कतिचित्खाशिकाश्चाद्रिसंश्रयाः । राजश्रियः प्राप्तमार्गं सर्वतः पर्यवारयन् ॥१३०२॥
नभाकाशादिव च्युतं भुवो गर्भादिवोत्थितम् । निशम्यातर्कितं प्राप्तं चकम्पे हर्षभूपतिः ॥१३०३॥
मा भूदसौ बद्धमूलः क्रमराज्यान्तरस्थितम् । मा वधीन्मण्डलेशं च ध्यायन्नित्याकुलोथ सः ॥१३०४॥
विलम्बमाने संनद्धसैनिके दण्डनायके । त्वरितं प्राहिणोत्पट्टं विकीर्णासंख्यनायकम् ॥१३०५॥ 1305
दैवोपहतवीर्यो वा क्रान्तो वा द्रोहचिन्तया । अभ्यमित्रीणतां त्यक्त्वा स तु मार्गे व्यलम्बत ॥१३०६॥
अन्यांश्च यान्यांस्तिलकराजादीन्व्यसृजन्नृपः । ते ते पट्टं समासाद्य नाकुर्वन्नपनिर्गमम् ॥१३०७॥
दण्डनायकमुख्येपि लोके राज्ञा विसर्जिते । याते विमूढतां प्राप बद्धमूलत्वमुत्कलः ॥१३०८॥
वराहमूलं प्रविशन्नागतां द्विषतां बलात् । अश्वां सुलक्षणोपेतां राजलक्ष्मीमिवासदत् ॥१३०९॥
महावराहमौलिस्थचक्रस्य मूर्ध्नि पपात च । तदंसस्थितया पृथ्व्या वरणार्थमिवार्पिता ॥१३१०॥ 1310

१२८३. ¹) Emended; A °त्मजान्. Cf. vi. 367. १२८५. ¹) Thus corr. by A₂ from A₁ °स्यास्सराज°. १२८९. ¹) Emended; A काश्मीरकाणां. १२९६. ¹) Thus A₁; corr. by later hand into °संयुगे°. १२९८. ¹) Emended; A₁ वा°.—²) °विप्रवा° and °र्त्म° supplied by A₂ in space left by A₁.—³) Emended; A आललम्ब. १२९९. ¹) Thus A; perhaps, to be emended °कोसरा°. Cf. vii. 482. १३०४. ¹) Emended; A °स्थितिम्. १३०८. ¹) Thus A₁; A₂ °बद्धमूलत्वे.

काकायवैद्यकुलजैर्योधैः संरुद्धपद्धतिः । स हुष्कपुरमुत्सृज्य क्रमराज्योन्मुखो ययौ ॥१३११॥
अत्रान्तरे तमायान्तमाकर्ण्योत्सेकमागतैः । विग्रहोन्मुखतां निन्ये डामरैर्मण्डलेश्वरः ॥१३१२॥
तैर्हि प्रागेव भङ्क्तं स भीतो हत्वा महाभटान् । यशोराजमुखान्भूरीन्ययौ मन्दप्रतापताम् ॥१३१३॥
शनैरपसरन्सोथ तारमूलकमासदत् । उच्चलाधिष्ठितास्तेपि विद्विषन्तस्तमन्वयुः ॥१३१४॥
1315 समेतानन्तसैन्येन तेन तत्र चिरं धृतः । उच्चलप्रलयाभस्य पौरस्त्यानिलविभ्रमः ॥१३१५॥
सैन्ययोरुभयोस्तत्र जयश्रीकारिणीकृते । बभूव तुल्यसंघर्षः सेर्ष्ययोरिव दन्तिनोः ॥१३१६॥
आनन्दनामाप्युत्पिञ्जोत्थानमुच्चलमातुलः । चक्रे मडवराज्येथ निबिडीकृतडामरः ॥१३१७॥
तद्विप्लवे डामरौघा दिग्देशेभ्यः सहस्रशः । उन्ममज्जुर्हिमापाये रन्ध्रेभ्य इव षट्पदाः ॥१३१८॥
तत्क्षणं क्षीणभाग्यस्य यथा द्वारपतिस्तथा । कायस्थः कम्पने राज्ञः सहेलो[1]भून्महत्तमः[2] ॥१३१९॥
1320 आनन्देन कृतास्कन्दो बहुशो विहिताहवः । औज्झीन्मडवराज्यं स न यत्नदृढभूत्तदा ॥१३२०॥
अथाद्भुतप्रतापेन वेष्टयित्वा महाचमूम् । उच्चलेनाहवे बद्धः ससैन्यो मण्डलेश्वरः ॥१३२१॥
न विद्मः किं तदा वृत्तं योधानां बल्किलाविदन् । ते सखड्गाश्वसंनाहा बद्धा वयमिति स्फुटम् ॥१३२२॥
तथा बद्धोपि निर्दध्यौ स भव्यः प्रभवे हितम् । स्वामिभक्तिर्विपर्येति पर्यन्तेपि न मानिनाम् ॥१३२३॥
तूर्णं पुरप्रवेशाय सोथ प्रैरयदुच्चलम् । विश्वास्य नेदृगन्योस्ति क्षण इत्यसकृद्ब्रुवन् ॥१३२४॥
1325 विज्ञातस्तस्य चानेकैः पुरग्रामानलुण्ठयत् । कर्मणानेन कौलीनमस्यास्त्विति विचिन्तयन् ॥१३२५॥
परिहासपुरे तेन स ततः संप्रवेशितः । अथाम्बुविषमाद्यस्मान्निर्गमोत्यन्तदुर्गमः ॥१३२६॥
तत्रोच्चलं चतुःशाले स्थं च दग्धुमचूचुदत् । निजान्स निशि ते तत्तु न चक्रुस्तद्धितैषिणः ॥१३२७॥
यथा चित्तं तथास्य स्यात्कायश्चेत्साहसक्षमः । तदात्मनिरपेक्षस्य किं न सिध्येन्मनीषितम् ॥१३२८॥
क्षीबच्छन्नवपुस्त्वचा सह वसत्यच्छेद्यया कच्छपो निर्वर्मा रणकर्मसाहसमहोत्साहश्च सिंहः सदा ।
धिक्प्रादुष्कृतपक्षपातरभसो नीचेषु मुग्धो विधिर्वीराणां कुरुते शरीरमभितो वैकल्यशल्याहतम् ॥१३२९॥
1330 संदिदेशाथ स क्ष्मापमाकृष्यार्यं मयागतः । शृगाल इव ते क्षिप्तः क्षिप्रं निर्गत्य बध्यताम् ॥१३३०॥
ततः समस्तसामन्तसैन्यसंततिसंयुतः । अद्य मृत्युर्जयो वेति निश्चित्य निरगान्नृपः ॥१३३१॥
स प्राणसंशये सर्वायासप्रशममादिशत् । पटहोद्घोषणेनासीत्स्वैरैरनुगतोखिलैः ॥१३३२॥
मार्गं भरतसेत्वग्रं घ्नतः सैन्यं विरोधिनम् । आजानेयै राजभृत्याः क्षणान्मार्गमलङ्घयन् ॥१३३३॥
क्षुभितेष्वाविवायाते राजसैन्ये द्विषद्बलम् । मण्डलेश्वर एवान्तःप्रविष्टो निरनाशयत् ॥१३३४॥
1335 अथोच्चलबले भग्ने विदुद्रुः केपि आङ्गिकाः । भ्रान्त्वा राजविहारं च प्राविशन्केपि डामराः ॥१३३५॥
त्रिल्लसेनाभिधं दृष्ट्वा प्रविष्टं[1] डामरं परे । उच्चलोसाविति भ्रान्त्या विहारं समदाहयन् ॥१३३६॥
सोमपालाभिधेनारिहयारोहान्तरे चिरम् । कुर्वन्दर्शनपालस्य पितृव्येण सहाहवम् ॥१३३७॥
यत्नाज्जनकचन्द्राद्यैर्मानी व्यावर्तितो रणात् । परिहासपुरात्प्रायान्मृत्युवक्त्रादिवोच्चलः ॥१३३८॥

१३११. [1]) Thus $A_1$; corr. by later hand into काकायवैद्य°. १३१९. [1]) Emended; A सहलो.—[2]) Emended; A °भूत्स-त्तमः. १३२९. [1]) Doubtful; thus emended with C; A °स्तिमारैः°. १३३६. [1]) Thus $A_1$; corr. by later hand into प्रविष्ट.

वितस्तां गौरिकावालं[1]मामासीर्व्या हयान्वितः । स डामरैः सह पुनः प्रययौ तारमूलकम् ॥१३३९॥
जयेन तावन्मात्रेण कितवोल्प इवोन्मदः । राजा प्रशंसन्नानन्दं राजधानीं न्यवर्तत ॥१३४०॥ 1340
जीवन्तमप्यरिं मुक्त्वा न पश्चादलगत्स यत् । आसन्नुच्छ्वसितास्तेन भङ्गभाजोपि डामराः ॥१३४१॥
यातान्पलाय्य ताञ्ज्येष्ठामूलीये मासि सर्वतः । भूयोपि संघटयितुं स्थिरधीरैच्छदुच्चलः ॥१३४२॥
स्वदोर्मात्रसहायस्य परायत्तस्य मानिनः । दुर्भिक्षान्तर्महोद्योगः स तस्य विषमोभवत् ॥१३४३॥
तन्मध्येतिदरिद्रोपि संधानं स ररक्ष यत् । तमुत्पाद्यानयद्राजा श्रीपरिहासकेशवम् ॥१३४४॥
तस्मिन्विघटिते पांशुः कपोतच्छदधूसरः । रोदसीच्छादनं हर्षशीर्षच्छेदावधि व्यधात् ॥१३४५॥ 1345
प्रागन्धकारो[1] देशेस्मिन्दिवसेपि व्यजृम्भत । रूपिकादिवसालोक इति यत्प्रथये जने ॥१३४६॥
निवेशिते परीहासकेशवे प्रशशाम तत् । तस्मिन्नुन्मूलिते भूयः सार्धं मासमजृम्भत ॥१३४७॥
किंचिदुच्छ्वसिते राज्ञि मन्दोद्रेकतया रिपोः । दिशा शूरपुरस्याथ सुस्सलः प्रत्यदृश्यत ॥१३४८॥
अवनाहे[1] स हि वसन्नुपालम्भपरैः पितुः । संदेशैः शंसतो ज्येष्ठमौदासीन्यादपाकृतः ॥१३४९॥
हृतान्कल्हक्षितीशेन कांश्चिदादाय वाजिनः । चिरेण राजदाक्षिण्यमौज्झीत्तेन व्यलम्बत ॥१३५०॥ 1350
आरम्भादुदयान्तं च तिष्ठन्वैरेपि निष्ठुरे । साम प्रयुयुजे मोहावहं मायानिधी रिपोः ॥१३५१॥
जित्वा माणिक्यनामानं तेन सेनापतिं रणे । प्रापि शूरपुरद्रङ्गाज्जयश्रीः श्रीश्च भूयसी ॥१३५२॥
तस्याभ्युदयपात्रस्य तया संप्राप्तया श्रिया । आरब्धिसमयः कृत्स्नः स विभूत्यद्भुतोभवत् ॥१३५३॥
मण्डलेश्वरपद्मादीनविचिन्त्योच्चलं ततः । प्राहिणोन्नृपतिर्योद्धुं सुस्सलं क्षिप्रकारिणम् ॥१३५४॥
तेन शूरपुरे भग्नास्तद्योधाः शौर्यशालिना । भूयांसः प्रलयं प्रापुर्मग्ना वैतरणीजले ॥१३५५॥ 1355
तत्र दर्शनपालस्य स्वामिद्रोहकृतो वपुः । विक्रामतो न संस्पृष्टं खिन्नयेव जयश्रिया ॥१३५६॥
राजसैन्यं तदन्येद्युर्हतशेषं पलायितम् । लोकपुण्ये निवसतः सहेलस्यान्तिकं ययौ ॥१३५७॥
सुस्सलापातकल्पान्तं विशङ्क्यापि सहेलकः । तैस्तैर्भग्नैर्बलैः साकं नगरं प्राविशत्ततः ॥१३५८॥
एवमभ्येत्य नृपतौ सुस्सलेन विलङ्घिते । अवाप तारमूलस्थः प्रतिष्ठां पुनरुच्चलः ॥१३५९॥
बिभ्यद्भिस्तुरगानीकात्स्पर्शिप्रायैः स डामरैः । आनिन्ये शैलदुर्गेण भूयो लहरवर्त्मना ॥१३६०॥ 1360
राजाभ्युदयराजाख्यं कृत्वा द्वारपतिं पुनः । प्राहिणोदुच्चलं जेतुं लहरे मण्डलेश्वरम् ॥१३६१॥
ततः पद्मपुरं प्राप्ते मातुले मल्लजन्मनोः । न कोपि कम्पनं भूपान्मन्त्री त्रासातुरोग्रहीत् ॥१३६२॥
को मेस्तीति विनिश्वस्य वदतोथ महीपतेः । अधिकारध्वजं हस्ताच्चन्द्रराजः समाददे ॥१३६३॥
अनाशीः शयने मृत्युर्यैर्वा तेषां स वंशजः । श्रीजिन्दुराजमुख्यानामौचित्यं प्रत्यपादयत ॥१३६४॥
स द्रौणिरिव निर्नष्टे काले सेनापतिः कृतः । निर्गत्य तत्पद्मपुरादरिसैन्यं न्यवारयत् ॥१३६५॥ 1365
विपक्षः कम्पनेशः स तेन क्ष्मां कामतां शनैः । नवम्यां शुक्लनभसो हतोवन्तिपुरान्तरे ॥१३६६॥
स हि गोवर्धनधरोपान्ते कुर्वन्निराहवम् । स्वसैन्यैर्वर्जितो गीतं शृण्वन्परिमितानुगः ॥१३६७॥

---

१३३९. [1]) $A_2$ gloss परिहासपुरसमीपे गुरिकावलमस्ति. १३४६. [1]) Emended; A °कारवेले°. १३४९. [1]) Thus $A_1$; $A_2$ (?) अवनाहे; $A_2$ gloss पोदुपारपार्श्वे. १३५१. [1]) Emended; A मोहोवहं. १३६०. [1]) Emended; A °नीकास्पर्शि°. १३६६. [1]) Emendod, A क्रमता.

प्रविश्यारिवधारोहैर्विसस्तातीरवर्त्मना । प्राप्तोकस्माद्भयं लेभे प्रमत्तानां शुभं कुतः ॥ १३६८॥
प्रहितं चन्द्रराजेन क्ष्मापतिर्वीक्ष्य तच्छिरः । भूयो जयाशामकरोदानुकूल्यं विदन्विधेः ॥१३६९॥
1370 वैमुख्येन व्रजन्कुर्यात्सांमुख्यैरन्तरा विधिः । प्रत्यागमभ्रमं सिंह इव व्यावृत्य वीक्षितैः ॥१३७०॥
अथ लब्धबलश्चन्द्रराजोमन्दोद्यमोविशत् । विजयक्षेत्रमाकर्षन्कटकं दशधाष्टधा ॥१३७१॥
तुलाधर इव भ्रष्टा साम्यभङ्गं न चक्षमे । तदा द्वयोः कटकयोस्तुलायाः पुटयोरिव ॥१३७२॥
प्राप्ते यतस्तृतीयस्मिन्दिवसे मण्डलेशितुः । अकालवृष्टिविवशं लहरे व्यद्रवद्बलम् ॥१३७३॥
शीतवातहता योधा मग्नाः केदारकर्दमे । तुरगासितनुत्रादि द्राक्तिर्यञ्च इवामुचन् ॥१३७४॥
1375 उच्चलेन ततो रक्ष्यमाणमप्यार्द्रचेतसा । ग्रामं जनकचन्द्राख्या निन्युर्मण्डलेश्वरम् ॥१३७५॥
हर्षभूभृद्भृत्यवर्गे द्रोहशङ्काङ्किते परम् । कलेवरव्ययात्कीर्तिः क्रीता तेनैव मन्त्रिणा ॥१३७६॥
ध्रुवं संस्पर्धतो धन्या देवशर्मादयोस्य ते । न चेत्कोपि विपर्यासे दोषमुद्घोषयेज्जनः ॥१३७७॥
लवन्योन्मूलनारातिव्यूहव्यामोहनादयः । विध्यधीने फले ध्याते स्तुत्याः कस्य न तत्क्रियाः ॥१३७८॥
किं पातालतमो न हन्ति हिमगुः किं नो विषं भीतये पानीयं गिलतः किमान्तरशिखिध्वस्त्यै न धन्वन्तरिः ।
सर्वत्रैकपदे प्रयात्यफलतां वाच्यो जडो नाम्बुधिः सिद्धेर्दैवविधेयतां विमृशतां स्तुत्यैव वस्तुज्ञता ॥१३७९॥
1380 स्वामिकृत्योद्यमस्तुल्यस्तुतिषु स्त्रीषु पूज्यताम् । गङ्गा तज्जननी स्वस्य नमस्यन्त्यविशङ्किताम् ॥१३८०॥
साहसे सा हि तनये यत्र तत्र महीभुजा । महीयमाने तं खेदमोहिताह स्म भूभुजम् ॥१३८१॥
अनन्यसंततेरेकं सुतमेतं प्रभो मम । मा नियुङ्क्थाः यत्र तत्र कार्ये संदेहितासुनि ॥१३८२॥
स तामकथयन्मातर्यथा तेनन्यसंततेः । तथा मेनन्यभृत्यस्य सोयमेकोवलम्बनम् ॥१३८३॥
स्वसंभवस्य तां भर्तुर्भक्तिसंभावनामसौ । प्राणप्रतिष्ठानिष्ठायां मेने मानवती सती ॥१३८४॥
1385 उच्चलस्य क्षणे तस्मिन्हिरण्यपुरमीयुषः । राज्याभिषेकं संभूय तत्रस्था ब्राह्मणा ददुः ॥१३८५॥
नृपमत्यन्तविवशं प्रसङ्गे तत्र मन्त्रिणः । भूयांसः सन्ति तैः सार्धं व्रज तल्लोहराचलम् ॥१३८६॥
प्रजा एव ततः शान्तोत्कण्ठा नवनृपं प्रति । त्वामानेष्यन्ति न चिरादिनैर्वा स्वयमेष्यसि ॥१३८७॥
सोभ्यधादवरोधस्त्रीकोशसिंहासनाग्रहम् । असामान्यं परित्यज्य गन्तुं सपदि नोत्सहे ॥१३८८॥
पुनस्तेकथयन्नाशा यान्तोध्यारुह्य वाजिनः । पृष्ठे विन्यस्य नेष्यन्ति कोशान्तःपुरयोषितः ॥१३८९॥
1390 श्वपाकीकामुकोप्यासीद्यस्मिंस्तदपरोपि चेत् । सिंहासनं समारोहेत्काभिमानक्षतिस्ततः ॥१३९०॥
आस्तामेतत्परं भूप मन्त्रमित्यथ चोदिताः । ते पार्थिवेन भूयोपि ससंरम्भं बभाषिरे ॥१३९१॥
क्षत्रधर्मं पुरस्कृत्य शासतां क्ष्मां क्षमाभुजाम् । को दैन्यस्यावकाशः स्याद्दाशीर्येषां मृधे वधः ॥१३९२॥
अनुयोगश्च लज्जा च भयं द्वैधं च मन्त्रिणा । भूभुजां व्यसनोल्लासे शत्रवो न तु गोत्रिणः ॥१३९३॥
कार्यं न पश्येदलसः स्वयं यो भृत्येषु विन्यस्तसमस्तकृत्यः ।
षण्ढाश्रयस्येव विनष्टदृष्टेः पदे पदे तस्य किलोपघातः ॥१३९४॥

---

१३७९. 1) Emended; A भाव्य°. १३८२. 1) Emended; A नियुङ्क्था. १३८४. 1) Emended; A सा भर्तु°. १३९२. 1) Thus $A_1$; corr. by later hand into दैन्य°.

लब्धेऽन्तरेऽस्य स्वयमात्तशस्त्रः स्वल्पस्य शत्रोः कलयन्नवज्ञाम् ।
एवं किलाहीर्यमनिर्वहाति स्वयं प्रवृत्तिं त्रपया विमुग्धः ॥१३९५॥ 1395

कालेन याति क्रिमितां महेन्द्रो महेन्द्रभावं क्रिमिरप्युपैति ।
अयं प्रतीयात्रयमप्यनिष्ट इत्येव नित्यामुचितोऽभिमानः ॥१३९६॥

पराभवाधायि भयं जिगीषोः सर्वाङ्गवैकल्यवताहितेन ।
येनाभियुक्तः स समस्तसंपत्पूर्णोऽपि वैकल्यहतत्वमेति ॥१३९७॥

लब्धस्थितिः स्फीतविभूतिपार्श्वं दीनोऽभियोक्ता परपिण्डवृत्तिः ।
आद्ये कथं नाम पराभवः स्यात्त्रयं भवेदेह न तत्र भावः ॥१३९८॥

अमात्यवैमत्यवशेन भिन्ना वृत्ता न कार्यस्य ततीयसोऽपि ।
वैशाखरज्जोरिव कर्षकाभ्यां पर्याययोगेन कृते विकर्षे ॥१३९९॥

समयशकेरेकेनाप्याशाक्रान्तस्य भूपतेः । वैरी सर्वाङ्गहीनोऽपि राज्यमाशु च कर्षति ॥१४००॥ 1400

यत्र द्विपस्तत्र याहि क्रान्तां क्रान्तां च मेदिनीम् । पात्रार्थी न चिरादेवं पुनर्जयमवाप्स्यसि ॥१४०१॥

विधुरेऽपि क्षितौ भृत्यसहस्रपरिवारितैः । पतद्भिराहवे भूपैः कथात्याभिख्योपलभ्यते ॥१४०२॥

नृत्यच्छिन्नशिरोधरोद्गुरनटे[1] ज्वालायुधीणागुणप्रक्वाणिन्युद्यच्छिन्नांमुखशिखिज्वालाप्रदीपाङ्कुरे ।
धन्याः केऽप्युपलभ्य वीरशयने शान्ताभिमानज्वरोल्लाघस्वास्थ्यशरीरतासफलितस्निग्धाशिषः शेरते ॥१४०३॥

उद्वान्तमित्यन्तकृत्यं संचित्य कितवा इव । राज्ये भजन्तो दीव्यन्तः क्षत्रियास्त्रासहीनताम् ॥१४०४॥

मन्त्रान्तरानुयोक्तारं तदप्युत्सृज्य मन्त्रितम् । पक्ष्यं प्राप्तकालं च तं निःश्वस्य तमब्रुवन् ॥१४०५॥ 1405

उत्कर्षवरसंस्त्यक्तुमपि शक्तोऽसि संकटे । अन्यथानुचितं किंचित्प्राप्स्यस्यहितचिन्तितम् ॥१४०६॥

स तानुवाच स्वं हन्तुं न शक्तोऽहं गतो मयि । भवद्भिरेव विषमे प्रष्टव्यमुपस्थिते ॥१४०७॥

गिरं कापुरुषस्येव क्लैव्यग्रस्तस्य तां प्रभोः । स्वाप्पास्तेऽनुशोचन्तः पुनरेवं बभाषिरे ॥१४०८॥

प्रतीकाराय नः शक्तिर्न चेदेवहतौजसाम् । मत्युर्निर्वाधिये कृत्ये प्रसरेयुः कराः कथम् ॥१४०९॥

प्रभून्पुरुषरूपान्स नूनं भूभृत्पुपोष तान् । दुःखेनोदरभरंस्तस्य ये तादृग्दैन्यमीयुषः[1] ॥१४१०॥ 1410

युगान्तानपि जीवित्वा कायः सापाय एव यः । तस्यागमात्रसाध्येऽर्थे धिग्दैन्यमनुजीविनाम् ॥१४११॥

योषितोऽपि त्रिशाल्यर्षि ये ध्यात्वा विस्मृतिं व्रजेत् । भर्तुस्नेहः स पुंसोऽपि यस्य कोन्यस्ततोऽधमः ॥१४१२॥

दीप्तस्येव ये शोकभयदैन्याद्यविक्रियाः । भर्तुः पश्यन्ति तेरेवा भूः सतीर्थाप्यपावनी ॥१४१३॥

क्षुत्क्षामस्तनयो वधूः परगृहप्रेष्यावसन्नः सुहृद्दुग्धा गौरशनाद्यभावविवशा हम्बारवोद्गारिणी ।
निष्पथ्यौ पितरावदूरमरणौ स्वामी द्विषन्निर्जितो दृष्टो येन परं न तस्य निरये भोक्तव्यमस्त्यप्रियम् ॥१४१४॥

भयेऽपि मानुषपशून्स तान्नृपतिरब्रवीत् । उदात्तकृत्स्नोऽप्याविश्य भूतैरिव विमोहितः ॥१४१५॥ 1415

एतस्मिन्पश्चिमे काले भुक्तं राज्यं यथा मया । जानेविशालेच्छतया तथान्यो नोपभोक्ष्यते ॥१४१६॥

---

१३९५. [1]) [illegible] supplied by $A_2$ in space left by $A_1$. १३९८. [1]) *Thus corr.* by later hand from $A_1$ [illegible]. १४०३. [1]) Emended; $A_1$ has written first °[illegible] and corrected this into °[illegible].—[2]) Thus cor. by $A_1$ from [illegible]°.—[3]) Thus corr. by $A_1$ from °[illegible].—[4]) [illegible] omitted in A. १४०४. [1]) Thus A; perhaps to b emended [illegible]. १४०५. [1]) Emended; A [illegible]. १४११. [1]) Emended; A [illegible].

यमः कुबेरश्चौराख्ये राज्ञां त्रितय इत्यसौ । मद्वेकशरणैवाभूत्ख्यातिरस्मिन्कलौ युगे ॥१४१७॥
रुद्रोपेन्द्रमहेन्द्राद्याः प्रयातारो यदध्वना । तपस्वितायां निम्नत्री तत्र मर्त्यस्य काः शुचः ॥१४१८॥
किं तु दूये यदेशा भूर्भुक्त्वा कुलवधूरिव । मत्तोवाप्स्यत्प्रचेटीव प्राप्ता प्रसभभोग्यताम् ॥१४१९॥
1420 इतः प्रभृति यः कश्चिद्राज्यस्यास्य गतौजसः । चक्रिकामात्रसाध्यत्वं जानपद्यां करिष्यति ॥१४२०॥
अलौकिके कृते यत्नसहस्य फलबन्ध्यताम् । प्राप्तोऽयमैरल्पसत्त्वैर्दर्पोऽनूनं हसिष्यते ॥१४२१॥
कार्यारम्भः फलोल्लासमालोक्य प्रायशो जनैः । अनानुगुण्यगणना कुमार्गैर्न विमृश्यते ॥१४२२॥
पक्षान्तकोटिरवलम्बनभूः स नेत्थं दुग्धेन यस्य मरणं धिगिये कैरियेत्थम् ।
पारं गते मथनकर्मणि मन्दराद्रेर्दोर्ध्यते त्रिगुणहेतुपरीक्षणेन ॥१४२३॥
शोकसंरम्भविक्षेपेऽपि श्रीगर्भस्वर्मदर्शयम् । जनोपजीवनार्थं यत्तज्ज्ञातं जायासिद्धये ॥१४२४॥
1425 उज्ज्वलेनापि सत्कृत्ये हसामोऽबोधचेतसा । हर्षितश्यामदशानं करिष्यन्ते विडम्बनाः ॥१४२५॥
ततोऽवमानाच्च मासास्त्रमाप्नोत्य विहस्तताम् । समर्थनेच्छुर्याच्यामि मृत्युमीदृशमप्यहम् ॥१४२६॥
स्वैरेव स हतो नो चेत्कस्तस्माद्दुष्टधां हरेत् । लब्धां रक्षितुमिच्छामि ख्यातिमेतेन हेतुना ॥१४२७॥
मुक्तापीडः पुरा राजा ज्वलित्वा मूर्ध्नि भूभुजाम् । कार्पण्यप्रणयं प्राप लब्धरन्ध्रैर्विरोधिभिः ॥१४२८॥
स ह्युत्तरापथे मार्गमपरस्थगितसैनिकः । मितानुगो हिते हठमार्गो भूदुर्गमेऽध्वनि ॥१४२९॥
1430 तं शाल्यो नाम सामन्तवैरल्व्यविवशो नृपः । बन्धुं प्रतिज्ञामकरोद्वाजिलक्षैर्युतोऽष्टभिः ॥१४३०॥
स सामप्रमुखोपायापायध्यानाग्रतमधीः । भवस्वाम्यभिधं कृत्यमपृच्छन्मुख्यमन्त्रिणम् ॥१४३१॥
असाध्यां सोऽपि निर्धार्य विनिपातप्रतिक्रियाम् । न्याये निश्चित्य नैयत्यं कर्तव्ये प्रत्युवाच तम् ॥१४३२॥
उपाययुक्तिप्रत्युक्तौ कृत्ये कीर्त्यभिमानिनाम् । निःसंभ्रमेव प्रतिभा लोभेनाक्षोभिते हृदि ॥१४३३॥
कृत्यं कृत्यविदो लब्धप्रसिद्धिपरिरक्षणम् । साम्राज्योपार्जनमुखो व्यापारस्त्वानुषङ्गिकः ॥१४३४॥
1435 गच्छञ्छरीरविश्लेषादपि भस्मावशेषताम् । कर्पूरः सौरभेणैव जन्तुः ख्यात्यानुमीयते ॥१४३५॥
शान्तयोर्जीवितस्थानं द्वयमत्यद्भुतं द्वयोः । अनङ्गस्याङ्गनापाङ्गः स्तोतृजिह्वा यशस्विनः ॥१४३६॥
ख्यातसंरक्षणं नाम जन्तोः कल्पान्तरस्थितिः । वर्तन्ते कीर्तिकायस्य संपूर्णाः परमाणवः ॥१४३७॥
धीरैर्विविधनिर्वेयो विरोधिष्वप्रधानवान् । यस्तेषामुन्नतिध्वंसाय यततेऽन्वहम् ॥१४३८॥
मुक्तावपातनहठव्यसनी विधाता स्वोत्पत्तिपद्मकुलजेऽपि सरोजषण्डे ।
संकोचिनि द्विजपतावपि शुद्धिमध्ये मातङ्गहस्तपतनैः कुरुतेऽवमानम् ॥१४३९॥
1440 ये हठापातिनो धार्तुर्धियं[1] ख्यातिनिपातने । रक्षितुं समुपेक्षन्ते तैः किं नाम —[2] रक्षितम् ॥१४४०॥
जातिः क्ष्माभृति वंशजाभ्यतया ख्यातिप्रतिष्ठामिमामुद्वीक्ष्यानलमुज्झितस्ववपुषः केऽप्यत्र देवाङ्कुराः ।
त्रातुं हन्त विशन्ति ये न विधिना क्रुद्धेन पृथ्वीभुजा ह्यारि हा स्वकरैर्गतागतखलीकाराणि संप्रापिताः ॥१४४१॥
भोगान्निर्वाणभूयिष्ठानिष्टान्प्राणानवेत्य तत् । प्रतिष्ठासौष्ठवत्राणे संरम्भं देव सांप्रतम् ॥१४४२॥

---

१४३०. [1]) Thus $A_1$; $A_2$ °वैरल्य°. १४४०. [1]) Thus corr. by $A_1$ or a later hand from °धातुरियं.—[2]) The *lacuna* not indicated in A; न supplied in R C.

दण्डकालसकाख्यस्य तद्रोगस्याशुकारिणः । पार्थिवाकस्मिकोत्थानं मिषादस्य प्रकाशयताम् ॥१४४३॥

श्वो वक्तास्म्यथ कर्तव्यं व्यापत्क्षपणक्षमम् । उक्त्वेति स महामात्यो निर्गत्य स्वगृहानगात् ॥१४४४॥

दण्डकालसकं दण्डधरो व्यञ्जिमिषान्ततः । अधीर इव चक्रन्द लुठत्सिस्पन्दलोचनः ॥१४४५॥ 1445

स्वेदसंवाहनस्वेदवमनाद्युपक्रमैः । निःशैथिल्यव्ययं तेन मुमूर्षुं तं जनोऽवदत् ॥१४४६॥

ततो निश्चितमृत्युत्वं प्रभुः कथयता कृतः । वाङ्मिश्रेशोमात्येन कृतशल्यनिवेदकः ॥१४४७॥

कर्तव्यशेषं दाक्षिण्यादनाख्याणमप्रतः । युक्तयोक्तनिष्ठुराचारमन्तस्तुष्टाव तं नृपः ॥१४४८॥

अभीतः सोढुमुग्रामां व्यथामस्मीति वादिना । राज्ञाप्यनलसादेहं ततश्चक्रेऽभिमानिना ॥१४४९॥

तेन प्राणानुपेक्ष्यैवमन्यव्याधिर्मनस्विना । ऊर्ध्वाधिरोहे सोपानं कृतं न निजकीर्तनात् ॥१४५०॥ 1450

एवं दैवोपनीतानामकस्मात्तीनां चिकित्सितम् । स्वधियामात्यबुद्ध्या वा पारमेति मनस्विनाम् ॥१४५१॥

इत्युक्त्वा विरतो वक्तुं बीजरक्षार्थमात्मजः । भोजो निसृज्यतां कोटमेवमूचेव मन्त्रिभिः ॥१४५२॥

तं राजपुत्रं प्रस्थानमङ्गलान्ते विनिर्गतम् । पुनर्व्यावर्तयामास दण्डनायकमोहितः ॥१४५३॥

सा धीः स साहसारम्भस्तद्वैकल्यमापदि । नष्टमेकपदे तस्य नाशकाले ह्युपस्थिते ॥१४५४॥

लक्ष्मीस्तडिल्लता[1] कीर्तिर्बलाका शौर्यगर्जितम् । प्रतापशक्रचापं च भागधेयाम्बुदानुगम् ॥१४५५॥ 1455

धीशौर्यादिगुणेन भाग्यसमये प्रागेव यक्तो नृपः शक्रस्याक्रमणं क्रियेत न कुतोऽनेनेति संभाव्यते ।
मौग्ध्यं पङ्कुजडान्धवच्च स ततो गच्छन्नभाग्योदये दत्तेऽनेन पदक्रमो भुवि कथं नाभेति संचिन्त्यते ॥१४५६॥

विरोधिप्रतिरोधाय तन्त्रिसैन्यं विसर्जितम् । नगरस्थमपि क्ष्मापाध्यवासधनमादधे ॥१४५७॥

दायादाभयणं राजभृत्याः सर्वेऽपि चक्रिरे । ये केचिद्धनलम्भोद्दे ते देदेदेव केवलम् ॥१४५८॥

पराभवपरं द्विषा न संकल्पमपि व्यधुः । किं वा सुमनसस्तैर्ये स्त्रीवदमुष्मत्रिरादरन्[1] ॥१४५९॥

यां क्षणधावलीनर्तक्यन्वये कापि नर्तकी । पुत्रीचक्रे क्वापि जातां जयमत्यभिधा च सा ॥१४६०॥ 1460

भूत्वा गृहीतकौमारा तरुण्युच्चलरागिणी । धनकुम्भावदद्दास्त्रमभजन्मण्डलेशितुः ॥१४६१॥

तस्मिन्हते तत्रैशाल्लापत्रपोच्चलमायया । तयैव दैवयोगेन पट्टदेव्या भविष्यते ॥१४६२॥ तिलकम्[1] ॥

आबद्धपङ्क्तयश्चर्मामुचलाभयिणीं व्यधुः । भूपालदर्शनेऽप्यस्तभीतयो राजसेवकाः ॥१४६३॥

वेतनस्वीकृतैः सर्वैः शिक्षाधायी पुरस्कृतः । लोभावमानात्युद्दोप्य योधभद्रां हरन्युधि ॥१४६४॥

मन्दप्रतापताप्राप्तो नर्मोक्त्या मर्मभेदकृत् । आहारादिक्षणे कर्ता प्रक्रियार्थनया कलेः ॥१४६५॥ 1465

अतीव प्रभुदानादिमाहात्म्याख्यानकोविदः । एक एकोकरोद्योधः पृतनानां विलक्षणम् ॥१४६६॥ युग्मम्[1] ॥

श्रीलेखाभ्रातृसूनोर्यस्तनयो व्यड्डमङ्गलः । मल्लजातीयकोपेन स राज्ञास्कन्द्य घातितः ॥१४६७॥

मातुलस्यात्मजा मल्लापत्यस्यास्तस्य गेहिनी । श्वश्र्वा समं स्ववसतीरादीप्य दहने मृता ॥१४६८॥

मौनव्रतादिनियमच्छन्नक्रौर्योन्नकोपमः । करोत्यभ्यन्तराभिचारान्मल्लः परमदाम्भिकः ॥१४६९॥

तदेव पुत्रराज्येच्छुर्बध्यतां[1] निर्भयं रिपुः । शाहिपुत्रीभिरित्यूचे तस्मिन्नवसरे नृपः ॥१४७०॥ 1470

---

१४५५. [1]) Emended; A लक्ष्मीस्तडि°. १४५९. [1]) Emended; A °मुष्मरुचि°. १४६२. [1]) A₁ writes here ३ instead of तिलकम्. १४६६. [1]) A₁ writes here २ instead of युग्मम् (युगलकम्). १४७०. [1]) Emended; A °वैध्यतां.

स्वयं प्रादात्समास्कन्दं द्वारि स्थितवतः पुरः । तस्य प्राणार्थिनो वाञ्छापूर्त्यै मल्लश्च निर्ययौ ॥१४७१॥
स हि हैराज्यसञ्ज्ञाभ्यां पुत्राभ्यां प्रार्थितोपि सन् । मुनिव्रतः सदाचारानुरोधात्त्यजनृपम् ॥१४७२॥
विश्वासाय परं राज्ञो भ्रातृजाग्रोर्भविष्यतोः । हैमातुरान्सल्हणादीशीर्षि दत्त्वावसद्गृहे ॥१४७३॥
आसेदुषे मुनिदशामाजन्मप्रीणितात्मये । तथा स तस्मै चुकोप प्रत्यासन्नवधो नृपः ॥१४७४॥
1475 स मुराभ्यर्चनं कुर्वन्नाहूतः परिपन्थिभिः । रेजे तेनैव वेषेण समराय विनिर्गतः ॥१४७५॥
उपवीत्यक्षसूत्राङ्कपाणिर्दर्भोज्ज्वलाङ्गुलिः । भस्मस्मेरललाटाङ्को जामदग्न्य इवापरः ॥१४७६॥
स्नानार्द्रधवलश्यामलोलधम्मिल्ललीलया । देहत्यागे प्रयागाम्बु धारयन्निव मूर्धनि ॥१४७७॥
उष्णीषी वीरपट्टेन खेटकेनोष्णवारणी । सोसिधारातीर्थपान्थो दण्डी खड्गेन दिद्युते ॥१४७८॥
भोगे पुरस्कृताः केचित्तद्भृत्याः पूर्वनिर्गताः । अमर्त्यनारीभोगेपि तस्यासन्नग्रभागिनः ॥१४७९॥
1480 द्वौ रथ्यावट्टविजयौ द्विजौ पौरोगवस्तथा । कोष्ठकः सज्जकाख्यश्च योद्धा युद्धे हता बभुः ॥१४८०॥
क्षतोप्युदयराजाख्यः क्षत्तायुःशेषसत्तया । प्राणैर्नियोगभागाजौ नाञ्जकोपि व्ययुज्यत ॥१४८१॥
विरोधियोधैर्निरन्ध्रं द्वारमालोक्य सर्वतः । त्यक्तकम्पो ददौ झम्पां स तेषामेव मूर्धनि ॥१४८२॥
शोचनेष्विव खड्गेषु खेटकेष्वम्बुजेष्विव । अरसा धवलो भ्राम्यन्राजहंस इवाबभौ ॥१४८३॥
क्षणाच्च ददृशे शातधारशङ्कुशताचितः । प्रवीरो वीरशयने क्षमो भीष्म इवापरः ॥१४८४॥
1485 सोप्यं गतायुधो राज्ञः किं नाभूत्तस्य तादृशः । चिच्छेद यः शिरः पृष्ठे हयं च भ्रमयन्स्मयात् ॥१४८५॥
राज्ञी कुमुदलेखाख्या मल्लस्याला च वल्लभा । गृहेऽन्वजुहुतां वीतिहोत्रे गात्राणि संभृते ॥१४८६॥
राजावकल्ययोः पत्न्यौ बाले सल्हणरल्हयोः । स्नुषे मल्लस्यासमती सहजा चाग्निसाद्गते ॥१४८७॥
सर्वोपभोगभागिन्यस्तदन्तःपुरयोषिताम् । परिवाराङ्गना बह्वी पट्टाश्चैव विपेदिरे ॥१४८८॥
महागृहाग्नितापेन शोकोष्णैश्च जलाञ्जुभि. । तमाम्भसो वितस्तायास्तीरे वामे बभूव तत् ॥१४८९॥
1490 प्रवर्धितायाः स्तन्येन द्रष्टुमक्षमया पयः । दाह्यमानं निवापेषु पुण्याश्चान्त्याख्यया समम् ॥१४९०॥
धात्र्या परास्मिन्वै तस्मिंस्तीरे स्वान्तःपुरे स्थिता । माता भविष्यतो राज्ञोर्[1]नन्दानिन्यकुलोद्भवा ॥१४९१॥
महानसाग्निधूमेन संलक्ष्यात्रीक्ष्य पुत्रयोः । सोत्कण्ठं कटकौ सौधादुदग्दक्षिणदिक्स्थयोः ॥१४९२॥
कियतां दिवसैरेव पुत्रौ शत्रोः पितृद्विषः । जामदग्न्याविनं वंशे शम्भ्वेति नृपतिं सती ॥१४९३॥
अनिषण्णेव दीप्ताग्नौ गृहे स्वं निरदाहयत् । प्रनृत्यन्तीभिरालीभिरिव ज्वालाभिरावृता ॥१४९४॥
1495 वधे दर्शनपालस्तु नृपे प्राप्ते प्रतिक्षणम् । अन्यङ्गैरन्तरायैरायुःशेषेण रक्षितः ॥१४९५॥
वर्षमात्रावशेषायुर्यक्षा द्रोहेण रक्षितः । सोव्रमानस्य पूयस्य रोगजस्य च भुक्तये ॥१४९६॥
कृष्णभाद्रनवम्यां तं वधं श्रुतवतोः पितुः । मल्लात्मजन्मनोः शोकः कोपेन निरपीयत ॥१४९७॥
आत्रङ्गिपुरकग्रामात्प्रज्वलत्क्रोधवह्निना । अधावद्विजयक्षेत्रं सोन्येद्युरथ सुस्सलः ॥१४९८॥
योद्धुमभ्यापतन्तं तं चन्द्रराजोथ निर्गतः । पट्टदर्शनपालाद्यैः ससैन्यैः पर्यवर्जयत ॥१४९९॥
1500 निर्जितपेक्षितबके स चिरं तत्र दुष्करम् । स्वल्पसैन्योपि संग्रामे भूरिसैन्येन शत्रुणा ॥१५००॥

१४७७. [1]) Emended; A °धम्मिल°. १४८०. [1]) Emended; A योधा. १४८१. [1]) Emended; A क्षतायुः°. १४९१. [1]) Emended; A राज्ञो नन्दा°. १४९९. [1]) Emended; A योद्धुमस्याप°.

अक्षोटमल्लः समरे तत्र मल्लश्च चापरिः । अयातां राजपुत्रौ द्वौ स्वर्गस्त्रीभोगभाजनताम् ॥१५०१॥
रजोन्धकारे क्वेन्दुद्योतिन्यालिङ्गितो हतः । चन्द्रराजः सुरस्त्रीभिरिन्दुराजो[1]स्य चानुग[2]ः ॥१५०२॥
तस्मिन्नपि हते वीरे चक्रे हर्षमहीभुजः । आशारविन्दिनीमूलकन्दनिर्दलनं विधिः ॥१५०३॥
पद्मारथः प्रविश्याथ विजयेशाङ्गनं भयात् । प्रविष्टे सुस्सले तेषां द्वारं दत्तार्गलं व्यधुः ॥१५०४॥
आस्थानीयः परं पद्मनामा युद्ध्वा हतो बहिः । लक्ष्मीधरो मर्तुमिच्छुर्बद्ध्वा नीतः स डामरैः ॥१५०५॥ 1505
विजयेश्वरगञ्जापसौधारूढोथ सुस्सलः । अधो ददर्श तान्सर्वान्पशूनिव भयाकुलान् ॥१५०६॥
धूर्तः स दत्तमध्यस्थो दत्तानीतवान्पुनः । षड्दर्शनपालौ द्वौ तेषां पूर्वं निजान्तिकम् ॥१५०७॥
निःश्रेण्यभावादारोढुमक्षमौ सुस्सलानुगैः । तौ मृगाविव निर्बद्धपाणी रज्ज्वाधिरोपितौ ॥१५०८॥
तयोर्विदितागमनं क्रीडादर्शयमानयोः । प्रतिश्रुत्याकरोद्धीमान्सुस्सलो म्लानिमार्जनम् ॥१५०९॥
स्निग्धोक्त्या मृष्टमांसादिभोगैस्तस्यामतस्तयोः । तस्मिन्नेवाह्नि मन्दत्वं विदेशौल्लघुक्त्यमाययौ[1] ॥१५१०॥ 1510
केनाप्यधिष्ठितश्चक्रे परेद्युर्यस्तु सुस्सलः । जात विभ्रमजोप्यङ्गरोमाञ्चयति तत्स्मृतिः ॥१५११॥
आसटो नृपतिर्हर्षभूभर्तुर्मातुलात्मजः । उमाधरमुखाश्चान्ये राजानो यत्र च क्षयः ॥१५१२॥
राजपुत्रहयारोहतन्त्रिसामन्तसंततेः । न यत्र गणना काचित्सैन्येष्वष्टादशास्वभूत् ॥१५१३॥
विजयेशाङ्गनस्थानां द्वारमुत्पाट्य सोविशत् । एकाक्येवान्तरं तेषां सासिराक्षेपरूक्षवाक् ॥१५१४॥
स तत्र साक्षिणं कृत्वा क्षमावान्विजयेश्वरम् । प्रतिश्रुत्याभयं तेभ्यः प्रणतेभ्यो विनिर्ययौ ॥१५१५॥ 1515
पुनः सौधममारूढस्तान्सर्वानर्पितायुधान् । रज्जुबद्धकरान्भृत्यैरानिनाय ततोन्तिकम् ॥१५१६॥
स्वर्णरूप्यत्सरुश्रेणिपूर्णायुधपरिष्कृता । कीर्णपुष्पोपकारेव सुस्सलास्थानभूरभूत् ॥१५१७॥
विन्यस्य पशुपालानां पशूनिव स तान्करे । संरक्षितुं डामराणां स्वयं तत्राकरोत्स्थितिम् ॥१५१८॥
ततः सुवर्णसानूरग्रामं स प्राप्य बन्धनात् । षड्दर्शनपालौ द्वावौज्झीद्देशान्तरोन्मुखौ ॥१५१९॥
षड्ढः शूरपुरं प्राप्तो भार्ययागतया गृहात् । संसृष्टमानोप्यस्मार्षीदल्पसत्त्वो दिगन्तरम् ॥१५२०॥ 1520
यावन्माघाप्यौत्रिती सा विदेशोन्मुखलक्षणा । द्वौ धुर्दर्शनपालस्य पट्टमैक्या विलम्बिता ॥१५२१॥
अहंपूर्विकया राज्यं जिघृक्षुरथ सुस्सलः । नगरासादनायैच्छदभिसंधातुमग्रजम् ॥१५२२॥
समानप्रायवयसो[1]ः सर्वतोप्यमयोरभूत् । यस्माज्ज्येष्ठकनिष्ठत्वं प्रक्रियारहितं तयोः ॥१५२३॥
द्वित्रेष्वहःसु यातेषु क्रामंस्तां तां भुवं बली । उदतिष्ठद्राजधान्याः सविषादेव सुस्सलः ॥१५२४॥
निर्दग्धुं कलशात्[1] तत्प्रसुतं भूपतेः सुतः । बुप्पापराभिधो भोजदेवो योद्धुं विनिर्ययौ ॥१५२५॥ 1525
आस्यवच्चक्रमानेन कुमाराणां प्रयुक्तताम् । यो माध्यर्थबलात्पित्रा हतौजा विदधे सदा ॥१५२६॥
कृतो यत्यन्तराभावात्तदानीं तु निरङ्कुशः । केषु केषु न युद्धेषु योधानामग्रणीरभूत् ॥१५२७॥
प्रपितामहतुल्यः स स्वाभ्यासेनेव वर्धितः । कुर्यादुत्सातसंपत्तौ निर्दोषाः न किं दिशः ॥१५२८॥
नाभीतिरिश्राम कश्चित्प्रयोगस्तु विहीयते । अस्ताविलम्भ्यते सर्वो विपर्ययस्तु दुर्लभः ॥१५२९॥

---

१५०२. [1]) Thus corr. by $A_1$ from °निर्मन्द्रराजौ°.—[2]) Thus corr. by $A_1$ from चारसज्ञः. १५१०. [1]) Emended; A °स्त्र°. १५२३. [1]) Emended with C; A वयसो. १५२५. [1]) Thus $A_1$; C कलशात्मजं; doubtful.

1530 स राजसनुरुद्दामविक्रमस्य रिपोरभूत् । अत्युग्रामोधिकं जातस्तिमिरिव तिमिंगिलः ॥१५३०॥
कृतप्रभावं पितरि प्रपन्ने निगर्हणां नार्हति तत्प्रसूतिः ।
कल्कीभवेत्तिलमुज्झ्यते किं तैलेन वस्तः कुसुमाधिवासः ॥१५३१॥
देवेश्वरात्मजः पित्र्यः पार्थिवेनाधिगौरवम् । वर्धितोप्यभजत्पापः प्रतिपक्षसमाश्रयम् ॥१५३२॥
ततस्तदात्मजो भिक्षुः प्रस्थिते सुस्सलाहवे । नृपेणार्थ्यमानोपि खेदात्तावत्समीक्षितः ॥१५३३॥
1535 ज्ञास्यस्यथान्तरं राजन्ममेत्युक्त्वा विनिर्गतः । खड्गधाराजलैर्मानी म्लानिमक्षालयद्रणे ॥१५३४॥
सर्वनाशादभूद्दुःखं तथा न हृदि भूपतेः । तदन्तरापरिज्ञानात्कृतघ्नस्य यथाधिकम् ॥१५३५॥
विमर्शैर्नित्यसंमूढा जानते त्वन्तरं नृपाः । तदा सज्जना यदा तेषां प्रलापैरेव सत्क्रिया ॥१५३६॥
भोजेन निर्जितानीको विद्रुतः सुस्सलो रणात् । लवणोत्सं पलाय्यागाद्दीर्घितगतागतः ॥१५३७॥
प्रत्यावृत्तस्ततो भोजस्तीव्रातपकदर्थितः । उद्यानान्तस्तनुं तल्पे पित्रा सह मुहुर्जहौ ॥१५३८॥
अथोत्तरेणोदतिष्ठन्नादः पारावृषीकसः । ज्यायान्मल्लात्मजः प्राप्तः सेतुराक्रियतामिति ॥१५३९॥
1540 सुस्सलेन हृतं राज्यं मयायासि हृतं यदि । स दण्डनायकेनाभूत्संदिष्ट इति पापिना ॥१५४०॥
अतो जवेन चाविक्षत्प्रथमं चावधीन्मृधे । नरेन्द्रेश्वरदेवापवर्तिनं देवनायकम् ॥१५४१॥
अथोज्जनाम स्थानस्थः सह व्यूहेन सादिनाम् । नगराधिकृतो नागस्तस्यामाभूरिसैनिकः ॥१५४२॥
यथास्थां पार्थिवोवश्यप्रधानप्रत्यमन्विते । बभार लोष्टलाशङ्कां सुस्सलाहवनिर्गतः ॥१५४३॥
अल्पसैन्यो मल्लसूनुर्योधस्तस्मादशङ्कत । अपनीतशिरस्त्राणस्तावत्स समवन्दत ॥१५४४॥
1545 मण्डलेश्वरवर्मा स प्रियं शम्भोरविभ्रमन् । ऊचे स्वबेरम याहीति स च पापस्तथाकरोत् ॥१५४५॥
तस्य द्रोहफलं दृष्टमेतस्मिन्नेव जन्मनि । मण्डले वहनन्यस्मिन्भिक्षित्वा जीवितं जहौ ॥१५४६॥
ततो राजा सरित्तीरं प्राप्तः प्रैक्षत डामरान् । सेत्वग्रे श्यामविकृतान्दावदग्धान्द्रुमानिव ॥१५४७॥
बलक्षवारबाणस्य तेषां मध्ये वपुर्बभौ । परं जनकचन्द्रस्य शुक्रस्येव तमोन्तरे ॥१५४८॥
महासेतुः स घटितो राज्ञा नौभिः स्वसिद्धये । पर्यवस्यद्विधिवशाच्छत्रूणां सिद्धये पुनः ॥१५४९॥
1550 अथारुरुहुरादाय वह्निं हर्म्यचतुष्किकाम् । शातद्वारे मर्तुकामा देव्यः शाहिसुतादिकाः ॥१५५०॥
लोकोपि विरक्तः सेत्वग्रे दायादैः सह संगरम् । ददर्शाभ्रवुजीलाग्निमिव निर्विक्रियः प्रभोः ॥१५५१॥
विजये सावशेषेसौ वह्निदानोद्यताः प्रियाः । अनिशं वारयन्नाजौ सेत्वग्रे रणमग्रहीत् ॥१५५२॥
अथ विन्यस्तवर्माणं राजसेनागजं शरैः । सेतोर्जनकचन्द्राद्याः प्रमुखस्थमताडयन् ॥१५५३॥
स विद्धो मर्मसु शरैः पूत्कारोद्गारकृद्गजः । स्वचमूमेव चरणैरमृद्नाद्विमुखीकृतः ॥१५५४॥
1555 विधिनेव विरुद्धेन सिन्धुरेण कदर्थिता । भयस्यापि हयारोहा समपद्यत वाहिनी ॥१५५५॥
सेतुं तीर्णस्ततो वैरिसैनिकैर्विमुखीकृतः । शातद्वाराक्रन्दं ग्रस्तः साश्वारोहोविशन्नृपः ॥१५५६॥
तदाक्षमेघंरहितो रोषोपि ददृशे न यः । भुञ्जानस्यापि यस्यास्यमुद्रा नैव व्यभाव्यत ॥१५५७॥

१५३०. ¹) Emended with C; A जाता तिमेरिव. १५३१. ¹) Emended; A कल्की°, corr. by later hand into कल्की°. Cf Böhtlingk, *Sanskrit Wörterbuch in kürzerer Fassung*, vi. 214 b. १५५२. ¹) Emended; A सावशेषौसौ. १५५०. ¹) Emended; A °चेष्टर°.

वार्तामबुद्ध्वा पुत्रस्य नृपतिर्व्याकुलीभवन् । पदवीं भोजदेवस्य याहीत्याह स्म चम्पकम् ॥१५८७॥

प्रयागमात्रानुचरो राजन्संपत्स्यसे क्षणात् । तस्मान्मामपि मा त्याक्षीरित्यूचे तं स निःश्वसन् ॥१५८८॥

सोन्तर्बाष्पस्तं बभाषे निर्द्रोहोसीति कथ्यते । त्वयाप्यस्मिन्क्षणे कस्मात्तस्मादुल्लङ्घ्यते वचः ॥१५८९॥

1590 विना पुत्रं न पश्यामि सार्केपि दिवसे दिशः । त्वं तस्मिन्नङ्कसंवृद्धे न मन्युं कर्तुमर्हसि ॥१५९०॥

अभ्रामिमित्तं कलहस्तेष्वेव दिवसेष्वभूत् । मन्त्रिणो राजपुत्रेण तेन तस्याभिमानिना ॥१५९१॥

गिरा प्रभोरुपालब्धस्तदागूरणगर्भया । स लज्जानम्रवदनो राजपुत्रानुसार्यगात् ॥१५९२॥

पञ्चाशताश्ववारैः स भ्रातृभृत्यादिभिः समम् । उत्तीर्णः सरितः पारमात्मना पञ्चमोभवत् ॥१५९३॥

भ्रातृद्वयेश्ववारे च शैयाराजात्मजे पथि । हताश्वे पतिते सोभूच्छनकेनान्वितो भ्रमन् ॥१५९४॥

1595 अनाप्नुवञ्जल्लनोर्वार्तां वा वर्त्मनाप्यटन् । गलितेहनि संप्राप वितस्तासिन्धुसंगमम् ॥१५९५॥

एवमाप्तान्परान्पुत्रमन्वेष्टुं प्राहिणोन्नृपः । अन्येपि तन्मिषं लब्ध्वा तस्य पार्श्वादथाचलन् ॥१५९६॥

उत्कोचाद्यार्थिना क्रुद्धं राजपुर्यादिविग्रहे । योग्यानसहता भृत्यान्निःसारः कटकः कृतः ॥१५९७॥

लोहरप्रस्थितौ विघ्नं राज्ञा पुत्रस्य कारितः । प्रवेशितः पुरं वैरी राजन्यन्याहवाकुले ॥१५९८॥

सर्वस्वध्वंसिना येन स एव नृपतेरभूत् । तदाप्युचितकर्तव्यनिवेष्टा दण्डनायकः ॥१५९९॥ तिलकम्॥

1600 राज्ञः कृत्स्नाजसत्त्वस्य शृण्वतो बहुमन्त्रितम् । नैकत्र रुचिः कर्तव्ये काप्यधीरधियोभवत् ॥१६००॥

सर्वैर्यथा निखिलरन्ध्रमुखेन वंशाः संपूरिता न खलु शब्दमपाकरोति ।
तैस्तैस्तथा बहुपथप्रचयेन मन्त्रः संकल्पितः किल न निश्चयमभ्युपैति ॥१६०१॥

भाग्यक्षयस्यैतदेव लक्षणं प्राकृतोपि यत् । अपृष्टः कथयेद्धार्ष्ट्यान्मन्त्रं स्वहृदयोचितम् ॥१६०२॥

त्रैलोक्यनाम्ना सूतेन शंसता दण्डनायकम् । निरोध्य वल्गामित्यूचे भूयः क्ष्माभृद्रणोन्मुखः ॥१६०३॥

एकाङ्गैः साश्ववारैः प्राग्जिगाय त्वत्पितामहः । तद्ध्वामोक्षपटलोपान्तं तत्संमहेच्छया ॥१६०४॥

1605 पदातिप्रायसैन्यांस्तान्निहन्मः संहतान्रिपून् । पश्चान्निपत्य तैः साकं श्येना इव विहंगमान् ॥१६०५॥

ततश्चिचलिषावेव राज्ञि तत्कटको द्विषः । सवृष्ट्यम्बुदतो रङ्गप्रेक्षिलोक इवागमत् ॥१६०६॥

पारेवितस्तं ग्रामेभ्यः पाथेयायात्मजन्मनः । स शैयाराजजन्मभ्यो रत्नग्रैवेयकाद्यदात् ॥१६०७॥

आरामिकैस्तैः संप्राप्ते राजचिह्ने क्षणादिव । तेजःस्फारोर्जितो राजा गतभीर्ददृशे जनैः ॥१६०८॥

पदे पदे श्रूयमाणसैन्योक्षपटलादिषु । स्थानेषु चाभ्रमीत्कश्चिन्न च तस्यापदन्तिकम् ॥१६०९॥

1610 संश्रयार्थ्येव बभ्राम सायं वेश्मानि मन्त्रिणाम् । प्रवेशं प्रददौ चास्य न कोपि द्वारि तस्थुषः ॥१६१०॥

प्रायोपवेशकुशलाः शक्तास्त्वन्ते न कुत्रचित् । मिथ्यासंभावनाभूमिर्भूपानां ब्रह्मबन्धवः ॥१६११॥

ये केपि द्वेषे तस्यास्मिंस्तेष्वास्थया भ्रमन् । प्रविविक्षुर्गृहान्प्राप कपिलाख्यस्य मन्त्रिणः ॥१६१२॥

तस्मिंल्लोहरकोट्टस्थे तत्पत्न्या स्थातुमर्थितः । नैभिश्च कोट्टं गन्तुं न प्राविक्षद्विमोहितः ॥१६१३॥

---

१५९४. ¹) Emended; A भ्रातृद्वारि.—²) Thus A; cf. vii. 1607. १५९७. ¹) Emended; A °निसारः. १५९८. ¹) Emended; A राजपुत्रस्य. Cf. vii. 1453. १५९९. ¹) A₁ writes here ३ instead of तिलकम्. १६०४. ¹) Emended; A प्राग्जिगायस्तरित्सिता°, C °गाय तत्पिता°. १६०७. ¹) A₁ शैया ‒ ‒ राजजन्मभ्यो, ज subsequently supplied by A₁ or later hand · but comp. शैयाराजात्मजे. vii. 1594.

आर्तस्य तस्य तत्पुत्रैः पितृद्रोहकारिभिः । ऋणिकैरुत्तमर्णस्य स्वं निःस्वैरिव गोपितः ॥१६१४॥
सदोषोस्मीति सोज्ञासीत्स्वयं शृण्वन्विगर्हणाम् । तदैव गोपिताशेषकृत्यो दुर्मन्त्रिभिः पुरा ॥१६१५॥ 1615
गृहीतसर्वनैराश्यः पार्श्वस्थेष्वप्यविश्वसन् । अभूत्प्रसुप्तमुत्तीर्णो नितरां विरलानुगः ॥१६१६॥
प्रख्यापयन्तः संभूतिं षट्त्रिंशति कुलेषु ये । तेजस्विनो भास्वतोपि सहन्ते नोच्चकैः स्थितिम् ॥१६१७॥
तेष्वन्तेनन्तपालाद्या राजपुत्रास्तमत्यजन् । सान्द्रतां दधति ध्वान्ते स्थगिताश्वाः पदे पदे ॥१६१८॥[1]
वाहनाज्जोहिलमठोपान्तं प्राप्यावतीर्णवान् । स दण्डनायकेनापि तत्यजे सानुजन्मना ॥१६१९॥
इहास्मच्छ्वशुरावासस्तत्र वस्तुमिमां निशाम् । वीक्ष्य ते स्थानमेष्यामीत्युक्त्वा व्याजेन सोचलत् ॥१६२०॥ 1620
यियासोरनुगं तस्य पाथेयार्थे प्रयागकः । ययाचे कुकमस्मै स प्रादात्सक्तून तत्पुनः ॥१६२१॥
एकांशुकावशेषश्रीस्ततो वा शेषजीवितः । प्रयागशेषानुचरो नृपतिः समपद्यत ॥१६२२॥
सूदश्चम्पकभृत्यस्य जलकाख्यस्य तत्क्षणम् । मुक्तो नामान्तिकं प्राप्तो नृपतेराप्ततामगात् ॥१६२३॥
उदीपविहितैः खातैरपि दुःसंचरा क्षितिः । आम्यतस्तानुयाचेति नारी काचिद्गृहान्तरात् ॥१६२४॥
ततस्तीरे वितस्ताया निषण्णेस्मिन्प्रयागकः । गन्तुं जयपुरं कोट्टमाजुहाव स नाविकान् ॥१६२५॥ 1625
स हि प्राक्संविदं चक्रे तत्रत्यैः सह शास्त्रिभिः । नृपं प्रेयाभयं नेतुं भीमादेवस्य मन्दिरम् ॥१६२६॥
उच्चलाभ्यर्थिनाप्यूचे भीमादेवेन येन सः । राज्ञोनुगो गमिष्यामि प्रविष्टस्योपवेशनम् ॥१६२७॥
नौचरैरागतां नावमारुरोह न भूपतिः । नाशोन्मुखः समासन्नदृष्टिपातभयाकुलः ॥१६२८॥
पर्यापतत्कालकरस्थभोगिसंदर्शनेनेव मतिप्रदीपः ।
क्षिप्रं प्रशाम्यत्युन्मुखतामुपैति विनाशकालेषु शरीरभाजाम् ॥१६२९॥
तस्मिन्द्रोहक्षमिक्षेपि यस्य मानव्रतः परम् । अनन्यालोकिनी दृष्टिर्भेजे कुलवधूव्रतम् ॥१६३०॥ 1630
नीलाश्वीयः स बिम्बाख्यो डामरैरमिलितोहितैः ।
तदापि प्रययौ राज्ञो विस्मृतिं संश्रयार्थिनः ॥१६३१॥ युगलकम् ॥
ततः प्रावर्तत त्यक्तुं वारि वारिमुचां गणः । क्ष्मामिव क्षालयितुं द्रोहस्पर्शेन दूषिताम् ॥१६३२॥
भूर्निर्जना वृष्टिपातस्तमिस्रा दुःसहायिता[1] । वैरिभीतिरिति प्राभूत्किं किं तस्य न दुःखदम् ॥१६३३॥
इति वृत्तानुरोधेन धिग्दुष्कर्मविधायिनाम् । अस्मर्तव्यमपि व्यक्तं नाम वाहिष्यतेधुना ॥१६३४॥
सोमानन्दाभिधानस्य पूज्याः सिद्धस्य देवताः । सोमेश्वराभिधाः सन्ति काश्चित्पितृवनान्तरे[1] ॥१६३५॥ 1635
तल्लाञ्छिताङ्गना तुङ्गतरुप्रच्छन्नवाटिका । अभूद्गुणाभिधानस्य कुटी क्षुद्रतपस्विनः ॥१६३६॥
वारस्त्रियां स विरहभुजंगीतिप्रसिद्धया । भिक्षाख्यया समं भेजे चेष्टितं कुट्टिनोचितम् ॥१६३७॥
तस्य प्रतापगौरीशदेवागारान्तिकस्थितेः । कुटीं मुक्तेन तां निन्ये क्ष्माभृत्तस्तु स तां क्षपाम् ॥१६३८॥
मुक्तमालम्ब्य नृपतिस्तमालम्ब्य प्रयागकः । यान्ति स्म विद्युद्द्योतेन क्ष्मां पश्यन्तोन्तरान्तरा ॥१६३९॥
निश्च्यीवोद्गसंस्यूतकुलवासाः स्खलन्नृपः । स तां प्रयागमुक्ताभ्यां कथंचित्प्रापितः कुटीम् ॥१६४०॥ 1640

१६१८. [1]) $A_1$ writes here ३ (instead of कुलकम्?). १६१९. [1]) Emended; A सोनुजन्मना. Cf. vii. 894. १६२०. [1]) Emended; A निशम्. १६२१. [1]) Emended with C; A सं पुनः. १६२३. [1]) Emended; A भृत्यावेक्ष्य. १६३१. [1]) Emended; A डामरामि°. १६३३. [1]) Thus A. १६३५. [1]) Thus $A_2$; $A_1$ °वनान्तिके. १६३६. [1]) Thus $A_2$; $A_1$ अनुच्छिन्नाग्नि°. १६४०. [1]) पारशिवा supplied by $A_2$ in space left by $A_1$. १६३४. [1]) Emended; A वाच्यम्.

तदा कुमन्त्रिनिष्कृष्टं स व्यापद्वारणक्षमम् । शोचन्सस्मार कन्दर्पं हस्तं दैत्यमिवोत्पलः ॥१६४१॥
प्राकारमूर्ध्ना मुक्तेन प्रविष्टेन हृतार्गलाम् । नृपः कुटीप्राङ्गणोर्वीं विवेशाश्रिततापसाम् ॥१६४२॥
विशतोश्मक्षतः पादस्तस्यासृग्दक्षिणोस्यजत् । मेने तेनानिमित्तेन स मृत्युं समुपस्थितम् ॥१६४३॥
कुट्यामर्गलरुद्धायां निषण्णस्याङ्गने ययौ । रात्रिर्भीतिमतो[1] भीमा तस्य घोराभ्रमालिनी ॥१६४४॥
1645 पङ्कोपलिप्तः पङ्काङ्कस्थण्डिलस्थो निनाय ताम् । दासकम्बलिकाच्छन्नगात्रो वृष्टिधुतरां निशाम् ॥१६४५॥
विसस्मारान्तरादुःखमासीनप्रचलायितैः । निर्निद्रस्स्वभयच्छत्राद्भ्रश्यन्निव समाकुलः ॥१६४६॥
कोहं केनाभिभूतोद्य क्व वर्ते कोनुगोधुना । किं कृत्यमिति निध्याय मुहुर्मुहुरकम्पत ॥१६४७॥
हृतं राज्यं प्रिया दग्धा भ्रष्टः सूनुरबान्धवः । जातोस्म्येकाक्यपाथेयो लुठन्भिक्षाभुजोङ्गने ॥१६४८॥
इत्येकैकं च निध्याय दुःखं नैक्षिष्ट सोपरम् । प्राप्तावसादं शोचन्तमात्मतुल्यं कथास्वपि ॥१६४९॥ युग्मम् ॥
1650 भोजस्तु वाजिभिर्द्वित्रैरवशिष्टैः समं व्रजन् । हस्तिकर्णान्तरं प्राप निर्गत्य नगरान्तरात् ॥१६५०॥
व्रजतस्तस्य धीरासीन्नियतं पञ्चषैर्दिनैः । पुनः संप्राप्नुयां राज्यं यदीन्द्रोपि भवेद्रिपुः ॥१६५१॥
गर्भवास इव पौरुषे स्फुरन्किं न कर्म पुरुषश्चिकीर्षति ।
कर्मवायुरिव तस्यशान्हठान्मूढमेव कुरुते तु तं विधिः ॥१६५२॥
मातृभिर्दत्तपाथेयं भृत्यं नागेश्वराभिधम् । प्रतीक्षमाणश्चक्रे स रङ्गवाटान्तरे स्थितिम् ॥१६५३॥
शून्ये देवगृहे तत्र तिष्ठञ्छ्रुत्वा समागतम् । स निर्ययौ तेन तस्मिन्निःशङ्कं प्रहतं पुनः ॥१६५४॥
1655 तत्र मातुष्कृतद्रोहे क्षत्रधर्मादविच्युतः । राजपुत्रः स यच्चक्रे न तत्कस्याद्भुतावहम् ॥१६५५॥
स सिंह इव संहारं कृत्वा युधि विरोधिनाम् । अस्त्राङ्गरागलिप्ताङ्गो वीरशय्यामभूषयत् ॥१६५६॥
भ्रातास्य मातुलापत्यं विपेदे पद्मकाभिधः । खेलो लालितकश्चैव संख्येसंख्यपराक्रमः ॥१६५७॥
मठं सूर्यमतीदेव्याः शर्वर्यामु लोविशत् । भ्राताप्यस्य रणभ्रान्तो लवणोत्सात्समाययौ ॥१६५८॥
हतं भोजं श्रुतवतोर्हर्षमात्रे स्थिते तयोः । मनस्युत्खातशूलेभिरेवैका पर्यशिष्यत ॥१६५९॥
1660 प्राप्तमप्राप्तवद्राज्यं तथापि प्रत्यभात्तयोः । प्रवासे विस्मृते राज्यसुखे लब्धे च कुत्रचित् ॥१६६०॥
प्राह्णे कुतश्चिदानीतो मुक्तेनान्विष्य तापसः[1] । प्रणम्य नृपतिं चक्रे स्वकुटीं तां[1] निरर्गलाम् ॥१६६१॥
तां दंश[1]मशकाकीर्णामास्तीर्णतृणविष्टराम् । कृताम्बुसेकां मुक्तेन नृपतिः प्राविशत्कुटीम् ॥१६६२॥[2]
यद्गिरा बहुमानोभूच्छ्रुतया भूभुजामपि । स भूभृच्चाटुकारित्वं भीतो भिक्षाभुजोप्यगात् ॥१६६३॥
भिक्षाकस्योचितं ग्राम्यमनुदात्तं त्रपावहम् । आलापाभ्यवहाराभ्यां तस्य शृण्वन्स विव्यथे ॥१६६४॥
1665 स भिक्षाकः प्रयागेन विक्रयायाधरांशुकम् । निजं दत्त्वा विससृजे विपणिं भोज्यसिद्धये ॥१६६५॥
कदुक्तिः कटुवागये परोक्षं भेदभीतिकृत् । कुतापसो दौस्थ्यहेतुर्नृपस्यारिर्यथाप्यभूत् ॥१६६६॥
मध्याह्ने स्कन्धविन्यस्तभोज्यभाण्डकरण्डिका । तपस्विन्याप्यथानिन्ये तेन क्षुद्रतपस्विना ॥१६६७॥
भृत्यभिक्षाकयोः पूर्वं स्त्रिया अप्यथ पार्थिवः । स्वं वीक्ष्य गोचरीभूतं निराशो जीवितेभवत् ॥१६६८॥

---

१६४४. [1]) Emended with C; A °भीतिवतो. १६६१. [1]) प्राह्णे कुतश्चि, पस., चक्रे स्वकुटीं तां, supplied by $A_2$ in space left by $A_1$. १६६२. [1]) Thus corr. by $A_2$ from $A_1$ चाषम°.—[2]) Emended; A °मेषका°.

तेन प्रयागोपहृतं भोज्यं तदनुरोधतः । स्पृष्टमेव न भुक्तं तु तीव्रदुःखोल्बणात्मना ॥१६६९॥

का वार्तेति प्रयागेन प्राङ्गनस्थेन पृष्टया । तापस्या माम्बया व्यक्तमुक्तो भोजवधस्ततः ॥१६७०॥ 1670

मिथ्यैतादिति तेनार्थं कथ्यमानोऽपि पार्थिवः । भुक्तिं तामङ्गशकुनं परीक्ष्याबुद्ध नान्यथा ॥१६७१॥

नारोहति गिरं शत्रोरप्रियाख्यायिनोऽपि यत् । तस्य संववृते दुःखं निमग्नस्य तदापदि ॥१६७२॥

स शोचन्नात्मजं बाल्ये भीत्यै यां यन्त्रणां व्यधात् । आजन्म दुःखदायित्वं मेने तस्यात्मनस्तया ॥१६७३॥

हतः स समरे वृत्त्या प्रवीरस्पृहणीयया । जज्ञे तेनातिवात्सल्यादङ्कशायीव पालितः ॥१६७४॥

गात्रेषु हारान्पुत्रस्य यौवनव्यूढवक्षसि । पश्यन्नात्मनि संकल्पैर्विह्वलः सोऽकृताशिषः ॥१६७५॥ 1675

रक्षणीयो हतो बालो वृद्धस्त्वेव स्वजीवितम् । रक्षाम्यनुचिताचारैर्जिह्रायेति स चिन्तयन् ॥१६७६॥

एवं स पुत्रशोकेन धृताश्राण्यव्ययो व्यथन् । निनाय तापसावासे द्वितीयामपि यामिनीम् ॥१६७७॥

कृतार्थनः प्रयागेन प्रयातुं भगवन्मठम् । शोकहारितधी रात्रौ न संकल्पमपि व्यधात् ॥१६७८॥

लम्बेन्दुवदनेसान्द्रावश्यायाम्भोश्रुवर्षिणी । रथाङ्गाक्रन्दिनी रात्रिः सशोकेवाथ सागमत् ॥१६७९॥

क्षुत्पिपासापरिक्षामं प्रभुं वीक्ष्य स तापसः । प्रार्थ्यते स्म प्रयागेन प्रातर्भोक्तव्यसिद्धये ॥१६८०॥ 1680

उपनिन्ये विनिर्गत्य प्रविष्टस्तापसस्तयोः । सव्यञ्जनान्नपूर्णे द्वे पात्रे -- क्षणात्पुरः ॥१६८१॥

कस्यापि गृहिणो यागोत्सवादिते मयाहृते । तस्मिन्नित्युक्तवत्यूचे विनिश्वस्य प्रयागकः ॥१६८२॥

राजन्स्वामिवियोगेऽस्मिन्पश्य लोकस्य सुस्थताम् । स तं जगाद विहसन्किं मूढ इव भाषसे ॥१६८३॥

यो गतो गत एवासौ तत्क्षत्या नापरः क्षतः । सर्वो निजसुखापेक्षी न किंचित्कोऽपि शोचति ॥१६८४॥

लोकैकचक्षुषि गते परलोकमर्के लोकः स्वपित्यखिल एव सुखं गृहेषु ।
कोऽन्यो विचिन्तयितुमर्हति विश्वमेतत्सिद्धेन्मया विरहमेत्य कथं किलेति ॥१६८५॥ 1685

पुत्रस्य स्नेहविश्वासः पूर्वमास्तं क्षये भुवे । यथैकः प्रभवेन्नान्यस्तथा स्नेहोऽपि देहिनः ॥१६८६॥

अहमेव हतं पुत्रं श्रुत्वा जीवितजीवितम् । तिष्ठामि स्वस्थवद्यत्र तत्रान्यो निम्यतां कथम् ॥१६८७॥

इत्युक्त्वा विरते राज्ञि पुनर्गूढं प्रयागकः । प्रैरयत्तापसं भोज्यं कर्तुं ते भाजने त्यजन् ॥१६८८॥

अस्तनव्ययशिष्टं मे पर्याप्तं नास्ति वेतनम् । यते तथापीत्युक्त्वा स सखेद इव निर्ययौ ॥१६८९॥

गोप्यं रहस्यभणितमत्यल्पहृदयातिथि । अमृतं पारतमिव नाल्पसत्त्वैः सुदुर्जरम् ॥१६९०॥ 1690

कुल्यो मनोरथो नाम विप्रस्य वनवासिनः । स तत्तपस्विनस्तस्य तां कथामुपलब्धवान् ॥१६९१॥

राज्ञः संदर्श्य दायादं भवावो भूतिभाजनम् । इत्युक्त्वा तेन निन्ये स द्रोग्धूर्तां क्षुद्रतापसः ॥१६९२॥

जज्ञे भृत्येन गर्ह्येण जातः सोऽन्त्येन केनचित् । सदृशी यत्सदसतोर्व्यापकं जन्मकर्मणोः ॥१६९३॥

इल्लाराजस्तां प्रवृत्तिं बुद्ध्वा ताभ्यां न्यवेदयत् । उच्चलाय समादिक्षत्कार्ये तत्र तमेव सः ॥१६९४॥

---

१६७१. 1) Emended, A तैमार्थं. १६७३. 1) स्तया supplied by $A_2$ in space left by $A_1$. १६७६. 1) Thus corr. by $A_2$ from $A_1$ हुतो.—2) रक्षाम्यनु and चारै supplied by $A_2$ in space left by $A_1$. १६७९. 1) Thus corr. by later hand from $A_1$ °वदना.—2) Emended with C; A °श्यायाम्भो°. १६८१. 1) Two *aksharas* wanting in fourth *pâda;* the *lacuna* not marked in A; C सद्यःक्षणात्पुरः. १६८६. 1) Thus $A_1$; $A_2$ पूर्वमासक्षये. १६८८. 1) प्रैरयत्तापसं supplied by $A_2$ in space lef by $A_1$. १६९२. 1) Emended; A द्रोग्धूर्ता.

1695 केचित्तु भूतिभिक्षाख्यभिक्षाराजोपसर्पणे[1] । कायस्थं कारणं प्राहुस्तयोस्तापसविप्रयोः ॥१६९५॥

वार्ता चेद्दवगीतेयं प्रवहद्भोजसंकुले । काले तत्कृत्यपाशस्य तस्यैव द्रोहमुख्यता ॥१६९६॥

श्वपाकस्कन्धमारूढो लब्ध्वा तास्ता विमाननाः । विपेदे वत्स कारायां युक्तं तत्तस्य कर्मणः ॥१६९७॥

क्षुत्क्षामो हर्षदेवस्तु प्रयागेनार्थितोऽसकृत् । प्रत्यये पुत्रशोकेऽपि भोजनायाकरोन्मनः ॥१६९८॥

गृहीतभोजनं आनन्ध्यार्तं प्राप्तं स तापसम् । तमोरेर्बहिरैक्षिष्ट नीडाच्चिक्षुरिवाण्डजः ॥१६९९॥

1700 अपश्यंश्च कुटीं कृत्स्नां वेष्टितामेत्य शस्त्रिभिः । शुश्राव चाक्रन्दद्वाराद्वार्यमाणार्गलाध्वनिम् ॥१७००॥

आनञ्ज्ञातं ततो द्रोहमङ्गनात्तापसाधमम् । सशस्त्रिणं मुक्तमेदीस्थाह्वयन्तं व्यलोकयत् ॥१७०१॥

मुक्तं विसृज्य कृत्वा च हारमुद्घाटितारारि । स्वकभीराददे लघ्वीं क्षुरिकामन्तिकस्थिताम् ॥१७०२॥

एकस्तत्सविधं क्रूरः साहसाहंक्रियोन्मदः । आरुरोहाथ कृष्टासिधेनुः कश्चितो भटः ॥१७०३॥

तं राजा संकटकुटीरुद्धायामोऽप्यपातयत्[1] । क्षितौ व्यायामकुशलो नावधीत्कृपया पुनः ॥१७०४॥

1705 पतितेन हतेनार्थो वराकेणामुना न मे । इत्यूचे दुरहंकारमत्तस्तस्मिन्नपि क्षणे ॥१७०५॥

नीध्रमुत्पाद्य निपतन्नेकोऽन्योऽप्युत्पतन्भटः । भयाक्रमौ न्यपततां तौ विलोक्योद्यतायुधम् ॥१७०६॥

पृष्ठे पूर्वं प्रविष्टस्य[1] तिष्ठन्श्यामकनिष्ठुरः । स करोरिव चामुण्डा रेजे दण्डाकृतिः क्षणम् ॥१७०७॥

न सिंहनादैर्नो भेरीतूर्यघोषैर्न चोन्मदैः । शस्त्रशब्दैः स शुशुभे भूपस्यान्तक्षणे रणः ॥१७०८॥

आखोर्भाण्डप्रवेशस्य बिडाला इव डामराः । परं प्रवेशितास्तस्य निःशब्दं शस्त्रिणः कुटीम् ॥१७०९॥

1710 अथान्यो नीध्रमार्गेण संप्रविष्टः प्रयागकम् । हत्वा दोष्णि च शीर्षे च राजानं समुपाद्रवत् ॥१७१०॥

राज्ञः प्रहरतः शस्त्रं वञ्चयित्वा स शस्त्रभृत् । वक्षसि क्षुरिकाघातद्वयं प्रादात्कृतत्वरः ॥१७११॥

वर्णान्महेश्वरेत्येनान्निरुक्त्वा गतजीवितः । पपात निहतो भूमौ छिन्नमूल इव द्रुमः ॥१७१२॥

पलाय्य संप्रविशतो योग्यधीरस्य यादृशः । चक्रवर्त्यपि स प्राप वधं वेश्मनि तादृशम् ॥१७१३॥

नान्यः स इव कालेऽस्मिन्दृष्टो भूतिमान्नृपः । गर्भनिर्हरणार्थं च तस्येशान्यस्य नेक्षितम् ॥१७१४॥

1715 यद्वैकेनैव संग्रामवैमुख्येनोन्नतात्मनः । सर्वप्रकारसुभगं माहात्म्यं तस्य खण्डितम् ॥१७१५॥

नेयमुक्तिस्वमेवासीदथ वा तस्य दूषणम् । सर्वक्लेशावहा दोषाः कृत्स्नास्तन्मन्त्रिणां पुनः ॥१७१६॥

द्वाचत्वारिंशतिः[1] साष्टमासा यस्य वयःसमाः । स शुक्रभाद्रपञ्चम्यां हतोऽब्दे सप्तसप्तते ॥१७१७॥

राजा दुर्योधन इव स्ववंशच्छेदमिच्छता । सोऽभूज्जातकयोगेन कारितः स्वकुलक्षयम् ॥१७१८॥

तस्यासन्क्ष्मार्कजौ[1] जीवबुधौ भकोष्णगू शशी । तनयारिजामित्रखेषु कर्कटजन्मनः[2][3] ॥१७१९॥

---

१६९५. ¹) Emended; A कूभिक्षा°. *Cf.* viii. 94. १७०४. ¹) Emended; A संकटी कु°. १७०७. ¹) Emended with C; A प्रविष्ट. १७१७. ¹) Emended; A द्वाचत्वारिंशत. १७१९. ¹) Emended; A तस्यासी स्मा°.—²) Emended with C; A °ज्मनी.—³) A₂ explains this verse by the following *janmachakra* :



चन्द्रदेव्येऽर्ध्यपादेषु समदाम्नजनेषु तत् । आहुः सुसंहिताकाराः कौरवादीन्कुलान्तकान् ॥१७२०॥ 1720

निर्ब्रह्मण्यो जनः कृत्स्नो देशेऽस्मिन्वैरिणोऽन्तिकम् । दस्योरिव शिरश्छित्त्वा स्वामिनोऽपि निनाय तत् ॥१७२१॥

तस्योत्तमाङ्गे भूभर्तुश्छिद्यमाने ससागरा । चकम्पे भूर्नभश्चापि धीर्वृष्टिं महतीं जहौ ॥१७२२॥

तन्मुण्डे लगुडाक्रन्दे यद्युक्तं जनो व्यधात् । अभूत्तेनाभिशापेन सोऽपि दीर्घोपसर्गभाक् ॥१७२३॥

मण्डले देवबिम्बानां यथामुष्मिन्निपाटनम् । तथा सर्वं प्रववृते भूपतेर्मुण्डखण्डनम् ॥१७२४॥

नैक्षिष्ट तच्छिरः प्राप्तमौचित्यादुत्पलो नृपः । भूत्वा चिरमुदश्रुस्तु कारयामास वह्निसात् ॥१७२५॥ 1725

धिक्कष्टं तस्करस्येव तादृशश्चक्रवर्तिनः । गोचलाद्यां विना प्राप्ता शरीरेणान्त्यसत्क्रिया ॥१७२६॥

भृत्यत्यक्तो नष्टवंशो गौरकाख्येन केनचित् । स काष्ठागारिणा चक्रे नभोनाथ इवाग्निसात् ॥१७२७॥

दीर्घो हर्षनृपोदन्तः सोऽयं कोऽप्यद्भुतावहः । रामायणस्य नियतं प्रकारो भारतस्य वा ॥१७२८॥

भाग्याम्बुवाहतडितस्तरलाः श्रियस्तास्तत्रावसानविरसं प्रसभोद्धतत्वम् ।

तत्रापि नैष बत मोहहताशयानां शान्तिं प्रयाति विभवानुभवाभिमानः ॥१७२९॥

मातर्न्यपत्यवरोधिकापरिकरे नैकापि चक्रन्द तं तावत्स्वप्यनुगेषु नानुसृतवान्कोऽप्यास्त तीर्थे न वा ।

लोकस्य स्वसुखोपलिप्तमनसो वीक्ष्येति निःस्नेहतां निर्वेदं समुपेत्य नाश्रयति धिक्स्वान्तं वनान्ते रतिम् ॥१७३०॥ 1730

नाट्ये किंचिद्भवति नियतं यत्र पश्चाच्च किंचिन्मध्ये कस्मात्सपदि घटयन्सौस्थ्यदौस्थ्यानुरोधम् ।

निःशीर्षाङ्गेऽनट इव मुहुः कोऽपि जन्तुर्नटित्वा नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति ॥१७३१॥

श्रीः सातवाहनकुलेऽहन कान्तिराजवंशे त्यजन्त्युदयराजकुले प्रतिष्ठाम् ।

शृङ्गं सुरैर्विरहितं जहती हिमाद्रेर्दिव्ये तटे सुरगिरेरिव वासरश्रीः ॥१७३२॥

इति काश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कवेः कृतौ राजतरङ्गिण्यां सप्तमस्तरङ्गः ॥
समाष्टानवताब्द्यां व्यतीतायां महीभुजः । षड्जोदयराजस्य वंशे जाताः प्रकीर्तिताः ॥
राजानः ६ श्लोकाः १७३२[1] ॥

---

१७२०. ²) $A_2$ gloss शु. १७३२. ¹) Emended; A श्रीसात°.—²) Emended; A कान्तराज°. Cf. vii. 1285.
*Colophon.* Thus $A_1$, perhaps for १७३२. $A_2$ adds here लिखितश्चैव मया राजानकरत्नकण्ठेन.

## ॥ अष्टमस्तरङ्गः ॥

ॐ नमो विघ्नहर्त्रे ।

मौढाः कञ्चुकिनो जरद्वरवृषः कुम्भस्तुषारद्युतिर्नित्याप्तोऽपि बहिष्कृतः परिकरः सोऽयं समस्तोऽप्यहो ।
अर्धाङ्गप्रणयीकृताङ्गभवता भावित्रवर्याखिरा सा भिक्षांकुरितं चराचरगुरोरन्तःपुरं पार्वती ॥१॥
उच्चकोपप्रसादोऽभूत्कांचित्कालं नवो नृपः । प्राङ्मन्थादिव पाथोधिरभिव्यञ्जितविषामृतः ॥२॥
सोदरो डामरीयश्च तस्याभूतां भृशोन्मदौ । मेघस्येव पुरो वातावमहौ स्फूर्तिहारिणौ ॥३॥
यत्किंचनविधाय्यासीज्ज्ञाता यद्यौवनोन्मदः । राज्ञो दुष्प्रक्रिया ह्रीःस्थ्यकरी वात्सल्यशालिनः ॥४॥
5 सोऽनिशं हि गजारूढो विकोशासिः[1] परिभ्रमन् । आत्तसारां महीं पीतरसां दर्विरिवाकरोत् ॥५॥
एकीभूतानमून्सर्वाण्डामराग्निर्दहाम्यहम् । इत्युक्तं तेन नोर्वीभृत्तस्यैकाग्रो वचोऽसहीत् ॥६॥
द्वयशो मन्त्रिसामन्ता हैराज्येच्छुः सहोदरः । भूर्निष्कोशेत्यभूत्किं न भूपतेस्तस्य संकटम् ॥७॥
अधिराज्याभिषेकेण सत्कृत्य भ्रातरं ततः । पातुं लोहरसंबन्धं प्राहिणोन्मण्डलान्तरम् ॥८॥
द्विरदायुधपत्त्यश्वकोशामात्यादि स भजन् । निनाय सर्वं वात्सल्यादनिषिद्धोपजन्मना ॥९॥
10 आशङ्क्य कोष्ठभृत्येभ्यः प्रवेशे प्रत्यवस्थितिम् । उत्कर्षजं प्रतापाख्यं सह[1] निन्येऽनयीश्च तान् ॥१०॥
कुर्यामनु नृपमहं प्रातिहार्यं समाचरन् । नष्टाः स्वभृत्यवत्तस्थुर्भूभुजो भूम्यनन्तराः ॥११॥
दिनानि सप्त संरुद्धे मार्गे तदनुयायिनाम् । गायनः कनको लब्धान्तरो देशान्तरं ययौ ॥१२॥
वाराणस्यां विजहता निर्वेदात्तेन जीवितम् । हर्षभूभर्तृभृत्येषु व्यक्तं निन्ये कृतज्ञता ॥१३॥
ऊर्ध्वाधिरोहं दाक्षिण्याद्दस्यूनामुज्ज्वलः पुनः । सेवास्मृत्या सुधीः सेहे चन्दनो भोगिनामिव ॥१४॥
15 तथा जनकचन्द्रेण दर्पाद्व्यवहृतं तदा । राजान्ये डामराश्चासन्यथा नष्टप्रभा इव ॥१५॥
अभयस्योरशाभर्तुस्तनयायामजीजनत् । राज्ञ्यां विभवमत्यां यं भोजो हर्षनृपात्मजः ॥१६॥
जातं मृताशिपुत्रानन्तरं गुरुभिः शिशुम् । आयुष्कामैस्तमाबद्धाभव्यभिक्षाचराभिधम् ॥१७॥
ब्रह्ममन्त्रादिसंतानतन्तुस्वेमाप्रियोचितम् । ररक्ष तद्गिरा राजा राज्ञ्याश्चाङ्के समार्पयत्[1] ॥१८॥ तिलकम् ॥
तमादाय स्वयं बाली यावद्राज्येऽकरोन्मनः । तावद्धमारोऽज्ञितशो नीतिकौटिल्यमुज्ज्वलः ॥१९॥
20 तुल्योत्साहासहिष्णुत्वादस्मै कुप्यन्तु डामराः । एष एवातिसत्काराद्यहास्तु विशदाशयः ॥२०॥
इति संचिन्त्य स द्वारदिक्त्वं तस्योदयोपयत् । यथा विकारं प्रययुर्भीमादेवादयोऽखिलाः ॥२१॥

१. ¹) Thus $A_1$; $A_2$ भिक्ष्याद्यु°. २. ¹) Emended; A °भूत्किंचित्कालं. ५. ¹) कोशासिः supplied by $A_2$ in space left by $A_1$. १०. ¹) Emended with C; A हृतं. १८. ¹) Emended with C; A समर्पयत.

प्रायोपविष्टमग्रे देहत्यागप्रतिश्रया । निबद्धया प्रत्यवेक्षां धर्माध्यक्षानकारयत् ॥५१॥

निशम्य कृपणस्यार्तिं कञ्चित्तं तदनिष्टकृत् । बभूव तस्य स्वात्मापि नानिग्राह्यो महात्मनः ॥५२॥

कार्यिणो यस्य वा दोषावार्ताक्रन्दितमुपययौ । तस्य स्वबान्धवाक्रन्दैस्तस्मिन्क्रुद्धे शशाम तत् ॥५३॥

अबलानुग्रहव्यग्रे तस्मिन्नाजनि सर्वतः । वास्तव्या बलिनस्तस्युरबलास्त्वधिकारिणः ॥५४॥

55 सोश्वैनैकधरव्याजेत्यज्ञात्वा कथितं जनैः । यं यं स्वदोषमश्रौषीत्तं त्वरितमत्यजत् ॥५५॥

येन केनापि संप्राप्तः प्राप्त्युपायेन पार्थिवः । अमोघदर्शनः सोभूत्कल्पवृक्ष इवार्थिनाम् ॥५६॥

सुधावर्षी प्रियालापप्रीतिदायैर्जनप्रियः । नाशकत्सेवकास्त्यक्तुं विश्रम्भभवनेष्वपि ॥५७॥

ग्राम्यधर्मैः प्रतिकलं तस्य सेवाविधायिभिः । प्राप्तं त्रिचतुरान्वारान्क्षणदास्वपि दर्शनम् ॥५८॥

सेव्यमानः सदाक्षिण्यः क्षणेनैव फलप्रदः । कस्यैन्द्रजालिकैरुप्तः शाखीव न बभूव सः ॥५९॥

60 वास्तव्यानां निशम्यार्तिं तेन दैन्यनिवारणम् । चक्रे पित्रेव पुत्राणां संत्यक्तेतरकर्मणा ॥६०॥

स्वसंचितानि धान्यानि विक्रीणानोल्पवेतनैः । दुर्भिक्षमुद्गतावेव जघान जनवत्सलः ॥६१॥

निवार्य चौर्याचरणात्कृपार्द्रस्तस्करानपि । कोशाध्यक्षान्स विदधे कारागर्भजीविकान् ॥६२॥

कः संविभाग्यश्छेत्तव्या विपदः कस्य मण्डले । इत्यन्विष्यन्सदैकैकं चारैश्चिन्तापरोभवत् ॥६३॥

तस्यैकोप्यर्थनैस्पृह्यं नाम कोपि महान्गुणः । अनुषक्तो गुणैस्तैस्तै राज्ञः पल्लवितोभवत् ॥६४॥

65 स स्थित्यै दण्डयन्दण्ड्यानघाशेषभयावहनम् । तेषां नाद्रुत सत्कर्म शुद्धये तांस्त्वकारयत् ॥६५॥

प्रस्तुतस्यार्थिने दातुं वस्तु तस्यैकसंख्यया । सहस्रसंख्यया दानभङ्गात्पूर्णतां यदि ॥६६॥

भूयतेर्थी यथा मह्यं देहि देहीति गां वदन् । तथास्मै देहि देहीति वदन्दाता स शुश्रुवे ॥६७॥

अनुदात्तं क्षिप्रकालं क्षीणसंख्यमसत्कृतम् । नेतृदूतादिनीतार्धं न तद्दत्तमदृश्यत ॥६८॥

उत्सवे दैन्यविध्वंसी रञ्जने कार्यसाधने । आलेख्यलीनशाखीव न सोलभ्यफलोभवत् ॥६९॥

70 उत्सवे शिवरात्र्यादौ जनतां सोसिचद्धनैः । मघयोगे पयःपूरैर्महेन्द्र इव मेदिनीम् ॥७०॥

ताम्बूलदानव्यसनं पराध्योत्सवता तथा । नाभूद्धर्षनृपस्यापि तादृक्तस्यास्त यादृशी ॥७१॥

लोष्टमात्रावशेषेपि लब्धे नृपपदे व्यधात् । स दानविभ्रमांस्तान्ये धनदेनापि दुष्कराः ॥७२॥

निर्माणलोठनैर्धामजवं वाजिनां क्रयैः । काश्मीरिकोपि चक्रे स न गृहस्करसाधनम् ॥७३॥

अध्वन्यध्वनि योगेन प्राणविन्यासनैस्तथा । बभूव सर्वकृत्यज्ञः सोन्तरात्मेव देहिनाम् ॥७४॥

75 भोगाभ्राजोषितान्विप्रा भैषज्यं व्याधिपीडिताः । वेतनं वृत्तिहीनाश्च तस्मात्समुपलेभिरे ॥७५॥

पित्र्योपरागकेत्वादिदुर्निमित्तोपशान्तिषु । गोसहस्राश्वहेमादिसंभवैः सोभजद्द्विजान् ॥७६॥

नन्दिक्षेत्रे पुरं कृत्स्नं दग्धमुत्पातवह्निना । पूर्वाधिकगुणं तेन नवं राज्ये व्यधीयत ॥७७॥

श्रीचक्रधरयोगेशस्वयंभूस्थानयोजनम् । जीर्णोद्धृतिव्यसनिना कृतं तेन सुकर्मणा ॥७८॥

हर्षदेवेन यो निन्ये श्रीपरीहासकेशवः । परिहासपुरे तं स नवं नरपतिर्व्यधात् ॥७९॥

---

५३. [1]) Emended; A दोषावर्ता°; C दोषाहर्ता°. ५७. [1]) A विश्रम्भ°. ७१. [1]) Thus $A_1$; $A_2$ °स्यास्तु. ७२. [1]) Emended; A °विभ्रमास्ताम्ये. ७३. [1]) Emended; A काश्मीरकोपि. ७६. [1]) Emended; A °पशान्तिषु.

प्रत्यर्पितमुक्तावल्या भूषितो हर्षनीतया । तेन त्रिभुवनस्वामी निर्लोभेन महीभुजा ॥८०॥ 80

जयापीडाहृतं हर्षोत्पाटने प्लुष्टमग्निना । सिंहासनं नवं चक्रे स राज्यककुदं नृपः ॥८१॥

लब्ध्वा तदर्धाध्यारोहं भर्तुः प्रेम्णातिदुर्लभम् । सामान्यतापि देवीत्वं जयमत्या न दूषितम् ॥८२॥

सा चानृशंस्यमाधुर्यत्यागसत्यविततानयैः । असमम्भार्यपरित्राणमुख्यैर्भर्त्राभवद्गुणैः ॥८३॥

लब्धभूपालवाल्लभ्या नार्थः क्रोधात्प्रजासु यत् । राक्षस्य इव भङ्गाय लावण्यललिता अपि ॥८४॥

प्रियप्रजस्यायमन्यो गुणः सर्वगुणाग्रणीः । उच्चलक्ष्मापतेरासीदर्थेष्वस्पृहशालिनः ॥८५॥ 85

जिघांसवः पापकामाः परस्वादायिनश्च ताः । रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ॥८६॥

तेनेतिहासिनीं नीतिं श्रद्दधानेन सर्वदा । येन संपठता श्लोकं कायस्थोन्मूलनं कृतम् ॥८७॥

यत्ते विषूचिकाशूलसंन्यासेभ्यः कलेवरे । ग्रन्थ्याशुकारिणो विश्वं प्रजारोगा नियोगिनः ॥८८॥

पितरं कर्कटो हन्ति मातरं हन्ति पुत्तिका । हन्ति सर्वं तु कायस्थः कृतघ्नः प्राप्तसंभवः ॥८९॥

गुणान्समर्प्य स्फुरता येनैवोत्थाप्यते शठः । वेताल इव कायस्थस्तमेवाहन्ति हेलया ॥९०॥ 90

विषवृक्षो नियोगी च यदेवाश्रित्य वर्धते । चित्रं करोति तस्यैव स्थानस्यानभिगम्यताम् ॥९१॥

तेन ते क्ष्माभुजा मानक्षतिकार्यनिवारणैः । काराप्रवेशैश्च खलाः क्षामं नीताः पदे पदे ॥९२॥

कार्यान्निवार्य बहुशः संहेलायान्महत्तमान् । भङ्गासूत्रमयं वासः कारायां पर्यधापयत् ॥९३॥

स कार्यवेशं हास्याय समार्थं चारणोचितम । अकारयद्भूतभिक्षं धावनं डोम्बैर्योधवत् ॥९४॥

स प्रांशुर्वेष्टितश्मश्रुदण्डोपेतोत्कलत्पुनः । शूलहस्तः सजानुरुः केषामासीन्न हास्यकृत् ॥९५॥ 95

स शीर्षदर्शनं साम्यवादवेश्याविटान्वितम् । प्रियवेश्यं कंचिदमे नृत्तवाद्यमकारयत् ॥९६॥

कङ्काल्यं शाकटे नर्म क्षुरलूनार्धमस्तकम् । अकारयस्खटाम्बस्तचीनपिष्टच्छटाङ्कितम् ॥९७॥

ते कुम्भवादनैर्मुण्डमण्डनैश्चाङ्किताभिधाः । नियोगिनो भ्रममाणाः सर्वतः ख्यातिमाययुः ॥९८॥

कार्यभ्रष्टा मलक्लिन्नक्षीणवस्त्रावगुण्ठनाः । सर्वार्थिनो व्यभाव्यन्त केऽप्यटन्तः प्रतिक्षणम् ॥९९॥

वृथावृद्धाः सुखप्राप्यं पाण्डित्यं भूर्जवत्परे । मत्वा बाला इवाचार्यगृहे प्रारेभिरे श्रुतम् ॥१००॥ 100

केऽप्युच्चैरट्टभिक्षाकाः सादरं स्तोत्रपाठिनः । कृतानुपाठाः स्वापत्यैः प्राह्णे लोकमहासयन् ॥१०१॥

माता स्वसा सुता भार्या स्वापि कैरप्यकार्यत । सामन्तसेवनं कार्यप्राप्त्यै सुरतसेवया ॥१०२॥

जातकस्वप्नशाकुनसल्लक्षणनिरीक्षणम् । कारयद्भिः शठैरन्यैर्गणकाः परिखेदिताः ॥१०३॥

पिशाचा इव शुष्कास्या रूक्षश्मश्रुकचाः कृशाः । बद्धाः परैर्व्यभाव्यन्त भृकुलामुखराकृयः ॥१०४॥

नृपेण कार्यिणां दर्पलिङ्गनाशे विपाटिते । अश्मोर्ज्ञातिपरिज्ञानक्षमत्वं समजायत ॥१०५॥ 105

भारतस्तवराजादिस्तोत्रपाठमशिश्रियन् । ते दुर्गोत्सारिणीविद्याजपं चोद्दकुलोत्तमाः ॥१०६॥

इत्थं दौःस्थ्योदये दीर्घे मज्जन्तो नित्यदुर्जनाः । तस्मिन्काले कायस्था व्यलोक्यन्त पदे पदे ॥१०७॥

भिन्नसंधानभूयिष्ठदानभोज्यादिढौकनैः । न हि मोहयितुं शक्ताः नाके तं तेऽन्यराजवत् ॥१०८॥

तान्प्रजाकण्टकान्दुष्टान्कृतधीरकृतानिशम् । तैस्तैः शुचिभिरभ्यासैः स विशामीश्वरो बहान् ॥१०९॥

९४ [1]) Emended ; A °भूतभिक्षा°.—[2]) Emended, A डोम्ब°.

भूतेशस्य यथा पुरी हुतवहप्लुष्टा स्वदाशाबलाद्भूयः स्वां श्रियमाससाद सहसा तद्वत्समस्तामिमाम् ।
110 इत्थं कायस्थकुटुम्बिकृमिशतविप्लाया—[1] पञ्चानलीलीलामुच्चलदेव निर्वृतिसुखस्थित्या पुरीं स्वां श्रियः ॥११०॥
शिवरथ्युत्सवे ओकमघं[1] शिवरथाभिधः । विज्ञान्पदस्तेन हठात्सर्वाध्यक्षो व्यधीयत ॥१११॥
व्यवहारानभिज्ञोपि कंचित्कालमदीदृशत् । शुचित्वादार्यराजः स क्रामन्कृतयुगस्थितिम् ॥११२॥
शीघ्रदण्डत्वमुद्दण्डतेजसस्तस्य भूपतेः । क्रूरानुविश्य कायस्थान्धीमद्भिर्बहमन्यत ॥११३॥
न हि क्षुद्राश्मकायस्थपिशाचाविद्धवैरिणाम् । शासन्त्यन्तरितं दण्डं दण्डनीतिविशारदाः ॥११४॥
115 चिरेण दण्डिता ह्येते कुर्युर्दण्डभयाद्ध्रुवम् । लब्धान्तराः प्राणहरं कृच्छ्रं किंचिच्च शासितुः ॥११५॥
दण्ड्यानां दण्ड्यमानानां पुत्रस्त्रीमित्रबान्धवाः । राज्ञा विचारशीलेन न तेनोपद्रुताः क्वचित् ॥११६॥
कर्णेजपांल्लोष्टधरप्रमुखांस्तेन दुःखदैः । कर्मभिः क्लिश्नताश्यापि पैशुन्यस्य खिलीकृतः ॥११७॥
विस्मृतिं लब्धराज्यानां पूर्वसंकल्पवासनाः । प्रयान्ति प्रागजनुषां गर्भवासस्पृहा इव ॥११८॥
प्राप्राज्याधिगमात्किंचित्सदसच्चाप्यचिन्तयत् । राज्ये तन्न विसस्मार जातिस्मर इवोच्चलः ॥११९॥
120 ददर्श शम्भोरद्रोहान्यान्द्रोग्धॄन्वा पुरानुगान् । कर्तव्यानुगुणं तेषां प्रतिपत्तिमदर्शयत् ॥१२०॥
स्मरेत्सोपपतिः पूर्वपतिद्रोहं कुयोषितः । पूर्वस्वाम्यरितां चाथ कुभृत्यस्यैधतो जडः ॥१२१॥
देशाद्विदेशान्मेदिन्या समं प्रज्ञापि राज्यभृत् । तस्मिन्परिणता नूनं कृत्याकृत्यविवेककारि ॥१२२॥
तथा ह्येकस्य वणिजो व्यवहर्तुश्च सोभवत् । विवादे संशयं छिन्दन्नेवं स्थेयाद्यगोचरे ॥१२३॥
सौदर्यागूढसद्भावे व्यापदीपयिकं धनी । न्यासीचकार दीनारलक्षं कोपि वणिग्गृहे ॥१२४॥
125 तेनोपयुज्यमाना च व्ययेषु वणिजः करात् । कियत्यपि गृहीताभूद्वत्समात्रान्तरान्तरा[1] ॥१२५॥
विंशाद्दिशाब्दे[1] वाताद्व समाप्य न्यासधारिणम् । गृहीतशेषं दातुं स धनं प्रार्थयताथ तम् ॥१२६॥
वणिक्तु कुक्कुनी तस्य न्यासपासाय सोद्यमः । कालापहारमकरोत्तैस्तैः कलुषधीर्मिषैः ॥१२७॥
स्रोतोभिर्व्यस्तमम्भोधौ लभ्यं मेघमुखैः पयः । प्राप्तिर्भूयस्तु नास्त्येव वणिग्न्यस्तस्य वस्तुनः ॥१२८॥
नैलचिक्यमुखः स्वल्पालापो मुद्राकृतिर्भवन् । न्यासग्रासविवादोद्यो वणिग्व्याघ्राद्विशिष्यते ॥१२९॥
130 विवादे श्रेष्ठिना शाठ्यं स्मितैः प्राक्सत्यदर्शनैः । मुक्तं मुक्तं ज्ञायमानं प्राणान्तेपि न मुच्यते ॥१३०॥
निसर्गवञ्चका वेश्याः कायस्थो दिविरो वणिक् । गुरूपदेशोपस्कारैर्विशिष्टाः सविषाहिवत् ॥१३१॥
चन्दनाङ्कालिके श्वेतांशुके धूपाधिवासिनि । विश्वस्तः स्यात्किराते[1] यो विप्रकृष्टेस्य नापदः ॥१३२॥
ललाटदृक्पुटश्रोत्रद्वन्द्वहृद्व्यस्तचन्दनः । षड्बिन्दुर्वृश्चिक इव क्षणात्प्राणान्तकृद्वणिक् ॥१३३॥
पाण्डुश्यामोर्मिधूमाढ्यः सूक्ष्मास्यो गहनोदरः । तुम्बीफलोपमः श्रेष्ठी रक्तं मांसं च कर्षति ॥१३४॥
135 सोथ निःशोषितमिषः क्रुद्धो निर्बन्धकारिणः । गणनापत्रिकां तस्य सभ्रूभङ्गमदर्शयत् ॥१३५॥
यदादौ श्रेयस इति न्यस्तमश्रेयसे पदम् । आतरेभ्यत्यये सतोर्गृहीता षट्शती त्वया ॥१३६॥
छिन्नोपानत्कथाबन्धे घातं चर्मकृतेर्पितम् । विपादिकाकृते दास्या नीतं पञ्चाशतो घृतम् ॥१३७॥

११०. [1]) $A_1$ indicates here a *lacuna* of one *akshara*. १११. [1]) Emended with C; A लोक°. १२५. [1]) Emended; A °भूद्वत्सरा°. Cf. viii. 154. १२६. [1]) Emended; A विंशतिशतात्तु. Cf. v. 210. १३२. [1]) Emended; A किराटे.

विविधे भूतसर्गेऽस्मिन्न च कश्चित्स विद्यते । अपूर्वश्वापदस्यापि यस्य दोषैर्न दूषितम् ॥१६६॥
जातिः पङ्करुहाद्वपुः कपिलताक्रान्तं शिरः खण्डनप्रभवत्कुचिशीलतादिविगुणाचारप्रदुष्टं यशः ।
निःशङ्कत्वरिति प्रभूतविषयव्याप्तिस्पृशो दुःसहा दोषा यत्र पुरोऽस्तु तत्र कतमो निर्दोषतोत्सेकभूः ॥१६७॥
अभिचारैरिति भूपालः स चकारानुजीविनाम् । वंशचारित्रदेहादिदोषोद्घोषणमन्वहम् ॥१६८॥
अन्योन्यद्वेषमुत्पाद्य संख्यातीता महाभटाः । दुष्प्रभवालुना तेन द्वन्द्वयुद्धेषु घातिताः ॥१६९॥
170 मासार्धदिनमाहेन्द्रमहाध्वसरेषु सः । निनाय योधान्संनद्धानन्योन्यप्रधनैर्धनम् ॥१७०॥
स नाभूदुत्सवः कश्चित्तदा यत्र नृपाङ्गने । भूमिर्न सिक्ता रक्तेन हाहाकारो न चोद्ययौ ॥१७१॥
नृत्यन्त इव निर्याता गृहेभ्यो वेशशोभिनः । बान्धवैर्निन्यिरे योधा लूनाङ्गाः पार्थिवाङ्गणात् ॥१७२॥
स्निग्धश्यामकचांशुकस्वच्छभूनाकल्पशोभिनः । हतान्वीक्ष्य भटाञ्जाया मुमुहे न तु विव्यथे ॥१७३॥
नार्यो राजगृहं गत्वा प्रत्यायातेषु भर्तृषु । मेनिरे दिवसं लब्धमनास्था नित्यमन्यथा ॥१७४॥
175 अद्यैषामवधं कुर्यामित्यहंक्रियया वरम् । साविक्षमव्याहतवाग्भिस्तैर्भृत्यैरभिमहत् ॥१७५॥
प्रवर्धमानांस्तानेव विद्वेषकलुषाशयः । हृताधिकारान्विदधे बहुशश्च विमानितान् ॥१७६॥
दम्भकः कम्पनाधीशः प्रवृद्धौ तत्र सत्क्रुधि । विद्रुतो विषलाटायां निपत्य निहतः खशैः ॥१७७॥
तेन स्ववर्धितो द्वाराधीश्वरो रक्काभिधः । हृताधिकारो विदधे विभूतिं वीक्ष्य भूयसीम् ॥१७८॥
माणिक्यसैन्यपतिना द्वारेकस्मान्निवारिते । लिखेन विजयक्षेत्रे चक्रे व्रतपरिग्रहः ॥१७९॥
180 कम्पनाद्यधिकारस्थाः प्रवीरास्तिलकादयः । काकवंश्या मार्दवेन तत्कोपं नानुभाविताः ॥१८०॥
भोगसेनो निरनुगः क्षीणवासा भवन्कृतः । तेनातिसेवाभीतेन राजस्थानाधिकारभाक् ॥१८१॥
यस्येन्द्रद्वादशीयुद्धे सान्द्रसैन्योऽपि विद्रुतः । क्षुद्रचन्द्रगणश्चन्द्रोऽपि रौद्रमालोक्य विक्रमम् ॥१८२॥
येऽपि सञ्ज्ञाभिधानस्य पुत्राः सामान्यशास्त्रिणः । तानङ्कुचक्कुरुभ्यद्यान्स मन्त्रिणः समपादयत् ॥१८३॥
पुत्रौ विजयसिंहस्य तस्यैवात्यक्तदुर्दशौ । तिलको जनकश्चास्तामंमात्यश्रेणिमध्यगौ ॥१८४॥
185 यमेलाभयवाणादिमुख्या द्वारादिनायकाः । कस्तान्समर्थः संख्यातुं तद्विस्तरलसंपदः ॥१८५॥
द्विजाः प्रशस्तकलशादयः पूर्वे नरन्तरे । प्रापुर्बालद्रुमान्तःस्थजीर्णानोकहविभ्रमम् ॥१८६॥
कन्दर्पः क्ष्माभुजा दूतैः समानीतोऽपि नाददे । तस्यासहनतां वीक्ष्य प्रार्थितोऽप्यधिकारिताम् ॥१८७॥
आस्थानाचारसंलापव्यवहारादि मण्डले । नवमेवाभवत्सर्वं तस्मिन्नभिनवे नृपे ॥१८८॥
लक्ष्मीः कार्मणचूर्णाङ्का वेश्येव वशवर्तिनः । धीरानपि विधायेयं करोत्युन्मार्गवर्तिनः ॥१८९॥
190 सपिण्डानामपि व्यक्तमूलवीक्षणतत्परा । प्रेततेव नरेन्द्रश्रीर्जातिक्लेशापकारिणी ॥१९०॥
समस्तसंपत्पूर्णोऽपि यस्मात्सुस्सलभूपतिः । दध्यौ भ्रातुरवस्कन्दं राज्यापहरणोद्यतः ॥१९१॥
अकस्मादभ्रणोऽश्येनमिव तं शीघ्रपातिनम् । स्थानं वराहवार्ताख्यमुल्लङ्घ्यायानमग्रजः ॥१९२॥
क्षिप्रकारी विनिर्गत्य तमग्रामपदं ततः । निपत्य सैन्यैर्बहुलैः सोपकारमकारयत् ॥१९३॥
विद्रुतस्यास्पदे तस्य नानोपकरणैर्युतैः । ताम्बूलवल्लीकूटैश्च सामग्री समभाव्यत ॥१९४॥

---

१८४. [1]) Emended with C; A °बास्तम°. १८६. [1]) Emended, A °जीर्णालोकह°. १९४. [1]) Emended; A ताम्बूलपेलाकु°.

नाब्धिवह्निविषशस्त्रशरप्रयोगैर्न श्वभ्रपातरभसेन न चाभिचारैः ।
शक्या निहन्तुमसवो विधुरैरकाण्डे भोक्तव्यभोगनिवहोऽङ्कुरितस्य जन्तोः ॥२२३॥
भिक्षाचरः समादिष्टवधो जयमतीगृहात् । नक्तं वध्यभुवं निन्ये वधकैः पार्थिवाज्ञया ॥२२४॥
225 पाणिं प्रस्फोट्य निक्षिप्तो वितस्तायां समीरणैः । क्षिप्तस्तटं क्षणं स्पन्दमानवक्षाः कृपालुना ॥२२५॥
द्विजेनैकेन संप्राप्तधिरादुद्भूतचेतनः । आसमत्यभिधानाया ज्ञातिर्दिद्देति गौरवात् ॥२२६॥
शाहिपुत्रीभिरुक्ता या रत्नधुरया तया । नीतो देशान्तरं गूढं ववृधे दक्षिणापथे ॥२२७॥ तिलकम् ॥
स भूपमन्यमित्रीय पुत्रवज्ञरवर्मणा । मालवेन्द्रेण शस्त्रास्त्रविद्याभ्यासमकार्यत ॥२२८॥
अन्यदीयं घातयित्वा तत्तुल्यवयसं शिशुम् । रक्षितो जयमत्यैव स किलेत्यपरेऽब्रुवन् ॥२२९॥
230 देशान्तरागताद्भूतानां वार्तामुपलब्धवान् । अत एवाभवत्तस्या भूभृद्विरलितादरः ॥२३०॥
बहिर्भ्रतिभिन्देस्तस्य धीरो मार्गवर्तिभिः । चक्रे तदप्रवेशाय संबन्धं पार्थिवैः समम् ॥२३१॥
ईर्ष्यामगोपयन्नार्याः शङ्कामच्छादयन्प्रियोः । स्वयमन्याभिगम्यत्वं करोति हि जडो जनः ॥२३२॥
भिक्षाचरे हते बालं कंचिदादाय तत्संभ्रमम् । तत्राज्ञा ख्यातिमनयद्दिहैवेत्यपरेऽब्रुवन् ॥२३३॥
तथ्येन सोऽस्तु मिथ्या वा प्रतिष्ठां तां तथाप्तवान् । यया लघुस्थमानेतुं न दैवेनाप्यशक्यत ॥२३४॥
235 स्वप्नेन्द्रजालमायानामपि निर्विषया इमाः । कर्मवैचित्र्यजनिताः काश्चिदाश्चर्यविप्रुषः ॥२३५॥
स राजबीजी चादाय विद्यां गूढं व्यवर्धत । पुरमामादिदाहाय कक्षान्तरिव पावकः ॥२३६॥
दोहद्युम्भिकसीमनि प्रतिविषावीरुद्द्विपक्ष्मारुहः काले प्रावृडुपद्रुताच्छसलिले मूर्धन्यगस्त्योदयः ।
सर्गच्छेदविधिक्षमानुदयतो दृष्ट्वा किलोपद्रवान्संभवे प्रतिकारकल्पनमहो दीर्घावलोकी विधिः ॥२३७॥
अजायत विपन्मज्जज्जगदुद्धरणक्षमः । तस्मिन्नेव क्षणे यस्मात्सुस्सलक्ष्मापतेः सुतः ॥२३८॥
तज्जन्मकालादारभ्य सर्वतो जयमर्जयन् । नामान्वर्थं नृपस्तस्य जयसिंह इति व्यधात् ॥२३९॥
240 शास्तुः सर्वार्थसिद्धाख्या यथा सर्वार्थसिद्धिभिः । तथा तस्याभिधान्वर्था नात्यजद्रूढिगाम्यताम् ॥२४०॥
मुद्रां स कुङ्कुमस्याङ्कस्तदीयस्याभ्युपागताम् । विलोक्योऽबलदेवोऽभूद्भिमन्युर्भ्रातरं प्रति ॥२४१॥
बालस्यैवाङ्ग्रिमुद्रास्य वैरं पितृपितृव्ययोः । निवारयन्ती विदधे सुस्थितं मण्डलद्वयम् ॥२४२॥
स स्वर्गिणः पितुर्नाम्ना ततः सुकृतसिद्धये । चकारो बालभूपालः पैतृके स्थण्डिले मठम् ॥२४३॥
गोभूमिहेमवस्त्राद्यदाता तस्मिन्महोत्सवे । आश्चर्यकल्पवृक्षत्वं त्यागी सर्वार्थिनामगात् ॥२४४॥
245 प्रसादैः प्रहितैस्तेन महार्घैः श्लाघ्यसंपदा । महान्तोऽपि दिगन्तेषु पार्थिवा विस्मयं ययुः ॥२४५॥
भर्तृप्रसादाधिगतां श्रियं नेतुं परार्थ्यताम् । विहारं समठं देवी जयमत्यपि निर्ममे ॥२४६॥
केषांचित्पूर्वपुण्यानां विरहेण महीभुजः । हताभीष्टाभिधानोऽभून्मठो नवमठाख्यया ॥२४७॥
सुल्लां स्वसारमुद्दिश्य परस्मिन्स्थण्डिले पितुः । विहारोऽपि कृतस्तेन नोचितां ख्यातिमाययौ ॥२४८॥
मृत्योर्मल्लकपामित्वं तस्याकलयतः किल । न मिथ्या स्वप्रतिष्ठासु संप्रपेदे व्यवस्थितिः ॥२४९॥

---

२२७. 1) $A_1$ writes here ३ instead of तिलकम्. २३०. 1) Emended; A °तागतवसुप°. २३४. 1) Emended with C; A °लघुस्थ.
२३७. 1) $A_3$ gloss प्रतिविषा वीरुत् अस्या उपविषेत्यादिनामान्तरं यथा विश्वाविषा प्रतिविषातिविषोपविषारुणा शृङ्गिमहौषधं चेति (*Amarakośa* ii. 4. 99-100). २४०. 1) Emended; A °म्बाहे.

280 प्रजिहीर्षुभिरुर्वीशं पीतकोशैः समेत्य तैः । चतुष्पञ्चानि वर्षाणि मायाप्यवसरः क्वचित् ॥२८०॥
बहुभिर्बहुधा भिन्नैर्बहुकालं विचिन्तितः । न भेदमगमन्मन्त्रः स चित्रं लोकदुष्कृतैः ॥२८१॥
नवैतां कुरुते शश्वन्नृपो मर्मस्पृशं कथाम् । इति प्रत्येकमुक्त्वा ते विरागं पार्थिवेऽभजन् ॥२८२॥
तैरुरःपार्श्वपृष्ठानि गूढैर्वर्मभिरावृतैः । प्रच्छाद्य पार्थिवोऽजस्रमनुसक्ते जिघांसुभिः ॥२८३॥
असह्यो विरहं सोढुं यां प्रसादयितुं न काम् । राजापि संदधे चेष्टां प्राकशाकृतभुजंगवत् ॥२८४॥
285 स्वभाववैपरीत्येन माशाविष्टेन स स्थिराम् । जयमत्या सहाप्रीतिं सदाद्यासरद्वयम् ॥२८५॥
रक्षां भिक्षाचरस्याशुर्निर्मितं तत्र केचन । केचित्तु विपुलत्वदृशीं प्रेम्णां तरलवृत्तिताम् ॥२८६॥
अथ वर्तुलभूभर्तुरात्मजा बिज्जलाभिधा । कृतपाणिग्रहस्यागाद्वाल्लभ्यं वसुधाभुजः ॥२८७॥
संग्रामपाले नृपतौ तस्मिन्नवसरे मृते । तत्सूनुः सोमपालाख्यः पित्र्यं राज्यं समादधे ॥२८८॥
राज्यार्हमग्रजं बद्ध्वा सोऽभ्यषिच्यत चाक्रिकैः । इति कोपाकरेम्ग्रोऽभूत्कुप्यन्राजपुरीं प्रति ॥२८९॥
290 लक्ष्मीस्थैर्यप्रतिभुवः पुत्र्याः पाणिमजिग्रहत् । ..............................[1] ॥२९०॥
अर्थिचिन्तामणेस्तस्य प्रीणतो निखिलाः प्रजाः । नानाव्ययोर्जितो रेजे पश्चिमः स महोत्सवः ॥२९१॥
याते जामातरि क्ष्माभृच्चक्रे निखिलतन्त्रिणः । निर्भृतीन्किमपि[1] क्रुध्यन्बुभुक्षुस्तु[2] व्यसर्जयत् ॥२९२॥
भोगसेनोऽपि भूपेन काले तस्मिन्नमन्युना । निवारितो द्वारकार्यात्सवैरः समपद्यत ॥२९३॥
विक्रान्तः स हि कार्येभ्यो निर्जिताखिलडामरः । सुस्सलक्ष्मापतिं जेतुं प्रतस्थे लोहरं पुरा ॥२९४॥
295 वात्सल्यनिर्भरेण वारितोऽथ महीभुजा । तत्परीवादमकरोच्छुक्रोधावेत्य तत्र सः ॥२९५॥
प्रवेशयन्नुच्छकुट्टसुतान्स समयान्तरम् । तमादिसुहृदं वीरं तदा राज्ञा विमानितम् ॥२९६॥
विमानिता विशालेच्छाः संहता हतवृत्तयः । न ते बहिष्कृतास्तेन प्रमराष्ट्रं जिगीषता ॥२९७॥
तान्भोगसेनविन्यस्तसंज्ञावान्कुटिलाशयः । सड्डो निनिन्द वीरस्यार्तं जानन्सरलान्तरम् ॥२९८॥
ऊचे चार्थेव हित्वापि प्राणान्स्वापायतो नृपः । भोगसेनोऽन्यथा भेदं कुर्यादगहनाशयः ॥२९९॥
300 अन्यथाभून्न सड्डोक्तं भोगसेनो यदब्रवीत् । किंचिद्रहोऽस्मि वच्मीति नृपतिं भेदलालसः ॥३००॥
स तु किं वक्षि न द्वारं तव दद्यामिति ब्रुवन् । बुभुक्षुपक्षप्रणयं जिग्ये तमवमानयन् ॥३०१॥
प्रलोभाधायिनो द्वेष्टि निर्वर्तिप्रणयीभवन् । तथात्ययाहनिभ्रान्त इव जन्तुर्गतस्मृतिः ॥३०२॥
तन्त्रिणो यामिका भूत्वा स्वस्मिन्वारे ततोऽविशन् । ते राजधानीं संनद्धैः स्वसैन्यैः सह संहताः ॥३०३॥
यामिन्यां मे वयं हन्मस्तं हतेत्यभिधाय च । प्रावेशयद्व्यस्तचिह्नांश्चण्डालान्मण्डपान्तरम् ॥३०४॥
305 भुक्तोत्तरं स्थिते राज्ञि ते बाह्ये मण्डपे स्थिताः । सरोषो नृप इत्युक्त्वा सेवकोत्सारणं व्यधुः ॥३०५॥
राजा च बिज्जलावेश्म यियासुर्मण्डपान्तरात् । दीपिकाभिः कृतालोको निर्ययौ मदनालसः ॥३०६॥
मध्यमं मण्डपं तस्मिन्प्राप्ते स्वल्पैः सहानुगैः । तत्यक्त्वा मण्डपं सड्डो द्वाराण्यावृणतज्जनान् ॥३०७॥
अन्यैरप्यथ मे द्वारे निरुद्धे सर्व एव ते । जिघांसवः समुत्थाय नृपतिं पर्यवारयन् ॥३०८॥

२८३. 1) Emended with C; A पार्थिवे. २८५. 1) Emended; A महा°. २८६. 1) Emended with C; A विपुरस्त°. २९०. 1) A omits here two *pádas* without indicating a *lacuna*. C adds here: सं पितुं सर्वलोकानां भेजे सर्वकमानुजाः. २९२. 1) Emended with C; A निर्वृत्तीः किमपि.—2) Emended; A °बुभुक्षुस्तु. २९९. 1) Emended with C; A °मिश्रं है°. ३०१. 1) A बुबुक्षु°.

विश्रम्भिस्मार्दकेन हृदयमवे निवेदुषा । तं द्विजो द्विजगस्तेजः शस्त्र्या कृष्टकचोभिनत् ॥३०९॥

ततः काञ्चनगौराणि तस्याङ्गान्यसिधेनवः । बह्व्यः सुमेरुशृङ्गाणि महोरम्य इवाविशन् ॥३१०॥ 310

क्व द्रोही द्रोह इत्युक्त्वा केशान्कृष्टान्विमोचयन् । क्रीडाहास्तस्याः कणां दृढमुष्टिं दन्तैर्व्यपाटयत् ॥३११॥

भुजगाकरनामा हि भृत्यः कट्टारकं वहन् । तस्यान्तिकात्पलायिष्ट प्रहरत्सु विरोधिषु ॥३१२॥

अतो बालोचितां लब्ध्वा क्षुरिकां स चकर्ष ताम् । मुष्टावर्गलिता कोशात्सा कृच्छ्रेण विनिर्ययौ ॥३१३॥

निर्यातान्त्रः शत्रुभिस्तैस्त्यक्तकेशो बबन्ध तम् । धम्मिल्लमथ तां शार्ङ्गीं जानुहस्तान्तरर्पयन् ॥३१४॥

नदित्वा प्रहरंस्तेजः ताडग्वीर्योऽपि सोऽभवत् । येन क्षितौ निपतितः सर्वमर्मस्विवाहतः ॥३१५॥ 315

अभिनच्च ततो रुद्धं प्रहरन्तं च पृष्ठतः । नदन्सिंह इव व्यङ्गं परिवृत्त्य व्यदारयत् ॥३१६॥

अन्यं च शस्त्रिणं कंचित्सवर्माणमपातयत् । विचेष्टमानो यः प्राणैरचिरेण व्ययुज्यत ॥३१७॥

लब्धान्तरे प्रवासाय तस्मिन्धावति मण्डपः । रक्षिभिर्भूमिपालोऽयमित्यबुद्ध्या कवाटितः ॥३१८॥

द्वारमन्वसमर्पन्स क्व प्रयासीति जल्पता । छुड्डेन हृदमार्गेण खड्गपातैरहन्यत ॥३१९॥

भोगसेनं ततोऽपश्यद्द्वारस्यान्ते समुत्थितम् । दारुतूलिकया भित्तिमालिखन्तं पराङ्मुखम् ॥३२०॥ 320

भोगसेनेक्षसे कस्मादमुं त्वमिति वादिनम् । सोऽव्यक्तं किमपि ह्रीतः प्रधावन्तं जगाद तम् ॥३२१॥

रथ्यावट्टाभिधो दीपधरस्तिष्ठन्निरायुधः । अयोदीपिकयारब्धयुद्धस्तैर्विक्षतोऽपतत् ॥३२२॥

चाम्पेयः सोमपालाख्यराजपुत्रः क्षताहितः । प्रहारैः प्राप्तवैक्लव्यो न गर्वाचारतामगात् ॥३२३॥

पौत्रः श्रीभूरपालस्य राजकापत्यमञ्जकः । विदद्री श्वेव संजाय शस्त्रीं पुच्छच्छटोपमाम् ॥३२४॥

ततः प्रधावन्प्रग्रीवमारुरुक्षुः क्षितीश्वरः । निकृत्तजानुखण्डालैरालिलिङ्ग वसुंधराम् ॥३२५॥ 325

तत्पृष्ठे स्वं क्षिपन्देहं प्रहारैर्जर्जरीकृतः । भृङ्गारनामा कायस्थो निर्द्रोहो वारितोऽरिभिः ॥३२६॥

पुनरुत्थातुकामस्य सर्वे शस्त्रावलीर्द्विषः । न्यपातयंस्तस्य कान्त्या नीलाब्जवरणस्रजम् ॥३२७॥

तिष्ठेत्कदाचिद्भूतोऽयमविपन्नो विपन्नवत् । कन्धरामधमः सङ्गुस्तस्येति स्वयमच्छिनत् ॥३२८॥

कृतं पदापहरणं यस्य सोऽहमिति ब्रुवन् । छित्त्वाङ्गुलीश्चकर्षापि रत्नाढ्यामूर्मिकावलीम् ॥३२९॥

एकपादस्थितोपानत्स्रस्तमाल्यैः शिरोरुहैः । उज्ज्वलः स ददृशे भग्नो दीर्घभुजः क्षितौ ॥३३०॥ 330

पर्याप्तयास्य पर्यन्ते वीरवृत्त्या महौजसः । निर्दोषतामीषदगात्सिस्त्रिशस्त्रं जनान्प्रति ॥३३१॥

सेवकः भूरटो नाम पूत्कुर्वन्द्रोहमुच्चकैः । निर्गत्य भोगसेनेन बहिः क्रोधान्निपातितः ॥३३२॥

प्रस्थितो दयितावासं स विक्षोभवशादिव । पन्थानं पृथिवीनाथः कान्त्या जगाम वेश्मनि ॥३३३॥

राज्योद्याने नृपतिमधुपा भोगकिञ्जल्कलोलाश्चेतो नानाव्यसनकुसुमश्रेणिभिः प्रीणयन्तः ।

हा धिग्दैवानिलतरलया पात्यमाना नियत्या बह्व्येवैते किमपि सहसा दृष्टनष्टा भवन्ति ॥३३४॥

तिर्यग्भ्यस्त्रिजगज्जयी परिभवं लङ्केश्वरो लब्धवान्प्रापाद्दीपनृपोत्तमः कुरुपतिः पादाहतिं मूर्धनि ।

इत्यन्ते बहुमानदर्पपरिभवः सर्वस्य सामान्यवत्को नाम भवेन्महानहमिति ध्यायन्धृताहंक्रियः ॥३३५॥ 335

पराङ्मुखहितैस्त्यक्तं तमनाथमिव प्रभुम् । नग्नं हुताशसात्कर्तुं स्वच्छन्दमाद्दिणोऽनयन् ॥३३६॥

---

३०९. [1]) Thus corr. by $A_1$ from °सेजः.

भुजौ कण्ठे गृहीत्वैकः कराभ्यां चरणौ परः । तं भुग्नग्रीवमालोलकुन्तलं रुधिरोक्षितम् ॥३३७॥
सथूत्कारव्रणं नग्नमनाथमिव पार्थिवम् । राजधान्या विनिष्कृष्य न्यधत्तां पितृकानने ॥३३८॥
महासरिद्वितस्ताम्भःसंभेदद्वीपभूतले । अह्नाय वह्निसंस्कारं ते भीतास्तस्य चक्रिरे ॥३३९॥
340 न हतो नापि निर्दग्धः स केनापि व्यलोक्यत । उड्डीयेव गतस्त्वाशु नेत्रनिर्विषयोभवत् ॥३४०॥
व्यतीतेन स वर्षैकचत्वारिंशतमायुषा । सप्ताशीत्यब्दपौषस्य शुक्लषष्ठ्यां व्ययुज्यत ॥३४१॥
चक्रेथ सासिकवचो रड्डः शोणितमण्डितः । श्मशानाश्मनि वेताल इव सिंहासने पदम् ॥३४२॥
.............................. । ---[1]बद्धमूलानामाप्तानां तत्र[2] विद्युते ॥३४३॥
तस्यावरोहतः सिंहासनाद्योद्धुं पुरो युधि । विक्रामन्तो बन्धुभृत्या युद्धभूमिमभूषयन् ॥३४४॥
345 नन्दिगणौ वड्डपट्टाख्यौ युद्ध्वा तद्बान्धवौ चिरम् । योधाश्च कड्डसूर्याद्याः सिंहद्वारेपतन्हताः ॥३४५॥
रणरङ्गनटो नृत्यन्निव राजगृहाङ्गने । तलङ्कुलेटको रड्डः खण्डखण्डितान्वभौ ॥३४६॥
दिशन्विजयसंदेहमहितानां क्षणे क्षणे । प्रहारैः सुबहुभिर्भित्त्वा स चिरेणापतद्रणे ॥३४७॥
राजद्रोहोचितं तस्य निहतस्यापि निग्रहम् । वैशसत्यक्तमर्यादो गर्गः[1] कोपादकारयत् ॥३४८॥
दिद्दामठान्तिके व्यङ्गुः पौरैर्भस्माश्मवर्षिभिः । अवस्करप्रणालान्तर्मग्नवक्त्रो न्यपात्यत ॥३४९॥
350 ते गुल्फदामभिः कृष्टाः स्थाने स्थाने प्रभुद्रुहः । तत्क्षणं लोकथूत्कारपूजां कृत्योचितां दधुः ॥३५०॥
पलाय्य प्रययुः क्वापि सड्डहंसरथादयः । मरणाभ्यधिकां कंचित्कालं सोढुं विपद्व्यथाम् ॥३५१॥
रुध्यन्पराजितं गर्गं[1] नष्टे तदनुजे विदन् । भोगसेनोथ तां वार्तामशृणोत्प्रलयोपमाम् ॥३५२॥
व्यावृत्य प्रत्यवस्थातुकामः पश्यन्पलायिनः । योधान्स्वैः सहितः कैश्चित्ततः क्वापि भयादगात् ॥३५३॥
इत्थं निहतविध्वस्तनायका द्रोग्धृसंहतिः । स्वदोर्मात्रसहायेन गर्गचन्द्रेण सा कृता ॥३५४॥
355 सत्त्वं साहससिद्धिं च नेतिहासेष्वपि क्वचित् । अभौषं तादृशं यादृक्तस्यास्ते स्म प्रतापिनः ॥३५५॥
निशां प्रहरमह्नश्च राज्यं कृत्वा स लब्धवान् । द्रोहकृच्छड्डराजाख्यां गतिं कुकृतिनामगात् ॥३५६॥
यशस्करकुले जन्म द्रोग्धृभिस्तैः प्रमाणितम् । क्षणभङ्गुरभजद्राज्यं यस्मात्पूर्णठदेववत् ॥३५७॥
दावोद्दीपनकूटयन्त्रघटनैः सिंहादिसंहारिणो यान्त्याकस्मिकगण्डशैलपतनैरन्तं किराता वने ।
एकेनैव ननु प्रधावति जनः सर्वोपि मृत्योः पथा हन्ताहं[1] निहतोयमेष तु मितं कालं विभेदग्रहः ॥३५८॥
स्त्रोद्वाहे ललनौघमङ्गलरवो यैर्वेधुलिः श्रूयते दीनैस्तैर्दयिताविलाप उदयन्नाकर्ण्यतेन्तक्षणे ।
सोपि प्रत्यहितं प्रहृष्यति परः स्वं प्रान्तमन्ते मुदोद्धृत्तं सोप्यवलोकयत्यहह धिङ्मोहोयमान्ध्यावहः ॥३५९॥
360 सायं विचिन्तितो रात्रौ फलितोन्यत्र वासरे । दुर्विपाकप्रदाताभूद्द्रोग्धृणां साहसद्रुमः ॥३६०॥
अथ सिंहासनस्यान्तः कार्यान्ते त्यक्तविग्रहः । गर्गः प्रक्षालितामर्षश्चक्रन्द स्वामिनं चिरम् ॥३६१॥
तस्मिन्रुदति सर्वोपि पौरलोको भयोज्झितः । संग्रामावसरो भूपं व्यलापील्लोकवत्सलम् ॥३६२॥
कारुण्योत्पत्तये दत्त्वा कोशं जीवितकामया । जयमत्या तदावारि गर्गः कपटशीलया ॥३६३॥

---

३४३. [1]) These words written by $A_1$ after verse 342, belong apparently to a verse of which the beginning is lost; the *lacuna* in the text is not indicated in A. Perhaps, more verses have been lost here.—[2]) A तविति°. ३४८. [1]) Thus corr. by $A_1$ from गग्गः. ३५२. [1]) Thus corr. by $A_1$ from गग्गं. ३५८. [1]) $A_1$ gloss अहं हन्ता.

कुरु मे संविदं भ्रातरिति संदेशमयस्तु सः । तत्क्रियायच्चो ज्ञात्वा चितिं तस्या अकल्पयत् ॥३६४॥

चिकुरनिचये यत्कौटिल्यं विलोचनयोश्च या तरलतरता यत्काठिन्यं तथा कुचकुम्भयोः ।
वसति हृदि तथासां पिण्डीभवत्तु ता इमा गतदयया विशायन्ते न केचन योषितः ॥३६५॥ 365

दौःशील्यमप्याचरन्त्यो घातयन्त्योपि वल्लभान् । हेलया प्रविशन्त्यग्निं न स्त्रीषु प्रत्ययः क्वचित् ॥३६६॥

धुर्याधिरूढा सा यान्ती प्रावन्मार्गे व्यलम्बत । अमतो विज्जला तावन्निर्गत्य प्राविशच्चिताम् ॥३६७॥

अथ तस्याश्चितारोहं कुर्वन्त्या भूषणार्थिभिः । लुण्ठकैर्लुण्ठ्यमानाया व्यथा गात्रेषु पप्रथे ॥३६८॥

सच्छत्रचामरे राज्ञ्यौ दह्यमाने विलोकयन् । लोकः सर्वोपि साक्रन्दो दग्धदृष्टिरिवाभवत् ॥३६९॥

औचित्यं तेन च तदा निन्येत्यन्तपवित्रताम् । सर्वैरभ्यर्थ्यमानोपि नोपाविक्षन्नृपासने ॥३७०॥ 370

सुतमुच्चलदेवस्य बालमङ्के निधित्सता । राज्येभिषेक्तुं ते केचित्तेनाभ्यर्थ्यन्त यत्नतः ॥३७१॥

लोको येष्वेव केषांचित्तत्त्वमालोक्य सस्मितः । भिक्षामप्यटितुं जाने नैव जानाति योग्यताम् ॥३७२॥

राज्यां श्वेताभि—नायां मल्लराजस्य ये सुताः । सल्हणाद्यास्त्रयोभूवन्मध्यमे प्राक्क्षयं गते ॥३७३॥

हन्तुं ज्येष्ठकनिष्ठौ द्वौ शेषौ सल्हणलोठनौ । अन्विष्टौ शङ्कराजेन भयात्प्रवमठं गतौ ॥३७४॥

निर्लज्जैर्निहतान्द्रोग्धॄन्विहाय मिलितैः पुनः । तत्र्यम्बाटोहसविधेरानीतः कृतचाक्रिकैः ॥३७५॥ 375

दृष्ट्वा राज्यार्हमप्राप्य कंचिज्ज्यायांस्तयोस्तदा । गर्गेण राज्ये संरम्भादभ्यषिच्यत सल्हणः ॥३७६॥

हा धिक्चतुर्णां यामानामन्तरे नृपतित्रयी । अहस्त्रियामे तत्रासीद्दृश्या या पुरुषायुषैः ॥३७७॥

ये सायमुच्चलनृपं प्राह्णे रड्डं सिषेविरे । मध्याह्ने सल्हणं प्रापुर्धूर्तास्ते राजसेवकाः ॥३७८॥

अथ लोहरकोट्टस्थः सार्धाह्नि गलिते नृपः । सुस्सलो भ्रातृमरणं श्रुत्वा तुङ्गान्तमानसः ॥३७९॥

गर्गेण प्रहितो दूतः स क्रन्दन्स्वं विपञ्चितो । ततस्तं वीतसंदेहं चकारार्तप्रलापिनम् ॥३८०॥ 380

आद्यास्सल्हणवृत्तान्तपर्यन्तां नाशृणोत्कथाम् । गर्गदूताद्भ्रातृवधं स्वस्याह्वानं च केवलम् ॥३८१॥

अश्रद्दधानस्तं शीघ्रमरिच्छेदं सुदुष्करम् । तदाह्वानाय गर्गो यं प्राहिणोत्तं चलन्गृहात् ॥३८२॥

आक्रन्दमुखरो भूत्वा तां रात्रिमरुणोदये । कश्मीराभिमुखो यात्रामसंभृतबलोप्यदात् ॥३८३॥

अन्योथ गर्गदूतस्तं पथि संघटितोभ्यधात् । कृत्यमावेद्य वृत्तान्तं नागन्तव्यमिति ध्रुवम् ॥३८४॥

क्षिप्रं हतेषु द्रोहेषु त्वय्यसंनिहितेनुजः । कृतस्तु सल्हणो राजा कृत्यमागमनेन किम् ॥३८५॥ 385

श्रुत्वेति गर्गसंदेशं कोपावसहनो नृपः । अभयाणैषिणो भृत्यान्विहस्यैवं वचोब्रवीत् ॥३८६॥

नास्माकं पैतृकं राज्यं यदि रिक्थहरोनुजः । मज्ज्यायसा मया चैतद्भुजाभ्यामर्जितं पुनः ॥३८७॥

राज्यं स्वीकुर्वतोरन्यो न दाताभूत्तदावयोः । येनाहृतमिदं पूर्वं स क्रमः क्व गतोधुना ॥३८८॥

इत्युक्त्वाचिरतैरेव वहन्नासीत्प्रयाणकैः । दूतांश्च पार्श्वं गर्गस्य स्वीकृत्यै प्राहिणोद्बहून् ॥३८९॥

स काष्ठवाटं संप्राप सल्हणस्य हितैषिणा । निर्गत्य गर्गचन्द्रेण चक्रे हुष्कपुरे पदम् ॥३९०॥ 390

प्रवृत्तायां विभावर्यां दूतैः कृतगतागतैः । तस्याङ्गीकृतसामापि गर्गो द्रोग्धाभ्यधीयत ॥३९१॥

---

३६९. ¹) Emended; A राज्ञो. ३७१. ¹) Emended with C; A °भ्येष्यन्त. ३७३. ¹) Thus A₁ C R; A₁ कं.

कार्यमध्यगतो राजा तथापि ग्राहिणोन्तरा । धात्रेयं भ्रातरं गर्गाभ्यर्णे हितहिताभिधम् ॥३९२॥
भोगसेनः क्षणे तस्मिन्नाययौ दैवमोहितः । स्वाशक्तान्विल्ववनजान्मध्येकृत्य नृपान्तिकम् ॥३९३॥
सोभ्यर्णे कर्णभूत्याख्यमश्वारोहं महीपतेः । विसृज्य गर्गं जेष्यामीत्युक्त्वाभूल्लोभमोहितः ॥३९४॥
395 कालापेक्षामपि त्यक्त्वा हन्तुं भ्रातृद्रुहं स तम् । योग्यं प्रसङ्गमन्विष्यन्नाशे लोकैरसज्जनः ॥३९५॥
यस्य भ्रातृद्रुहः पार्श्वे स स्वमाश्रीयसे कथम् । गर्गोपि तमुपालेभे दूतैरित्यादि संदिशन्[1] ॥३९६॥
स तु मार्गोत्पलाख्यायं तमसीति विलम्बकृत् । दत्तास्कन्दः क्षपापाये तं सानुगमघातयत् ॥३९७॥
पतन्रणे कर्णभूतिर्वीरवृत्त्या व्यरोचत । तस्य द्वैमातुरो भ्राता तेजःसेनोप्यनूनया ॥३९८॥
तेजःसेनस्तु शूलाग्रे नृपादेशाद्व्यवेश्यत । मरिचो लवराजस्य तनूजोश्वपतेरपि ॥३९९॥
400 अवष्टम्भेन भूपोभून्निमरावमहक्षमः । न येनासितुमप्यास्था तावदासीत्तु तद्बलम् ॥४००॥
पुरोगोपि कृतः पश्चाद्योतीतेह्नि महीभुजा । स सञ्जपालस्तत्पार्श्वमथारादाययौ हयान् ॥४०१॥
तेष्वायातेष्ववष्टम्भं यातं किंचिच्च तद्बलम् । प्राप्तथ गर्गसेनानीः सूर्याख्योनल्पसैनिकः ॥४०२॥
बुभुक्षुर्धीश्य तानाश्रैर्नृपोश्वमधिरोपितः । उत्सेकशठधीर्वर्म कृच्छ्राच्च परिधापितः ॥४०३॥
गगनं शलभच्छन्नमिव कुर्वन्नथापतत् । शरासारो रिपुबलात्सर्वतोच्छिन्नसंततिः ॥४०४॥
405 ओंकारं शरभूत्कारैः कृत्वा द्रोहस्य दुःसहाः । प्राहरन्राजकटके सर्वान्सर्वायुधीरिव ॥४०५॥
हतविक्षतविध्वस्तसैन्यः साहसिको नृपः । वेगादपससारैको मध्यान्निर्गत्य वैरिणाम् ॥४०६॥
गर्जत्सिन्धुरयाभ्रान्तनद्युत्तीरलङ्घ्यत । सवाजिना तेन सेतुर्दुर्लङ्घ्यः पक्षिणामपि ॥४०७॥
सञ्जपालादयो छिन्नाः शेकुस्तमनुवर्तितुम् । पृष्ठलग्ना निरुन्धन्तः स्थाने स्थाने विरोधिनः ॥४०८॥
वीरानकाभिधं वीरः स खशानां निवेशनम् । त्रिंशद्विंशैः समं भृत्यैः प्रविष्टस्तस्यजैरिभिः ॥४०९॥
410 निरम्बरैर्निराहारैस्तिष्ठन्कतिपयैः समम् । स तत्र नित्यमाक्रम्य निर्भयो दण्डयन्खशान् ॥४१०॥
क्रमेण च हिमापातदुर्लङ्घ्याध्वनि संकटे । अविपन्नो भाग्ययोगात्प्रययौ लोहरं पुनः ॥४११॥
पदे पदे प्राप्तमृत्युरायुःशेषेण रक्षितः । तथाप्यासीत्स कश्मीरप्राप्तिमेव विचिन्तयन् ॥४१२॥
वराकं हारसेत्वयाद्गर्गो हितहितं क्रुधा । विरुद्धधीर्वितस्तायां बद्धपाण्यङ्घ्रिमक्षिपत् ॥४१३॥
तस्मिन्प्रक्षिप्यमाणेप्यक्षेमाख्यः स्वं क्षिपन्पुरः । दासोस्योच्चैःपदारोहमधःपातेपि लब्धवान् ॥४१४॥
415 राज्यप्रदः क्षमारिथ गर्गः प्राप्तोन्तिकं ततः । प्राप सल्हणराजस्य सविशेषमधीशताम् ॥४१५॥
स भूभृन्मन्त्रिविक्रान्तिहीनो राज्यमवाप्तवान् । चक्रभ्रममिवापश्यत्सर्वतो भ्रान्तमानसः ॥४१६॥
न मन्त्रो न च विक्रान्तिर्न कौटिल्यं न चार्जवम् । न दातृता न लुब्धत्वं तस्योद्रिक्तं किमप्यभूत् ॥४१७॥
तद्राज्ये राजधान्यन्तर्मध्याह्नेपि मलिम्लुचः[1] । लोकं मुमुषुरन्याध्वसंचारस्य कथैव का ॥४१८॥
चक्रुरप्यङ्गना कालं कान्त्या यशस्यनाशयत् । पुमानप्यभवत्तत्र साध्वसाध्वसधीरसौ ॥४१९॥
420 यामथ सल्हणोन्वेषुर्भेजे तां लोठनः[1] स्त्रियम् । साधारण्यं गतौ राज्यभोग इत्यभवत्तयोः ॥४२०॥
पुरुषान्तरविज्ञानविहीनस्य प्रमादतः । सर्वोपि तस्य तन्त्रैश्वर्यव्यवहारो व्यहस्यत ॥४२१॥

---

३९६. [1]) Emended with C; A सन्दिशत्. ४१८. [1]) Thus A. ४२०. [1]) Emended with C; A लोठनः.

श्वशुरो लोठनस्योऽसूहस्तेन व्यधीयत । द्वारे तापसगोष्ठीषु योग्यो विक्रमनिष्ठुरे ॥४२२॥
यः सुस्सलभयोच्छेदमङ्गीकुर्वंस्तदागमे । स्वमन्त्रलक्षजापेन सिद्धिं मन्त्रक्षणेऽभ्यधात् ॥४२३॥
जिह्मो गर्गाज्ञया राजा तमपि व्यपातयत् । बद्धाश्मानं वितस्तायां बिम्बं नीलाभ्रडामरम् ॥४२४॥
राजानुग्राहको गर्गस्तांस्तान्व्यापादयन्रिपून् । हालाहाण्डामरान्भूरीन्रक्तभोज्यानपातयत् ॥४२५॥ 425
राज्यकिंचित्करे गर्गायत्तजीवितमृत्यवः । बाह्याभ्यन्तरे चासन्नल्पे वा पृथवोऽपि वा ॥४२६॥
कदाचिल्लहराद्दुर्गे प्रविष्टेय नृपान्तिकम् । चुक्षोभ नगरे लोकः सर्व एव भयाकुलः ॥४२७॥
तदा सुद्दरङ्गार्ता शूलान्यारोप्य तेषु यत् । कुप्यन्गर्गोऽयमायातो हन्तुं सर्वान्नृपाश्रितान् ॥४२८॥
गर्भिणीगर्भपातिन्या तादृश्या भयवार्तया । छिद्राण्यहान्यन्वभावि जनैर्ज्वर इवाखिलैः ॥४२९॥
ततस्तिलकसिंहाद्यैरुद्रेकाद्वागदीयत । अनपेक्ष्य नृपादेशमास्कन्दो गर्गमन्दिरे ॥४३०॥ 430
देशभास्युल्बणः कृत्स्नो धावति स्म धृतायुधः । मत्वमहीशानखिलान्गर्गश्चन्द्रस्त्वविह्वलः ॥४३१॥
निर्लज्जा दिल्हभट्टारलक्ककाद्यास्तुरंगमैः । भ्राम्यन्तस्तत्रादृश्यन्त गर्गावसथवीथिषु ॥४३२॥
निषिषेध न तान्राजा प्रत्युतास्कन्ददायिनाम् । लोठनं कुण्डशाक्तीनां तेषां स्फूर्त्यै व्यसर्जयत् ॥४३३॥
तेनापि योधैर्गर्गस्य रुद्धमार्गेण मन्दिरम् । न रुद्धं नापि निर्दग्धुं पारितं दत्तवह्निना ॥४३४॥
धानुष्कः केशवो नाम मठेशो लोठिकामठे । अबाधतैव नाराचैस्तद्योधान्पातयन्परम् ॥४३५॥ 435
प्रकाशेन समं राजलोके विरलतां गते । सायं सानुचरो गर्गो हयारूढो विनिर्ययौ ॥४३६॥
समीरप्रतिहतो निनाय लहरं व्रजन् । बद्धोजसूक्ष्मस्वस्थमासीनं त्रिपुरेश्वरे ॥४३७॥
तापसेन किमेतेनेत्युक्त्वान्येद्युर्मुमोच तम् । तं सुस्सलोऽपि विधुरे नृपतिं नोदपाटयत् ॥४३८॥
क्षणे क्षणेऽभवद्देशस्ततः प्रभृति सर्वतः । गर्गागमनसंत्रस्तपौरार्गलितमन्दिरः ॥४३९॥
अथार्तस्य महीभर्तुर्गर्गसंधानमिच्छतः । महत्तमः सहेलोऽभूल्लहरे दूत्यमाचरन् ॥४४०॥ 440
तेनाङ्गीकारितो गर्गः कथंचित्कन्यकार्पणम् । भूत्वास्तु तेन संबन्धं नैच्छन्भूतस्य भूपतेः ॥४४१॥
ततः सुस्सलदेवेन सह संधिं निबद्धवान् । पश्चात्संप्रार्थ्यमानोऽपि संबन्धं न व्यधत्त सः ॥४४२॥
मण्डले विशराहत्यमेवं याते नृपोऽवधीत् । सञ्जुं हंसरथं नोनरथं चाचादितांश्चरैः ॥४४३॥
तामधिकणसूर्यादिप्रवेशे — — — जनैः । अत्यक्तासुभिर्घोरामवस्थामन्वभीभवत् ॥४४४॥
भोगसेनाङ्गनां मल्लामनुमेने स यन्नृपः । अनुसर्तुं पतिं वह्निं वसन्ती[1] साधु तद्व्यधात् ॥४४५॥ 445
तादृग्दृष्ट्वापि वैक्लव्यं शङ्कितेन तदन्तरे । प्रभिन्ने दिल्हभट्टारो रसदानेन भूभुजा ॥४४६॥
न राजबीजी नोद्दण्डविक्रमो वा बभूव सः । शमितो गुरुदण्डेन यत्तथा तेन पापिना ॥४४७॥
तं या निनिन्दानिष्पन्नपौरुषं तस्य सुस्तदा । तस्या वह्निप्रवेशेन सिद्धं मानवतीव्रतम् ॥४४८॥
सोऽल्पोऽपि राज्यकालोऽभूदेवमातङ्कदुःसहः । दीर्घस्वापदृश्यमानदीर्घदुःस्वप्नसंनिभः ॥४४९॥
कालविस्सुस्सलो गर्गाद्बद्धसंधिरपि व्रजन् । न्ययुङ्क्ताथ सज्जपालं काश्मीरान्मुख्यभाक्ततः ॥४५०॥ 450

४२२. ¹) Emended; A °स्योऽसूह°. Cf. viii. 437. ४२३. ¹) Emended; A तृतीयमपीत. ४४४. ¹) A₁ °प्रवेशार्जनः, without indicating the *lacuna*; C °प्रवेशि दुर्जनः.—²) Emended; A °भीभवत्. ४४५. ¹) Thus corr. by later hand from A वसन्ती. ४२९. ¹) Emended with R C; A राजका°.

हारेण सह दत्तार्धो लक्ष्मकः सल्हभूभुजा । वराहमूलं संप्राप कथंचित्प्रस्थितिं भजन् ॥४५१॥
गर्गः स्मरन्नवस्कन्दं पश्चादभ्येत्य नाशयन् । वाराहमूलेन समं तस्य सैन्यमलुण्ठयत् ॥४५२॥
चिच्छिदे स तु तद्योधैर्हेतैश्च परिषस्वजे । अविच्छेदैर्मिथो दिव्यैर्देहैरप्सरसां गणः ॥४५३॥
मायके गलिते भुग्नवृत्तैः सहंशाजैर्मही । पतितैरप्यच्छुश्चार्धैर्भूषिता मौक्तिकैरिव ॥४५४॥
455 आगच्छता छिन्नभीतिः सज्जपालेन लक्ष्मकः । निराभयः संप्रपेदे पार्श्वं सुस्सलभूपतेः ॥४५५॥
सोऽथ भूभृत्सज्जपाले दूरं क्रान्तरिपौ गते । आजगामान्तिकं प्रीतिः प्रेरितः पैरडामरैः ॥४५६॥
संधिं तव विधास्यामि सार्धं सुस्सलभूभुजा । इत्युक्त्वा सल्हणं प्रायात्तदभ्यर्णं सहेलकः ॥४५७॥
काङ्क्षिताभ्युदयं पैरैश्चातकैरिव वारिदम् । आशीभिरभ्याजयन्सर्वे एवोत्पलानुजम् ॥४५८॥
गर्गस्य गृहिणी कुङ्कुमाभिधानाय तदन्तिकम् । कन्यकाद्वयमादाय परिणेतुमुपाययौ ॥४५९॥
460 उपयेमे स्वयं राजा राजलक्ष्म्यभिधां तयोः । गुणलेखां कुमारेण स्वीचक्रे तद्यवीयसीम् ॥४६०॥
सल्हणे सानुजेऽभ्येत्य सज्जपालेन वेष्टिते । राजापि राजसदसः सिंहद्वारं समासदत् ॥४६१॥
साक्षाद्विरोधिभूरयेन द्वारमेकेन पातितम् । अभून्मोघं तमप्राप्य सार्धं वैरिमनोरथैः ॥४६२॥
ससैन्यैर्गलितद्वारराजवेश्मस्थिते रिपौ । गर्गास्कन्दाभिशङ्क्यासीच्चकितं सौस्सलं बलम् ॥४६३॥
गर्गे वितीर्णकन्येऽपि राजसैन्यमविश्वसत् । तस्थौ स्थातव्यमित्येव तृणस्पन्देऽपि शङ्कितम् ॥४६४॥
465 अस्ताभिलाषिणि दिने तारकासहते बले । केशवदवति क्ष्मापे दुर्भेदौकःस्थिताग्रिपून् ॥४६५॥
प्रविश्य पार्श्वनिर्भुग्नकवाटेन तमोऽरिणा । द्वारं विवृत्याक्रान्तस्थैः सज्जपालोऽग्रहीद्रणम् ॥४६६॥
तस्य निक्षिप्य पातंगीं वृत्तिं भूयस्यरिव्रजे । अनुप्रवेशं विदधे पदातिर्लक्ष्मकाभिधः ॥४६७॥
दरदानयने काष्ठवाटसंकटविक्रमे । यस्तस्य सदृशो योधः प्रतिबिम्ब इवाभवत् ॥४६८॥
स केशवश्च स मठाधीशस्तमनुसस्रतुः । शैनेयमारुती पार्थमिव प्रार्थितसैन्धवम् ॥४६९॥
470 निर्गत्य मण्डपाद्भग्नप्रहारैस्तैः कथंचन । विवृते प्राङ्गनद्वारे धीरो राजाविशत्स्वयम् ॥४७०॥
निर्विभागे वर्तमाने संगरे सैन्ययोर्द्वयोः । प्राङ्गने प्रमयं प्रापुर्भूयांसस्तत्र शालिनः ॥४७१॥
सचिवः सल्हराजस्य पतंगग्रामजो द्विजः । आजौ प्रापाञ्जको नाम स्वःस्त्रीसंभोगभागिताम् ॥४७२॥
कायस्थेनापि रुद्रेण लब्ध्वा गञ्जाधिकारिताम् । स्वामिप्रसादः साफल्यं निन्ये त्यक्त्वा तनुं रणे ॥४७३॥
सायं वनस्पतिर्लीनैः खगैर्यो वाचालितो यथा । प्राङ्गिं प्रविष्टे प्रोड्डीननिःशब्दविहगोऽभवत् ॥४७४॥
475 आयोधनोर्वी वाचाला चक्रे चित्रार्पितेव सा । तथा सुस्सलभूपेन तुरंगस्थेन तर्जिता ॥४७५॥
अनाकन्देऽङ्गनान्तःस्थे तस्मिन्सिंहासनं ध्वनिः । सुस्सलो जयतीत्येवं हक्कावाद्यं च शुश्रुवे ॥४७६॥
मल्लराजगृहे तादृङ्नान्यस्याप्युदपद्यत । अगातां तत्र वैक्लव्यं यावन्सल्हणलोठनौ ॥४७७॥
आबद्धकवचावश्राक्षावालिङ्ग्य सुस्सलः । बालौ युवामिति वदन्भूलौल्याजयदायुधम् ॥४७८॥
आदिश्य मण्डपेऽन्यस्मिन्बद्धयोश्च स्थितिं तयोः । प्राप्तराज्यस्ततो राजा विवेशास्थानमण्डपम् ॥४७९॥
480 त्र्यहोनांश्चतुरो मासान्भुक्तराज्यं बबन्ध तम् । सितस्य सोऽष्टाशीतेऽब्दे राधस्य त्रितयेऽहनि ॥४८०॥

---

४५२. [1]) Thus A. ४६२. [1]) Emended with C; A साक्षादि°. ४६६. [1]) Emended; A [illegible]°.

तेन सिंहासने क्रान्ते भास्वतेव नभस्तले । क्षणादेवाखिलो लोकः क्षोभमन्धिरिवात्यजत् ॥४८१॥
विक्रोशशस्त्रः सन्द्रोहावेक्षणक्षोभतः सदा । व्याधलोके व्यात्तवक्त्रो मृगराज इवाभवत् ॥४८२॥
भ्रातृद्रुहां कुलच्छेदमन्विष्यान्विष्य कुर्वता । न तेन नीतिनिष्ठेन शिशवोप्यवशेषिताः ॥४८३॥
जनस्य वीक्ष्य दौर्जन्यमधृष्टाकारतां वहन् । स कार्यापेक्षयाप्यासीन्न क्वाप्याहितमार्दवः ॥४८४॥
वस्तुतस्त्वार्द्रहृदयः क्रूरं दमयितुं जनम् । अधात्तनं तद्भीमत्वाग्निस्निग्धाल इवादधे ॥४८५॥ 485
कालवित्समयत्यागी प्रगल्भः प्रतिभानवान् । इङ्गितज्ञो दीर्घदृष्टिः स एवान्यो न कोप्यभूत् ॥४८६॥
अधिकः कोपि कोप्यूनः कोपि तस्य समो गुणः । दोषोपि वा पूर्वजस्य स्वभावैक्येप्यदृश्यत ॥४८७॥
अन्वकारि समानेपि कोपे तत्पूर्वजन्मनः । कोपेन विषमालर्कं तदीयेन तु तारकम् ॥४८८॥
न बभूव स वेशादौ सासूयोनुचितं पुनः । स्थितिभेदभयात्सेहे नोत्सेकमनुजीविनाम् ॥४८९॥
नैच्छत्स द्वन्द्वयुद्धादिसंधानैर्मानिनां वधम् । तस्मिन्नमायाविर्व्यूढे स्वदीयत कृपाकुलः ॥४९०॥ 490
वाक्पारुष्यं नृपस्यासीदायत्यातङ्कदुःसहम् । तस्य तु प्रणयप्रायं हिंसाबाधविवर्जितम् ॥४९१॥
तस्यार्थगृध्नोहस्पादो भूयानास्ते स्म संपदाम् । त्यागो विषयकालादिनैयत्यात्तु मितोभवत् ॥४९२॥
नवकर्माश्रवाहुल्यप्रिये तस्मिन्दरिद्रताम् । तत्यजुः कारवो वाजिविक्रेतारश्च दैशिकाः ॥४९३॥
दुःसहव्यसनोत्पत्तौ जिगीषोः प्रशमैषिणः । तस्यासीदपरित्याज्यं न किंचिद्वसुवर्षिणः ॥४९४॥
तस्येन्द्रद्वादशी भूरिपरार्ध्यांशुकदायिनः । यथा नृपस्य शुशुभे तथा नान्यस्य कस्यचित् ॥४९५॥ 495
यथा प्रागुच्चलो राजा सुप्रापः प्रियसेवकः । स तथा सेवकैरासीद्भूम्ना दुर्लभदर्शनः ॥४९६॥
नोच्चलादपरस्यासीद्व्यसनं हयवाहने । नान्यस्य सुस्सलनृपाद्वास्थ्यं तत्र च पप्रथे ॥४९७॥
शममुत्पन्नमुत्पन्नं निन्ये दुर्भिक्षमुच्चलः । राज्ये सुस्सलदेवस्य न तत्स्वप्नेप्यदृश्यत ॥४९८॥
किमन्यदखिलैः सोभूदग्रजादधिको गुणैः । त्यक्त्वा त्यागार्थिसंपृक्तसुप्तापत्याभि केवलम् ॥४९९॥
औच्चलेः पालको गर्गो यं राज्ये कर्तुमैहत । सहस्रमङ्गलस्तेन निरवास्यत स क्रुधा ॥५००॥ 500
तस्मिन्भद्रावकाशस्थे मासनामा तदात्मजः । काञ्चनोत्कोचबद्धके डामरैः सह चाक्रिकाम् ॥५०१॥
असंख्यजस्सुच्चलजं पितृव्येणार्थितं शिशुम् । प्रसङ्गे तत्र गर्गोपि प्रातिकूल्यमदर्शयत् ॥५०२॥
प्रहितानां नरेन्द्रेण तृणानामिव शस्त्रिणाम् । गर्गदावाग्निदग्धानां निःसंख्यानामभूत्क्षयः ॥५०३॥
गर्गस्यालोपि विजयः स देवसरसीश्रयः । प्रातिलोम्येन नृपतिसैन्यानां कदनं व्यधात् ॥५०४॥
राज्यप्राप्तेर्मासमात्रे दिनैरभ्यधिके गते । तेनोत्पिञ्जेन राज्ञोभूच्च धीरस्याकुलं मनः ॥५०५॥ 505
सुरेश्वर्यमरेशोर्वीवितस्तासिन्धुसंगमाः । गर्गेण राजसैन्यानां कृताः कदनकाङ्क्षिणः ॥५०६॥
संग्रामे तुमुलेमात्यौ भृङ्गारकपिलौ हतौ । कर्णभूत्यकनामानौ तन्त्रिणौ च सहोदरौ ॥५०७॥
निहतानन्तशुभटसमूहान्तरलक्षितान् । तादृशानपि निष्क्रष्टुं नासीत्कस्यापि पाटवम् ॥५०८॥
हर्षमित्रः कम्पनेशो मुम्मुर्मातुलात्मजः । विजयेन हतानीको विदधे विजयेश्वरे ॥५०९॥

---

४९२. 1) Emended; A °नैयत्या तु. ४९८. 1) Emended with O; A स्वप्नेदृश्यत. ५०६. 1) Emended with C; A राजसै°.

510 पुत्रो मङ्गलराजस्य तिल्हो राजान्यवंशजः । तत्र बिम्बाकरमुखास्तन्त्रिणश्च प्रमिम्यिरे ॥५१०॥
राजानीके सञ्जपालः प्रवीरप्रवरोऽभवत् । भूरिसैन्येन गर्गेण नाल्पसैन्योपि यो जितः ॥५११॥
संस्तम्भ्य विजयक्षेत्रे लक्ककाद्यैर्विसर्जितैः । धीरो राजा बलं भग्नं स्वयं गर्गोन्मुखं ययौ ॥५१२॥
सोन्विष्य गर्गेण हतान्योधानाशीकृतान्बहून् । निरदाहयदन्येद्युरसंख्यैश्चिताग्निभिः ॥५१३॥
बलिना भूभुजा गर्गः पीड्यमानः शनैः शनैः । ततः स्ववसतीर्दग्ध्वा हृल्लोहाभिमुखोभवत् ॥५१४॥
515 स तत्र रजवर्णाख्यं गिरिदुर्गं समाश्रितः । हताशोनुचरैस्त्यक्तो नृपेणारादवेष्ट्यत ॥५१५॥
अन्यारूढेन तत्रापि सञ्जपालेन वेष्टितः । चरणौ शरणीचक्रे राज्ञो दत्त्वोच्चलात्मजम् ॥५१६॥
अन्तिकस्थं नृपे कर्णकोष्ठजं मल्लकोष्ठकम् । विरुद्धं रुद्धवत्याशु गर्गो विश्वासमाययौ ॥५१७॥
गृहीतप्रणतिस्तस्य नष्टेषु विजयादिषु । शमितोपप्लवो राजा विवेश नगरं शनैः ॥५१८॥
गत्वाथ लोहरे न्यस्य बद्ध्वा सल्हणलोठनौ । स कल्हसोमपालाद्यै रेमे संसेवितो नृपैः ॥५१९॥
520 भूयः प्रविष्टः कश्मीरान्सेव्यः सर्वातिशायिभिः । गर्गं प्रसादैरनयत्प्रवृद्धिमधिकाधिकैः ॥५२०॥
ग्रीष्मार्कप्रतिमे तस्मिन्ह्लादिनावनुचक्रतुः । महादेवी कुमारश्च द्रुमच्छायावनानिलौ ॥५२१॥
डामरौ देवसरसोद्भवौ विजयगोत्रिणौ । बृहट्टिकस्तथा सूक्ष्मटिको वेलां प्रचक्रतुः ॥५२२॥
सानाथ्यकाङ्क्षिणौ पार्थिवस्य प्रविशतः पुरः । लोकपुण्ये तस्थतुस्तौ क्रन्दद्भिः स्वानुगैः समम् ॥५२३॥
विजये गर्गसंबन्धात्सदाक्षिण्यो महीपतिः । सदाचारं परित्यज्य वेत्रिभिस्तावताडयत् ॥५२४॥
525 तौ मानिनश्च तद्भृत्याः कृष्टशस्त्रास्ततोऽव्यधुः । साहसं सुमहत्सैन्ये प्रहरन्तो महीपतेः ॥५२५॥
श्वपाकोभोगदेवाख्यः कृपाण्या प्राहरन्नृपम् । धीरो गज्जकनामा च करवालेन पृष्ठतः ॥५२६॥
सावशेषतया भूपस्यायुषो मोघतां ययुः । द्विपप्रहतयो वाहतुरगी तु व्यपद्यत ॥५२७॥
नृपस्यान्तरयन्वैरिप्रहृतिं बाणवंशजः । निहतस्तत्र भृङ्गारसीहः सादीशसस्यकः ॥५२८॥
सैनिकैस्तैर्बृहट्टिकाभोगदेवादयो हताः । सूक्ष्मटिकस्तु निस्तीर्णो हेतुर्भाविनि विप्लवे ॥५२९॥
530 शूले व्यापादिता गज्जकादयो द्रोहसंश्रिताः । संदेहितासुरित्यासीद्राजा गर्गानुकूल्यभाक् ॥५३०॥
न भवेत्पविपातेपि प्रमयः समयं विना । प्रसूनमप्यसून्हन्ति जन्तोः प्राप्तावधेः पुनः ॥५३१॥
ज्वालाभिरौर्वदहनस्य पयोधिमध्ये न म्लानतामपि हि यानि मुहुः स्पृशन्ति ।
तान्येव यान्ति विलयं किल मौक्तिकानि कान्ताकुचेषु युवभावभुवोष्मणापि ॥५३२॥
प्राक्सेवामपि विस्मृत्य परोत्सेकासहिष्णुना । मण्डलात्सञ्जपालाद्या निरवास्यन्त भूभुजा ॥५३३॥
संबन्धी काकवंश्यानां यशोराजाभिधस्ततः । सहलमङ्गलाभ्यर्णे राज्ञा निर्वासितो ययौ ॥५३४॥
535 तमन्यांश्च विनिर्यातान्देशाद्धुक्कन्समृद्धिमान् । ऐच्छल्लब्धप्रतिष्ठः स राज्ञः प्रत्यभियोगिताम् ॥५३५॥
तत्पुत्रः कान्दमार्गेण विविक्षुः क्ष्मापसैनिकैः । यशोराजे क्षते प्रासः प्रत्यावृत्य ययौ भयात् ॥५३६॥
अथान्येष्वपि भृत्येषु राज्ञा निर्वासितेषु सः । मिलितेषु प्रथां यावद्यावदुपलब्धवान् ॥५३७॥

---

५१४. [1]) Emended; A फलाहा°. Cf. हालाहाण्डमराश् viii. 425. ५१७. [1]) Emended; A with diplography मल्लकोष्ठका ष्ठकम्. ५१९. [1]) Emended with C; A राजा.

लोभाभ्यासेन भूयोपि संचिन्वन्कोशमन्वहम् । आस्ते स्म लोहरगिरौ प्रक्षिपन्सर्वसंपदः ॥५६७॥
गौरकाभ्यर्थिभिर्ब्रह्मपञ्चकार्यनियोगिभिः । विधीयते स्म निःसारा महोत्पातैरिव क्षितिः ॥५६८॥
उच्चलक्ष्मापतौ शान्ते मूर्धन्यक्षशिलोपमे । अबाधन्त पुनर्लोकं व्याधा इव नियोगिनः ॥५६९॥
570 प्रशास्तकलशस्यान्ते तद्भ्रातृतनयः परम् । कायस्थः कनको नाम श्लाघ्यामकृत संपदम् ॥५७०॥
नानादिगन्तरायातो दुर्भिक्षपतितो जनः । येनाविच्छिन्नसत्त्रेण शान्तव्यापद्व्यधीयत ॥५७१॥
संजातमुच्चलस्यान्ते येषां तत्त्वपरीक्षणम् । त एव चक्रिरे राज्ञा प्रसभेनाधिकारिणः ॥५७२॥
द्वारे तिलकसिंहः स तादृक्तेन व्यधीयत । राजस्थाने च जनकः काणस्तस्य सहोदरः ॥५७३॥
प्रतापैर्नृपतेस्तीक्ष्णैः करमाक्रान्तमण्डलः । जिताद्वाराधिपः सोपि स्वीचकारोरशाधिपात् ॥५७४॥
575 काकवंश्यस्तु तिलकः क्ष्माभुजा हस्तकम्पनः । निन्ये प्रकम्पमहितान्प्रकम्पन इव द्रुमान् ॥५७५॥
पाम्बशाल्मभृता श्रोडराजस्थानाधिकारिणा । नृपप्रतापैरहिताः सज्जकेनापि निर्जिताः ॥५७६॥
काकवंशाश्रयात्प्राप्तराजद्वारेण धीमता । अद्दमेलकभृत्येनाप्यवापीष्टेन मन्त्रिता ॥५७७॥
एवं स्वार्थक्रियात्यक्तगुणापेक्षेण मन्त्रिणः । कुर्वतोप्यवचांस्तेन कश्चित्कालोत्यवाह्यत ॥५७८॥
वितस्तापुलिने सोथ कर्तुं प्रारभतोन्नतम् । स्वस्य भ्रातुश्च पत्न्याश्च नाम्ना सुरगृहद्वयम् ॥५७९॥
580 उत्पातवह्निना दग्धो निःसंख्यधनदायिना । तेन दिद्दाविहारोपि नूतनत्वमनीयत ॥५८०॥
पुरीमश्चिलिकां जातु स प्रयातोन्तिकस्थितैः । भीतैः प्रैर्यत कल्हाद्यैर्गर्गोच्छेदाय भूपतिः ॥५८१॥
गार्गिः कल्याणचन्द्राख्यस्तानतिक्रम्य हि स्फुरन् । मृगयादिक्षणे तेषामसूयामुदपादयत् ॥५८२॥
सर्वाभ्यधिकसामर्थ्यं तं निपात्य निवेद्य ते । नित्योपजपनैर्गर्गे विक्रियामनयन्नृपम् ॥५८३॥
बद्ध्वा त्वां लोहरे भूभृदिच्छति क्षेप्तुमित्यथ । गर्गः शशङ्के भृत्येन राज्ञा चैकेन बोधितः ॥५८४॥
585 ततः स ससुतस्तत्र पलाय्य स्वभुवं ययौ । दिनैर्भूपोपि संप्राप्तः प्रविवेश स्वमण्डलम् ॥५८५॥
अन्योन्यशङ्कया भेदं यातयो राजगर्गयोः । चाक्रिकैः कृतसंचारैर्वैरं प्रौढिमनीयत ॥५८६॥
स्यालं गर्गस्य विजयं स्नेहशोषवशंवदः । समीपात्स त्यजन्राजा पश्चात्तापेन पस्पृशे ॥५८७॥
कारायां गर्गशत्रुर्यस्तेन पूर्वं व्यधीयत । स मल्लकोष्ठकस्तस्मिन्कालेमुच्यत बन्धनात् ॥५८८॥
निबद्धयौनसंबन्धं डामरैरपरैः समम् । तं कारयित्वा सामर्षो निनाय बलितां नृपः ॥५८९॥
590 शनैर्युद्धाय निर्याते राजसैन्येथ पूर्ववत् । गर्गेण कदनं चक्रे योधानाममरेश्वरे ॥५९०॥
तत्र सर्वातिशायिन्या वीरवृत्त्या नृपाश्रितः । शमालाडामरः प्राप प्रथां पृथ्वीहरः परम् ॥५९१॥
रणे द्वारपतेर्गर्गनिर्जितस्य पलायने । शौर्यं तिलकसिंहस्य प्राप सर्वोपहास्यताम् ॥५९२॥
हतशेषाः क्षताः शस्त्रवस्त्रादि त्याजिता भटाः । तदीया गर्गचन्द्रेण कारुण्यात्कोपि रक्षिताः ॥५९३॥
वह्निसात्क्रियमाणेषु वीरदेहेषु सर्वतः । राजसैन्ये चितामीनां गणना कापि नाभवत् ॥५९४॥
595 कृष्टसैन्येन राज्ञाथ गर्गो निर्दग्धमन्दिरः । संत्यज्य लहरं प्रायाद्गिरिं धुडावनाभिधम् ॥५९५॥
गिरिमूलोपविष्टस्य भूपतेः सैनिकैः समम् । तेषु तेष्वकरोन्नित्यं गिरिमार्गेषु संगरम् ॥५९६॥

५७५. [1]) Emended with C; A प्रकम्पं सहिता°. ५८०. [1]) Emended; A °अचाप्याप°. ५८१. [1]) Thus A; cf. viii. 764. 831. 1947 (C).

कूटयुद्धैर्नृपानीकं प्रतिराज्युपतापयन् । रणे त्रैलोक्यराजादिप्रमुखांस्तन्निघ्नतोवधीत् ॥५९७॥
फाल्गुने¹ हिमसंभारभीमे परिमितानुगः । स धीरो राज्यपि रिपौ न धैर्येण व्ययुज्यत ॥५९८॥
धैर्यवान्काकवंश्यस्तु तिलकः कम्पनापतिः । वरं शिखरिशृङ्गस्थं शक्तोभूत्तं प्रधावितुम् ॥५९९॥
पीडितस्तेन संप्रेष्य स्वभार्यातनयेन्तिकम् । निन्येनुकूलतां भूपं प्रसादच्छादितक्रुधम् ॥६००॥ 600
गूढमन्युर्नृपः संधिं बद्ध्वा प्रचलितस्ततः । तं मल्लकोष्ठकं वृद्धिं निनाय न पुनः शमम् ॥६०१॥
लेभेथ लहरे द्वित्रान्मासानविशदे नृपे । स मल्लकोष्ठकासह्यस्पर्धी नीचविमाननाम् ॥६०२॥
तन्मध्ये नृपतिर्गूढं बिभेद तद्बलं नयन् । तदीयानकरोद्भृत्यान्कर्णादीन्स्वहितावहान् ॥६०३॥
स खिन्नो दीनदायादसमशीर्षिकयाथ तैः । प्रेरितः पार्थिवाभ्यर्णे¹ सदारतनयोविशत् ॥६०४॥
जातु प्रवृत्तः पार्श्वस्थं ज्ञानद्रोण्युपरिस्थितः । अथैकदा तमाक्षिप्तं शस्त्रमत्याजयन्नृपः ॥६०५॥ 605
कुर्यादास्थामवष्टम्भे कोन्यः पौरुषगर्वितः । आक्षेपसमये सोपि यस्त्रैण्यं भीरुवद्ययौ ॥६०६॥
उत्खातरोपितनृपः क्व नु सोभिमानः कार्पण्यभागितरलोकसमा क्व वृत्तिः ।
यद्वावशां घटयति प्रकटं विधातुरिच्छैव बन्धगुणपङ्क्तिरिवात्र जन्तुम् ॥६०७॥
अशकन्युधि ये द्रष्टुमपि तं नास्य ते घाताः । केपि राजप्रिया बाहू ग्रन्थिबद्धौ तथा व्यधुः ॥६०८॥
श्रीसंग्राममठाभ्यर्णमन्दिरस्था नृपे स्वयम् । संक्रान्ते¹ माङ्गने युद्धात्कल्याणाद्या व्यरंसिषुः ॥६०९॥
जीवन्तं पितरं श्रुत्वा विदेहो गर्गनन्दनः । सान्त्वमानः स्वयं राज्ञा कृच्छ्राच्छस्त्रं समार्पयत्¹ ॥६१०॥ 610
गर्गः सदारतनयो राजौकस्येव भूभुजा । उपाचर्यत दाक्षिण्याद्वृद्धो भोगैर्निजोचितैः ॥६११॥
गार्गिः पलाय्य यातोपि चतुष्को निजमन्दिरात् । अवर्णभाजा कर्णेन दृष्ट्वा राज्ञः समर्पितः ॥६१२॥
रूढच्छन्नप्रकोपस्य प्रसादस्य महीभुजः । अन्तःशुद्धिविहीनस्य व्रणस्येव न निश्चयः ॥६१३॥
दरत्राजे मणिधरे दिदृक्षायागते नृपः । तत्संगमाय निर्यातो गर्गं भृत्यैरघातयत् ॥६१४॥
द्वित्रान्मासान्सोनुभूतकारागारस्थितिर्निशि । सह त्रिभिः सुतैः कण्ठबद्धरज्जुर्व्यपाद्यत ॥६१५॥ 615
निशां बिम्बमुखाभिख्ये यथैव स नृपानुगैः । तथैव कण्ठबद्धाश्मा सपुत्रोक्षिप्यताम्भसि ॥६१६॥
तं चतुर्नवते वर्षे हत्वा भाद्रपदे नृपः । सुखेच्छुः प्रत्युत प्राप दुःखभुक्तविभ्रमः ॥६१७॥
कल्हे कालिञ्जराधीशे महादेव्याश्च मातरि । मल्लाभिधायां शान्तायां स ततोभूत्सुदुःखितः ॥६१८॥
तन्मध्ये नागपालाख्यः सोमपालस्य सोदरः । तेन प्रतापपालाख्ये हते द्वैमातुरेग्रजे ॥६१९॥
शङ्कितस्तद्विहन्तारं हत्वामात्यं पलायितः । त्यक्तस्वदेशः शरणं ययौ सुस्सलभूभुजम् ॥६२०॥ 620
क्रुद्धः स कारणात्तस्मात्प्रणयं वशवर्तिनः । अगृह्णन्सोमपालस्य निधिकायाभिषेणनम् ॥६२१॥
निश्चित्य सर्वोपायानामसाध्यं विधुरं नृपम् । स भिक्षाचरमानिन्ये तस्य वल्लापुराद्रिपुम् ॥६२२॥
निशम्यानीतवाचार्यं तं प्रकोपाकुलो नृपः । दत्तास्कन्दोविशद्दीप्ततेजा राजपुरीं ततः ॥६२३॥
दत्त्वा राज्ये नागपालं सोमपाले पलायिते । सप्त मासान्स तत्रासीत्तांस्तान्संत्रासयन्रिपुम् ॥६२४॥

५९८. ¹) A फाल्गुणे. ६०४. ¹) Emended with C; A पार्थिवा°. ६०६. ¹) Emended; A °[illegible]. ६०९. ¹) Emended; A सङ्ग्रामे मा°. ६१०. ¹) Emended with C; A समर्पयत्.

625 राज्ञां वज्रधरादीनां राजा वज्रधरोपमः । सेवावसरदानेन प्रसादविवशोभवत् ॥६२५॥
भ्रमतां चन्द्रभागादिसरित्तीरेषु सर्वतः । तत्सैन्यानां मुखमपि द्रष्टुं शेकुर्न वैरिणः ॥६२६॥
अथ गाम्यभवत्तस्य तिलकः कम्पनापतिः । पृथ्वीहरो डामरश्च मार्गरक्षणदीक्षितः ॥६२७॥
धार्मिको नृपतिर्ब्रह्मपुरीं देवगृहांश्च सः । मण्डलं द्विषतो रक्षन्प्रपेदे मौलिकं फलम् ॥६२८॥
तस्येन्द्रविभवस्यान्यत्सामर्थ्यं वर्ण्यते कियत् । आययावश्वघासोपि सैन्ये यस्य स्वमण्डलात् ॥६२९॥
630 तत्र प्रसङ्गे तत्रासीभवन्सुजनवर्धनः । दूरस्थस्यानयद्वृद्धिं गौरकस्योपरि क्रुधम् ॥६३०॥
राष्ट्रगुप्त्यै स्वयं राज्ञा स्थापितः स स्वमण्डले । अज्ञायि पैशुनाभुक्तबुद्धिना निखिलार्थहृत् ॥६३१॥
तत्संबन्धेन जनकं स निन्दनगराधिपम् । मनस्तिलकसिंहस्य तद्भ्रातुरुदवेजयत् ॥६३२॥
हृत्वाधिकारं स्वस्याथ क्रुद्धः पर्णोत्ससंभवम् । अनन्तात्मजमानन्दाभिधं द्वाराधिपं व्यधात् ॥६३३॥
सोमपालादयः साध्यास्तदा प्रकृतयोभवन् । राज्ञस्तथा स्थितस्यापि न याः सविधमाययुः ॥६३४॥
635 स पञ्चनवते वर्षे वैशाखेथ स्वमण्डलम् । प्राविशन्नागपालोपि राज्यभ्रष्टस्तमन्वगात् ॥६३५॥
दुःसहातङ्कदूतेन लोभेन क्षोभितस्ततः । अदण्डयच्च वास्तव्याननयच्चाल्पतां व्ययम् ॥६३६॥
निवार्य गौरकं कार्यात्कार्यिणस्तत्समाश्रितान् । तस्य दण्डयतः सर्वे विरागं मन्त्रिणो ययुः ॥६३७॥
अकाण्डे व्यवहारेषु स विपर्यासितेष्वभूत् । अवसन्नधनो गाढमपीडानवमन्त्रिणाम् ॥६३८॥
सौवर्णीरिष्टिकाः कृत्वा प्राहिणोल्लोहरान्तरे । काञ्चनाद्रिप्रतीकाशान्स्वर्णराशीनढौकयत् ॥६३९॥
640 अथ दण्डयितुं गर्गभृत्यान्दण्डाधिकारिणम् । लहरेऽकृत गर्गस्य मन्त्रिणं गज्जकाभिधम् ॥६४०॥
तं दण्डभीतैर्गर्गस्य सेवकैराश्रितस्ततः । विश्वस्तमवधीत्क्रुध्यंश्छद्मना मल्लकोष्ठकः ॥६४१॥
लहरे विद्रुते राजा द्वैमातुरमथाग्रजम् । मल्लकोष्ठस्यार्जुनाख्यं बबन्ध सविधस्थितम् ॥६४२॥
हस्तं च सद्गुचन्द्रस्य पुत्रं गोत्रिणमप्यसौ । बद्ध्वा व्यधाद्विड्डकाख्यं तस्य तद्भ्रातरं हितम् ॥६४३॥
पूर्ववैरं स्मरन्सूर्यं सपुत्रं तं परास्तथा । बबन्धानन्दचन्द्रादीन्कीत्युत्कृन्तनमाचरन् ॥६४४॥
645 निर्गते लहरं मल्लकोष्ठके विद्रुते ततः । आरोप्यार्जुनकोष्ठं तं शूले कोपाद्व्यपादयत् ॥६४५॥
निवेश्य सैन्यं तत्राथ प्रविष्टस्य पुरं ययुः । डामरा निखिलास्तस्य वैरं विश्वस्तघातिनः ॥६४६॥
क्रुध्यन्पृथ्वीहरायापि कृतसेवाय मन्त्रिभिः । आदिष्टैः कम्पनेशाद्यैरवस्कन्दमदापयत् ॥६४७॥
कथं चित्स तु निस्तीर्णो जयन्तीविषयौकसः । बन्धोः क्षीराभिधानस्य प्रविवेशोपवेशनम् ॥६४८॥
दिनैरवन्तिपुरादीनां पुराणामन्तरेण तम् । व्रजन्तं विधुरं केचिन्नाशकन्बाधितुं द्विषः ॥६४९॥
650 तद्वैधुर्यविधानं तल्लज्जासंहारकार्यभूत् । प्रमादान्नृपतेः क्रुद्धवेतालोत्थापनोपमम् ॥६५०॥
क्षीरोऽथ तीक्ष्णधीर्वृद्धः सह पृथ्वीहरेण सः । अढौकयच्छमाङ्गासान्तरेष्टादश डामरान् ॥६५१॥
अभेद्यसंघांस्ताञ्जेतुं निर्यातो विजयेश्वरम् । न्ययुङ्क्त भूभृत्संभ्रान्तस्तिलकं कम्पनापतिम् ॥६५२॥
संग्रामैः खण्डशः कुर्वन्स तानतुलविक्रमः । विद्रावयामास रयैः पुरोवायुरिवाम्बुदान् ॥६५३॥

---

६२६. ¹) Emended; A तान्सैन्य°. ६३१. ¹) Emended with C; A स्थापितं. ६३३. ¹) Emended; A अनन्ताभिधमा°. Cf. viii. 713, 1005, 1042. ६३६. ¹) Emended; A क्षोभितस्ततः. ६४०. ¹) Emended with C; A °कारिणाम्. ६४४. ¹) Emended with C; A परस्त°. ६५०. ¹) Emended with C; A प्रमादान्नृपतेः

संमानावसरे तस्य जित्वायातस्य डामरान् । प्रवेशो प्रस्तुत नृपो न माहात्म्यमानकृत् ॥६५४॥

स भग्नमानो नगरं प्रविष्टे नृपतौ ततः । खिन्नः स्ववेश्मन्यवसत्स्वामिकार्ये निरुद्यमः ॥६५५॥ 655

संग्रामाः समशीर्षिकां विचरद्वैरिस्तुल्यैर्निरुद्धोद्धता वैरे विद्विषतां कृता भुवि पदं[1] संधौ बहिः स्थापिताः ।

कार्याण्येतुलकर्मकौशलकृतान्यत्रा चिरायस्पृशः सर्पाकीर्णमिवाशु वेश्म गृहिणो भृत्यास्त्यजन्ति प्रभुम् ॥६५६॥

स्वच्छकार्यानुसंधाने तस्मिन्सर्वत्र डामराः । संभूतिं विविशुर्भिन्नाः कृषिं क्षयधना इव ॥६५७॥

आतङ्कोद्वेजितैर्विधैः कृतप्रायैः पुरे पुरे । मही तुलाविभिर्वीरा कुकीलैर्निदरपद्यत ॥६५८॥

उपक्रमेण तुरगाः करभाश्च क्षयं गताः । न्यवेदयन्मण्डलस्य प्रत्यासन्नमहाभयम् ॥६५९॥

प्रत्यासन्नाशुभा कम्पं भयेन जनता दधे । आसन्नपत्रपतना वातेनेव द्रुमावलिः ॥६६०॥ 660

अथ वर्षावतारस्य प्रारम्भे डामरावलिः । ऊष्मस्पृष्टा हिमानीव बभूवापतनोन्मुखी ॥६६१॥

प्रथमं देवसरसाद्विग्रहसरस्ततः । मुखं व्यथावहो गण्ड इव पाकं व्यदर्शयत् ॥६६२॥

एककार्यत्वमानीय टिक्कादीन्गोत्रजान्बली । स्यामस्थं विजयोऽभ्येत्य राजानीकमवेष्टयत् ॥६६३॥

तत्र कायस्थपुत्रोऽपि स्यामस्थानीकनायकः । संरम्भं नागवत्राख्यः सेहे तस्य चिरं युधि ॥६६४॥

कथंचिदथ भूपेन प्रार्थितः कम्पनापतिः । निर्ययौ स्वामिदौरात्म्यसंस्मृतिक्षयसौष्ठवः ॥६६५॥ 665

विजयेन समं तस्य बद्धमूलेन संयुगे । संदेहं प्राणवृत्तिश्च जयश्रीश्चालकृष्यतौ ॥६६६॥

प्रवृत्ते मल्लकोष्ठेऽपि प्रयाते लहरान्तरे । वैशाखे निर्ययौ राजा ग्रामं धन्योरकाभिधम् ॥६६७॥

सैनिकाः शत्रुभिस्तस्य भ्रमितास्तत्र रात्रिषु । अरतिं निन्यिरे घोरैः स्वप्नैरिव मुमूर्षवः ॥६६८॥

बाहुमात्रसहायेन सर्वशक्तिमतां वरः । येन हर्षनरेन्द्रोऽपि विधुरेणोदपाद्यत ॥६६९॥

भूरिव्याराज्जितवतो विक्रमेण महीमिमाम् । साहसानां न संख्यास्ति जामदग्न्यस्य यस्य वा ॥६७०॥ 670

स संकुचितविक्रान्तिः कालस्य बलवत्तया । तत्र भग्नबलोऽकस्मात्पर्युज्झ्यत जयश्रिया ॥६७१॥

ततः पलायिते तस्मिन्नकस्मादेत्य सज्जकम् । हाडिग्रामस्थितो वीरं भङ्क्त्वा पृथ्वीहरोऽनयत् ॥६७२॥

पलायितस्यानुसरंस्तस्य पृष्ठं स निष्ठुरः । प्रतापी नगराभ्यर्णे दग्ध्वा नागमठं ययौ ॥६७३॥

स याम्ये च ततः क्रूरा डामराः सर्वतोऽनयन् । राज्ञो राजाश्रितानां च वारकेभ्यस्तुरंगमान् ॥६७४॥

निस्त्रिंशानां तीव्रकोपस्ततो नृपः समाश्रयत् । अभाग्यभाविनो योग्यामालम्ब्य कुपद्धतिम् ॥६७५॥ 675

शौरिं पृथ्वीहरस्याथ हत्वा डामरमन्त्रिकम् । वृद्धन्यस्तविषं भोज्यमिव राज्ञी व्यसर्जयत् ॥६७६॥

विसृज्य भ्रातरं हन्तुं विक्रमस्य तथैव सः । अन्येषां प्राहिणोत्पार्श्वं भ्रातॄन्पुत्रांश्च निष्ठुरः ॥६७७॥

भ्रातरं जन्यकाख्यस्य सिफिग्रामनिवासिनः । विच्छिन्नकर्णघ्राणं च कृत्वाभ्यर्णे व्यसर्जयत् ॥६७८॥

चतुर्थं सूर्यकं शूलेऽधिरोप्य नगरे परान् । भूरीन्वध्यानवध्यांश्च कोपाक्रान्तो व्यपातयत् ॥६७९॥

कालस्यैवोल्बणस्याथ तस्य सर्वेऽपि शङ्किताः । आभ्यन्तराश्च बाह्याश्च विरागं प्रतिपेदिरे ॥६८०॥ 680

येनैवाभीतिमार्गेण शासितं हर्षभूभुजा । निन्द्यप्यारब्धे तं स राज्ये व्यवहरन्स्वयम् ॥६८१॥

---

६५६. ¹) Thus corr. by $A_1$ from पर्व. ६६५. ¹) Emended; A °दौरात्म्यात्°. ६६९. ¹) बाहु supplied by $A_2$. ६७४. ¹) Emended; A वारकै°. ६७६. ¹) Emended; A शौरिं.

प्रविष्टानां धुर्ये गहनकविकर्मप्रणयिनां प्रवक्तॄणां धूते नरपतिधुरायां विहरताम् |
तटस्थस्ये मङ्क्षु स्खलितमसकृत्सोऽर्हति परं प्रबोधे वैकल्यं स्वयमविकलो यो न भजते ||६८२||
तीव्रप्रयत्नो नृपतिस्तत्रापि विहितोद्यमः | विनाश मल्लकोष्ठादीन्किंचिन्मन्दप्रतापताम् ||६८३||
अथानिनाय विजयो विम्बलाटाभिधो यतिः | प्रमार्द हर्षदेवस्य तं भिक्षाचरमन्तिकम् ||६८४||
685 विविक्षन्देवसरसं कम्पनापतिना ततः | विद्राव्यमाणः प्रभापात्प्रद्रावन्सोपतस्थितौ ||६८५||
परिज्ञाय हतस्याथ स तस्य विजयी शिरः | विससर्जान्तिकं राज्ञः फलं जयतरोरिव ||६८६||
तदप्यत्यद्भुतं कर्म भजन्भूभुक्कृतघ्नताम् | न तस्य तुष्टस्तुष्टाव न चकार च सत्क्रियाम् ||६८७||
अवजानन्नथानाम्नु प्रभाक्ष्यः कम्पनापतिः | तत्र कस्मात्त्वयोऽस्मिन्क इति तं संदिदेश च ||६८८||
सर्वप्रकारं तिलकः कृतघ्नं नृपतिं विदन् | अथ जातविरागः स द्रोहोन्मुख्यं समादधे ||६८९||
690 सतां स्यादनुपालभ्यो मन्त्रोन्मुख्यमेव चेत् | द्रोहेच्छया स तु तथा यथावत्पात्रनामताम् ||६९०||
सेवाद्यायित्वमथ बोधितकृत्यकृत्यं नीतिप्रियाः प्रतिपदं समुदाहरन्तु |
मानोन्नतास्तु विहितस्तुतयः कृतघ्नस्य क्रव्यसून्परहितं घटयन्ति सन्तः ||६९१||
पटं वह्निस्पर्शज्वलितमहितदृष्टो स्वचमरैः श्रुतिं वातं मन्त्रं पतननिरतां जीर्णवसतिम् |
असेवाज्ञं भूपं व्यसनविमुखं स्निग्धमजहन्न धीरोऽप्युत्थानोपहतमहिमा शर्म लभते ||६९२||
इत्युपायं परित्यज्य न्याय्यं ये प्रभवे क्रुधि | द्रोग्धारः कथितास्तेभ्यः केऽन्ये पापीयसां धुरि ||६९३||
जन्मन्येकोपकारित्वं पित्रोः सर्वत्र च प्रभोः | अधिकाः पितृघातिभ्यः पापिनस्तत्प्रभुद्रुहः ||६९४||
695 निहते विजये शाम्यत्प्रभावेष्वपरेष्वपि | नाज्ञायि कस्यचित्स्वास्थ्यं तस्यक्षेनान्तरात्मनः ||६९५||
कांचित्क्षणं सोपप्लुतः प्रत्युतोद्योपतापकृत् | विभ्रमसरो ज्ञातः सर्वैर्हुड इवोन्मदः ||६९६||
आनिनीषुस्ततो मल्लकोष्ठो[1] भिक्षाचरं पुनः | विम्बलाटां[2] तस्य पार्श्वं निजं सैन्यं व्यसर्जयत् ||६९७||
कम्पनेशस्तमायान्तं द्रोग्धाद्यावेदयस्ततः | राज्ञा न्यषेधि तद्रोधादेवं च समविद्यत ||६९८||
एवं वर्त्मन्यनुज्ञाते त्यज हन्यामहे ततः | पुरोगतं मृगव्यान्तः शृगालमिव वाजिभिः ||६९९||
700 द्वैराज्यकार्यमर्मज्ञस्तावेपि विधिनोदितः | कर्तव्ये तत्र शाठ्यं स नृपतिः प्रत्यपद्यत ||७००||
मर्मराजमुखादेवं लब्ध्वा द्रोग्धाथ डामरान् | तिल्कोकारवल्लेलमार्गैर्भिक्षाचरागमम्[1] ||७०१||
स्थाने स्थाने ततः प्राप ततः कर्णोपकर्णिका | जनानां या ख्यातिहेतुर्भिक्षो राज्ञस्तु भीतिदा ||७०२||
नासंस्कृतं वक्ति शिला भिनत्त्येकेषुणा दश | अश्रान्तो योजनशतं यात्यायाति च संचरन् ||७०३||
इत्यादितादृङ्माहात्म्यभिक्षुस्तुत्यानयज्जनः | निखिलान्पलितश्वेतलम्बकूर्चोऽपि कौतुकम् ||७०४|| युग्मम्[1] ||
705 भविष्यन्निव साम्राज्यस्यैक एकोऽर्धभागभाक् | वार्तामप्यवहत्तापि भिक्षोरूचेन्नियेव च ||७०५||
सरित्स्नानगृहे श्रान्तो वृद्धाः क्षीणनियोगिनः | राजवेश्मन्यगणिता नाममात्रनृपात्मजाः ||७०६ ||
स्वभावदुर्मनाः केचिद्योधाधोवाञ्छकाङ्क्षिणः | कारयन्तोऽप्युपाध्यायाः शिष्यान्स्किकर्षणं[1] नवैः ||७०७||

६९७. [1]) Emended; A °कोष्ठ.—[2]) Emended; A विम्बलाट. Cf. viii. 177. 1074. 1664(C). ७०१. [1]) Emended; A °चरागमम्. ७०४. [1]) $A_1$ writes २ instead of युग्मम्. ७०७. [1]) Thus corr. by $A_2$ from $A_1$ शिष्यान्स्किक°.

धूर्ताः पुरीकोनर्तक्यो देवसरसपालकाः । वणिजो मुक्तवेषाः पुस्तकमुख्ततस्वराः ॥७०८॥
मायोपवेशकुशलाः पारिषद्यादिजातयः । याज्ञिकाः कार्यकाया नगरोपान्तडामराः ॥७०९॥
कुलयन्तः स्वमन्यांश्च किमप्युपशिक्षवार्तया । एते प्रायेण देशेऽस्मिन्पार्थिवोपप्लवप्रियाः ॥७१०॥ कुलकम् ॥ 710
प्रवर्धमानया भिक्षाचरागमनवार्तया । वेपमानोऽभवल्लोको ययौ चिन्तां च भूपतिः ॥७११॥
पृथ्वीहरस्तदध्यक्षे गिरिकच्छे वसन्नथ । राजानीकं बभञ्जाजौ निर्गत्यातुलविक्रमः ॥७१२॥
अनन्तकाककयोर्भेदयामानन्दहारनायकौ । चक्रे तिलकसिंहं च मन्त्रिणस्तौ प्रलापिनः ॥७१३॥
निहते विजये ज्येष्ठे भुजस्तब्धां पराभवम् । तमावाडस्य नृपतिः प्राप्याभूद्विमनाः पुनः ॥७१४॥
उड्डीकिनीर्णां वृक्षमूर्धारोहेण भोगिनाम् । पिपीलककुलस्याण्डोपसंक्रान्त्येव वर्षणम् ॥७१५॥ 715
प्रत्यासन्नं स राजाय दुर्निमित्तैरुपद्रवम् । विचिन्त्यावात्ममुचितं कर्तव्यं प्रत्यपद्यत ॥७१६॥ युग्मम् ॥
तृतीयेऽह्नि भुवः शुक्ले ततः प्रस्थापयत्सुतम् । देवीमन्यत्कुटुम्बं च स कोट्टं लोहरं पटुः ॥७१७॥
तानन्नुव्रजतस्तस्य सेतुभङ्गात्परिच्युताः । लोष्टादिजातयो विप्रा वितस्तायां विपेदिरे ॥७१८॥
स तेन दुर्निमित्तेन खिन्नो हुष्कपुरान्तिकम् । अनुगम्याथ तान्द्वित्रैर्दिनैर्भूयोऽविशत्पुरम् ॥७१९॥
विना पुत्रेण देव्या च स ततः प्रत्यपद्यत । प्रतापेन च लक्ष्म्या च परित्यक्त इवान्यताम् ॥७२०॥ 720
स मल्लो व्यापादि शुभः प्रत्यभात्तस्य तद्वशात् । अभ्यन्तरप्रकोपेऽपि सर्वाभ्युदयभागभूत् ॥७२१॥
स्वयमुत्थापितानर्थः सोऽपि हर्षनरेन्द्रवत् । अद्यापि तान्वशे नीत्वा तया साम्राज्यभोगभाक् ॥७२२॥
श्रावणे लाहरैर्योधैरानीय बलशालिनाम् । भिक्षुर्मडवराज्यानां डामराणामपार्थ्यत ॥७२३॥
तेऽपि जन्या इव वरं श्वशुरालयसंनिभम् । प्रावेशयंस्तं लहरमनुयान्तः ससैनिकाः ॥७२४॥
सभाजयित्वा तान्मल्लकोष्ठमुख्या निजां भुवम् । व्यसर्जयन्कम्पनेशप्रमाथाय पृथुश्रियः ॥७२५॥ 725
सर्वतः परचक्रेऽथ पर्यापतति पार्थिवः । संग्रहीतुं प्रववृते पदातीनतुलव्ययः ॥७२६॥
तस्मिन्दुर्व्यसने राज्ञि मज्जवर्धिनि सर्वतः । अकारि शस्त्रग्रहणं शिल्पिशाकटिकैरपि ॥७२७॥
नगरे सैन्यपतयः प्रतिमार्गमकारयन् । तुरगाक्रयस्तसंभाराम्भ्याबामसमरोन्मुखाः ॥७२८॥
मध्यग्रामस्थिते भिक्षाचरेऽश्वरवासिभिः । राजसैन्यैः समं युद्धमगृह्णन्नस्य लाहराः ॥७२९॥
तैर्हिरण्यपुरोपान्ते प्रवन्धारब्धसंगरैः । श्रीविनायकदेवाद्या राजसेनाधिपा हताः ॥७३०॥ 730
आद्य एव रणे याते राजानीकाहितैर्धिनः । लब्ध्वा पराभवायातामममन्यन्त नृपश्रियम् ॥७३१॥
राजधान्यन्तिके क्षिप्तिकाख्यायाः सरितस्तटे । पृथ्वीहरश्चकाराजावशेषप्रभटक्षयम् ॥७३२॥
तिलके विजयेशस्येप्यगृह्णन्नस्य डामराः । महासरित्तटे युद्धं सड्डवीहोलडौकसः ॥७३३॥
ते दग्धनगरा दावं क्वापि क्वापि च लुण्ठनम् । वास्तव्यानां विदधिरे विनदन्तो दिवानिशम् ॥७३४॥
निर्यत्सतूर्यवृन्दाः प्रविशच्छस्त्रविक्षताः । क्रन्दज्ज्ञातानिवहाः प्रधावद्भग्नसैनिकाः ॥७३५॥ 735
पतत्स्वेक्षितनिवहा वंशदाभुवभारिकाः । संधार्यमाणसंनाहाः कृष्यमाणतुरंगमाः ॥७३६॥

---

७१६. 1) $A_1$ writes here २ instead of युग्मम्. ७२५. 1) च and मायाय supplied by $A_2$ in space left by $A_1$.
७२६. 1) Emended; A संगृहीतुं. ७३३. 1) A °होलडौ°. ७३६. 1) Emended with C; A °स्वप्र°.

आसन्नग्रामसंमर्दप्रसरत्तोयशोणितम् । दिने दिने राजपथा उपप्लवविसृङ्कुलाः ॥७३७॥ तिलकम्¹ ॥

प्रतिमल्लमुपायाता सर्वारम्भेण वैरिषु । अथ युद्धं जितो राजेन्द्रश्चापि प्रतिवासरम् ॥७३८॥

धीरः कः सुस्सलादन्यो न यः प्रत्यभियोगिनाम् । कृच्छ्रेणापि स्वराष्ट्रेण कर्तुं धैर्यादपार्यत ॥७३९॥

740 व्रणपट्टार्पणं शल्योद्धारं पथ्यपनार्पणम् । शस्त्रक्षतानां सततं कारयन्स व्यलोक्यत ॥७४०॥

प्रवासवेतनप्रीतिदायभैषज्यदक्षिणाभिः । क्षितिलोके नरपतेर्निःसंख्योऽभूद्धनव्ययः ॥७४१॥

युद्ध एव विपन्नानां क्षतानां च स्ववेश्मसु । नित्यं नरतुरंगाणां सहस्राणि क्षयं ययुः ॥७४२॥

तुरंगबहलैर्भज्यमाना नृपबलैस्ततः । लाहरा मल्लकोष्ठाद्या मन्दोद्रेकत्वमाययुः ॥७४३॥

भिक्षैराभ्यन्तरैरेव हतमन्त्राः सुरेश्वरीम् । ते निन्युर्भिक्षुमल्लेन तन्मार्गेण युयुत्सवः ॥७४४॥

745 सेतुना स्वल्पपार्श्वेन धन्विभावैः सरोऽन्तरे । अद्यापि तैर्जयो मोचिताजिभ्यश्च भयं रणे ॥७४५॥

द्रोग्धाथ कम्पनेशः¹ स्वं निवसन्विजयेश्वरे । बलिनां डामराग्निन्ये मन्दोद्रेकं स्फुरत्क्षणे ॥७४६॥

सैन्यलोको मा त्रासीदग्रान्ति मैव गच्छतः । पृष्ठे निपत्य मा कार्षीद्बाधां चेति विचिन्तयन् ॥७४७॥

स प्रभावं दर्शयितुं मासस्य विजयेश्वरम् । अञ्जराजस्य सेनायां व्यावृत्य प्रस्थितोऽभवत् ॥७४८॥

सार्धां शतद्वयीं तस्य योधानां हतवानपि । संत्यज्य विजयक्षेत्रं द्रोहकनगरं ययौ ॥७४९॥

750 पथि नान्यसरम्भीत्या प्रयातं डामराः क्वचित् । नदन्तोऽद्रिशिरोरूढा मार्गान्सर्वांश्च तत्यजुः ॥७५०॥

त्यक्त्वा मडवराज्यं स प्रविष्टो व्यसनातुरम् पूर्ववेष्टां स्मरन्भूपं जहास कृतसत्क्रियम् ॥७५१॥

हतरामात्यवस्यामस्थितोऽथ न निजोचितम् । रणे प्रादर्शयत्किंचित्तत्साक्षिभूत इव स्थितः ॥७५२॥

ततो मडवराज्यात्ते समस्ता एव डामराः । अभ्येत्य प्रत्यपद्यन्त² तां महासरितस्तटीम् ॥७५३॥

उपायाः साममेदाद्या रिपुचक्रे प्रयोजिताः । राज्ञो विफलतां जग्मुर्बहिरामैः प्रकाशिताः ॥७५४॥

755 क्रान्तसन्नमहीपालमण्डलस्यापि भूपतेः । फलं दोर्विक्रमस्वाम्यमासीन्नगररक्षणम् ॥७५५॥

अमरेशो द्वारपतिः सार्धं तस्थौ नृपात्मजैः । राजानवाटिकोपान्ते राजस्थानीयमन्त्रिणः ॥७५६¹॥

दूरद्वीपान्तरगता इव स्वीचक्रिरे नृपात् । ते प्रवासधनं भूरि न चायुध्यन्त कुत्रचित् ॥७५७॥

कटका विहिताः सर्वे पर्यायेण जयाजयौ । लेभिरे विजयादन्यत्र तु पृथ्वीहरः क्वचित् ॥७५८॥

मधुमत्तेन तेनाजौ वेतालेनेव वल्गता । प्रायो वरा वराः सर्वे ग्रस्ता नृपचमूभटाः ॥७५९॥

760 उदयस्येच्छाटिकुलोद्भूतस्यैकस्य पञ्चमे । युवदेवस्यापि शौर्यमेकस्मिंस्तु तदाहवे ॥७६०॥

पृथ्वीहरस्यापजह्रे द्वन्द्वयुद्धाभिमानिना । प्रहत्य कृष्टकूर्चेन कराग्रेणासिवल्लरी ॥७६१॥

युद्धे पुरोपकण्ठेषु वर्तमाने शराहताः । स्त्रीबालाद्या अपि वधं प्रमादात्प्रतिपेदिरे ॥७६२॥

एवं जनक्षये घोरे वर्धमाने किमप्यभूत् । अनुत्साहान्नृपो गेहादपि निर्गन्तुमक्षमः ॥७६३॥

तस्मिन्विरलसंचारे सोमपालस्तदन्तरे । अलुण्ठयद्वाड्डलिकां¹ लब्धरन्ध्रो ददाह च ॥७६४॥

765 सिंहे गजाहवव्यग्रे तद्धामपरिग्रहे । समयो ग्रामगोमायोः पौरुषस्यापरोऽस्तु कः ॥७६५॥

---

७३७. ¹) A₁ writes ३ instead of तिलकम्. ७४६. ¹) Thus corr. by A₂ from A₁ कम्पनेशस्व. ७५३. ²) Thus corr. by A₂ from A₁ °पद्यत. ७५६. ¹) A₁ writes here २ for युग्मम् which would be in its place after the following verse. ७६४. ¹) Emended; A °वाडलिकां. Cf. viii. 581. 881. 1947 (C).

राष्ट्रद्वयोपमर्देन राजा निःसदृशेन सः । तेन वशाविधेयोभूत्स्वमपि द्रष्टुमक्षमः ॥७६६॥

सर्वानौचित्यबहलः सर्वव्यसनदुःसहः । सर्वदुःखमयः कालस्तस्यावर्तत कोपि सः ॥७६७॥

तथाप्यस्खलिते तस्मिन्हितव्याजाहितावहः । राजामत्याटिकाख्यैः प्रायर्थ्यत विरागिभिः ॥७६८॥

प्रार्थयन्ते स्म ते युद्धे तटस्थास्तव मन्त्रिणः । गृहीत्वा नीविरेतेभ्यो लोहराद्रौ विसृज्यताम् ॥७६९॥

न चेद्व्याप्य इवैतस्मिन्व्यसने स्थायितां गते । को रुध्यात्र परैर्नीतं प्रत्यासन्नं शरत्फलम् ॥७७०॥ 770

न प्रत्यभैत्सीत्ताटस्थ्यं यत्कालापेक्षया नृपः । तस्मिंस्तैर्दर्शिते शङ्कां निखिला मन्त्रिणो दधुः ॥७७१॥

शक्तिस्तृणं कुब्जयितुं न यस्य स तदार्थिभिः । विसूत्रव्यवहारत्वं निन्ये राजा शठद्विजैः ॥७७२॥

कर्मस्थानोपजीव्युग्रपारिषद्यादिसंकुला । तत्पार्श्वोपययौ बुद्धिमन्या सेनेव वैरिणाम् ॥७७३॥

तत्सान्त्वनक्षणे तैस्तैः प्रमादैरुत्थितैरगात् । देशो व्याकुलतां कृच्छ्रं लुण्ठिधावटतोत्कटा[1] ॥७७४॥

अदृष्टपार्थिवास्थानैः शठैरव्यवहारिभिः । कथं तैः सान्त्वयन्राजा दुःस्थितस्तत्तदप्रियम् ॥७७५॥ 775

लवन्यविग्रहाद्राशः सोधिको विप्लवोभवत् । गलरोगः पादरोगादिव तीव्रव्यथावहः ॥७७६॥

काञ्चनोत्कोचदानेन तन्मध्येधिकचक्रिकाम् । कांश्चित्स्वीकृत्य स प्रायं कथंचिद्विन्यवीवरत्[1] ॥७७७॥

विजयो वर्णसोमादिशस्त्रिवंश्यो हठात्पुरम् । प्रविशन्भिक्षुसेनानीरश्वारोहैरहन्यत ॥७७८॥

तेनातिरभसात्स्थानं भित्त्वा प्रविशता पुरम् । प्रायशः कृत एवाभूत्तदा राज्यविपर्ययः ॥७७९॥

ईषन्मन्दप्रतापेन लवन्येष्वपि[1] भूपतेः । पृथ्वीहरेण संधित्सा भेदेच्छोः संप्रकाशिता ॥७८०॥ 780

तस्मिन्धुर्ये जिगीषूणां संधित्सौ भूभुजा समम् । द्वयेपि सैनिकाः शान्तं तममन्यन्त विप्लवम् ॥७८१॥

राज्ञा नागमठोपान्तमानेतुं प्रहितांस्ततः । शीघ्रमास्थान्द्विभक्तानागच्छंश्छद्मनावधीत् ॥७८२॥

धात्रेयो मम्मको गुङ्गो द्विजो रामश्च वारिकः । तेषां तिलकसिंहस्य पार्श्वे भृत्यास्त्रयो हताः ॥७८३॥

नीविर्दत्तो गौरकस्तु हतो भूपतिं स्मरन् । दृष्टे त्वाक्रन्दिनि परैः प्रहतं करुणोज्झितैः ॥७८४॥

तद्वैशसं श्रुतवतो देशः सर्वो विरागकृत् । राजधान्यन्तरे राज्ञो दुरुक्तिमुखरोभवत् ॥७८५॥ 785

इषे शुक्लचतुर्दश्यां तद्विपर्यस्तमण्डलम् । अतिवाहयितुं कष्टं दिनमासीन्महीपतेः ॥७८६॥

अथ संजातवैक्लव्यो नेदमस्तीति चिन्तयन् । किं कृत्यमित्यसदृशानपि पप्रच्छ भूपतिः ॥७८७॥

विषमे वर्तमानस्य तस्य कश्चित्स नाभवत् । अन्तर्जहासं[1] यो नान्त ---[2] न तुतोष वा ॥७८८॥

तमपि व्यसनापातं तस्य सोढवतस्ततः । अभजन्त क्रमाद्भृत्याः प्रतिपक्षसमाश्रयम् ॥७८९॥

कम्पनेशस्य बिम्बाख्यो भ्राता द्वैमातुरोहितान् । समाश्रयद्द्वारकार्यं तद्दत्तं प्रत्यपद्यत ॥७९०॥ 790

गूढं जनकसिंहेन दूतान्प्रेषयतानिशम् । भिक्षवे भ्रातृतनया वाग्दत्ता निरवर्त्यत ॥७९१॥

असिवाजितनुश्रादि हत्वा भिक्षाचरान्तिकम् । अश्ववारा व्यभाज्यन्त प्रयान्तः प्रतिवासरम् ॥७९२॥

किमन्यद्व्यक्तमेवाह्नि येत्रसन्पार्थिवान्तिके । अलक्ष्यन्तागता भिक्षोस्ते निशायां गतत्रपाः ॥७९३॥

इतो याति ततश्चैति लोको व्यक्तमतन्त्रितः[1] । इति राजनि कुण्ठाज्ञे कोप्यजृम्भत विप्लवः ॥७९४॥

७७४. 1) Emended with C; A °धविटोत्कटा. ७७७. 1) A₁ has first written °द्विन्यवीवृतत् and then indicated the above reading between the lines. ७८०. 1) Conjectural reading; A न कन्येष्वपि. ७८८. 1) Emended with C; A °हासी.— 2) Thus A; C नाम्लयहिर्वा न. ७९४. 1) A₁ has first written °तन्त्रितः and then indicated the above reading in margin.

795 डामरैः शरदुत्पत्तौ भीतायां सर्वतस्ततः । कान्दिशीकोऽभवल्लोकः कृत्स्नो धनजनोज्झितः ॥७९५॥

प्रयाते सुस्सलनृपे स्वर्णपूर्णामिमां महीम् । भिक्षुः कुर्यादिति मृषा लोकस्यासीद्विनिश्चयः ॥७९६॥

क्व दृष्टा त्यागिता भिक्षोः कुतो वा तस्य संपदः । परामर्शी[1] नैवेति गतानुगतिको जनः ॥७९७॥

संदृश्यते परिवृता चिरमम्बरेण रेखा स्वयं न खलु या शशिनो नवस्य ।
तस्यां जनः प्रकुरुते नतिमम्बरार्थी दिग्मुग्धतामपसरत्सदसद्विचाराम् ॥७९८॥

विजये राजवर्ग्याणां भुग्नग्रीव इवाभवत् । भिक्षुपक्षजये लोको हृष्यन्नासीद्विशृङ्खलः ॥७९९॥

800 द्विकौलेयकन्यायो राजडामरसंघयोः । ततोऽन्योन्यभयभ्रश्यद्वैरयोरुदजृम्भत ॥८००॥

राजाभ्यन्तरभेदेन राज्ञः स्थैर्येण चारयः । ऐच्छन्पलायितुं भीता अज्ञातान्योन्यनिश्चयाः ॥८०१॥

बान्धवानपि दुधुक्षु[1]र्नविश्वस्तो विदन्नृपः । स्थितौ पलायने चापि भवधे न स्वजीवितम् ॥८०२॥

तं महाव्यसने वासःस्वर्णरत्नादिवर्षणम् । नाभ्यनन्दन्गृहीतार्था निनिन्दुः शस्त्रिणः परम् ॥८०३॥

नष्टोऽयं नैव भवितेत्यभीतैर्जल्पतो जनात् । वचो रोगी भिषक्त्यक्त इव शृण्वन्स विव्यथे ॥८०४॥

805 अप्ययोपस्थितं किंचित्तदादेशेन ढौकयन् । सविलासं सगर्वं च तमैक्षिष्टानुगव्रजः ॥८०५॥

सोऽन्य एवाभवत्तस्मिन्क्षणे साहसिकोऽप्यहो । स्वगृहादपि निर्गन्तुं नाशकत्त्रपयाकुलः ॥८०६॥

यावदैच्छन्संघभेदाच्चलितुं डामरव्रजाः । तैरेव शस्त्रिभिस्तावदचिन्त्ये भूभृद्विलुप्तताम् ॥८०७॥

ते कृष्टशस्त्रा द्वाराणि रुन्धन्तो नृपमन्दिरे । प्रवासवित्ते लब्धव्ये प्रायं चक्रुः पदे पदे ॥८०८॥

ददद्धनं धनेशाभीर्देयादप्यधिकं नृपः । तेषामभिमतो नाभूदवमानाभिलाषिणाम् ॥८०९॥

810 मर्तुं चिचलिषु[1]स्तीर्थमृणिकैरिव सामयः । स रुद्धा निखिलैर्देयं दापितोऽथ गतत्रपैः ॥८१०॥

स्थानपालैरपि प्रायकृद्भिराक्रम्य दापितः । धनं सुवर्णभाण्डादि चूर्णीकृत्य विशृङ्खलैः ॥८११॥

सवृद्धबालं नगरं ततः क्षुभ्यत्क्षणे क्षणे । सोऽभूदब्धिमिवोद्वृत्तं न संस्थापयितुं क्षमः ॥८१२॥

एकदा प्रातरेवान्यै रुद्धद्वारः स्वशस्त्रिभिः[1] । सर्वतः क्षोभमागच्छन्नगरं स व्यलोकयत् ॥८१३॥

ततः क्षोभं शमयितुं जनकं नगराधिपम् । पुरभ्रमार्थमादिश्य चलितुं क्षणमैक्षत ॥८१४॥

815 कथंचिन्मानदानाभ्यां तानावर्ज्यापि शस्त्रिणः । सावरोधः स संनद्धो राजधान्या विनिर्ययौ ॥८१५॥

अङ्गना[1]तुरगारूढो बहिर्यावन्न निर्ययौ । राजधान्यन्तरे लुण्ठितास्तावत्प्रारम्भि तस्करैः ॥८१६॥

अहरन्केऽपि केयूरैरनदन्केऽप्यलुण्ठयन् । तद्भृत्यानाज्यमुत्सृज्य तस्मिन्व्रजति शस्त्रिणः ॥८१७॥

विशृङ्खलस्वपाकोपशङ्काभिः शस्त्रिणां नृपः । सहसैः पञ्चषैरासीद्व्रजन्ननुगतोऽध्वनि ॥८१८॥

वर्षे षण्णवते[1] कृष्णषष्ठ्यां मार्गे विनिर्गतः । याममात्रावशेषेऽह्नि सभृत्यो द्रोहविह्वलः ॥८१९॥

820 निजैरराजिरभ्यादि त्यज्यमानः पदे पदे । स प्रतापपुरं प्राप क्षपायामल्पसैनिकः ॥८२०॥

तिलकस्य पुरो गत्वा प्रामस्यामं च विश्वसन् । तत्र बन्धोरिवाश्रूणि चिरं दुःखोल्बणोऽमुचत् ॥८२१॥

द्रोहं न कुर्यादेष मे चिन्तयित्वेति सत्वरम् । वेश्म हुष्कपुरेऽन्येद्युस्तस्य च प्राविशत्स्वयम् ॥८२२॥

---

७९७. [1]) Emended; A °मर्श. ८०२. [1]) Emended; A दुद्रक्षु°. ८१०. [1]) Emended with C; A चिचालि°.
८१३. [1]) Emended; A स शस्त्रिभिः. ८१६. [1]) Emended; A आङ्गना°. ८१९. [1]) Emended with C; A षण्णवते.

लहारपेण चानादि कृत्वैकस्सैन्यसंग्रहम् । प्रविश्य क्रमराज्यं स कर्तुं भूयो जयोत्सुकः ॥८२३॥
गूढं पुंशुग्गुन्कल्याणवाण्डादीनथ डामरान् । आनीय स पुरस्तस्य धैर्यभ्रंशमकारयत् ॥८२४॥
गृहासेन तया बुभुक्षया निष्कृष्टः स ततो ययौ । स्वीकुर्वन्स्वर्णदानेन दस्यून्मार्गविरोधिनः ॥८२५॥ 825
प्रयान्ते तत्र एवोज्झीतिलकस्तत्सहोदरः । प्रयाणमेकमानन्दो दाक्षिण्यादन्वगात्तु तम् ॥८२६॥
भृत्यत्यक्तः स दानेन विक्रमेण च तस्करान् । अगाम्मार्गेण शमयन्नायुःशेषेण रक्षितः ॥८२७॥
प्राणं सिंहवशा द्रुमाद्रिगहनस्याप्यादरण्यस्य ये तेषां बालगलाभ्ययावपि भवेत्कालातिवाहः क्रमात् ।
ये दन्ताः करिणां रणप्रहरणं तेष्वामुपुर्दीव्यतां क्रीडायां करताडनानि न दृढा शौर्यस्य रूढिः क्वचित्॥८२८॥
जन्तूनां विक्रमत्यागयशःप्रज्ञादयो गुणाः । भवे विश्वस्वभावेऽस्मिन्न भवेयुरभङ्गुराः ॥८२९॥
भास्वानप्यौष्ण्यमृदुतां भिक्षार्कस्थां दिने दिने । तां तामायाति जन्तूनां कः प्रभावेषु निश्चयः ॥८३०॥ 830
अशक्नुवन्नवल्लिकामरिदृष्टां निरीक्षितुम् । मन्युनिःशब्दसैन्योऽद्रिमारुरोह स लोहरम् ॥८३१॥
स्वं कलत्रमपि द्रष्टुं तत्रातित्रपयाक्षमः । शयनीयविमुक्ताङ्गस्तप्यते स्म दिवानिशम् ॥८३२॥
दत्तदीपाहनिर्गच्छदन्तर्गेहादिनेष्वपि । दाक्षिण्यादर्शनं प्रादात्कृत्यानां भोजनक्षणे ॥८३३॥
विलेपनानि नास्पाक्षीन्नारुरोह तुरंगमान् । गीतनृत्तादि नैक्षिष्ट सुखगोष्ठीर्न चाददे ॥८३४॥
ताम्यंल्लाटस्थ्यमौखर्यतैक्ष्ण्यदोषादि दर्शितम् । एकैकेन च स्मृत्वा स्मृत्वा वैध्यं न्यवेदयत् ॥८३५॥ 835
अन्वगात्स्वां भुवं त्यक्त्वा मामेतेऽन्वगुरित्यपि । निन्ये वृद्धिं परार्ध्यश्रीः स दाक्षिण्यादमार्पणैः ॥८३६॥
कश्मीरेषु गते तस्मिंस्तदैवाखिलमन्त्रिणः । पुराणराजधान्यग्रे ससैन्याः समगंसत ॥८३७॥
मन्त्र्यश्वारोहसामन्ततन्त्रिपौरादिसंमतः । तेषां जनकसिंहोऽभूत्प्रणीर्नगराधिपः ॥८३८॥
स भिक्षोर्मल्लकोष्ठाद्यैरार्भिः कृतपक्षपातैः । विश्वासाय कृतभ्रातृस्थो कीर्तिं प्रदापितः ॥८३९॥
प्रावर्तत भयभ्रश्यत्स्त्रीबालाद्यावृते पुरे । अराजकाय रजनी सर्वभूतभयावहा ॥८४०॥ 840
निहताः केऽपि मुषिताः केऽपि केऽप्यरिभिः पुरे । दग्धागारा व्यधीयन्त दुर्बला राजवर्जिते ॥८४१॥
सैन्यैरन्येद्युरुन्नादैर्निरुद्धाखिलदिक्पथः । सिन्दूरारुणपुण्ड्राभ्यलादिमण्डलमध्यगः ॥८४२॥
विकोशशस्त्रकदलीषण्डदुर्लक्ष्यविग्रहः । मृगेन्द्र इव लोकस्य भयकौतूहलावहः ॥८४३॥
वीरपट्टाञ्चलश्लिष्टैर्यौवनोद्वेल्लितैः कचैः । प्रबद्धैः शोभितः पृष्ठे जयश्रीबन्धशृङ्खलैः ॥८४४॥
कुण्डलद्योतिना स्निग्धधवलायतदृष्टिना । प्रत्यग्रश्मश्रुणा चारुचन्दनोल्लेखशोभिना ॥८४५॥ 845
ताम्राधरेण वक्त्रेण श्रीसान्निध्याधिकत्विषा । पक्षपाति विपक्षाणामपि संपादयन्मनः ॥८४६॥
असेर्विकोशस्यान्तःस्थां श्रियमग्र्येण बल्गता । केसरच्छटया चापि चामरेणेव वीजयन् ॥८४७॥
पदे पदे निषण्णाद्यैः सामन्तैरुपपादिताम् । स्वीकुर्वन्नर्हणां भिक्षुः प्राविशन्नगरं ततः ॥८४८॥ कुलकम् ॥
तस्यार्भकस्य धात्रीव पृष्ठस्थो मल्लकोष्ठकः । प्रययावप्रगल्भस्य सर्वकार्योपदेष्टृताम् ॥८४९॥
अयं पितुः प्रियस्तेऽभूत्त्वमस्याङ्के विवर्धितः । राज्यस्यास्य मूलमिति प्रत्येकं समदर्शयत् ॥८५०॥ 850

८२३. [1]) Emended; A जयोत्सुकः. ८२४. [1]) A °ल्याणवाण्डाडी°. ८३०. [1]) Emended with C; A भिक्षोर्कस्थां. ८३७. [1]) Doubtful emendation; A पुराणि राज°. ८४७. [1]) A omits here two *aksharas* without indicating a *lacuna*; चापि supplied with C.

गृहं जनकसिंहस्य प्राक्रम्याथाप्रयेविशत् । राजलक्ष्मीं स संप्राप्तुं राजधानीं ततः परम् ॥८५१॥
दूरनष्टे कुले तेन पुनरुद्वेचिते ययौ । वज्राख्यो गर्भगेपत्ये स्त्रीजनोनवहास्यताम् ॥८५२॥
दृष्टेन तादृशा भिक्षोरिति दृष्टेन शत्रुषु । विपक्षेष्वपि साशङ्का नोपहास्या जिगीषवः ॥८५३॥
प्रावर्तन्त धनाधीशश्रियः सुस्सलभूपतेः । कोशेन नीतशेषेण विलासा नवभूपतेः ॥८५४॥
855 वाजिवर्मासिभूयिष्ठां राजलक्ष्मीं विभेजिरे । राजडामरलुण्ठाकमन्त्रिणो यन्त्रणोज्झिताः ॥८५५॥
पुरे स्वर्ग इवास्वादं भोगानामुपलेभिरे । दस्यवो ग्रामभोगार्हाः पिशाचा इव गह्वराः ॥८५६॥
आस्थाने न बभौ भूभृद्ग्रामीणैः सर्वतो वसन् । प्रलम्बकम्बलप्रायविलासावरणैः समम् ॥८५७॥
भिक्षाचरस्यासंभाव्यप्रादुर्भावतया प्रथाम् । डामरा अवतारोयमित्यन्यां निन्यिरे प्रथाम् ॥८५८॥
राज्यस्यानन्यदृष्टस्य कर्तव्येषु मुमोह सः । अदृष्टकर्मेव भिषग्भैषज्यस्य पदे पदे ॥८५९॥
860 शनैर्जनकसिंहेन कृतभ्रातृसुतार्पणम् । कम्पनाधिपतिर्दत्तकन्योपि तमाशिश्रियत् ॥८६०॥
जुङ्गो राजपुरीयस्य राज्ञः कटकवारिकः । पादाग्राधिकृतोद्राक्षीत्स्वार्थमर्थं न तु प्रभोः ॥८६१॥
सर्वाधिकारिणं राजलक्ष्मीर्बिम्बमशिश्रियत् । राजशब्दस्यैव पात्रमभूद्भिक्षाचरः परम् ॥८६२॥
वेश्यायत्तीकृतैश्वर्यः प्राकृताचारभागपि । अन्तरङ्गः सदसतां किंचिद्बिम्बस्तदाभवत् ॥८६३॥
द्वैमातुरो दर्यकस्य भ्राता साश्चर्यशौर्यभूः । नृपान्तरङ्गज्येष्ठत्वं ज्येष्ठपालोप्यशिश्रियत् ॥८६४॥
865 मन्त्रिणो भूतभिक्षाद्यास्तस्य पैतामहा अपि । लक्ष्मीसरोजिनीभृङ्गा बहवोन्ये जजृम्भिरे ॥८६५॥
मुग्धे राज्ञि प्रमत्तेषु मन्त्रिधूमेषु दस्युषु । उत्थानोपहतं राज्यं नवत्वेपि बभूव तत् ॥८६६॥
स्त्रीभिर्नवनवाभिश्च भोज्यैः प्राज्यैश्च रञ्जितः । भिक्षुर्नैक्षिष्ट कर्तव्यं सुखानुभवमोहितः ॥८६७॥
स सुखानुभवप्रावृड्विद्राग्धो विजयोद्यमे । स्वैः प्रेरितः सभामध्ये स्वप्तुमैच्छन्मरालसः ॥८६८॥
दर्पेण सचिवे ग्राम्यं कथयत्यनुकम्पिकाम् । न स चुक्रोध मुग्धस्तु पितरीवान्वरज्यत ॥८६९॥
870 निष्प्रतिष्ठैः सेव्यमानो वेश्योच्छिष्टैरशिष्टवत् । अट्टचेटोचिताचेष्टा विटैः प्रैर्यत सेवितुम् ॥८७०॥
पानीयरेखाप्रतिमस्थैर्यस्याखिलवस्तुषु । तस्याप्रमाणवचसः सेवां प्रणयिनो जहुः ॥८७१॥
यदूचुः सचिवास्तत्तदन्ववोचत भूभृतः । वचः सुषिरगर्भस्य तस्य किंचित्समुद्ययौ ॥८७२॥
सचिवैः स्वगृहान्नीत्वा दत्तभोज्यः स मुग्धधीः । धनी विपन्नपितृक इव प्रमुषितो विटैः ॥८७३॥
आहारमुष्टीर्बिम्बस्य गृहे बिम्बनितम्बिनी । तस्याश्वस्यैव वडवा रागिणोग्रगताहरत् ॥८७४॥
875 वञ्चयित्वा दृशौ पत्युर्दर्शितैः स्मेरया तया । कुचकक्षकटाक्षैः स लुप्तधैर्यो व्यधीयत ॥८७५॥
पृथ्वीहरौ मल्लकोष्ठश्चान्योन्योद्भूतमत्सरौ । क्षोभं व्यधत्तां संरब्धौ राजधान्याः क्षणे क्षणे ॥८७६॥
स्वयं राज्ञा कृतोद्वाहं गृहान्गत्वापि कारितौ । तावन्योन्यमुपेक्षेतां न मन्युं विक्रमोन्मदौ ॥८७७॥
अथ पृथ्वीहरगृहात्कृतोद्वाहः स्वयं नृपः । जातामर्षेण सुस्पष्टं मल्लकोष्ठेन तत्यजे ॥८७८॥
कुञ्जनककाणोपि संबन्धापेक्षयोज्झितः । विरागमाजानन्दादीन्नन्ये ब्राह्मणमन्त्रिणः ॥८७९॥

---

८५१. 1) Thus A. ८५४. 1) A कोषेण. ८६२. 1) Emended with C, A राज्ञा लक्ष्मीर्बिम्बमशिश्रयत्. ८६५. 1) Emended; A भूतभिक्षा°. Cf. vii. 1695. viii. 94. ८७०. 1) Emended with C; A वेश्यैच्छि°. ८७४. 1) Emended; A °मुष्टिर्बि°.— 2) Emended with C; A तस्याश्चैव. ८७७. 1) Emended; A °मुपेक्षेतां.

तटस्थो द्रोग्धृदुर्बुद्धिप्रायभृत्यविधेयधीः । विप्लुतव्यवहारस्तं निम्नत्वं च ययौ नृपः ॥८८०॥ 880

डामरस्वामिके लोके प्राभवत्को न विप्लवः[1] । ब्राह्मण्यो धर्षणं यत्र श्वपाकेभ्योपि लेभिरे ॥८८१॥

अराजकेथ वा भूरिराजके मण्डले तदा । समस्तव्यवहाराणां स्फुटं तुत्रोट पद्धतिः ॥८८२॥

दीनारा भैक्षवे राज्ये निष्प्रचाराः पुरातनाः । तच्छलेन तु नव्यानामशीतेरभवत्क्रयः ॥८८३॥

राजपुर्यध्वना बिम्बं ससैन्यमथ पार्थिवः । लोहरं प्राहिणोत्कर्तुं सुस्सलास्कन्दमुन्मदः ॥८८४॥

तुरुष्कसैन्यमानिन्ये सोमपालेन सोन्वितः । साहायकाय सञ्जारे विस्मये मित्रतां गते ॥८८५॥ 885

संदर्श्य पाशमेतेन बद्ध्वा कर्ष्यामि सुस्सलम् । इत्येक एकोश्वारोहस्तुरुष्काणामकत्थत[1] ॥८८६॥

काश्मीरिक[1]खशम्लेच्छयोधव्यतिकरोभवत् । न केषां नाम संभाव्यो विश्वोत्पाटनपाटवः ॥८८७॥

भिक्षाचरः प्रयाते तु बिम्बे विगलिताङ्कुशः । न कासामव्यवस्थानां मूढः स्थानमजायत ॥८८८॥

स निमन्त्र्य निजं नीतो गृहं बिम्बाग्रजया । भोगसंभोगदानेन धर्षण्या पर्यतोष्यत ॥८८९॥

कार्यापेक्षापि तस्यासीन्न मन्त्रिस्त्रीसमागमे । कौलीनभीतेरासन्ननिपातस्य कथैव का ॥८९०॥ 890

आयूनानुगुणं[1] भोज्यं कुम्भकांस्यादिवाहनम् । तत्र प्राकृतकामीव न स जिह्राय शीलयन् ॥८९१॥

शनैः शनैस्ततो नष्टावष्टम्भस्य महीपतेः । काले भोज्यमपि प्राप्यं नासीद्गलितसंपदः ॥८९२॥

तादृक्प्रलोभक्रौर्यादिक्रान्तो यः प्रागगर्ह्यत । स सुस्सलोथ लोकानामभिनन्द्यत्वमाययौ ॥८९३॥

धनमानादिनाशं या विरक्तास्तस्य चक्रिरे । काङ्क्षन्ति स्म घनोत्कण्ठास्ता एवागमनं प्रजाः ॥८९४॥

प्रत्यक्षदर्शिनोद्यापि साश्चर्या वयमस्य यत् । ताः प्रजाः कोपिताः केन केन भूयः प्रसादिताः ॥८९५॥ 895

क्षणाद्वैमुख्यमायान्ति सांमुख्यं यान्ति च क्षणात् । न हेतुं कंचिदीक्षन्ते पशुप्रायाः पृथग्जनाः ॥८९६॥

ते मल्लकोष्ठजनकाद्यो दूतैर्विसर्जितैः । त्यक्तराज्यं पुनर्भूपं जयोद्यममजिग्रहन् ॥८९७॥

अक्षोमुत्रापहारेण लोकैष्टिकस्य लुण्ठिते । नगर्या ब्राह्मणाः प्रायं नृपमुद्दिश्य चक्रिरे ॥८९८॥

तैर्धान्यैश्चापहारैश्च संश्रितैर्विजयेश्वरे । राजानवाटिकाप्रायो नगरेपि न्यविक्षत ॥८९९॥

ओजानन्दादिभिर्मुख्यद्विजैरुत्तेजितास्ततः । गोकुलेपि व्यधुः प्रायं त्रिदशालयपर्षदः ॥९००॥ 900

युग्यार्पितैः सितच्छत्रवस्त्रचामरशोभिभिः । विबुधप्रतिमावृन्दैः सर्वतश्छादिताङ्गनः ॥९०१॥

काहलाकांस्यतालादीवाद्यक्षोभितदिङ्मुखः । अदृष्टपूर्वो ददृशे पारिषद्यसमागमः ॥९०२॥

ते सान्त्वमाना भूभर्तुर्दूतैस्तल्लेकवादिनः । न विना लम्बकूर्चं नो गतिरित्यब्रुवन्वचः ॥९०३॥

ते हेलया लम्बकूर्चाख्यया सुस्सलभूपतिम् । तं निर्दिशन्तोमन्यन्त क्रीडापुत्रकसंनिभम् ॥९०४॥

प्रायं प्रेक्षितुमायातैः पौरैः सह दिने दिने । अमन्त्रयत कां कां न व्यवस्थां पर्षदां गणः ॥९०५॥ 905

नृपापातभयात्क्षोभं मुहुर्मुहुरुपागतैः । पारिषद्यैश्च पौरैश्च योद्धुमास्थीयतोद्धतम् ॥९०६॥

वहर्थं जनकसिंहस्य नगरे तन्मतेन तत् । सज्जं सुस्सलदेवस्य कृत्स्नमानयनेभवत् ॥९०७॥

प्रायाद्धारयितुं पूर्वमपहारद्विजान्नृपः । प्रययौ विजयक्षेत्रं तत्रासीच्च हतोद्यमः ॥९०८॥

---

८८१. [1]) $A_1$ had first repeated here the second half of verse 878, but has subsequently erased it and written as above. ८८६. [1]) Conjectural reading; A °स्तुरुष्कामकत्थत; C °तुरुष्कैः समकत्थत. ८८७. [1]) Emended; A काश्मीरक°. ८९१. [1]) Emended with C; A °गुणो.

तन्मध्ये निखिलांस्तत्र डामरांस्तिलकोऽब्रवीत् । व्यापादयेति तं तत्र सर्वैकाग्रो न सोऽसहीत् ॥९०९॥

910 राज्ञ एव मुखाङ्कुशा लब्धन्यासास्तद्विश्वसुः । तस्मिन्पृथ्वीहरमुखास्तत्रसुस्तिलकात्पुनः ॥९१०॥

भागिनेयं प्रयागस्य क्षत्तारं लक्ष्मकाभिधम् । बन्धुमैच्छन्नृपोऽस्निग्धं प्रययौ स तु सुस्सलम् ॥९११॥

ततः प्रविश्य नगरं संनिपत्याखिलं जनम् । अकारणविरक्तानां पौराणां प्रददौ सभाम् ॥९१२॥

युक्तमप्युक्तवांस्तत्र हतोक्तिः शठबुद्धिभिः । पौरैः स चक्रे नास्त्येव भेषजं विप्रलब्धृषाम् ॥९१३॥

अत्रान्तरे सोमपालबिम्बाद्या लोहरे स्थितम् । योद्धुं सुस्सलभूपं ते सर्वे पर्णोत्समाययुः ॥९१४॥

915 तं च पद्मरथो नाम राजा कालिञ्जरेश्वरः । मैत्रीं संस्मृत्य कल्हाधैराययौ तत्कुलोद्भवः ॥९१५॥

सोऽथ शुक्लत्रयोदश्यां वैशाखे बलिभिः समम् । निर्मानी सुस्सलो राजा संग्रामं प्रत्यपद्यत ॥९१६॥

प्रेक्षकैर्वर्ण्यतेऽद्यापि स पर्णोत्सान्तिके रणः । तस्याद्भुतोऽवमानाभिक्षालनप्रथमक्षणः ॥९१७॥

कुलोऽप्येत्य निजस्फारस्ततः प्रभृति भूपतिम् । तमशून्यं पुनश्चक्रे मृगेन्द्र इव काननम् ॥९१८॥

भयस्खलितपाशानां कालपाशैः समागमम् । स चकार तुरुष्काणां क्षणात्पुष्कलविक्रमः ॥९१९॥

920 मातुलं सोमपालस्य निन्ये कवलतां बली । रणे तस्कोपयेतालो वितोलासरितस्तटे ॥९२०॥

किमन्यदल्पसैन्यः स बहूनपि स नान्वधात् । हतविद्रुतविध्वस्तान्यथात्मपरिपन्थिनः ॥९२१॥

काश्मीरिकाणामौचित्यं किं नाभूत्स्वामिनो द्रुहः । एकस्य ये रणे नष्टाः कुकीर्तिमपरस्य च ॥९२२॥

तुरुष्कैः सह यातेषु सोमपाले गतत्रपाः । बिम्बं काश्मीरिकास्त्यक्त्वा राजान्तिकमशिश्रियन् ॥९२३॥

ते धनूंषि शिरांस्यथ नमयन्तोऽद्भुताशयाः । कुलप्रभोः पुरः स्पष्टं न ते धृष्टा ललज्जिरे ॥९२४॥

925 आगच्छद्भिस्ततः पौरैर्डामरैश्च समं नृपः । प्रतस्थे दिवसैर्भिन्नैः कश्मीराभिमुखः पुनः ॥९२५॥

राजपुत्रः साहदेविः कल्हणो विश्रुतः प्रभोः । डामरान्क्रमराज्यस्थान्संगृह्याग्रेसरोऽभवत् ॥९२६॥

य एव प्रथमं राजसैन्याद्भिक्षुमशिश्रियत् । स एव बिम्बो राजानं तमुत्सृज्य समाययौ ॥९२७॥

अन्ये जनकसिंहस्य संमता मन्त्रिमन्त्रिणः । प्रत्युद्यान्तो व्यलोकयन्त नृपतिं निरपत्रपाः ॥९२८॥

काण्डिलेत्राभिधग्रामजन्मा शस्त्री सुलक्षणः । भाङ्गिले कश्चिदभवच्छून्ये क्रान्तोपवेशनः ॥९२९॥

930 भिक्षुर्वितीर्णमार्गं तं सुस्सलान्तिकगामिनः । लोकस्यात्रान्तरे जेतुं सहपृथ्वीहरो ययौ ॥९३०॥

जितवांस्तं बबन्धेच्छां निहन्तुं सुस्सलोन्मुखम् । क्रोधाज्जनकसिंहं च वार्तां तां च विवेद सः ॥९३१॥

नगरस्थेन तेनाथ पौराश्वारोहमन्त्रिणः । संघट्याखिलान्भिक्षोः प्रातिपक्ष्यमगृह्यत ॥९३२॥

जानंस्तेनावृतं राज्यं ततो भिक्षाचरो नृपः । पृथ्वीहरेणानुयातो नगरं सहसाविशत् ॥९३३॥

सेतौ सदाशिवाग्रस्थे तत्सैन्यैः सह संगरम् । दृप्यज्जनकसिंहोऽथ सान्त्वमानोऽपि सोऽसहीत् ॥९३४॥

935 दृष्टं जनकसिंहस्य योधानां वल्गतां मदात् । अविशङ्क्य पराभूतिं मुहूर्तं सुभटायितम् ॥९३५॥

अलकेन समं पृथ्वीहरस्तद्भ्रातृसूनुना । अन्येन सेतुना तीर्त्वा तस्य सैन्यमनाशयत् ॥९३६॥

तन्व्यश्वारोहपौरेषु विद्रुतेषु सबान्धवः । नक्तं जनकसिंहोऽथ पलाय्य लहरं ययौ ॥९३७॥

९१०. [1]) Emended; A मुखाङ्कुशा. ९११. [1]) Emended; A बन्धुमै°. ९१४. [1]) Emended; A लहरे. ९२१. [1]) Emended; A °भ्यस्तथा°. ९२२. [1]) Emended; A काश्मीरका°. ९२३. [1]) Emended; A काश्मीरका°. ९२९. [1]) Emended with C; A °वेशन:. ९३१. [1]) Emended with C; A स. ९३७. [1]) Emended with C; A तन्व्यश्वारोह°.

भिक्षुपृथ्वीहरौ प्रातस्तत्पृष्ठग्रहणोद्यतौ । तत्पश्चात्सैन्धवाराधा धृष्टा भूयोऽप्यशिश्रियन् ॥९३८॥
क्षिप्त्वा क्षिप्रं स्वकक्ष्यान्तर्विबुधप्रतिमा भयात् । ते पारिपार्श्विकायाः प्रायमुत्सृज्य विद्रुताः ॥९३९॥
मुख्यानि सुरयुग्यानि रक्षन्तः केऽपि भिक्षुणा । प्राप्ताभिवृत्ता वयमित्युक्तवन्तो न बाधिताः ॥९४०॥ 940
यो जानके भैक्षवेय वल्गत्तुङ्गतुरंगमान् । दृष्टवन्तो वयं सैन्ये तादृशोऽद्यापि तादृशाः ॥९४१॥
भिक्षुराज्यप्रदीपेन द्योतितः क्षणभङ्गिना । पैतृव्येणाधिकारेण व्यालस्तिलकसिंहजः ॥९४२॥
गते जनकसिंहेऽथ प्रतिपक्षानुसारिणाम् । विभातु वेश्मभङ्गादि लब्धं भिक्षुमहीभुजा ॥९४३॥
अत्रान्तरे हुष्कपुरे मैत्रिषु तिलकादिषु । भग्नं सुस्सलसिन्धाद्यैः समेतानन्तसैनिकैः ॥९४४॥
अथायातैर्मल्लकोष्ठजनकाद्यैः ससैनिकैः । अपरैरपि सामन्तैर्बलबाहुल्यशालिभिः ॥९४५॥ 945
अन्वीयमानो द्विषतैर्द्विषैराक्रान्तमण्डलः । विशालहरमार्गेण विपक्षालक्षितोऽपतत् ॥९४६॥
नगरापणवीथ्यन्तर्हयारोहमुखात्पुरः । द्रोहयोधानुपायातांस्तदैवोज्झितसाध्वसः ॥९४७॥
वेष्टितालम्बकूर्चेन वक्त्रेण भ्रुकुटीभृता । कोपकम्पिततारेण फुल्लनासापुटस्पृशा ॥९४८॥
कांश्चित्संतर्जयन्निन्दन्नन्यान्प्रभीतापरान् । तीव्रातपश्यामवपुस्ताम्यन्काल इवोल्बणः ॥९४९॥
आशीर्घोषकृतां पुष्पवर्षिणां पुरवासिनाम् । पूर्वोपकारिणां श्रेणीष्ववशान्यस्तलोचनः ॥९५०॥ 950
स्कन्धमात्रोपरि न्यस्तं कवचं हेलया दधत् । केशान्तशिरस्त्रान्तनिःसृतान्धूलिधूसरान् ॥९५१॥
पक्ष्ममालां च बिभ्राणः सकोशासिस्तुरंगिणाम् । आकृष्टखड्गमालामामन्तर्वल्गत्तुरंगमः ॥९५२॥
ससिंहनादैस्तरमैर्भेरीभांकारनिर्भरैः । बलैर्भैरितदिक्कोष्ठः सुस्सलः प्राविशत्पुरम् ॥९५३॥ कुलकम् ॥
षड्भिः सहावशादिनैर्मासैर्ज्यैष्ठे सितेऽहनि । स सप्तनवताब्दस्य तृतीये पुनराययौ ॥९५४॥
राजधानीमप्रविष्टो भिक्षुं पूर्वपलायितम् । अन्विष्यन्क्षिप्तिकातीरे सलवन्यं व्यलोकयत् ॥९५५॥ 955
सरित्पारं द्विपे प्राप्ते स सपृथ्वीहरो गतः । मार्गे लवन्यैर्मिलितैरन्यैः सार्कं न्यवर्तत ॥९५६॥
तं विद्राव्य रणे राजा बद्ध्वा प्रकृतिविप्लवम् । सिंहं पृथ्वीहरभ्रातिं राजधानीमथाविशत् ॥९५७॥
उपभोगैः सपत्नस्य तत्कालनिःसृतस्य सा । अङ्किता मानिनस्तस्य वेश्मयेवोद्वेगदाभवत् ॥९५८॥
भिक्षुः संत्यज्य कश्मीरान्सह पृथ्वीहरादिभिः । ग्रामं पुष्याणनाडाख्यं सोमपालाश्रयं ययौ ॥९५९॥
प्रस्थितं डामरान्सर्वानाज्ञा स्वीकृत्य तु व्यधात् । खेर्यां वहात्मजं मल्लं हर्षमित्रं च कम्पने ॥९६०॥ 960
पूर्वोपकारं स्मरतो देशकालानपेक्षिणः । ..............................[1] ॥९६१॥
भिक्षुसंपर्कजं गन्धमपि सोढुमशक्नुवन् । भृत्येभ्यः खण्डशः कृत्वा हैमासिंहासनं ददौ ॥९६२॥
अनयोपार्जितां त्यक्तुमनीशा डामराः श्रियम् । समन्वोथ नृपाज्ञीता नात्यजन्भिक्षुबोधनम् ॥९६३॥
भिक्षुस्तु राज्यविभ्रष्टः क्षुद्रो विषये वसन् । वत्सारं सोमपालस्य दानमानैः पुनर्ययौ ॥९६४॥
बिम्बः साहायकप्रार्थी विस्मयस्यान्तिकं गतः । तस्मिन्विरोधिभिर्वद्धे रणे धीरस्तनुं जहौ ॥९६५॥ 965
भिक्षाचरो बिम्बभून्यो भजन्मुर्नेयपात्रताम् । अनैषीद्वत्सरास्यं तद्धियां तां गतत्रपः ॥९६६॥

९४५. [1]) Emended; A विद्धकौष्ण°. ९४७. [1]) Emended; A °मुखात्पुरः. ९४८. [1]) Emended with C; A वक्रेण. ९५५. [1]) Emended; A सलवन्यौ. ९६०. [1]) Thus A; perhaps to be emended प्रस्थितौ. ९६१. [1]) Here two *pādas* are missing. A does not indicate the *lacuna*; C supplements पूर्ववैरिविरोधस्य न कृतं प्रतिवेदितैः. ९६५. [1]) Emended; A °वद्धे; C °वेद्धौ. ९६६. [1]) Emended with C; A भिक्षाचरे.

निपत्य स्वल्पसैन्योपि ततः शूरपुरे बली । जित्वा पृथ्वीहरो वड्डात्मजं व्यद्रावयद्रणात्¹ ॥९६७॥
तस्मिन्पलायिते भिक्षुं पुनरानीय सोविशत् । भुवं मडवराज्यानां दस्यूनां स्वचिकीर्षया ॥९६८॥
तत्रस्थैर्मङ्गजव्याद्यैर्डामरैः स्वीकृतैः समम् । जगाम विजयक्षेत्रं विजेतुं कम्पनापतिम् ॥९६९॥
970 जितस्तेनाहवे हर्षमित्रो निहतसैनिकः । विजयेश्वरमुत्सृज्य भीतोवन्तिपुरे ययौ ॥९७०॥
विजयक्षेत्रजास्तत्पुरग्रामोद्भवा अपि । जना भयेन प्राविशन्नथ चक्रधरान्तिकम् ॥९७१॥
योषिच्छिशुपशुव्रीहिधनोपेतैरपूर्यत । स्थानं तत्तैश्च राज्ञश्च योधैः सायुधवाजिभिः ॥९७२॥
अन्याक्रान्तैरिव स्पष्टं लोकोल्लुण्ठनलालसैः । ते¹ भैक्षवैरवेष्ट्यन्त कटकैर्व्याप्तदिक्तटैः ॥९७३॥
तान्दाहभयवद्भीविहारगुप्ते सुरौकसः । अङ्गने¹ तिष्ठतो हन्तुं बन्द्धुं वा नाशकन्द्विषः ॥९७४॥
975 तदन्तरस्थितं दग्धुं कर्पूराख्यं स्ववैरिणम् । कश्चित्कतिस्थलीग्रामजन्मा निर्गुण¹डामरः ॥९७५॥
पापो जनकराजाख्यस्तत्राग्निमुददीदिपत् । मूकस्थावरपर्यन्तजन्तुसंहारनिर्घृणः ॥९७६॥
तमापतन्तं ज्वलितं ज्वलनं वीक्ष्य सर्वतः । भूतग्रामस्य सुमहान्हाहाकारः समुद्ययौ ॥९७७॥
विशङ्कृतान्तवाहारिभियेव छिन्नबन्धनैः । अर्धैरसर्वसंचारा भ्रमाग्निर्जज्ञिरे जनाः ॥९७८॥
प्राच्छाद्यत चलज्ज्वालाकरालैर्धूमराशिभिः । व्योम पिङ्गकचश्मश्रुजालैर्नक्तंचरैरिव ॥९७९॥
980 निर्धूमस्य विसारिण्यो ज्वाला हव्यभुजो दधुः । संतापद्रुतहेमाभ्रसुवर्णलहरीभ्रमम् ॥९८०॥
संतापविद्रुतव्योमचारिमौलिपरिच्युताः । रक्तोष्णीषा इव भेजुर्ज्वालाभङ्गा नभोङ्गने ॥९८१॥
दीर्घदारुग्रन्थिभङ्गजन्मा चटचटारवः । तापप्रक्वाथ्यमानाभ्रगङ्गाघोष इवोद्ययौ ॥९८२॥
स्फुलिङ्गैः प्लोषविध्वस्तजन्तुजीवितसंनिभैः । अभावि गहनव्योममार्गभ्रमणसंभ्रमः ॥९८३॥
शाकुनैः शावसंचारशोकाक्रन्दिभिर्नभः । मानुषैर्दह्यमानैश्च भूमिर्मुखरिताभवत् ॥९८४॥
985 भ्रातॄन्भर्तॄन्पितॄन्पुत्रानालिङ्ग्याक्रन्दनिर्भराः । भीमीलितदृशो नार्यो निरदह्यन्त वह्निना ॥९८५॥
तदन्तरात्साहसिका ये केचिन्निरयासिषुः । बहिस्ते निहताः क्रूरैर्डामरैर्मृत्युचोदितैः ॥९८६॥
तावन्तो जन्तवस्तत्र व्यपद्यन्त तदा क्षणात् । स्विन्ना एव न ये दग्धास्तावतापि कृशानुना । ९८७॥
अन्तः शान्तेषु सर्वेषु बहिः शान्तेषु हन्तृषु । क्षणादेव प्रदेशः स निःशब्दः समजायत ॥९८८॥
वह्नेः कहकहाशब्दो ह्रस्वीभूतार्चिषः परम् । स्विद्यतश्च शवौघस्य श्रुतः सिमसिमाध्वनिः ॥९८९॥
990 विलीनासृग्वसामेदोनिःस्यन्दाः सरणीशतैः । प्रससुर्विस्रगन्धश्च योजनानि बहून्यगात् ॥९९०॥
एकः सुश्रवसः कोपाद्द्वितीयो दस्युविप्लवात् । दैग्ध्युतदाहाबाधो¹ घोरश्चक्रधरेभवत् ॥९९१॥
भूतग्रामस्य संहारः¹ संवर्त इव वह्निना । तादृक्त्रिपुरदाहे वा खाण्डवे तत्र वाभवत् ॥९९२॥
पुण्येह्नि शुक्लद्वादश्यां नभसः सुकृतं महत् । तद्भिक्षुः कृतवान्राज्यलक्ष्म्या भाग्येव तत्यजे ॥९९३॥
सकुटुम्बेषु दग्धेषु तदार्थी गृहमेधिषु । पुरग्रामसहस्रेषु गृहाः शून्यत्वमाययुः ॥९९४॥
995 मङ्गाख्यो डामरश्छिन्नकश्राश्रीनगरोद्भवः¹ । भीतिं ग्रामैस्तदीयार्थैः कापालिक इवाययौ ॥९९५॥

९६७. ¹) Emended with C; A विद्राव°. ९७३. ¹) Emended; A तैर्भैक्षवै°. ९७४. ¹) Emended with C; A आङ्गने. ९७५. ¹) Emended; A निर्गुडरा°. ९९१. ¹) Emended with C; A दैग्ध्युत°. ९९२. ¹) Emended; A भूतग्रामसंहार°; C भूतग्रामादिव°. ९९५. ¹) Emended; A °श्रीनगरोद्भव:.

अथच्छोथ विजयक्षेत्रे भिक्षाचरस्ततः । लब्ध्वा नागेश्वरं पापं यातनाभिरमीमरत् ॥९९६॥
गर्भे पैतामहे देशे किं नासीत्तस्य चेष्टितम् । पितृद्रुहः स तु वधः सर्वप्रीतिकरोभवत् ॥९९७॥
गृहिणी हर्षमित्रस्य पत्नी त्यक्त्वा पलायिते । पृथ्वीहरेण संप्राप्ता विजयेशाङ्गनान्तरात् ॥९९८॥
निमित्तभूतमेतादृक्प्रजासंहारवैशसम् । स्वं निघ्नन्सुस्सलो राजा ततो योद्धुं विनिर्ययौ[1] ॥९९९॥
संवेगात्पाप्मनः शीघ्रं निरयक्लेशभुक्तये । प्राप्तो जनकराजेन वधोवन्तिपुरान्तिके ॥१०००॥ 1000
यत्कृते क्रियते कर्म लोकान्तरसुखान्तकम् । स मूढैः सुलभापायः कायश्चिरं न गण्यते ॥१००१॥
कम्पनाधिपतिं सिम्बं कृत्वा डामरमण्डलम् । चकर्ष विजयक्षेत्रादन्यतोपि ततो नृपः ॥१००२॥
शमालां प्रययौ पृथ्वीहरो मडवराज्यतः । विजित्य मल्लकोष्ठेन त्याजितो निजमण्डलम् ॥१००३॥
क्षिप्ताः केचिद्विलस्तायां केचिच्चक्रधराङ्गने । अक्रियन्ताग्निसात्क्रष्टुमशक्या बहवः शवाः ॥१००४॥
क्रमराज्येथ कल्याणवाडादीन्निल्हणोजयत् । आनन्दोनन्तजस्तत्र ततो द्वाराधिपोभवत् ॥१००५॥ 1005
शूले प्रमापितं सिंहं नयन्पृथ्वीहरो बली । सार्धं जनकसिंहाद्यैरयुध्यत्क्षिप्तिकातटे ॥१००६॥
तीर्थे प्रस्थाप्यमानेषु विपन्नास्थिष्विहास्यहः । भाद्रे मास्येकमबलाक्रन्दिताक्रान्तदिक्पथम् ॥१००७॥
हतवीराबलाक्रन्दमुखरे नगरान्तरे । पृथ्वीहराहवे सर्वैर्दिवसैरन्वकारि तत् ॥१००८॥ युग्मम् ॥
अथायातो यशोराजस्यालः शूरो दिगन्तरात् । श्रीवक्को विदधे राज्ञा खेरीकार्याधिकारभाक् ॥१००९॥
अप्रियं स लवन्यानां तेपि वा तस्य नाचरन् । कालं तु गूढसौहार्दैरन्योन्यस्यास्यवीवहन् ॥१०१०॥ 1010
पुनराश्वयुजे राजा शमालां निर्गतस्ततः । परैर्मनीमुपग्रामे युधि भङ्गमनीयत ॥१०११॥
नित्याभ्यासेन युद्धानां लब्धोत्कर्षो न्यदर्शयत् । सर्ववीराग्रणीर्भिक्षुस्तत्पूर्वं तत्र विक्रमम् ॥१०१२॥
तुक्कहिजादयो मुक्त्वा भिक्षुपृथ्वीहरादिभिः । आसारापातविवशा निहताः सौस्सले बले ॥१०१३॥
प्रधानवीरभूयिष्ठे सैन्यद्वन्द्वे न कोप्यभूत् । स वीरस्ततः संख्ये भिक्षोरैक्षिष्ट यो मुखम् ॥१०१४॥
पृथ्वीहरस्य भिक्षोश्च संग्रामे भूरिवार्षिके । कादम्बरीपताकाख्ये द्वे अश्वे पीतपाण्डुरे ॥१०१५॥ 1015
आस्तामत्यद्भुते याभ्यामनेकतुरगक्षये । न विपन्नं प्रहृतिभिर्नान्वभाव्यत वा श्रमः ॥१०१६॥
सैन्यानां संकटे त्राणमभ्रान्तिरविकत्थनः । अभूत्क्लेशसहो वीरो नान्यो भिक्षाचरात्क्वचित् ॥१०१७॥
योधानां सौस्सले सैन्ये विद्रवेषु न कश्चन । त्राणं बभूव तेनैते बहवो बहुधा हताः ॥१०१८॥
नवेषु डामरानीकाः केचिद्भङ्गेषु सैनिकाः । भिक्षाचरगजेन्द्रेण कलभा इव पालिताः ॥१०१९॥
नान्यस्योत्थानशीलत्वं दृष्टं पृथ्वीहरात्तदा । स्वयं यो भैक्षवे द्वारे जजागार प्रतिक्षपम् ॥१०२०॥ 1020
ततः प्रभृत्यभूद्दोष्मा पुरः पश्चाच्च सर्वदा । विभेदेव इव भाद्रे युद्धे भिक्षुर्महाभटः ॥१०२१॥
आहवे साहसं कुर्वन्सर्वतः सोभ्यधान्निजान् । प्रथमस्खलितस्थैर्यमुपपत्तिमसंत्यजन् ॥१०२२॥
न मे राज्याय यत्नोयं पर्याप्तं दुर्यशः पुनः । कृत्ये प्रसक्तु पूर्वेषां व्यवसायं व्यपोहितुम् ॥१०२३॥
अनाथा इव ते नाथा विद्यां व्यापादनक्षणे । ज्ञात्वा नष्टं कुलं नायवज्ञो नूनं स्पृहां दधुः ॥१०२४॥

---

१००३. ¹) Emended with C; A मडब. १००५. ¹) A °वाडारी°.—²) Emended with C; A °निल्हणो°. १००८. ¹) Emended; A °बलाक्रान्तमु°. १००९. ¹) Emended; A अथ यातो.

1025 इति मत्वा सोड्डकश्चैते[1] डामरनिश्चयः । दूयमानोस्मि दायादुःखदायी दिने दिने ॥१०२५॥
नास्त्येवामोघकालस्य विपत्तिरिति[1] जानतः । कस्य साहसवैमुख्यमुत्पद्येत मनोर्मिभिः ॥१०२६॥
किं कार्यगतिकौटिल्यैरस्मीत्साम्यथ वा कथम् । न वदामः प्रतिज्ञाय स्वयमार्येऽध्वनि स्थितिम् ॥१०२७॥
सोत्कर्षपीठवाङ्गिरश्लोरपाङ्गिवत डामराः । ततो दायादविच्छेदं नास्याकृषत जातु चित् ॥१०२८॥
प्रापाज्याधिगमाद्याशामन्येषां राजबीजिनः । चिन्तयन्तो व्यवहृतिं व्युत्पद्यन्ते शनैः शनैः ॥१०२९॥
1030 पितुः पितामहस्याथ न दृष्टं तेन किंचन । अत एवाभजन्मोहं राज्यं संप्राप्तवान्पुरा ॥१०३०॥
तस्य भूयोपि वेदाप्स्यंस्तैव[1] वार्ता विपाटने । सापेक्षं वीक्षितुं जाने न दैवेनाप्यशक्यत ॥१०३१॥ चक्रलकम्[2]॥
जानंश्छद्मन्यकौटिल्यं प्रमादात्स हतेहिते । प्राग्वा राज्यमित्याशां बद्ध्वाहान्यत्स्यथाहवम् ॥१०३२॥
दस्यूनां सुस्सलो राजा मेने तत्त्वहितं मतम् । जिगीषुर्नीतिविक्रान्त्योः प्रभुक्ती लिप्सुरन्तरम्[1] ॥१०३३॥
युद्धे स्वान्स्यमरन्वैरं नापासीत्तेन तेऽभजन् । नास्मिन्विश्वासमेतस्मात्तेतोर्नास्याभवज्जयः ॥१०३४॥
1035 इत्थं नानामतैः पक्षप्रतिपक्षैरुपेक्षितम् । राष्ट्रं निखिलमेवाणारसर्वतः शोचनीयताम् ॥१०३५॥
यस्तं बन्धाद्विटपिनिवहैर्निग्रहव्ययपवन्यव्याधप्रतामलपरिभवः कोपि मन्वन्नभावि ।
हा धिग्दन्ती विघटनपरः सोपि नाथवमीषां लब्धं भेदो विधिविधुरितैर्नान्यतो न स्वतोपि ॥१०३६॥
द्वैराज्ये प्रमवस्येवमकाण्डपतितैरिभिः । विवशं सुस्सलस्याभूज्जयश्रीक्षयं बलम् ॥१०३७॥
पुष्याणनाडं[1] भूयोपि भिक्षुपृथ्वीहरौ गतौ । अन्यैर्लवन्यैर्भूमर्तुर्नीतिरेतकरैः कृता ॥१०३८॥
सिम्बोपि कम्पनाधीशो व्यधाद्विजितडामरः । सर्वां मडवराज्योर्वीं वीरः शमितविप्लवाम् ॥१०३९॥
1040 तावत्यापि विपक्षाणां शान्त्या शीतलतां गतः । पूर्ववैरं स्वपक्ष्याणां प्रादुश्चक्रेथ भूपतिः ॥१०४०॥
जिघांसौ कथिते राजन्युल्हणेन पलायितः । मल्लकोष्ठः सोपि कोपाद्राज्ञा राष्ट्रात्प्रवासितः ॥१०४१॥
अनन्तात्मजमानन्दं बद्ध्वा द्वाराधिकारिणम् । व्यधत्त सैन्धवं प्रजिजनामानं राजबीजिनम् ॥१०४२॥
गतोथ विजयक्षेत्रं सिम्बेन सहितोऽविशत् । नगरं तं च विश्वस्तं बद्ध्वा कारागृहेऽक्षिपत् ॥१०४३॥
अनुस्मृतिमहावात्याप्रेरितोमर्षपावकः । आचचाम क्षमावारि तस्य भृत्यान्विपक्षतः ॥१०४४॥
1045 सिंहचक्रनासिंहाभ्यामनुजाभ्यां सहावधीत् । शूलेधिरोप्य सिम्बं स रोषावेशाविलुप्तधीः ॥१०४५॥
कम्पने श्रीवकं चक्रे सुजिज मञ्जेः सहोदरम् । बद्ध्वा जनकसिंहं च राजस्थाने न्ययोजयत् ॥१०४६॥
आप्राप्य नान्त्रिणधासंस्तस्य वैदेशिकास्ततः । स्वदेशजस्तु सोभूयो लोहरस्थं तमन्वगात् ॥१०४७॥
अथ सर्वेपि साशङ्कास्तं त्यक्त्वाभ्यर्थयन्रिपून् । शतैकीयः कश्चिदासीद्राजधान्यां नृपाश्रितः ॥१०४८॥
तेनाप्रतिसमाधेयो भूयः शान्तेप्युपद्रवे । इत्थमुत्थापितोऽनर्थो न पुनर्यः शमं ययौ ॥१०४९॥
1050 एकाक्षेपे परेपि स्युर्यत्र भृत्या विशङ्किताः । तत्रापराधे प्राप्तस्य राज्ञोऽवहीव शस्यते ॥१०५०॥
माघेथ मल्लकोष्ठाद्यैराहूताः[1] पुनराययुः । ते शूरपुरमार्गेण भिक्षुपृथ्वीहरादयः ॥१०५१॥
वितस्तापरिखाक्षिप्ता भूरगम्या द्विषामिषम् । इति मायापवमठं त्यक्त्वा राजगृहं नृपः ॥१०५२॥

१०२५. [1]) $A_2$ gloss स्वयं. १०२६. [1]) Emended with C; A नास्त्वेवमाम°. १०३१. [1]) Emended; A वेदाप्स्यंस्तैव.—[2]) $A_1$ writes here ३ instead of चक्रलकम्. १०३३. [1]) Doubtful emendation; A जिगीषोर्नी° and प्रभुक्ती लिप्सुरन्तरम्; C जिगीषोर्नी° and प्रभक्ती लिप्सुरन्तरः. १०३८. [1]) A पुष्याण°. १०४८. [1]) Emended; A त्यक्त्वाभिय°. १०५१. [1]) Emended; A °कोष्ठाद्ये आहूता.

वर्षेष्वागते वैरे डामरेषु क्षुभ्यत्सु । अभ्येत्य मल्लकोष्ठेन मार्गेणापि संगरः ॥१०५३॥
लोष्ठधाटिः सह रणं चकार नगरान्तरे । नृपाश्वरोधैः वीथावरालोकितमयाकुलैः ॥१०५४॥
भिक्षुणा क्षिप्तिकातीरे स्कन्धावारे न्यवध्यत । ..................[1] ॥१०५५॥
नृपोऽथवाहुमाक्षिप्तुरिन्धनाय महानसे । दूर्वाङ्कुराग्रमपुराभ्यो वाहभोज्याय डामराः ॥१०५६॥
पृथ्वीहरस्तु संगृह्य स्वमल्लवराज्यजान् । चकार विजयक्षेत्रे यावत्कटककर्दमम् ॥१०५७॥
तावद्भक्तिजमुख्यान्मल्लकोष्ठमुखाय भूपतिः । आदिश्याराद्वैवस्कन्दं वैशाखे साहसोन्मुखः ॥१०५८॥
अकस्मात्पतिते तस्मिन्कृतावष्टम्भविस्तराः[1] । बभञ्जुः सेतुमुत्क्रम्य भीताभस्ताः कथंचन ॥१०५९॥
नगरं मल्लकोष्ठाजिव्यये मज्जावयाविशात् । पृथ्वीहरानुजः सुज्जिं निर्जित्य मनुजेश्वरः ॥१०६०॥
परं पारं वितस्तायां सेतुच्छेदादनामुवन् । अर्वाचि तीरे स गृहान्दग्ध्वागात्क्षिप्तिकां ततः ॥१०६१॥
लवन्यैर्नगरं मार्गं मत्वा सुस्सलभूपतिः । आगमी विजयक्षेत्रात्सैन्यमुत्थाप्य विह्वलः ॥१०६२॥
अहंपूर्विकयारातिशङ्कीव निजैर्भटैः । पीडितस्तस्य गम्भीरासिन्धुसेतुरभज्यत ॥१०६३॥
स कृष्णपक्षे ज्येष्ठस्य सप्तम्यां मध्यमभूपतेः । यथाभिमा चक्रधरे तथा तत्रान्मता मृतः ॥१०६४॥
भुजमुद्यम्य सामन्तैन्यानां संभ्रमं नृपः । भग्नैर्भटैस्तथा पृष्ठे पतितः सरिदन्तरे ॥१०६५॥
अनभ्यस्तास्तुरगैराक्षिप्य क्षुभितोऽसकृत् । तरङ्गायुधविद्धाङ्गः स निस्तीर्णः कथंचन ॥१०६६॥
अनुत्तीर्णं बलं त्यक्त्वा पारे ज्वालान्तसंकुलम् । लवणांशेन सैन्यस्य तीर्णेनानुगतो ययौ ॥१०६७॥
तत्पक्षानन्तसैन्योऽपि कोपदम्ममयो नृपः । प्रविश्य नगरं मल्लकोष्ठमुख्याक्षणेऽपहीत् ॥१०६८॥
विजयस्याथ जननी सिल्लाख्या स्वामिनोज्झितम् । निनाय देवसरसं सैन्यं तद्विजयेश्वरात् ॥१०६९॥
साथ पृथ्वीहरेणैत्य हता तत्रोपवेशाने । टिक्कश्च हतो भूपालसैन्यं विद्रावितं च तत् ॥१०७०॥
परं व्यायामविद्याविहिहुते निखिले बले । द्विजः कल्याणराजाख्यः समरेऽभिमुखो हतः ॥१०७१॥
मल्लिडामरसामन्तसंकुलात्सौरस्सलाकुलात् । पृथ्वीहरेणागृह्यन्त बद्ध्वा वृन्दानि हस्तिनाम् ॥१०७२॥
अभ्यागात्स वितस्तान्तं यावत्तान्विधुतान्बलात् । ओजामन्दहिजादींश्च बद्ध्वा शूले न्यपातयत् ॥१०७३॥
मल्लिणो जनकश्रीवकाद्याः राजात्मजास्तथा । तीर्त्वापि विपक्षाटायां शरणं ययुः स्वशान् ॥१०७४॥
इत्थं पृथ्वीहरो लब्धजयः संगृह्य डामरान् । जिगीषुर्भिक्षुणा सार्धं नगरोपान्तमाययौ ॥१०७५॥
भूयोऽपि मानुषाणीवसंवर्ता सर्वतस्ततः । रणाः प्रववृते प्राग्वत्पुरे पदस्थ भूपतेः ॥१०७६॥
निर्विरोधः पथानेन नृपावसथ इत्यभूत् । सैन्ये मडवराज्याना न्यवं पृथ्वीहरोऽग्रणीः ॥१०७७॥
तत्सामन्तकुलजैर्वीरैः काश्मीरकैर्भटैः । समेतं डामरकुलं दुर्जयं सर्वतोऽभवत् ॥१०७८॥
काश्मीरकाः शोभकाद्याः काकवंश्याः सखराः । मल्लाता भैक्षवे पक्षे रक्षायाश्चापरेऽस्फुरन् ॥१०७९॥
नद्यतः स्वबलाहार्यं तुमुलं शृण्वतोऽभिपत् । पृथ्वीहरेणागण्यन्त वाद्यभाण्डानि कौतुकात् ॥१०८०॥
हित्वा भूर्यश्च तूर्याणि परिच्छेदेषु स कौतुकी । अपाकदुन्दुभीभाण्डशतानि द्वादशाहकत् ॥१०८१॥

---

१०५५. [1]) Here two *pâdas* seem to be lost; A does not indicate the *lacuna*. C adds [illegible]. १०५८. [1]) Emended; A °[illegible]. १०५९. [1]) Emended with C; A °विस्तृतः. १०६१. [1]) Emended with C; A °[illegible]°.

तथा विनष्टसैन्योपि विंशद्भिर्नृपात्मजैः । मितैः स्वदेशगैर्वारीन्प्रतिजग्राह सुस्सलः ॥१०८२॥
राजन्याविच्छटिकुलोद्भूतावुदयधन्यकौ । चम्पावल्लापुराधीशावुदयब्रह्मजज्जलौ ॥१०८३॥
ओजो[1] मल्हणहंसानां धुर्यो हरिहडीकजः । क्षत्रिकाभिक्षिकाख्यावसव्यराजावथस्तथा ॥१०८४॥
बिडालपुत्रा नीलाद्या भावुकान्वयसंभवाः । रामपालः सहजिको युवा तस्य च नन्दनः ॥१०८५॥
नानावंश्याः परेप्युग्रसंग्रामव्यग्रताजुषः । पुरोपरोधसंनद्धानरुन्धन्सर्वतो रिपून् ॥१०८६॥
तनूजनिर्विशेषेण रिल्हणेन महीभुजः । रणाग्रेसरतामापि विजयाद्यैश्च सादिभिः ॥१०८७॥
स्वयमुद्यमिना राज्ञा धर्मेणेव निजौ भुजौ । सुज्जिप्रज्जी पाल्यमानावभूतां रणकर्मठौ ॥१०८८॥
ताभ्यां साधारणीकुर्वन्राज्योत्पत्तिं महीपतिः । स महाव्यसने तस्मिन्सम्यग्गूढधुरोभवत् ॥१०८९॥
तत्पक्षा भागिकशरद्भासिमुम्मुनिमुक्कटाः[1] । कलशाद्याश्च कुशला विपक्षक्षोभणेभवन् ॥१०९०॥
भूभर्तुष्टक्कविषये लवराजस्य नन्दनः । आसीत्कमलियश्चास्य संग्रामाग्रेसरः प्रभोः ॥१०९१॥
प्रहारं बलिनस्तस्य चामरध्वजशोभिनः । प्रभिन्नस्येव नागस्य हयारोहा न सेहिरे ॥१०९२॥
अनुजः सज्जिकः पृथ्वीपालो भ्रातुः सुतोस्य च । पाञ्चालाः[1] फल्गुनस्येव[2] पार्श्वरक्षित्वमाययुः ॥१०९३॥
एताबद्भिर्भृत्यरत्नै राष्ट्रेपि कुपितेभवत् । भूरिस्वर्णार्पणोपात्तैर्वाजिभिश्च महीपतिः ॥१०९४॥
तत्र तत्राहवे सोपि बभ्रामाक्लमो नृपः । उत्सवे गृहमेधीव मण्डपे मण्डपे स्वयम् ॥१०९५॥
तस्य हि व्यसने त्रासहेतुः प्राभूदुपक्रमे । प्रवृद्धे प्राग्र्यमभवद्धैर्यौदात्त्यं च धीमतः ॥१०९६॥
हिम्यकव्रजसमापाते मध्यपाते न तादृशम् । करक्लिन्नं यथा शीतं मज्जने न तथा पयः ॥१०९७॥
वैरिसैन्यतमो यत्र यत्र ज्योत्स्नेव निर्ययौ । सितासिता च भूभर्तुस्तत्र तत्रास्य वाहिनी ॥१०९८॥
एकदा कृतसंकेतास्तुल्यमाहवमेलके । महासरितमुत्तीर्य डामरा नगरेपतन् ॥१०९९॥
अक्षीसनगरस्थानविभक्तकटको नृपः । परिमेयाश्ववारस्तान्विघ्नतः स्वयमाद्रवत् ॥११००॥
नाभजड्डामरानीकस्तेन विद्रावितो धृतिम् । हेमन्तमरुता कीर्णपर्णराशिरिवेरितः ॥११०१॥
क्ष्मानन्दः काककुलजो लोष्टशाह्यनल्लादयः । अन्ये च डामरानीके ख्याता भूभृद्भटैर्हताः ॥११०२॥
लमाभिघातानानीताञ्चाशः क्रूरस्य दृक्पथम् । बहूञ्जघ्नुश्चण्डाला इव राजोपजीविनः ॥११०३॥
भयाद्गोपाद्रिमारुह्य अपरे भिक्षवास्ततः । आसन्नमृत्यवोभूवन्कटकैर्वेष्टिता ह्रियाम्[1] ॥११०४॥
यो मार्गो दुर्गमः पक्षिणोपि यातुं ततः स तान् । तत्र व्यापारयामास भिक्षुर्मानी तुरंगमान् ॥११०५॥
कथंचित्पक्षिणा विक्रमीवसस्तस्यामहीन्मुहुः । पार्श्वे पृथ्वीहरो कर्दे ह्रिमाद्यान्ये महाभटाः ॥११०६॥
वेलाद्रिभिरिवोद्वृत्तैः सिन्धौ तैर्हिपतां बले । हृष्टे गोपाचलं त्यक्त्वा तेन्यानारुरुहुर्गिरिम् ॥११०७॥
अथोदतिष्ठद्धामेन[2] राजानीकस्य वाहिनी । मल्लकोष्ठस्य पश्यभक्षोभिताशेषदिक्तटा ॥११०८॥
अरिपृष्ठ महत्यग्रैस्तिष्ठन्स्वैर्वर्जितो बलैः । तदाशाप्यखिलैरेव हतो राजेत्यसंशयम् ॥११०९॥
आपातं सुस्सलो राजा यावत्तस्याविसोढवान् । तावत्सावरजः प्रज्जि[1]राजगाम रणाङ्गनम् ॥१११०॥

१०८४. [1]) Thus $A_1$ in margin; $A_1$ सैजो in text. १०९०. [1]) Thus A; perhaps to be emended मुङ्कटाः; cf. vii. 589. १०९३. [1]) Emended (i.e. पाञ्चालाः); A पाञ्चाली.—[2]) Thus A; perhaps read with C फाल्गुन°. ११०४. [1]) Thus $A_2$; $A_1$ हिमारव. ११०८. [2]) Emended; A °तिष्ठ-मेन; C °तिष्ठत् सुस्सेन. १११०. [1]) Emended with C; A प्राज्जि°.

आषाढबहुलाष्टम्यां स हयारोहमेलकः । निजहास्त्यश्वमिश्रसाधुवाहो महानभूत् ॥११११॥

ताभ्यां स क्षमिति युद्धे सतनुः ससमीरणः । हावो नभोगमस्याभ्यामिव पापाम्बुवृष्टिभिः[1] ॥१११२॥

संग्रामबहुले काले तादृगन्यो न कोऽप्यभूत् । यादृक्स दिवसो वीर्यशौटीर्यनिकषोपलः ॥१११३॥

अनीकिनी लाहरी सा विलम्बेनाययाविति[1] । तेषामुत्पाटनेच्छूनां नाभवद्बलमेलकः ॥१११४॥

अन्योन्यस्य परित्राता दिवसे तत्र संकटे । भिक्षोर्भूमिभृता शक्तिर्भूमिभर्तुश्च भिक्षुणा ॥१११५॥ 1115

ततो मल्लधराख्यांस्तान्योद्धुं तत्रैव निर्दिशन् । क्षितिकारोधसा युद्धमेत्य पृथ्वीहरोमहीत् ॥१११६॥

दिगन्तरात्तथायातो यशोराजो महीभुजा । मण्डलेश्वरतां निन्ये रिपून्प्रतिजिहीर्षुणा ॥१११७॥

खेरीकार्ये पुरा तस्य लवन्या दृष्टविक्रमाः । रणेषु मुखमालोक्य शतशः प्रचकम्पिरे ॥१११८॥

कुङ्कुमालेपनच्छत्रहयादिप्रतिपत्तिदः । सर्वेषामभिनन्द्यत्वं तं राजा स्वमिवानयत् ॥१११९॥

दीर्घोपद्रवयाप्येन दुःस्थितः स्वास्थ्यलिप्सया । जनो नवनवं तत्रास्थां नववैद्य इवातुरः ॥११२०॥ 1120

ज्यायांसं पञ्चचन्द्राख्यं तेषां गर्गजन्मनाम् । नृपतिर्मल्लकोष्ठस्य प्रातिपक्ष्ये[1] न्ययोजयत् ॥११२१॥

शिशुर्भुक्षुकाख्यया मात्रा पालितः स शनैः शनैः । आश्रीयमाणोनुचरैः पित्र्यैः किंचित्प्रथां ययौ ॥११२२॥

यशोराजानुयातेन राज्ञा जन्येषु निर्जिताः । केचित्तत्पक्षमभजन्मग्नाः केचिच्च डामराः ॥११२३॥

सभिक्षुः प्रययौ पृथ्वीहरः स्वमुपवेशनम् । मल्लकोष्ठोन्मुखो राजा निर्जगामामरेश्वरम् ॥११२४॥

अत्रान्तरे मल्लकोष्ठो विसृज्य निशि तस्करान् । सदाशिवान्तिके शून्यां राजधानीमदाहयत् ॥११२५॥ 1125

पृथ्वीहरेण भूयोपि योद्धुमारब्धतालकृत् । मज्जिसुज्जिमुखा युद्धमकुर्वन्क्षिप्तिकातटे ॥११२६॥

वारं वारं लवन्यः स नगरे निर्दहन्गृहान् । प्रायः शून्यत्वमनयद्वितस्तातीरमुत्तमम् ॥११२७॥

तत्र तत्र रणान्कुर्वन्प्राणसंदेहदायिनः । आचक्रामाथ नृपतिर्लहरं बहलैर्बलैः ॥११२८॥

निःसेतुं तरतः सिन्धुं दृतिभिङ्गलयदुर्जले । मन्दिरं कन्दराजायास्तदीयाः समदाहिनः ॥११२९॥

दरदेशं ययौ मल्लकोष्ठो राज्ञा निराकृतः । सपुत्राप्यभजच्छुस्रा पारोर्द लहरान्तरे ॥११३०॥ 1130

आनिन्यिरे जय्यकेन लवन्येन नृपान्तिकम् । विषलाटान्तरात्तेन जनकश्रीवकादयः ॥११३१॥

लहराद्व्यतिक्रान्तनिदाघः शरदागमे । श्रमार्तो निर्ययौ राजा यशोराजान्वितस्ततः ॥११३२॥

भग्नं पृथ्वीहरत्रासात्सैन्यं रक्षन्मनीमुषे । आजौ सज्जात्मजो डोम्बनामा राजहितो हतः ॥११३३॥

युद्धं सुवर्णसानूरग्रामधूरपुरादिषु । कुर्वञ्छश्वन्नृपः प्राप पर्यायेण जयाजयौ ॥११३४॥

श्रीकल्याणपुराद्ध्वंसं नीते पृथ्वीहरादिभिः । श्रीवक्के नागवत्साद्या युधि प्रापुः प्रमापणम् ॥११३५॥ 1135

पौत्रे सुवर्णसानूराज्जिहन्तुं मातुरन्तकम्[1] । टिक्कं स देवसरसं व्यसृजद्गर्गवल्लभाम् ॥११३६॥

स्वेन राज्ञश्च सैन्येन सहिता सा जिताहिता । अकस्मात्तेन टिक्केन निपत्य निहता युधि ॥११३७॥

स स्त्रीवधं व्यधात्पापी द्वितीयमपि[1] निर्घृणः । विशेषः कोऽथ वा तिर्यङ्म्लेच्छतस्कररक्षसाम् ॥११३८॥

अबलां स्वामिनीं हन्यमानां त्यक्त्वा पलायिताः[1] । चित्रं पशुपमाः शस्त्रं स्त्रीचक्रुर्लाहराः पुनः ॥११३९॥

---

१११२. [1]) The text of this verse appears to be defective. १११४. [1]) A विलम्बेन. ११२१. [1]) Emended with C; A प्रातिपक्षे. ११२३. [1]) Emended with C; A °जान्यस°. ११३६. [1]) Conjectural reading; A मातुरन्तिकम्. Cf. viii. 1069 ff. and 1138. ११३८. [1]) Emended with C; A द्वितीयामपि. ११३९. [1]) Emended with C; A °यिताः.

1140 ईषत्प्राणागतं शय्यां भूय एवोल्बणं नृपः । ज्ञात्वा मड्डवराज्यं स ययौ विजयेश्वरम् ॥११४०॥
मल्लराजतनूजानां निजा जिह्वेव दुर्जना । बभूव प्रभविष्णुत्वे व्यापदापातदूतिका ॥११४१॥
प्रायश्चापत्तने काले भृत्यास्तिलतवृत्तयः । दर्शयन्ति समुत्सार्य सारं दोषतुषप्रदम् ॥११४२॥
आ बाल्यात्संस्तुताश्लीलवचःपरुषभाषितैः । निर्गौरवैर्यशोराजो राज्ञि तस्मिन्व्यरज्यत ॥११४३॥
स दुर्जातिर्महासैन्ययुतोऽवन्तिपुरस्थितः । अभजत्तत उत्थाय प्रतिपक्षसमाश्रयम् ॥११४४॥
1145 वैरिपक्षगते तस्मिन्बलैः सर्वोत्तमैः समम् । विह्वलो विजयक्षेत्रात्पलायिष्ट महीपतिः ॥११४५॥
धिग्राज्यं यत्कृते सोऽपि सेहे प्राणाञ्जिरक्षिषुः । मुष्णद्भिश्चौरचण्डालप्रायैः परिभवं पथि ॥११४६॥
माघे पलाय्य नगरं प्रविष्टः स यथाभिधे । भृत्ये श्रीग्धर्यशङ्किष्ट स्वेषामपि तनूरुहाम् ॥११४७॥
काश्मीरके जनेऽशेषे निराशो नितरां ततः । अकुन्यस्तोत्तमाङ्गोऽभूत्प्राज्ञिपक्षे क्षमापतिः ॥११४८॥
मुद्रिता रुद्रपालादिपूर्वैराज्यमजप्रथा । प्रज्जिना विक्रमस्यागन्यार्थाहारिभिर्गुणैः ॥११४९॥
1150 तेनैव वर्धितामुत्र देशे विशदकीर्तिना । कालदीराप्यलुठिता प्रतिष्ठा शस्त्रशास्त्रयोः ॥११५०॥
अमन्त्रयत संगम्य यशोराजस्तु भिक्षुणा । नेच्छन्ति डामरा राज्यं तव विक्रमशङ्किताः ॥११५१॥
उत्पाद्य पुनरुत्पिञ्जं साधिष्ठानबला वयम् । राज्यं स्वयं ग्रहीष्यामो यास्यामो वा दिगन्तरम् ॥११५२॥
इति तैर्मन्त्रिते लुञ्ठां हतां श्रुत्वा दरत्पुरात् । आगत्य मल्लकोष्ठोऽपि प्राविशत्स्वोपवेशनम् ॥११५३॥
वर्षोऽथ दुस्तरः ख्यातः पञ्चाशत्तसंख्यया । सर्वभूतान्तकृल्लोके प्रावर्तत सुदारुणः ॥११५४॥
1155 वसन्ते डामराः सर्वे प्राग्वन्मार्गैर्निजैर्निजैः । आगत्य भूयो भूपालं नगरस्थमवेष्टयन् ॥११५५॥
धीरः सुस्सलवंश्योऽपि पुनरासीद्दिवानिशम् । निःसीमसमरस्तोमारम्भसंरम्भभाजनम् ॥११५६॥
दाहलुण्ठनसंग्रामकर्मशौण्डैः स डामरैः । प्राग्विप्लवेभ्योऽप्यधिको विप्लवः पर्यवर्धत ॥११५७॥
महासरित्पथे निर्निरोधे तस्थुर्विविक्तवः । नगरं ते यशोराजभिक्षुपृथ्वीहरादयः ॥११५८॥
ततः कतिपुचित्सुदाहेषु यातेषु संगरे । निजेनैव यशोराजः परकीयभ्रमाद्धतः ॥११५९॥
1160 कन्यात्मजेन हि समं विजयाख्येन सादिना । सौस्सलेन तु संग्रामे पराकृत्तीः प्रदर्शयन् ॥११६०॥
विप्रलब्धैः सवर्णाश्रुकवचावेक्षणाग्निजैः । शूलायुधिभिरुद्दामैः शूलाघातैरहन्यत ॥११६१॥
भिक्षौ राज्यं समर्पयितुं दातुं हन्तुं ततश्च नः । भीत्वा तैर्डामरैरेव स घातित इति श्रुतिः ॥११६२॥
यथैव तेन विश्वस्तः स्वामी द्रोहेण वञ्चितः । तथैव प्राप विश्वस्तः क्षिप्रमेव वधं मृधे ॥११६३॥
पृथ्वीहरस्तत्र तत्र योधयित्वाथ डामरान् । क्षितिकारोभसा भूयोऽभ्येत्य संग्राममग्रहीत् ॥११६४॥
1165 तत्राधिष्ठानयोधानां भिक्षुपक्षोपजीविनाम् । पौरुषं स्वपरोत्कर्षपरिमार्गि व्यभाव्यत ॥११६५॥
वह्निदानमहायोधसंहारादैरुपद्रवैः । एकमेकमहस्तत्रानेहस्यासीद्भयावहम् ॥११६६॥
अतपत्तरणिस्तीक्ष्णमभीक्ष्णं भूरकम्पत । ववुर्द्रुमाद्रीन्भञ्जन्तो महोत्पातप्रभञ्जनाः ॥११६७॥
पवनोत्थापितैः पांसुकूटैर्वध्रे महोद्धतैः । व्योम्नि प्रोत्तम्भनस्तम्भभङ्गिर्निर्घातदारिते ॥११६८॥

---

११४८. [1]) A काश्मीरिके.—[2]) Emended; A निरासो. ११५१. [1]) Emended with C; A °न्तितोच्छुञ्जं. ११५०. [1]) Thus corr. by $A_2$ from $A_1$ - - - - भूत. ११६८ [1]) Thus A; G महोद्धतैः.

ज्येष्ठस्य भुक्षीकावट्यां प्रवृत्तेथ महारणे । काष्ठीले डामरा वह्निमेकस्मिन्मठदुर्गृहे ॥११६९॥
सोमिर्वा मारुतोद्भूतः प्रसरन्वैद्युतोथ वा । जज्वालैकपदे कृत्स्नं नगरं निरवग्रहः ॥११७०॥
गृहस्तवानीमेतावद्वजम्बूह इवापतन्[1] । माक्षिकस्वामिनो धूमो बृहत्सेतौ यदुत्थितः ॥११७१॥
अथेन्द्रदेवीभवनविहारं सहसागमत् । ततो नगरमुज्ज्वालं क्षणात्सर्वमदृश्यत ॥११७२॥
न भूमिर्न दिशो न द्यौर्धूमध्वान्ते व्यभाव्यत । हुतुकामुखचर्माभो दृश्यादृश्योभवद्रविः ॥११७३॥
धूमान्धकारसंच्छन्नास्ततः प्रज्वलताग्निना । अपुनर्दर्शनायेव मुहुराविष्कृता गृहाः ॥११७४॥
वितस्तादृश्यतोज्ज्वालवेश्माश्लिष्टतटद्वया । रक्ताक्तोभयधारेव कृतान्तस्यासिवल्लरी ॥११७५॥
ब्रह्माण्डोर्ध्वकपाटान्तसंस्पर्शोत्पतितोन्नतैः । ज्वालाकलापैः संवृद्धैर्हेमच्छत्रवनायितम् ॥११७६॥
उच्चावचैर्युतो ज्वालाभृङ्गैर्हेमाद्रिसंनिभः । वह्निर्धूमच्छलान्मूर्ध्नि बभाराम्बुधरावलिम् ॥११७७॥
आविर्भवन्तो[1] ज्वालाभ्यो गृहाश्चक्रुर्मुहुर्मुहुः । अदग्धा एवं इत्याशां विमुग्धगृहमेधिनाम् ॥११७८॥
ज्वलितैस्तापितजला वितस्ता पतितैर्गृहैः । और्वोष्मवेदनाक्लेशं विवेद सरितां प्रभोः ॥११७९॥
दीप्तपक्षैः खगैः साकं ज्वलिता बालपल्लवाः । उद्यानद्रुमषण्डानां व्योमोड्डयनमादधुः ॥११८०॥
सुधासिताः सुरगृहा ज्वालासंवलिता बभुः । क्षयसंध्याम्बुदाश्लिष्टहिमाद्रिशिखरभ्रमम् ॥११८१॥
मज्जनावासनौसेतुकदम्बैः प्लोषशङ्कया । अपास्तैर्नगरस्यान्तर्ययुर्नद्योपि शून्यताम् ॥११८२॥
किमन्यन्मठदेवौकोगृहाट्टादिविवर्जितम् । नगरं क्षणमात्रेण दग्धारण्यमजायत ॥११८३॥
लोष्टावशेषे नगरे धूमश्यामो निरास्पदः । उच्चैरेको बृहद्बुद्धो दृष्टो दग्धद्रुमोपमः ॥११८४॥
सैन्येषु ज्वलितावासत्राणाय चलितेष्वथ । शतमात्रेण योधानां युतो भूभृदजायत ॥११८५॥
पारं गन्तुं वितस्तायाश्छिन्नसेतुं तमक्षमम् । लब्धरन्ध्रा द्विषोनम्रा निहन्तुं पर्यवारयन् ॥११८६॥
पुरं दग्धं स्वमुत्सन्नं[1] प्रजा नष्टाश्च चिन्तयन् । आसन्नं मरणं राजा निर्विण्णो बह्वमन्यत ॥११८७॥
प्रस्थातुमथ तं प्रत्यङ्मुखमाशङ्क्य विद्रुतम् । संश्रितोन्यैः कमलियः क्व देवेत्यब्रवीद्वचः ॥११८८॥
संरम्भस्मितविद्योति चन्द्रलोल्लेखमाननम् । परिवर्त्य निरुद्धाश्वो धीरः स तमभाषत ॥११८९॥
तदद्य करवै भूमेः कृते हम्मीरसंगरे । चकार राजा भिञ्जो यत्सोभिमानी पितामहः ॥११९०॥
कुतस्त्योप्येष[1] दायादो यद्भास्माकमस्मि वा । स हर्षदेवोपदृश्यत्र कार्यशेषं पलायितः ॥११९१॥
को नाम मानिनां पङ्क्तौ प्रविष्टोन्ते निजां भुवम् । असिक्तां स्वाङ्करक्ताक्तां[1] व्याघ्रः कृत्तिमिवोज्झति ॥११९२॥
इत्युक्त्वोदञ्चयन्वल्गामुत्क्षिप्तास्यमुखं हयम् । संस्प्रष्टुमिच्छुः[1] पाणिभ्यां कृपाणमुदनामयत् ॥११९३॥
ततो निगृह्य[1] वल्गायां वाजिनं लवराजजः । ऊचे भृत्येषु सत्स्वग्रे प्रवेशार्हो न भूभुजः ॥११९४॥
प्रहारविक्लवस्तिष्ठन्गृहादेकोभ्युपाययौ । संकटे तत्र भूभर्तुः पृथ्वीपालोन्तिकं परम् ॥११९५॥
कौलपुत्र्यं स्तुवंस्तस्य वात्सल्यादेष भूपतिः । स्वस्यास्तनिष्क्रियां[1] मेने सेवाविष्कृत्युपक्रियाम् ॥११९६॥

---

११७१. [1]) Thus corr. by A, from °पतत्. ११७८. [1]) Emended with C; A °भवस्थो.—[2]) Emended; A वत. ११७९. [1]) Emended with C; A ज्वलितै°. ११८७. [1]) Emended; A स्वमुत्सर्व. ११९१. [1]) Emended with C; A कुतस्त्येष्वेव; doubtful. ११९२. [1]) Emended with C; A स्वाङ्कुरक्तां. ११९३. [1]) Emended; A सम्पष्टुमिच्छुः; cf. viii. 1528 ११९४. [1]) Emended with C; A निर्गुह्य. ११९६. [1]) Emended with C; A स्वस्यास्तनिष्क्रियां.

अथ स्थितास्त्रिभिर्व्यूहैरहितास्तेऽकिरञ्छरान् । हन्तुं वामेन ते योधाः सर्वे वाहनदुर्मदाः ॥११९७॥[1]
स प्रेरयंश्च तुरगं दैवात्तस्य च तादृशः । सहस्राण्यपि भूरीणि व्यधीयन्त विरोधिनाम् ॥११९८॥
अल्पसैन्यो द्विषत्खड्गमण्डलप्रतिबिम्बितः । नृपः साहायकायातविश्वरूप इवाबभौ ॥११९९॥
1200 कलविङ्कानिव श्येनः कुरङ्गानिव केसरी । एको व्यद्रावयद्वीरानरीन्सुस्सलभूपतिः ॥१२००॥
निपत्य पत्तीन्धुन्धानान्खुराग्राण्यपि वाजिनाम् । प्राहरंस्ते हयारोहा व्यूहव्याहतरंहसः ॥१२०१॥
बिम्बितज्वलनज्वालाः सर्व एव महाभटाः । हन्यमानाश्च हताश्चासन्क्षतस्रोतोरुणा इव ॥१२०२॥
स द्विषां कदनं कृत्वा दिनस्यान्ते न्यवर्तत । बाष्पायमाणोऽस्तकार्श्यं[1] हृष्याशेनोज्झितं पुरम् ॥१२०३॥
तादृशोऽप्यजिते तस्मिञ्जयाशागौरवं द्विषः । स चौज्झीत्प्रमणीयस्य[1] विनाशाज्जीवितावरम् ॥१२०४॥
1205 आपन्स्वपक्षलंस्तिप्तश्च सभयश्च सोऽरिभिः । निर्गच्छेदित्यमाहूतो न केनचित्प्रत्यपमीक्षितः ॥१२०५॥
वह्निनिर्दग्धसर्वान्नसंभारे मण्डलेऽखिले । दुःसहः सहसैवाथ घोरो दुर्भिक्ष आययौ ॥१२०६॥
दीर्घविग्रहसंक्षीणसंचया डामरैर्बहिः । कृतक्षोत्पत्तयो दग्धसंभारा दग्धमन्दिराः ॥१२०७॥
अन्नामुष्णन्तो विधुरे राज्ञि राजकुलाद्धनम् । दुर्भिक्षे तत्र सामन्ता अपि क्षिप्रं विपेदिरे ॥१२०८॥
वह्निनिष्ठ्यूतशेषाणि वेश्मान्यन्नाभिलाषिभिः । बुभुक्षार्तैर्जनैर्दग्धो ददाहाग्निर्दिने दिने ॥१२०९॥
1210 सरितां सेतवो वारिसंसेकोच्छूनविग्रहैः । दुर्गन्धाः कुणपैर्दृढप्राणैस्तीर्णास्तदा जनैः ॥१२१०॥
निर्मांसनरकङ्कालकपालशकलाकुलां[1] । उवाह सर्वतः श्वेता क्षितिः कापालिकव्रतम् ॥१२११॥
कृच्छ्रसंचारिणोऽर्धीभूतयामक्षामोग्रविग्रहाः । व्यभाव्यन्त बुभुक्षार्ता दग्धस्थाणुनिभा जनाः ॥१२१२॥
अथ प्रबन्धयुद्धेन दिनैः कापीषुणा क्षतः । पृथ्वीहरो मृत इति श्रुतिर्मिथ्यैव पप्रथे ॥१२१३॥
गाढप्रहारविवशो तस्मिन्प्रच्छादिते जनैः । तां वार्तां श्रुतवान्राजा ननन्दायुद्ध चोद्धतम् ॥१२१४॥
1215 धीरेव पुंश्चली व्याजौत्सुक्यसंदर्शनेन तम् । जयश्रीर्लोभयन्त्यासीन्न तु भेजे समुत्सुकम् ॥१२१५॥
एकान्तवामहृदयो विधिरानुकूल्यं मिथ्या प्रदर्श्य विशिनष्ट्यनुबन्धि दुःखम् ।
अन्धीकरोति भृशमभ्रमणं ज्वलन्तं भास्वन्महौषधिभिदे प्रकटय्य वज्रम् ॥१२१६॥
दीर्घदुःखानुभूत्यन्ते यदीयागमनोत्सवम् । तपःफलमिव क्ष्माभृत्काङ्क्षन्नासीन्मनोरथैः ॥१२१७॥
वात्सल्येनान्वितं प्रेम गौरवेण प्रियं वचः । औचित्येन च दाक्षिण्यं तापस्यामिव या दधे ॥१२१८॥
तस्योपकरणीभूतविभूतिर्गृहिणी प्रिया । तस्मिन्काले महादेवी विपेदे मेघमञ्जरी ॥१२१९॥तिलकम्[1]॥
1220 विनोदशून्यनिर्विण्णलोकयात्रं जगद्विदन् । प्राणै राज्येन वा कृत्यं न स किंचिन्निरैक्षत ॥१२२०॥
सा भर्तुर्व्यसनोदन्तैः कृशा काश्मीरसंमुखी । औत्सुक्यात्तयासीच्छ्रान्ता फुल्लपुरान्तिके ॥१२२१॥
पूर्वं तद्दर्शनाशाया दुर्वार्तायास्ततोऽतिथिः । अभवत्तोऽधिकं राजा दुःखावेगेन पस्पृशे ॥१२२२॥
राज्ञीमज्ञातपारुष्यतयादूषितभक्तयः । अनुसस्रुश्चतस्रस्ताः परिवारवरस्त्रियः ॥१२२३॥
अप्रत्यक्षे क्षयेऽप्यस्या भक्त्युद्रिक्तत्वमत्यजन् । तेजो नामाभवत्स्वदो बन्धो भृत्यान्तरेऽधिकम् ॥१२२४॥
1225 स हर्षसंनिहितोऽन्यस्मिन्नकृच्छ्रायातो निजं शिरः । ताडितोपान्तकष्टेन भङ्क्त्वा प्राज्याविशन्नदीम् ॥१२२५॥

---

११९७—११९८. [1]) The text in these two verses appears to be corrupt or incomplete. १२०३. [1]) Thus A. १२०४. [1]) Emended; A प्रये°. १२११. [1]) Emended with C; A °कुला.. १२१९. [1]) $A_1$ writes here ३ instead of तिलकम्. १२२०. [1]) ण्ण supplied by $A_2$ in space left by $A_1$.

आहवाह्वानसंरम्भैः शोकविस्मृतिकारिणः । राज्ञो द्विषः कार्यवशादुपकारित्वमाययुः ॥१२२६॥
स राज्यमथ निक्षेप्तुकामो निर्विण्णमानसः । व्युत्क्रान्तशैशवं पुत्रमानिन्ये लोहरावलात् ॥१२२७॥
मण्डलेश्वरतां प्रज्ञैर्भ्रातृव्यं भागिकाभिधम् । नीत्वा च गुप्तिमकरोल्लोहरे कोशदेशयोः ॥१२२८॥
वराहमूलं संप्राप्तमथायातः प्रियं सुतम् । आश्लिष्य विषयो राजा बभूवानन्दशोकयोः ॥१२२९॥
राजसूनुस्त्रिभिर्वर्षैः प्रत्यायातः स्वमण्डलम् । स पश्यन्पितरं चान्तरश्रुस्थितमतप्यत ॥१२३०॥ 1230
खेदनाम्नो लोष्टावशेषं सोऽविशत्पुरम् । अम्बुलम्बाम्बुदो दावनिर्दग्धमिव काननम् ॥१२३१॥
राज्येऽभ्यषिञ्चदाषाढस्याथोऽह्नि जनकोऽथ तम् । अवादीद्राज्यतन्त्रं च कृत्स्नमुत्काकुलगद्गदः ॥१२३२॥
श्रान्ताः पितृपितृव्यास्ते न यां वोढुमशक्नुवन् । धुरमुद्वह तां वीर त्वयि भारोऽयमर्पितः ॥१२३३॥
साम्राज्यप्रक्रियामात्रपात्रं पुत्रं नृपो व्यधात् । न त्वार्पयदधीकारं तस्मिन्दैवविमोहितः ॥१२३४॥
अभिषेकविधावेव राजसूनोः शमं ययुः । पुरोपरोधव्याहत्याधिनीराग्युपद्रवाः ॥१२३५॥ 1235
संपन्नसस्या च तदा देवी संववृते मही । दुर्भिक्षं श्रावणे मासि यथावस्थशमं ययौ ॥१२३६॥
अत्रान्तरे सिंहदेवो रणे कुर्वन्नरिक्षयम् । कर्णेजपैर्जनयितुर्द्रोग्धायमिति सूचितः ॥१२३७॥
कोपादविमृशन्स्वयं स बन्द्धुं तं व्यसर्जयत् । कथ्यात्मजं राजसूनुस्तत्तु प्रागेव बुद्धवान् ॥१२३८॥
कोपश्मितोऽस्फुटस्याभे न तस्याप्रतिभोऽभवत् । निनाय रक्षामात्रेण पार्थिवाज्ञाममोघताम् ॥१२३९॥
अभुक्तवान्मनस्तापात्तस्य योदरपावे पितुः । साकं तेन सुतोऽप्येषु गन्तुं प्रावर्ततान्तिकम् ॥१२४०॥ 1240
आक्षेप्तुं शङ्कितोऽशक्य इति मत्वा स मन्त्रिभिः । मार्गाद्व्यवर्तयत तं पिता मिथ्या प्रसादयन् ॥१२४१॥
अन्तस्तु निधिकार्येति प्रविश्यानर्कितागमः । बद्धैनं स्थापयिष्यामि कारायामिति सोऽनिशम् ॥१२४२॥
धिग्राज्यं यत्कृते पुत्राः पितरश्चेतरेतरम् । शङ्कमाना न कुत्रापि सुखं रात्रिषु शेरते ॥१२४३॥
पुत्रपत्नीसुहृद्भृत्या येषां शङ्कानिकेतनम् । विस्रम्भभूर्भूपतीनां कस्तेषामिति वेत्ति कः ॥१२४४॥
साह्याभिधानप्रख्यातकुप्रामोपान्तवासिनः । लठपालस्य तनयः स्थानकाख्यस्य कस्यचित् ॥१२४५॥ 1245
शैशवे पांसुखाल्येन वर्धितो डामरोऽन्नदैः । गृहीतशस्त्रस्तल्लिप्स्यं क्रमाट्टिक्कस्य लब्धवान् ॥१२४६॥
प्रथमाण्डारप्रभृत्याप्तदूर्यो भूभर्तुराप्तताम् । प्रययावुत्पलो नाम वैरिविच्छेदमिच्छता ॥१२४७॥
स हि भिक्षाचरं टिक्कमथ व्यापादयेत्यमुम् । जगादाङ्गीकृतैश्वर्यदानष्टिक्कोपवेशने ॥१२४८॥
कृतप्रतिश्रवं तस्मिन्नर्थे तं च महर्द्धिभिः । दामैरपाचरद्रज्जपतिनाप्यप्ययोजयत् ॥१२४९॥
भोगलोभप्रभुद्रोहचिन्तादोलायमानधीः । स कार्यं परिहार्यं वा न कृत्यं निश्चिकाय तत् ॥१२५०॥ 1250
मासोऽष्टावस्यमत्रान्तस्तद्वधूः कार्यतो नृपः । ततश्च प्राहिणोत्तस्यै पितेव प्रसवोचितम् ॥१२५१॥
सा तस्यास्तूपचारस्य कारणं परिशङ्किता । पतिं पप्रच्छ निर्बन्धात्सोऽपि तस्यै व्यवर्णयत् ॥१२५२॥
न कार्यः स्वामिनो द्रोहः कृते चास्मिन्स सुस्सलः । स्वामेव शनकैर्हन्याद्घोरं पापमिति चिन्तयन् ॥१२५३॥
वरं स एव विश्वास्य व्यापाद्यस्तत्र चेद्वधः । अत्रैव स्वामिपुत्रादिकुटुम्बं स्याद्विभूतिभाक् ॥१२५४॥

---

१२३८. ¹) A °विमृश°.—²) Emended; A बन्धुं. १२४४. ¹) Thus A. १२५१. ¹) Emended with C; A प्राहिणो°.

1255 भार्येयेति प्रेर्यमाणः स विश्वासविपर्यये । टिक्कं विदितवृत्तान्तं कृत्वा बडोशमः कृतः ॥१२५५॥
गतागतानि कुर्वाणे बुभुक्षावथ पार्थिवः । स पुत्र इव विश्वासं ययौ दैवविमोहितः ॥१२५६॥
विपर्यस्ता मतिः पुत्रे विश्वासो वैरिसंभिते । जायते क्षीणभाग्यानां को नाम न विपर्ययः ॥१२५७॥
वैधेयैः स्वार्थलोभान्धैर्यहानर्थसमागमः । सरघोपद्रवः[1] क्षौद्रलुब्धैरिव न चिन्त्यते ॥१२५८॥
तं पीडितं प्रतिज्ञना च राज्ञा चावनतिं ततः । उत्पलोऽकारयट्टिक्कं नीविं चादापयद्द्रुतम् ॥१२५९॥
1260 राजाथ देवसरसं जितं संत्यज्य कार्तिके । बाहूकाक्षमगाद्ग्रामं खेरीविषयवर्तिनम् ॥१२६०॥
स कल्याणपुराभ्यर्णे रणैस्तैस्तैर्विलक्षताम् । भिक्षुकोष्ठेश्वरमुखानपि निन्ये महाभटान् ॥१२६१॥
मध्याह्निक्षाचरादीनां सुज्जिः[1] काककुलोद्भवम् । जीवपाकं महावीरं युधि जघान शोभकम् ॥१२६२॥
भवकीयस्य कृत्वारौ विजयस्य पराभवम् । भुभुजा तद्दृशा वध्याः कल्याणपुरवर्तिनः ॥१२६३॥
दग्धे बडोसके[1] भिक्षाचरो नष्टाभयो व्यधात् । त्यक्त्वा तां क्ष्मां शमालायां ग्रामे काकरुहे स्थितिम्[2] ॥१२६४॥
1265 अनुजो भवकीयस्य विजयस्य भयान्नृपम् । संश्रितस्तेन तुष्टेन बद्ध्वा कारागृहेऽर्पितः ॥१२६५॥
भूरिसैन्यानुगं भूरपुरे विन्यस्य रिल्हणम् । आस्कन्दाशङ्किनीं राजा चक्रे राजपुरीमपि ॥१२६६॥
इत्थमुद्दण्डया वृत्त्या खण्डितोद्दण्डडामरः । स्तोकावशेषं सोपश्यत्कर्तव्यमरिनिर्जयम् ॥१२६७॥
भिक्षाचरो लवन्याश्च शक्तिक्षयमुपागताः । त्रिदेशगमनं भीता रिपौ बलिनि मेनिरे ॥१२६८॥
किमन्यभाग्यावतारैर्भिक्षुपक्षजुषां ततः । जीवतामप्यनुल्लासान्निर्जीवत्वमिवाययौ ॥१२६९॥
1270 स सोमपालकौटिल्यं स्मरन्कुर्यां हिमात्यये । श्मशानोर्वीं राजपुरीमिति ध्यायन्न्यवर्तत ॥१२७०॥
शान्तमायस्वदेशोर्वीविप्लवस्य महीपतेः । तस्यार्णवान्तक्रमणप्रतीतिः समभाव्यत ॥१२७१॥
शातेकीयो बोधशिष्टो विप्लवक्षपिते जने । वर्षे वर्षे स तद्राज्ये युगदीर्घं त्वमन्यत ॥१२७२॥
अवृष्ट्यत्यासवार्याधिप्रियनाशादिवैशसैः । स राज्यकालः सर्वस्य परितापावहोऽभूत् ॥१२७३॥
नरः पौरुषनैपुर्यशक्तत्वेन करोति किम् । विधातृवृत्तिवैचित्र्यपराधीनासु सिद्धिषु ॥१२७४॥
पुरोभूतं कंचित्परिहरति राशिं तम इव व्यतीते कस्मिंश्चिद्धरिरिव विवृत्याश्यति दृशम् ।
1275 स्वमुखकूपालयं क्वचन नृपानैर्दर्दुर इव क्रमैस्त्वष्टुर्दृष्टः स्फुटमिति गतीनामनियमः ॥१२७५॥
विश्वासनिहतान्भिन्नञ्जुवलादीन्पुरावसत् । नित्यं विकोशशस्त्रो यः पुरा विज्ञो निशम्य च ॥१२७६॥
त्रिदुर्थादिवृत्तान्तं नावाकेलिक्षणे ब्रुवन् । स्त्रीषु संभुज्यमानासु विश्वासविशदां दृशम् ॥१२७७॥
स बन्धाविव निर्बन्धाद्विशश्वास वदुत्पले । तत्र संभाव्यते केन दैवादन्यो विमोहकृत् ॥१२७८॥
टिक्कादयो भूमिपतेः सुज्जेर्वान्यतरे हते । त्वां तुल्यकार्यकर्तारं विद्म इत्यूचुरुत्पलम् ॥१२७९॥
1280 सुज्जिने व्यश्वसीत्तस्मिन्स जिघांसुस्तु भूभुजम् । तत्र तत्राभवत्सज्जः प्रसङ्गं नासदत्पुनः ॥१२८०॥
प्रतिश्रुतविलम्बेन समन्योरथ भूपतेः । प्रत्ययोत्पत्तये देवसरसात्रीविमात्मजम् ॥१२८१॥

---

१२५८. [1]) A₂ gloss सरघा मधुमक्षिका (*Amara.* ii. 5. 26). १२६२. [1]) Emended; A सुज्जि. १२६४. [1]) A बडोसके; perhaps read बडोस्सके. *Cf.* बडोस्सः viii. 1306.—[2]) Emended with C; A स्थितं. १२७५. [1]) The last two *pâdas* have become in A partly illegible by an ink blot and have been repeated in the margin by the same hand which supplemented the gloss to i. 110. १२७६. [1]) Emended with C; A °वैश्वस्व°. १२७७. [1]) Emended with C; A त्रिदुरथा°. —[2]) Emended; A °नावास्थाविश्वास°. १२८१. [1]) Emended; A °न्मतसे.

व्याघ्रमद्रास्तराजादींस्तीक्ष्णांश्चात्मसमान्परान् । आदाय कार्यमेतैर्मे सिध्येदित्युक्तवान्नृपम् ॥१२८२॥
उचितोचित्य सेवाभ्यो गृहीतैः साहसक्षमैः । शतैः समं त्रिचतुरैः पत्तीनामेकदा ययौ ॥१२८३॥ तिलकम्[1]॥
समयान्वेषिणो हन्तुस्तस्यासन्नस्य सर्वदा । मिथ्याहारादिदानेन हन्तान्तःप्रीतिकार्यभूत् ॥१२८४॥
तुरंगं मन्दुरायत्नकयस्यैकं नगरस्थितम् । अश्वस्य मुद्धापयितुं तुरगव्यसनी नृपः ॥१२८५॥
स लक्ष्मकप्रतीहारकथ्यात्मजमुखादिजाम् । पार्श्वादिवृत्तवांनासीत्क्षणे तस्मिन्मितानुगः ॥१२८६॥
भृङ्गारी लक्ष्मकापत्यं निशम्याप्तैर्निवेदितम् । व्यधात्कृतिपथे राज्ञस्तदुत्पलचिकीर्षितम् ॥१२८७॥
चिरद्बद्धबन्धुभिर्दृष्टहिंसारम्भोऽपि संभवेत् । आसन्नजीवितान्तस्य जन्तोः सूनापशोरिव ॥१२८८॥
स शापो गान्धार्यास्तदपि सहसो भाषितमृषेस्तदुत्पाताचक्षुः स्वमपि तदभौमं प्रकटयत् ।
कुलान्तं त्राणाक्षममकृत वैकुण्ठमपि तद्विवक्त्यन्यत्वं क इव भवितव्यस्य कुरुताम् ॥१२८९॥
मिथ्यैतदित्यधिक्षिप्य क्षितिपालः प्रदर्शयन् । तमकृत्योत्पलादींस्तानप्रस्थानेषमब्रवीत् ॥१२९०॥
द्रोग्धुः कृतोऽवकाशोऽगादनिष्कम्प्यात्स्यमेव मे । त्वां दुग्धमुत्पलाचष्टे स्वेनान्यैर्वाथ चोदितः ॥१२९१॥
ते वादयन्तः स्मेरास्या भाष्टर्येन भयवैकृतम् । वक्ति देवो यदस्माभिर्वाच्यमित्येवमूचिरे ॥१२९२॥
निर्यातेष्वथ तेष्वीषत्साशङ्क इव निश्चलान् । द्वाःस्थेनाकारयद्दूरानन्तिके मुख्यशस्त्रिणः ॥१२९३॥
इत्थमाथ किमप्यासीद्विनिःश्वस्य स चिन्तयन् । सानुज न रतिं लेभे नृत्तगीतादिदर्शने ॥१२९४॥
मेने वैदेशिकप्रायानाप्तानपि धृतभ्रमः । पुण्यक्षये निपतितुर्वैमानिक इवाम्बरात् ॥१२९५॥
रामान्तरङ्गाः साशङ्काः प्रभौ शाठ्येन मोहिते । पूत्कारमेष्यन्दातारमन्यं केचिदचेतनाः ॥१२९६॥
अयमेव स कालस्य बलात्कबलनग्रहः । विदन्तोऽपि यदायान्ति जन्तवः कृत्यमूढताम् ॥१२९७॥
सर्वान्तरक्षणेऽव्यस्तचक्षुषो दिवसद्वयम् । उत्पलाद्याथ साशङ्काः कथमप्यत्यवाहयन् ॥१२९८॥
रहः क्षणप्रार्थिनस्तांस्तृतीयेऽह्न्यब्रवीन्नृपः । कालेन प्रत्यूषे तत्तूर्णं भोक्तुं यात मुहुर्गृहम् ॥१२९९॥
देवतार्चनपर्यन्तमवसायाह्निकं विधिम् । आजुहावोत्पलं दूतैर्मध्याह्ने च रहःस्थितः ॥१३००॥
कार्यसिद्धिं श्रद्धानो वैजन्याद्राजसद्मनः । राज्ञोऽभ्यर्णे स साशङ्कं द्वाःस्थदत्तानुगोऽविशत्[1] ॥१३०१॥
प्रावेशयद्वारि दत्तं व्याघ्रं तदनुजं नृपः । शेषाणामपि भृत्यानामादिदेश बहिःस्थितिम् ॥१३०२॥
विलम्बमानेष्वायेषु केषुचित्ससखो वचः । सत्यं तस्योचयावास्तां सोऽत्र द्रोग्धा च इत्यपि ॥१३०३॥
ताम्बूलदायकः प्रोडवयास्तेनावरोधितः । सांधिविग्रहिको विद्याबाहिलश्चान्तिके परम् ॥१३०४॥
दूती टिक्कस्यार्यदेवालिष्य्यवैश्याभिधावुभौ[1] । तत्र प्रसङ्गादासातामज्ञातोत्पलसंविदौ ॥१३०५॥
वाडीरसः[1] सुखराजाख्यो[2] डामरो भिक्षुसंमतः । प्रयास्यति प्रभोर्दृष्ट्वा पार्श्वे तत्कार्यसिद्धये ॥१३०६॥
इत्युक्तवांस्तेऽत्रहःस्थं तं नृपं नातिदूरगम् । ससैन्यं डामरं[1] चक्रे स्वस्य त्राणार्थमुत्पलः ॥१३०७॥
तथा चैनं तस्थिवांसं कृत्यमस्त्यमुनेति च । उक्त्वा मद्रास्तराजं तं पार्श्वे प्रावेशयद्रुतम् ॥१३०८॥
प्रविष्टो निर्जनं वासमाकलय्य स मण्डपम् । अलक्ष्यमाणव्यापारो द्वारमर्गलितं व्यधात् ॥१३०९॥

१२८२. 1) Emended; A °स्मसमान्परान्. १२८३. 1) A₁ writes here ३ instead of तिलकम्. १२८६. 1) Thus A₁; A₂ लक्ष्मक°.— 2) त्म supplied by A₂ in space left by A₁. १२८९. 1) Emended; A प्रकटयत्. १३०१. 1) Emended; A द्वास्थ. १३०५. 1) Emended; A °स्यार्यदेवालिष्यवैश्य°; Cf. viii. 1563. १३०६. 1) A वाडीरसः perhaps read वाडीरसः. Cf. [illegible] viii. 1264.—2) A सु×ख°. १३०७. 1) A डमरं.

1310 स्नानार्द्रकेशो शीतालुतया प्रावारवेष्टितम् । कृत्वा कृत्स्नं वपुः कृष्टशस्त्रीकं विष्टरोपरि ॥१३१०॥

आसीनं वीक्ष्य नृपतिं प्रसङ्गो नेदृशो भवेत् । विज्ञप्तिं कुरु भूभर्तुरित्यूचे व्याघ्र उत्पलम् ॥१३११॥

स तया संज्ञया व्यग्रः पादप्रणतिकैतवात् । राज्ञोऽभ्येत्य तच्छस्त्रीं विष्टरस्थामपाहरत् ॥१३१२॥

विकोशां चाकरोत्पश्यंस्तां तयोभ्रान्तलोचनः । प्राह स्म हा धिक्कि द्रोह इति यावद्वचो नृपः ॥१३१३॥

प्राहरत्प्रथमं तावत्सव्ये पार्श्वे तथैव सः । तस्य प्रत्यस्तराजेन मूर्धनि प्रहृतं ततः ॥१३१४॥ युग्मम् ॥

1315 व्याघ्रेणाथ क्षतं वक्षस्ताभ्यामेवासकृत्तदा । प्रहृतं तत्र स पुनः प्राहरच्च त्रिरुत्पलः ॥१३१५॥

पूर्वमेव प्रहृत्या हि छिन्नपार्श्वास्थिमालया । मेने कृष्टान्त्रतन्त्रीकं स तं प्रोषितजीवितम् ॥१३१६॥

गत्वा तमोरिं पूत्कर्तुमिच्छन्व्याघ्रेण राहिलः । पृष्ठे कृताहतिश्छिन्ना मालिका नोज्झितोऽसुभिः ॥१३१७॥

ताम्बूलदायकस्त्यक्त्वा कङ्कोलावज्जको व्रजन् । दीनो निजेभ्यः कारुण्यादुत्पलेनैव रक्षितः ॥१३१८॥

अन्तः समुत्थिते क्षोभे बाह्यमण्डपवर्तिभिः । टिक्काद्यैः कृता लुण्ठिर्द्रोहिनृपितदायुधैः ॥१३१९॥

1320 उत्पलो निहतो राज्ञेत्यत्रेत्य कटकस्थितैः । बहिःस्थान्हन्यमानांस्तान्समाश्वासयितुं ततः ॥१३२०॥

रक्तार्द्रशस्त्रं संदर्श्य तमोरैर्वपुरुत्पलः । ऊचे मया हतो राजा न त्याज्या तवमूरिति ॥१३२१॥

तच्छ्रुत्वा दुःश्रवं राजभृत्याः क्वापि प्रयाययुः । द्रोहानुगास्त्वङ्गनान्तर्लब्धोत्काला व्यधुः स्थितिम् ॥१३२२॥

निर्यान्तो मण्डपात्तीक्ष्णा निजघ्नुर्नागकाभिधम् । द्वारास्थितं निष्कृष्टकृपाणीकं नृपानुगम् ॥१३२३॥

भूपालशय्यापालस्य त्रैलोक्याख्यस्य सेवकः । निघ्नन्द्रोहं टिक्काद्यैर्दोःस्थैको विपादितः ॥१३२४॥

1325 उत्कृष्टे नष्टसत्त्वानां मध्ये राजानुजीविनाम् । सखेटकासिं धावन्तं भावुकान्वयभूषणम् ॥१३२५॥

दृष्ट्वा सहजपालाख्यं पार्श्वद्वारेण निर्ययुः । तीक्ष्णाः स स्वपतद्भूमौ तद्भृत्यप्रतिक्षतः ॥१३२६॥

जाते कुकीर्तिकालुष्यपाते राजात्मजव्रजे । वैलक्ष्यक्षालनं सिद्धं तस्य स्वक्षतजैः परम् ॥१३२७॥

हतो दौःशिकसंबन्धिदेहो राजात्मजक्रमात् । विहान्निजन्मा नोनाख्यस्तीक्ष्णपक्षैः पुरो गतः ॥१३२८॥

अक्षतान्प्रजनो वीक्ष्य तीक्ष्णान्धामान्तरोन्मुखान् । चित्रार्पिता इव क्षोभात्राभवन्केऽपि शस्त्रिणः ॥१३२९॥

1330 राजवंश्या महीपालप्रीतिपात्रमथाययुः । स्थगयन्तोऽङ्गनं स्थूलकाया जनविवर्जितम् ॥१३३०॥

तांस्तान्कापुरुषान्हर्षदेवोदन्तात्प्रभृत्यलम् । स्मृत्वा च कीर्तयित्वा च कृतभारसहा इव ॥१३३१॥

जाता दुष्कृतसंस्पर्शात्खेदात्कर्तुं न शक्नुमः । पापात्पापीयसां येषां नामग्रहणसाहसम् ॥१३३२॥

अङ्गनान्मण्डपाक्रष्टिं मन्वानाः पौरुषं महत् । पापिनः केऽपि तन्मुख्या ददृशुः स्वामिनं हतम् ॥१३३३॥

अधरेणाक्षसंस्कारलेशावेशप्रकम्पिना । वदन्तं दन्तदष्टेन स्वान्तस्थान्तेनुलप्रताम् ॥१३३४॥

1335 वञ्चितः कथमेषोऽहमिति मामेति चिन्तया । निस्पन्दे जीवितान्तेऽपि तथैव दधतं दृशौ ॥१३३५॥

श्यामायमानं बाष्पेण व्रणवक्त्रैरुदञ्चता । अन्तःप्रशान्तामर्षाग्निशेषधूमलताश्रिया ॥१३३६॥

आननस्यास्फुटीभूतचन्दनोल्लेखकुङ्कुमम् । सक्तया लिखितस्येव घनक्षतजलाक्षया ॥१३३७॥

आहवानाञ्चजटीभूतकेशं नग्नं भुवि च्युतम् । पर्यस्तपाणिचरणं स्कन्धावालम्बिकन्धरम् ॥१३३८॥

१३१३. [1]) Emended with C; A विकोशं. १३१४. [1]) $A_1$ writes here २ instead of युग्मम्. १३१८. [1]) Emended; A कङ्कुला°. १३२४. [1]) Conjectural reading; A °शक्यापालस्य.—[2]) Emended; A °द्वास्थयैको.—[3]) Emended; A व्यपादित. १३२८. [1]) Emended; A हतैरि°. १३३१. [1]) The first *páda* of this verse has been first omitted and subsequently supplied by $A_2$ in margin. १३३८. [1]) A कन्धरम्.

तं वीक्ष्य मोचितं किंचिदचिरात्ते नराधमाः । वैजन्यस्य फलं भुङ्क्ष्वेत्याचिगादधिचिक्षिपुः ॥१३३९॥
बद्धा तुरंगे कुम्भे वा न तैर्नीतश्चितामिषात् । कर्तुं न वा पारितः स प्राणत्राणाय धावितैः ॥१३४०॥ 1340
आस्तां विलम्बसाध्यं वा कर्मैतद्राड्दुराहसात् । सज्जामि चाभिसारेहमपि कश्चिन्न नाकरोत् ॥१३४१॥
राजवाजिनमेकैकं तेऽप्याहत्य पलायिताः । निर्लुण्ठितस्तु कटको प्रजन्मामेषु डामरैः ॥१३४२॥
न पुत्रः पितरं पुत्रं पिता वा प्रत्यपालयन् । मृतं हतं लुण्ठितं वा प्रचलन्तस्त्विमेऽप्यमि ॥१३४३॥
न कोपि शस्त्रभृत्तोभूत्स्मृत्वा मानोन्नतिं पथि । परैराक्षिप्यमाणो यः शस्त्रं वस्त्रं च नात्यजत् ॥१३४४॥
लवराजयशोराजद्विजौ व्यायामवेदिनौ । कान्दश्च राजा निहता वीरवृत्त्या ययुः परम् ॥१३४५॥ 1345
अदूरादुत्पलाद्यास्तु कटकं वीक्ष्य विद्रुतम् । प्रविश्य बाहुकं छित्त्वा शिरो निन्युर्महीपतेः ॥१३४६॥
गतेषु देवसरसं तेषु छिन्नशिरा नृपः । हतश्चौर इव प्राप ग्राम्याणां प्रेक्षणीयताम् ॥१३४७॥
एवं द्वेऽहि तृतीयाब्दामावास्यायां स फाल्गुने । पञ्चपञ्चाशतं वर्षाण्यायुषोतीतवान्हतः ॥१३४८॥
विलासशयनस्थस्य सिंहदेवस्य सा श्रुतौ । प्रेमाकर्णैरस्य दुर्वार्ता भागिनेयेन व्यधीयत ॥१३४९॥
संभाव्यते योनुभावः सदास्त्वस्याप्रियश्रुतौ । हतशास्त्रोपि तं प्राप स तदा पितृवत्सलः ॥१३५०॥ 1350
मोहलुप्तस्मृतिः स्मृत्वा चिरादुन्नतचेतनः । तद्दुःखाहतधृतिर्विललाप स्फुटास्फुटम् ॥१३५१॥
मदर्थं कुर्वता राज्यं प्रयत्नादपकण्टकम् । अधमे किं महाराज त्वयात्मा परिभावितः ॥१३५२॥
अहेतेः पश्यतः शत्रुमन्ते वैरविशुद्धये । अपि ते मामिमोगच्छंस्तात संभावनाभुवम् ॥१३५३॥
त्वया निवेदिते वैरे पिता भ्राता च ते दिवि । निर्मन्युः संप्रति त्वं तु वर्तसे मन्युदुःस्थितः ॥१३५४॥
अनरण्यकृपद्रोणजामदग्न्यादिषु स्पृहाम् । कुल्यक्षालितवैरेषु मा कार्षीः कांचन क्षणम् ॥१३५५॥ 1355
शोच्यस्त्वदाश्रयो मन्युरहं शोधयिता नृप । तूये न तव यातं यशोलोकममियोज्यताम् ॥१३५६॥
वात्सल्योत्पुलकस्मेरं स्निग्धोक्तिमधुरं मुखम् । मद्दर्शने यदासीत्ते तन्मे पुर इवाधुना ॥१३५७॥
इति चाभ्यव विलपन्प्राभीर्यालक्ष्यवैकृतः । श्रीशोकभयमूकान्स ददर्शाप्तान्पितुः पुरः ॥१३५८॥
अशिक्षयत यन्मन्युर्दाक्षिण्यं निरुरोध तत् । तथाप्येवं स तानूचे किंचिदाक्षेपकर्कशम् ॥१३५९॥
कोशैः सहंशानां वीक्ष्य कुर्वतः सत्क्रियां गताः । धिग्भवन्मश्च शस्त्रं च तातस्यान्ते विपर्ययम् ॥१३६०॥ 1360
यन्मत्पितृव्ये निहते कृतमुच्छिष्टजीविभिः । मान्यानां भवतां सिद्धं हा धिक्तदपि नाधुना ॥१३६१॥
इत्युपालम्भमामस्तान्निर्वैरम्लिकमागतैः । द्विवैरमात्यैः कर्तव्यमुत्तरेवाहितः कृतः ॥१३६२॥
प्रस्थानं लोहरे केचिद्दूतुः संत्यज्य मण्डलम् । त्वरां च तत्र राज्यन्ते वदन्तो भेक्ष्यवं भयम् ॥१३६३॥
गर्भात्मजं पञ्चवन्द्रमालम्ब्य स्फुरस्थितम् । दैराज्यावरणायान्ये धीरमाया बभाषिरे ॥१३६४॥
न हि त्वगृहबद्धिस्रोर्थविक्षोर्नगरान्तरम् । अहानि प्रत्यवस्थानं केनाप्यसति सुस्तले ॥१३६५॥ 1365
आत्मन्यसंभावनया तादृशां मन्त्रिणां नृपः । सान्तःखेदं वो विधेयं द्रष्टव्येत्यब्रवीद्वचः ॥१३६६॥
कालापेक्षापरिष्वक्तपितृव्यापत्तिदुःस्थितः । स कोशादिव्ययाक्षिप्तलक्षिणस्त्राणदीक्षितान् ॥१३६७॥

---

१३४६. ¹) Thus A; cf. बाहुकं viii. 1459. १३४९. ¹) Emended; A भागीनेय. १३५०. ¹) श्रुताव supplied by $A_2$ in space left by $A_1$. १३५५. ¹) Thus A. १३६०. ¹) Emended; A कुशल:. १३६१. ¹) Emended with C; A न हते. १३६४. ¹) Emended; A °लम्ब्य. १३६६. ¹) तादृशां supplied by $A_2$ in space left by $A_1$.

इतश्चेतश्च बम्भ्रम्यमाणैः प्रोच्चलद्रुतस्वरम् । अन्योन्यासन्नयायिभिर्लोकैः पुरं मुखरतामगात् ॥१३६८॥
प्रेतवेतालमालेव कालरात्र्याकुलेव च । बभूव सा यामवती सर्वभूतभयावहा ॥१३६९॥
1370 दीपैर्निर्वातनिष्कम्पैश्चिन्तास्पन्दैश्च मन्त्रिभिः । तिष्ठन्परिवृतो राजा त्वन्तरेवमचिन्तयत् ॥१३७०॥
निर्द्वारे सततस्त्युममास्ते शून्यवेश्मनि । तातोपि निहतः शून्ये मयि जीवत्यनाथवत् ॥१३७१॥
कष्टमेतादृशात्त्रासादवैशसक्षालनावधि । कथं गोष्ठीषु शक्ष्यामि द्रष्टुं मानवतां मुखम् ॥१३७२॥
चिरोज्झितध्वजवर्तिभ्यो देशेभ्यः सैन्यनायकाः[1] । सहिमैरेव दुर्लङ्घ्यैः कथमेष्यन्ति वर्त्मभिः ॥१३७३॥
इत्थं विमृशतस्तस्य तत्तत्प्राभिशङ्किनः[1] । ययौ भीतिमतो भीमा कथंचित्सा निशीथिनी[2] ॥१३७४॥
1375 प्रातश्चतुष्किकां पौरसमाश्वासाय निर्गतः । नष्टं कटकमन्वेष्टुं सोश्वारोहान्व्यसर्जयत् ॥१३७५॥
मार्गानसूचीसंचारांस्तुषारैर्विवरोज्झितान् । आश्लिष्टवसुधा मेघाः कर्तुं प्रारेभिरे ततः ॥१३७६॥
तस्मात्स्वलब्ध्वा सैन्यस्य शेषसैन्येषु[1] दूरतः । निवृत्तेषु नियुक्तेषु विमृश्य[2] नृपतिः क्षणम् ॥१३७७॥
यथाक्षेमादृते तत्परिस्पन्दं प्रभुना । दत्तं पारिकिभिस्ततामभयं सागसामपि ॥१३७८॥
इत्याज्ञां भ्रमयामास पटहोद्घोषणैः पुरे । साशीर्वादास्ततः पौरास्तत्रारज्यन्त सर्वतः ॥१३७९॥तिलकम्[1]॥
1380 अनन्तरनृपाचारवैधर्म्याकारकलया । तया सोमवया वृत्त्या फलं सद्योनुभावितः ॥१३८०॥
शतादप्यूनसंख्यैर्यः स्थितवाननुगैः समम् । अनुरागवतैर्लोकैस्तत्कालं पर्यवार्यत ॥१३८१॥
मिथोक्यमावेदनं प्रीतिदायोपायः प्रभोः पुरः । भजल्लोकस्त्वाप्यमन्त्रिपदवीं लक्ष्मकोमहीत् ॥१३८२॥
राज्यं शम्यां नयत्येवं प्राज्ञे रात्रिं नयक्रमैः । याति मध्यं दिने भिक्षुर्भिक्षुः पुरमाययौ ॥१३८३॥
तस्य डामरपौराश्ववारलुण्ठाकसंकुलः । अदृष्टपूर्वो ददृशे सैन्यव्यतिकरस्तदा ॥१३८४॥
1385 दर्तं श्रुत्वा रिपुं राज्योत्सुकः स नगरं व्रजन् । राजा काकात्मजेनेति तिलकेनाभ्यधीयत ॥१३८५॥
इतः समस्तविट्टेभ्यः स दैवादपि सुस्सलः । कथं प्रकृतयो जग्मुर्गुणवन्तं तदात्मजम् ॥१३८६॥
पुरप्रवेशे का राजंस्तस्मादेकमहत्त्वरा । एहि पद्मपुरं यामो मार्गं रोद्धुं विरोधिनाम् ॥१३८७॥
आगच्छन्तो नष्टसैन्याः सुज्जिमुख्या महाभटाः । निहता यदि वा रुद्धास्तत्र सायुधवाहनाः ॥१३८८॥
प्रविष्टोसि ततो न्यस्तशस्त्रो द्विषैर्विनिर्धुवम् । नगरं नगरीकोभिः स्वयमभ्यर्थितागमः ॥१३८९॥
1390 अलमेतैर्जरम्मन्यैर्वदन्त इति चक्रिरे । स च कोष्ठेश्वराद्याश्च स्मेरास्तस्यावधीरणाम् ॥१३९०॥
राज्यं विदद्भिः संप्रासं[1] तांस्तान्श्वासनपट्टकान् । द्रुतमर्थयमानैश्च विलम्बं कारितो निजैः ॥१३९१॥
अतो बहुहिमापातविश्राशेषसैनिकः । आसदन्नगरोपान्तं समयेन स तावता ॥१३९२॥
एतस्मिन्नन्तरे लब्धे निःसैन्यस्य ससैनिकः । गर्गात्मजः पञ्चचन्द्रो नृपतेः पार्श्वमाययौ ॥१३९३॥
हतस्वामिपरित्यागमन्युक्षालनकाङ्क्षिभिः । राजपुत्रैः समं सोथ वीरो योद्धुं विनिर्ययौ ॥१३९४॥
1395 असंभावनसंग्रामान्वीक्ष्य तान्भिक्षुसैनिकाः । यावत्प्रारेभिरे योद्धुं तावत्किमपि सर्वतः ॥१३९५॥
क्षणेनैव वपुर्भङ्गं तांस्तान्वीक्ष्य हताश्रितान् । न संस्तम्भयितुं शेकुः स्वयमूथ पलायिनीः ॥१३९६॥

---

१३७३. 1) Emended; A °नायकः. १३७४. 1) A विङ्कत°.—2) A निषीथिनी. १३७७. 1) Thus A; perhaps read शेषसैन्येषु.—2) A विङ्कव. १३७९. 1) A₁ writes here ३ instead of तिलकम्. १३९१. 1) Emended; A संप्रासंस्तांस्ता°.

1425 संवत्सरैरष्टमार्यं तैस्त्यक्तमाहात्म्य च द्रुतम् । प्रविश्य नगरं सानुर्नृपतेः पार्श्वमाययौ ॥१४२५॥
ज्यायसि भ्रातरीयामं तस्मिन्मासे गतो नृपः । दुःखोष्णैरश्रुभिः सार्धं वैरिण्यापोतसाध्वसम् ॥१४२६॥
महत्तमोऽनन्तसूनुरानन्दस्तत्र वासरे । लोचनोड्डुरकग्रामे डामरैः प्रचलन्हतः ॥१४२७॥
तज्जन्मकुल्यदण्डादिदुःसहायासकारणात् । स विपत्पतितो नाभूत्कस्यापि करुणावहः ॥१४२८॥
भासाभिधः सुज्जिभृत्यो लोकपुण्यात्पलायितः । भ्रान्तोऽवन्तिपुरे विश्वदवन्तिस्वामिनोऽङ्गनम् ॥१४२९॥
1430 कम्पनोद्ग्राहकः[1] क्षेमानन्दः स च तदन्तरे । अमर्षणैरवेष्ट्यैतां[2] डामरैर्हौलडोद्भवैः ॥१४३०॥
इन्दुराजोऽपि सेनानीः कुलराजकुलोद्भवः । टिक्क नहेष्टितो ध्यानोड्डारे[1] व्याजादशिश्रियत् ॥१४३१॥
पिच्छदेवादयोऽन्येऽपि बहवः सैन्यनायकाः । अतिष्ठन्क्रमराज्यान्तर्डामरैः कृतवेष्टनाः ॥१४३२॥
पाते वनस्पतेः शाखा इव तद्वीडविच्युताः । इत्थं हताः क्षताधास्तत्र[1] तत्र नृपानुगाः ॥१४३३॥
निष्पादत्रा हिमप्लुष्टचरणा नग्नविग्रहाः । क्षुत्क्षामा बहवोऽभूवन्मार्गेषु गलितासवः ॥१४३४॥
1435 न व्यलोक्यत मार्गेषु तदा नगरगामिषु । पलालच्छन्नदेहेभ्यो मानुषेभ्यः परः कश्चित् ॥१४३५॥
यातं विलासवासस्त्वं तेऽपि चित्ररथादयः । निन्युर्वैरचिरेणैव महामात्यैर्भविष्यते ॥१४३६॥
द्वितीयेऽपि दिने रुद्धसंचाराः पक्षिणामपि । तुषारवर्षिणो मेघा न मुहूर्तं व्यरंसिषुः ॥१४३७॥
वनपूर्वाभिधग्रामस्थितस्य कटकाद्भटान् । भिक्षोर्निक्षिप्य धन्योऽथ सिंहदेवमशिश्रियत्[1] ॥१४३८॥
निशम्य कृतसत्कारं नृपं तदनुयायिनाम् । सर्वेऽपि भिक्षवास्तस्थुः सैनिका नगरोन्मुखाः ॥१४३९॥
1440 मन्दप्रतापे दायादे संग्रामावसरास्ततः । राज्यधनको राजानमनुमन्तुं विनिर्ययुः ॥१४४०॥
परापातभयाच्छीतापाताच्च विवशैर्जनैः । न ता नेतुमशक्यन्त दूरस्थं पितृकाननम् ॥१४४१॥
चक्रिरे स्कन्दभवनोपान्ते देहाश्चिताभिसात् । ते सत्वरं ततस्तासामदूरे राजसद्मनः ॥१४४२॥
राज्ञी चम्पोद्भवा देवलेखा तरललेखया । स्वसा सहाविशद्वह्निं कपोलेखावधिर्विधेः ॥१४४३॥
गुणोज्ज्वला जज्जला —[1] सुता वल्लापुरोद्भवा । गग्गात्मजा राजलक्ष्मीरपि वह्नौ व्यलीयत ॥१४४४॥
1445 मत्वा हिमव्यपायान्तं राज्यरोधं निजप्रभोः । डामरा नवभूभर्तुर्हिमराजाभिधां व्यधुः ॥१४४५॥
ददर्श सौस्सलं मुण्डमथ भिक्षुरुपागतम् । गाढामर्षाभिसंदीप्तैर्दृक्पातैर्निर्दहन्निव ॥१४४६॥
कोष्ठेश्वरज्येष्ठपालादयस्तत्सत्क्रियोद्यताः । असहासद्व्रतां वैराद्भजता तेन वारिताः ॥१४४७॥
नगरं हिमवृष्ट्यन्ते स यियासुर्युयुत्सया । ताटस्थ्येनाहिताकृष्टान्भृत्यान्कोशात्स्वानब्रवीद्वचः ॥१४४८॥
प्रसह्य प्राप्नुयां राज्यमिति पृथ्वीहरे सति । हते तु तस्मिन्दायादे विपक्षः[1] स्यां पतिर्भुवः ॥१४४९॥
1450 इत्यचिन्तयमेतत्तु दैवात्संजातमन्यथा । राज्यस्याशापि विरता हते प्रत्युत वैरिणी ॥१४५०॥
किं राज्येनाद्य वा कृत्यं भोगमात्रोपयोगिना । जिगीषोरुचितं कस्य ममेवान्यस्य सेत्स्यति ॥१४५१॥
मुण्डं न्यपातयद्भूमौ यः पूर्वेषां पुरा मम । सिंहद्वारे मदीये च तन्मुण्डं वर्तते लुठत् ॥१४५२॥
दश मासान्मदाप्तानां सुखच्छेदं व्यधत्त यः । तद्दुःखं स तु मया दशाब्दाननुभावितः ॥१४५३॥

---

१४३०. [1]) Doubtful emendation; A भोद्ग्राहक:.—[2]) Emended with C; A °रवेष्टयेत. १४३१. [1]) Emended; A °ड्डारं. १४३३. [1]) A क्षताधाधास्तत्र with diplography. १४३८. [1]) Emended; A °शिश्रयत. १४३९. [1]) Thus A₁; corr. by later hand into सर्वेषु°. १४४४. [1]) One *akshara* wanting, the *lacuna* not indicated in A; C supplements सा. १४४९. [1]) Emended; A विपक्षो; C °दायादे विपक्षः

एवं निर्व्यूढकर्तव्यतया नैष्काम्यमभ्युपेतताम् । उपशान्तमनस्तापः स्थित्वा शेषमायुषः ॥१४५४॥
इत्यापृच्छ्य गमष्टिकाभर्गं तं ममतं व्यधात् । प्रीत्या स हेमघटिकाश्वेतच्छत्रादिभाजनम् ॥१४५५॥ 1455
भट्टिकाम्भेण राज्याशापिशाचपोषितया पुनः । गृहीतोऽभ्येत्य चौर्तार्तैस्तस्यावन्तर्विचिन्तयन् ॥१४५६॥
अत्यन्तानुचितं बाध्यवबन्ध्यैः संविभिरद्भिः । रक्षितं रक्षिणो न्यस्य हतव्याभूत्कलेवरम् ॥१४५७॥
विपक्षाश्रयणेऽप्यस्मिन्स्वामिनोऽन्ते किमीदृशी । दशा शरीरस्येत्यन्तः कृतज्ञत्वेन चिन्तयन् ॥१४५८॥
दिदृक्षाव्याजतः सज्जकाख्यो नगरग्रस्तभृत् । आयातो बाहुकं गोपृष्ठैर्जित्वाभिसाध्यधात् ॥१४५९॥तिलकम्॥
स चतुर्भेदताद्योदारभ्यासादितच्छलैः । मूर्तैरधिष्ठितस्तिष्ठन्प्रजासंहारकार्यभूत् ॥१४६०॥ 1460
देवताधिष्ठिताविष्टदेहिनाक्र्याहिति श्रुतिः । भाविताभसंवादजनितमत्ययोऽप्यभी ॥१४६१॥
नदीयामन्यथात्वेन छेत्ता भक्षयिता च यः । तन्मुण्डस्यास्य स पुमांल्लब्धः श्रमो मृतस्तथा ॥१४६२॥तिलकम्॥
भिक्षुः कापुरुषाचारहतौचित्यो व्यसर्जयत् । प्राणप्राप्त्यालये मुण्डमथ राजपुरीं रिपोः ॥१४६३॥
उद्बलात्मजया तत्र देव्या सौभाग्यलेखया । नेतुम्पितृव्यमुण्डस्य जिघांसन्त्या निजानुगैः ॥१४६४॥
राजपुर्यामाकुलत्वं नीतायामाससाद तत् । तद्भर्तुः सोमपालस्य दूरस्थस्यान्तिकं चिरात् ॥१४६५॥युग्मम्॥ 1465
आदीनत्वं मधुरिष्यपाश्वधर्मादिकर्मसु । तिरश्च इव शोच्यस्य नैषबुद्धेः स्वप्नामभोः ॥१४६६॥
सम्भैरुपायचयं तत्र कर्तव्यं परिचिन्तितम् । स्वोचितं व्यञ्जितौचित्यामौचित्यं निरत्ययैः ॥१४६७॥
नागपालस्तु सौभ्रात्रं लब्ध्वा भ्रातुः स्थितोऽन्तिके । सेहे मुण्डावशेषस्य नोपकर्तुर्विमानताम् ॥१४६८॥
ईश्वरीर्वर्तिनोऽप्यन्ते काश्मीरेभ्यः पराभवम् । विशङ्क्योर्व्युः सर्वथेदं सत्कार्यं वः शिरः प्रभोः ॥१४६९॥
क्रियते येन नियतेरन्यथात्वं सनाथताम् । चिनिवस्य हरेर्दृष्टाः कुर्वन्तो यत्र जम्बुकाः ॥१४७०॥ 1470
तन्नागपालपुरे कालागुरुचन्दनदारुभिः । काष्ठैर्निष्ठां शिरो निन्ये वीतिहोत्रेव शत्रुभिः ॥१४७१॥
यथा प्राभिभ्रंशा धरणिपतिभावस्य विविधा यथा ह्रासोल्लासा अपि समरसीमासु बहुशः ।
यथा तत्सौर्थव्यसनविनिपातानुभवनं तथा दृष्टस्तस्य प्रमयसमयोऽप्यद्भुततरः ॥१४७२॥
कस्यापरस्य तस्येव लेभिरे वह्निसत्क्रियाम् । एकभेतरगात्राणि मुण्डमन्यत्र मण्डले ॥१४७३॥
टिक्कादयोऽथ नगरं यान्तोऽवन्तिपुराध्वना । तत्र हन्तुं व्यलम्बन्त भासादीन्पूर्ववेष्टितान् ॥१४७४॥
गुडाग्न्युपलप्रायप्रहारच्छेदकारिभिः । न ते जेतुमशक्यन्त तैः प्रयत्नपरैरपि ॥१४७५॥ 1475
स्थितैर्महाश्ममाकारगुप्ते सुरगृहाङ्गने । तैर्हन्यमानास्ते स्थातुं गन्तुं वा नाभवन्क्षमाः ॥१४७६॥
एवं ग्रामविलम्बेषु तेषु लब्धान्तरः सुधीः । स्वीचकार प्रदानेन खडुवीडामरान्नृपः ॥१४७७॥
गृहीतमौक्तिना तेषां सुज्जिः प्रायोजि सत्वरम् । तेन भासाविमोक्षाय पञ्चचन्द्रादिभिः समम् ॥१४७८॥
प्रपावन्तिपुरं यावत्स तावत्तदभणान् । क्रव्यात्म्यजातीनालोक्य भग्नं टिक्कादयो ययुः ॥१४७९॥
देवागाराद्विनिर्याता भासाद्यास्ते च विद्विषाम् । अमानामनुगान्हत्वा सुज्जेरन्तिकमाययुः ॥१४८०॥ 1480

---

१४५६. [1]) Emended with C; A चौर्तार्त°. १४५९. [1]) Thus A; cf. बाहुकं viii. 1846. — [2]) A₁ writes here ३ instead of तिलकम्. १४६२. [1]) A₁ writes here ३ instead of तिलकम्. १४६५. [1]) A₁ writes here २ instead of युग्मम्. १४६६. [1]) Emended; A आर्दीनास्य. १४७०. [1]) Emended with C; A ये. १४७३. [1]) Emended with C; A एकमेतरा°.

लब्धप्रतापे नगरं प्रविष्टे कल्यनापतौ । आययाविन्दुराजोपि टिक्कं संत्यज्य सानुगः ||१४८१||
चक्रे चित्ररथश्रीवभासादीनपि भूपतिः । पादाग्रहारखेर्यादिकर्मस्थानाधिकारिणः ||१४८२||
यथापूर्वमधीकारानजहत्सुज्जिरप्यभूत् । प्रतीहारमुखप्रेक्षी का कथेतरमन्त्रिणाम् ||१४८३||
प्रतीहारोपि निःसीमडामरग्रामसंमतः । तत्रैवचक्रिकां कुर्वन्नगाद्राज्ञः प्रतीक्ष्यताम् ||१४८४||
1485 स नासीद्वञ्चहचूहे कोपि तत्प्रेरणेन यः । नाशिश्रियन्नृपं नो वा बभूवाभ्यर्णोन्मुखः ||१४८५||
निह्नुतेशित्वसद्दर्पस्फूर्तिर्धूर्तो महीपतिः । आहारमभ्यनासाद्य तन्मतं न न्यषेवत ||१४८६||
इत्थं नगरमाक्रान्तलब्धपादप्रसारिकः । सोवर्तिष्ट समासन्नफलं कन्दलयन्नयम् ||१४८७||
संघट्याखिलान्भिक्षुर्डामरान्विजयेश्वरे । अथाध्यष्ठांदधिष्ठानं जिघृक्षुः शिशिरात्यये ||१४८८||
अदृष्टपूर्वं स्वबमूचक्रैक्यं वीक्ष्य डामराः । भिक्षोर्हस्तगतं राज्यं मत्वाशङ्किषताथ ते ||१४८९||
1490 एकैकस्यैवं धीशौर्यमित्राभिन्नादि दृष्टवान् । नोत्तिष्ठेत्प्राप्तराज्यः किमास्कन्देषु गृहान्तरात् ||१४९०||
इति संमन्त्र्य ते राज्यं सोमपालाय दित्सवः । दूतान्निगूढं प्राहिण्वन्सोपि दूतं व्यसर्जयत् ||१४९१||
आकारावारवैकल्यैः पशुतुल्यस्य तस्य तैः । राज्यभोगा अभङ्गा नो भविष्यन्तीत्यचिन्त्यत ||१४९२||
भोगलोभोज्झितैरित्थवस्तुसंघचिकीर्षितम् । देशोत्र पापात्पापीयो दैवाच्च समपादि तत् ||१४९३||
दास्येप्ययोग्यो यो राज्ये स इत्यास्तां प्रपाल्यतः । शक्येत पातुं देशोयं किमीपदपि तादृशा ||१४९४||
शालीन्पलालपुरुषोवति यः कृशानुदग्धाननघटकपेटकभीतिदानैः ।
1495 पातुं स काननतरून्विहितो विदध्यात्किं तत्र भञ्जनकृतां वनकुञ्जराणाम् ||१४९५||
भिक्षोर्मैदिक्षतां दिष्टवृद्धिव्याजात्ततोऽभजन् । तदूतो डामरान्गूढं श्रीविद्यानोद्यताभ्यधात् ||१४९६||
वैशाखेथ कृतारम्भस्तदा संभावितत्वरः । निर्गत्य नगरात्सुज्जिर्गम्भीरातीरमाययौ ||१४९७||
तस्याभियोगः प्राग्योभूद्योद्धुं वत्सरमप्यभिमः । एकाकी तावतो वीराननुरीकृत्य स निर्ययौ ||१४९८||
अन्तःपाते साहसानां नाद्भुतं तद्विधेर्वशात् । जीयते लक्षमेकेन लक्षेणैकोथ वा युधि ||१४९९||
1500 पारं तरीतुं निःसेतोः सरितोपारयन्नसौ । पारे परस्मिन्नहितानपश्यच्छरवर्षिणः ||१५००||
द्वित्रा निशाः स ते चासंस्तस्याः सिन्धोस्तटद्वये । रुद्धाः संनाहिनोन्योन्यरन्ध्रान्वेषणदीक्षिताः ||१५०१||
अथावन्तिपुराञ्जौभिरानीताभिरबन्धयत् । सेतुं सात्रोत्तरत्सुज्जिरारुह्य तरणीं स्वयम् ||१५०२||
तत्क्षणमेव तं दृष्ट्वा योधैः कतिपयैः समम् । द्विपद्मूर्मिकल्लोला द्रुमालीवाभवच्चला ||१५०३||
दृष्टं मुहूर्तादेनावदारूढः स च यत्तटम् । बद्धश्च सेतुस्तीर्णाश्च योधा भ्रमाश्च विद्विषः ||१५०४||
1505 न खड्गी न हयारोहो नापि शूली न चापभृत् । व्यावृत्य प्रेक्षितुं[1] कश्चिदशकद्विद्रुतात्तलात् ||१५०५||
निबद्धबन्धशैथिल्यात्स्खलत्पल्ययने हये । कोष्ठेश्वरस्याश्वपारा व्यलम्बन्तान्तरे क्षणम् ||१५०६||
निर्यन्त्र्य[1] तेपि पर्याणं सुज्जौ पश्चात्प्रधाविते । वात्योद्धूतं रजश्चक्रमिव क्षिप्रं तिरोदधुः ||१५०७||
हतलुण्ठितनिःशस्त्रध्वजिनीका विरोधिनः । ध्यानोड्डारादिषु ग्रामेष्वमिलन्खण्डशो गताः ||१५०८||

---

१४८५. [1]) Emended with C; A नाशिश्रयन्नृपं. १४८८. [1]) Emended; A निधून्वा°.—[1]) Emended; A अथाधिष्ठ°; C अथाविष्ठ°. १४९०. [1]) Conjectural reading; A एकैकस्योपधीधौर्य°. १४९३. [1]) Emended; पापीये. १५०१. [1]) Emended with C; A °वीक्षण°. १५०५. [1]) Emended with C; A प्रेक्षितुः. १५०७. [1]) Emended; A निर्यन्त्य; C निर्यत्य.

विजयेशाध्वगं तीर्त्वा वितस्तासेतुमग्रगः¹ । भासोऽपि दस्यून्विदधे पलायनपरायणान् ॥१५०९॥

उषित्वा विजयक्षेत्रे महान्येषुरुपागते । कम्पनेशे¹ ययुस्त्यक्त्वा ध्यानोड्डारं विरोधिनः ॥१५१०॥ 1510

तत्र स्थित्वा दिनैः कैश्चित्स देवसरसोन्मुखः । शिबिरे भेदनिर्यातैरेत्य ठक्कस्य गोत्रिभिः ॥१५११॥

जयराजयशोराजौ तन्मुख्यौ भोजकात्मजौ । प्रविश्य देवसरसं व्यधाद्धिक्कोपवेशने ॥१५१२॥

ययुर्विमृष्टसंघातास्तस्मिन्पश्चात्प्रधाविते । भिक्षाचरः शूरपुरं स्वोर्वीं कोष्ठेश्वरादयः ॥१५१३॥

गर्हां महाभये सोमपालदूतः पलायितः । दास्याः सुतेन गदितः कुत्रास्मीति प्रभोर्व्यधात् ॥१५१४॥

स हि तादृङ्महारम्भक्षोभसाध्योद्यतीक्ष्णताम् । तस्य सिंहीस्तनाक्रान्तगोमायुवदमन्यत ॥१५१५॥ 1515

प्रमादात्स्वामिनो राज्यं चिरं नष्टं मितैर्दिनैः । भुजिज्जः प्रसाद्य प्रददावेवं स स्वामिसूनवे ॥१५१६॥

शमालादीनपि व्यूढान्दानोपायेन डामरान् । पौरांश्च भिक्षाश्रयिणो राजाभ्येतु प्रचक्रमे ॥१५१७॥

राज्ञः परीक्ष्य सामर्थ्यमथ कुर्मो यथोचितम् । इति सर्वाभिसारेण तं संमन्त्र्य रणं दधुः ॥१५१८॥

रजोजवनिकालक्ष्य¹भटीघनटताण्डवः । दामोदरेऽभूत्संग्रामः स वीरग्रामघस्मरः ॥१५१९॥

कोष्ठेश्वरवशं यातं रक्षता पितरं क्षतम् । लब्धाः सहजपालेन श्लाघाः प्रकृतिभिः समम् ॥१५२०॥ 1520

भ्रमस्तत्राविशेषोऽभूद्राज्ञो भिक्षाचरस्य च । भिक्षुस्त्वहन्यसंवेद्यं विवेदात्मपराजयम् ॥१५२१॥

ततः प्रभृति यः प्रातः स न सायमदृश्यत । योऽद्य वा न परेद्युः स सैनिको भैक्षवे बले ॥१५२२॥

एवं त्यक्त्वा परान्पौरडामरेषु नृपान्तिकम् । प्रयात्सु लाभसत्कारानुचितान्प्राप्नुवत्सु च ॥१५२३॥

काव्यदेवपूर्विकोऽतस्थौ मनुजेश्वरकोष्ठयोः । प्रयातुं पार्थिवाभ्यर्णं लाभलौल्याभिलाषिणोः ॥१५२४॥

ज्ञात्वाथ तत्काकरुहाहृतलब्धपरिच्छदः । देशान्तरोन्मुखो भिक्षुराषाढे मास्यथाचलत् ॥१५२५॥ 1525

अनुयाद्भिः स दाक्षिण्यशेषाद्विहितसान्त्वनैः । तदावैर्डामरैः क्रुध्यन्न निरोद्धुमपार्यत ॥१५२६॥

अकरोत्स्वैरिणीसूनुतया शीलबहिष्कृतः । अतिरूपेषु दारेषु तस्य कोष्ठेश्वरः स्पृहाम् ॥१५२७॥

सटां हरेः फणारत्नमहेर्ज्वालां हविर्भुजः । बालां च तस्य संस्प्रष्टुं¹ कोऽप्रशान्तस्य शक्नुयात् ॥१५२८॥

समं सोस्सलिना बद्धसंधिराभयकाङ्क्षिणः । सोमपालः स्वविषये नादात्तस्य प्रतिश्रयम् ॥१५२९॥

उद्वेजितः प्राणहरैः प्रयत्नैस्तस्य सर्वतः । तद्देशाद्¹दुर्गममहीसीमान्तं सुल्हरीं ययौ ॥१५३०॥ 1530

त्रिगर्तेषु दया शीलं चम्पायां मद्रमण्डले । त्यागो दार्वाभिसारेषु मैत्री नामर्थ्यधर्मिणाम् ॥१५३१॥

पीडयेत्त्यक्तभीर्भूभुग्दूरस्थे त्वयि डामरान् । त्वामेवाभ्यर्थ्य राजानं ततः कुर्युः क्रमेण ते ॥१५३२॥

क्ष्मां तद्गजामोर्थयितुं सांप्रतं नरवर्मणः । मन्त्रिभिर्युक्तमित्युक्तमपि मन्त्रं न चाग्रहीत् ॥१५३३॥

प्रसाल्पपरिवारोऽस्मद्गृह इत्यथ गृह्णतः । श्वशुरप्रार्थनां तस्य भृत्याः पार्श्वादथाचलन् ॥१५३४॥

प्रावर्तताथ नगरे विवाहैर्विभवोज्ज्वलैः । सुलभं दुर्लभे काले वरयात्रेव डामरैः ॥१५३५॥ 1535

वीक्ष्याश्वखञ्जतुरगैरेकैकं पार्थिवाधिकम् । सुस्सलक्ष्मापतेर्धैर्ये मेनुर्वै तुष्टुवुर्जनाः ॥१५३६॥

औदार्याकारतारुण्यवेषसौन्दर्यमन्दिरम् । कोष्ठेश्वरोऽधिकं स्त्रीणां प्रययौ प्रेक्षणीयताम् ॥१५३७॥

---

१५०९. ¹) Thus corr. by A₁ from °प्रगः. १५१०. ¹) Emended; A कम्पनेशं. १५१९. ¹) Emended with C; A °जवनिक्षां लक्ष्य°. १५२८. ¹) Emended with C; A संस्पृष्टुं; cf. viii. 1198. १५३०. ¹) Emended with C; A तदेषा°.

प्रशान्तविप्लवे देशे यथासुखमवाप्यताम् । चिराद्भूरिलवन्यौघनृपपोषो दिवानिशम् ॥१५३८॥
क्षीराद्या लक्ष्मकेणापि सर्वे मडवराज्यतः । आनीताः पार्थिवाभ्यर्णं सैन्यार्णवभयंकराः ॥१५३९॥
1540 अपि भूपालवाल्लभ्यादभूद्राजोपजीविनाम् । प्रतीहारगृहद्वारप्रवेशो बहुमानकृत् ॥१५४०॥
लवन्यलुण्ठितग्रामतया दुर्भिक्षदुःखदः । व्ययोत्तरङ्गः कालोऽभूत्स राज्ञो धनदभिदः ॥१५४१॥
डामरेभ्यो नृपः पारास्संगृह्णन्कृतवेतनः । निनायाभ्यन्तरं वृद्धिं कार्यं चापचयं जनम् ॥१५४२॥
तिष्यवैश्यार्घदेवाद्या ज्ञातयो जनकद्रुहाम् । राजद्रोहोचितां राज्ञा विपत्तिमनुभाविताः ॥१५४३॥
मासैश्चतुर्भिः स पितृप्रमयाहादनन्तरम् । अनन्यशासनं राष्ट्रं स्वमेव समपादयत् ॥१५४४॥
1545 निर्धाम नगरं पौराः सर्वसामर्थ्यवर्जिताः । अनन्ते राष्ट्रमाकीर्णं डामरैः पार्थिवोपमैः ॥१५४५॥
बद्धमूलो नातिदूरे सर्वभारसहो रिपुः । सबाह्याभ्यन्तरा मन्त्रिसामन्ता वैरिसंश्रिताः ॥१५४६॥
मन्त्रोपदेशो वृद्धस्य नैकस्यापि नृपास्पदे । अधर्मबहलाः सर्वे भृत्या द्रोहैकवृत्तयः ॥१५४७॥
राज्यारम्भे बभूवेयं या सामग्र्यस्य भूपतेः । सा स्मर्तव्यान्तराज्ञातुं प्रत्युदन्तं विवेक्तृभिः ॥१५४८॥
प्रागप्रसक्तात्तदिदं गुणग्रामोपवर्णनम् । वक्ष्यमाणं सुबहुशोऽप्यत्र लेशात्प्रदर्श्यते ॥१५४९॥
1550 पूर्वापरानुसंधानबन्ध्यैर्दृष्टान्तवत्कथाः । नाकुत्रातिगभीराणां शक्या रसयितुं गुणाः ॥१५५०॥
प्रत्यक्षस्य गुणांस्तस्य विचिन्वन्तो यथास्थितान् । अनीर्ष्यस्य भविष्यामो विवेकस्यानृणा वयम् ॥१५५१॥
स्थितस्य तत्त्वविज्ञाने नान्यस्य हि पटुर्जनः । अमानुषानुभावस्य राज्ञः किं पुनरीदृशः ॥१५५२॥
हितानां दाराणां सदृशसुखदुःखस्य सुहृदः कवेः सोल्लेखस्य प्रियसकललोकस्य नृपतेः ।
स्थितानां कोऽप्यत्र व्यवहितविवेकः स्वसुकृतैरसामान्यं ज्ञातुं सुभगमनुभावं न कुशलः ॥१५५३॥
भवेत्प्रागप्रसरणा परिणामेऽथ वा मतिः । कथं सर्वस्याद्भुतायां निष्ठायां गुणदोषयोः ॥१५५४॥
1555 सन्त्येवास्यापि विषमाः स्वभावा दोषतां जनः । येषां विपाकभव्यत्वमजानन्नानयत्ययम् ॥१५५५॥
विकासः केषांचिन्नयनविषमैर्विद्युदुदयैः परेषामुद्भूतिः श्रवणकटुभिर्दीर्घरसितैः ।
न चेष्टा काप्यन्योपकृतिपरिहीना जलमुचो जडो वर्षादन्यं गणयति गुणं नास्य तु जनः ॥१५५६॥
गुणांल्लोकोत्तराञ्शृण्वन्नस्यानुभवगोचरान् । भविता पूर्वभूपालकृत्ये सप्रत्ययो जनः ॥१५५७॥
अनुज्झन्नपि स्थानाद्भ्रूभङ्गेन चकार सः । विलोलांल्लोमकम्पेन दिङ्नाग इव भूधरान् ॥१५५८॥
विग्रहग्राहिणीवृन्दा गूढे यन्नयसंभवम् । वहन्ति तापं भूपाला और्वाग्निमिव सिन्धवः ॥१५५९॥
1560 भूमिभृद्भास्वतस्तस्य तेजसाप्यायितो गतः । पूर्वराजयशश्चन्द्रो भुवनेष्वप्रकाशताम् ॥१५६०॥
यो यस्तं पश्यति स्वात्मसंमुखं स स सर्वतः । जानात्ययत्नोल्लिखितं देवबिम्बमिवेश्वरम् ॥१५६१॥
स्थिरप्रसादो दत्ते यत्तदादत्ते न स क्वचित् । भयं पुनः प्रणमतां दत्तं हरति विद्विषाम् ॥१५६२॥
कृष्टासेः प्रतिबिम्बं स्वं हित्वा नान्योऽस्य संमुखः । नापरः प्रतिशब्दाच्च गर्जतः प्रतिगर्जति ॥१५६३॥
तस्य नातिशितं कोपे प्रसादे निशितं पुनः । धत्ते तीक्ष्णैकधारस्य तरवारेस्तुलां वचः ॥१५६४॥

१५३८. ¹) Doubtful emendation; A °पोषा; G °विप्लवे देशे and °पोषाशिषा°. १५४२. ¹) Thus A; C पौरास्सं°. १५४३. ¹) Cf. वृत्तो हिक्कस्यापदेशतिष्यवैश्या° (A) viii. 1305. १५४५. ¹) Thus $A_1$; R C निर्यासन°, as apparently corr. by later hand in A. १५४७. ¹) Conjectural emendation; A मन्त्रोपदेशावृद्धस्य. १५५०. ¹) दृष्टान्त supplied by $A_2$ in space left by $A_1$. १५५८. ¹) Emended with C; A °कुम्भङ्गेन.

तस्याकुजन्मनो नित्याम्लानलक्ष्मीविकासिनः । प्रभवन्त्याश्रिताः कल्पशाखिनः पल्लवा इव ॥१५६५॥ 1565

राज्ञि गाम्भीर्यदुर्लक्ष्यमाहात्म्यप्रभविष्णुताम् । विवेद मन्त्रिणां लोकः सिषेवे तांश्च सर्वतः ॥१५६६॥

प्रकटस्तु प्रतीहारो न विषेहेऽन्यमन्त्रिणाम् । पार्श्वद्रुमाणामेकाकीवधिस्तम्भ इवोन्नतिम् ॥१५६७॥

तस्योत्पाटयतः सर्वांस्तृणानीवावहेलया । स्फूर्जञ्जनकसिंहोऽभूदशक्योन्मूलनः परम् ॥१५६८॥

आ बाल्यात्संस्तुतो राज्ञः स कृत्स्नव्यवहारवित् । अधृष्यस्तरुणीभूततनयो व्यास सर्वतः ॥१५६९॥

अदैर्घ्यं चीनसंबन्धादिच्छतस्तत्सुतो महान् । कुङ्काभिधस्तस्य ततः कृतावज्ञोऽतनोत्त्रपाम् ॥१५७०॥ 1570

रन्ध्रान्वेषी स तद्दोषादुपजापैः क्षणे क्षणे । सतनौ जनके यथारूपं द्वेषमजिग्रहत् ॥१५७१॥

राज्ञस्तुल्यवयःस्थौ हि जननीगाढसंस्तवात् । राज्यकाले हि सोल्लेखावास्तां तदवकाशदौ ॥१५७२॥

तुरंगयोग्योपस्कारस्नानाहारादि राजवत् । अकालज्ञावकुरुतां राजधान्यन्तरेव तौ ॥१५७३॥

सह स्वपूर्वैः समशीर्षिका प्रभोर्न युज्यते मानसमुन्नतेः क्वचित् ।
भित्तोऽबलेर्दर्दुरवृन्दलङ्घनं सरोजषण्डस्य महाविडम्बना ॥१५७४॥

तद्विलासप्रसंरूढपैशुनालेख्यकल्पनाः । तद्गर्भ्याखिले चक्रुस्तद्द्विषः कलुषं नृपम् ॥१५७५॥ 1575

अथ राजा विजयिनं सत्कर्तुं कम्पनापतिम् । कृततः श्रावणे मासि जगाम विजयेश्वरम् ॥१५७६॥

अत्रान्तरे पिञ्छदेवादागच्छन्गिरिगह्वरे । प्राप शूरपुरद्रङ्गाधीश्वरादुत्पलो वधम् ॥१५७७॥

पुष्याणनाडादुत्पिञ्छङ्कनये पुनरागतः । द्रङ्गाधिपेन गुटिकान्वेषिणा स व्यवाप्यत ॥१५७८॥

क्षितौ निपतितः पार्श्वप्राप्तमेकं द्विषद्भटम् । मुमूर्षुर्विशिखाविद्धजानुमर्मापि सोऽवधीत् ॥१५७९॥

प्रत्यावृत्तस्य सत्कृत्य कम्पनेशं महीपतेः । द्वार्यवन्तिपुरस्थस्य द्रङ्गेशोऽरिशिरो व्यधात् ॥१५८०॥ 1580

स दृढग्राहिकामुष्टिरस्तुहन्मुण्डमुद्गरः । चक्रे तस्य दृढामर्षशोकशङ्कुविपाटनम् ॥१५८१॥

आयायामेव यात्रायां जातारातिक्षयो जनैः । स निःशेषयिताशेषकण्टकानामगण्यत ॥१५८२॥

तस्मिन्प्रविष्टे नगरं विद्रुताः केऽपि सागसः । प्रापुर्जनकसिंहाद्याः केऽपि कारागृहस्थितिम् ॥१५८३॥

कैश्चित्पलायितैः शङ्कां प्रापिताः पृथिवीपतेः । ततः कोष्ठेश्वरमुखाः प्रातिलोम्यं प्रपेदिरे ॥१५८४॥

ग्रामात्तां निर्गतः श्रीमान्कार्तिकेय कृती नृपः । तत्र तत्रासुरग्रामं संग्रामोऽग्रमबाधत ॥१५८५॥ 1585

यत्र सुस्सलभूपाद्याः प्रापुर्भग्नप्रतापताम् । तं हाडिग्राममदहत्सुज्जिरूर्जितविक्रमः ॥१५८६॥

महीभुजा पीड्यमानैराहूतः कोष्ठकादिभिः । अथ भिक्षाचरो राज्यगृध्नुर्भूयोऽप्युपाययौ ॥१५८७॥

एकेनाह्ना योजनानि प्रोल्लङ्घ्य दश पञ्च च । शिल्लिकाकोट्टनामानं गिरिग्राममवाप सः ॥१५८८॥

क्षुत्पिपासाक्रमारातिभीतिमार्गश्रमोद्भवम् । क्लेशं नाजीगणन्मानी धावितः स जिगीषया ॥१५८९॥

कार्यमायाति वैमुख्यं जिगीषोर्विधुरे विधौ । प्रस्थितस्य पुरोवाते रथस्येव ध्वजांशुकम् ॥१५९०॥ 1590

आरम्भमात्रमपि कस्यचिदेव सिद्ध्यै कश्चित्प्रयत्नपरमोऽप्यफलप्रयासः ।
मन्थाद्रिणामृतमवाप्युदधेर्मुहूर्तात्सर्किं चिराद्द्विरधता न हिमाद्रिजेन ॥१५९१॥

---

१५७१. ¹) Emended; A नृपौ. १५८०. ¹) Emended with C; A °पुरस्थपस्य. १५८१. ¹) Emended; A विपाशनम्.
१५८४. ¹) Emended with C; A कैश्चित्त°.

भ्रष्टा सरित्स्ववसतेर्जलधिप्रवेशे वेलोर्मिवेल्लनवशेन विवर्तमाना ।
मिथ्यैव वाञ्छति श्रियं पुनरागतेति नोत्थानमस्ति तु विधिव्यपरोपितानाम् ॥१५९२॥
तस्य तावन्महायत्नकठोरस्योदयक्षणे । सिद्धेर्विबन्धो विधिना विधुरेण व्यधीयत ॥१५९३॥
आयातं तमबुद्ध्वा तु तस्मिन्नेव क्षणेऽभवत् । पृथ्वीहरानुजः प्राप्तभङ्गः कृताञ्जलिर्नृपम् ॥१५९४॥
1595 कोष्ठेश्वरः स चावेष्ट्य संप्राप्तं तमनिष्टताम् । कृत्याक्षमौ ततः सर्पाविव मन्त्रनियन्त्रितौ ॥१५९५॥
ताभ्यां स्थानेत्र सोन्यस्मिंस्त्याजितोऽथपरिभ्रमम् । कार्कोटद्रङ्गमार्गेण निर्गतः सुल्हरीं ययौ ॥१५९६॥
आसीच्च तत्र प्रोच्चण्डदर्पकण्डूलदोर्द्रुमः । ऊष्मायमाणः कश्मीराक्रान्तिसंततचिन्तया ॥१५९७॥
उदीपसलिलस्येव तस्य रन्ध्रगवेषिणः । पुरं प्रविष्टो राजापि प्रतीकारमचिन्तयत् ॥१५९८॥
अद्वितीयस्त्वमात्येषु प्रतीहारो महौजसाम् । सुज्जेरसहमानोऽभूच्छलान्वेषणतत्परः ॥१५९९॥
1600 आययावथ विस्रम्भावष्टम्भं बलतः प्रभोः । धन्यापजः पूतमूर्तिर्जाह्नवीजलमज्जनात् ॥१६००॥
तदाद्याः संस्तुता राजधीरसंभाविताततः । अनाप्नुवन्तोऽधीकारान्पर्यतप्यन्त चिन्तया ॥१६०१॥
कुर्वाणे कार्यतस्तस्मिन्भरं पित्र्येषु मन्त्रिषु । कालप्रतीक्षाक्षमतामूहुस्ते गहनाशयाः ॥१६०२॥
प्रतीहारस्तु दुर्लक्ष्यमुज्झितनिर्लोठनोद्यतः । अप्रियानपि तान्प्रीत्या जयाहोमोपयोगिनः ॥१६०३॥
व्यतीतेष्वथ मासेषु केषुचिद्दैवयोगतः । अकस्मादभवद्भूभृत्स्फीतलूतामयातुरः ॥१६०४॥
1605 विस्फोटशोफातीसारवह्निमान्द्याद्युपद्रवैः । संदिग्धाभ्युदये तस्मिन्देशः पर्याकुलोऽभवत् ॥१६०५॥
इत्थं स्थितः कुलस्यैकभर्तुः स्वामी बली रिपुः । तत्पक्षा डामरा राष्ट्रं लुप्तमेव व्यचिन्तयन् ॥१६०६॥
आयत्यां च तदात्वे च हितकृत्यं विचारयन् । राज्ञः श्रीगुणलेखाया जातमेकसुतं शिशुम् ॥१६०७॥
पञ्चाब्ददेश्यं पर्याणिड सुज्जिर्भूमिपतिं तदा । चिकीर्षुर्मन्त्रयामास मातुलेनास्य गार्गिणा ॥१६०८॥
इत्थं भूतस्य बुभुक्षुः ससूनुः सुज्जिरस्य ते । पञ्चचन्द्रादिभिः सार्धं युक्त्या मन्त्रयतेऽनिशम् ॥१६०९॥
1610 लब्धरन्ध्रः प्रतीहारो धन्याद्याश्च तदीरिताः । इत्यवोचंस्ततो भूपं स तथेत्यमहीच्च तत् ॥१६१०॥
पूर्वप्रजासृजं इवाद्भुतवस्तुतत्त्वव्यावर्णनेन कुतुकं जनयन्ति तज्ज्ञाः ।
बाला इवाल्पमतिहार्यधियश्च सन्ति प्रायो नृपा नियमशून्यमनोनुभावाः ॥१६११॥
शौचस्थाने कृतवसतिभिः स्त्रीव्यवायालये वा निःशङ्कोऽयं छलनकुशलैर्मामसं संप्रविश्य ।
नीतो भूतैरिव विवशतां निर्भरं नर्मचेटैर्भर्तं भूपालः कथमिव ततः स्यादवष्टम्भचेष्टात् ॥१६१२॥
निर्हेतु प्रहसन्विटः प्रविशति क्षोणीपतेरन्तिकं प्रीत्युत्फुल्लदृगेष किं किमिति तं पृच्छत्यनच्छाशयम् ।
ब्रूते किंचिदसौ कथानथ कथं सर्वंकषं मानिनां मानप्राणगुणेषु यत्सरभसं दम्भोलिपातायते ॥१६१३॥
सविभ्रमगतागतः किमपि भाषमाणः श्रुतौ प्रभोर्वलितलोचनं जगदवज्ञयालोकयन् ।
निजस्य मुखविक्रियाप्रणयताडनाद्यैर्भृशं सनर्महसिताहितं नृपतिवल्लभो दुःसहः ॥१६१४॥
1615 अपि जातु स दृश्येत निःसंक्षोभमतिर्नृपः । यो यन्त्रपुत्रक इव व्यक्तं धूर्तैर्न नर्त्यते ॥१६१५॥

१५९४. [1]) Here one *akshara* is wanting in A; तु supplemented with C. १६०२. [1]) Emended; A °क्षमतां मुहुस्ते. १६०६. [1]) Thus corr. by A, from कुलेस्यै°. १६०८. [1]) Emended; A गार्गिणा. १६११. [1]) Emended; A °प्रजा.— [2]) Emended with C; A °तत्त्वं व्या°.

यतो भृत्यान्तराश्रामाज्जातः सर्वस्वसंक्षयः । तत्समारम्भकृती राज्ञां हा धिगद्यापि शाम्यति ॥१६१६॥
सुज्जिरारिप्यमन्वेष्टुमागच्छन्पूर्ववत्प्रभोः । भिन्नसारेक्षिणः पश्यन्नविश्वासमतिष्ठत ॥१६१७॥
दाक्षिण्यं वामतां यातमाशये प्रतिबिम्बितम् । दर्पणस्येव राज्ञः स विभाव्याभूत्पराङ्मुखः ॥१६१८॥
तस्मिन्राजगृहे खेदान्मन्दीकृतगतागते । नृपतेस्तद्गतां प्रीतिं निःशेषां जहिरे खलाः[1] ॥१६१९॥
भृत्यः सुज्जेश्चिरतरयोग्यास्थानाद्विजभूः शठः । प्रातिलोम्यावहैर्भर्तुर्मन्त्रैरासीच्छ्रियोन्तकृत् ॥१६२०॥ 1620
नीरोगे राज्ञि दृष्टः स द्विष्टबुद्धौ नृपास्पदे । वस्त्रपर्णी विनिर्याय प्रार्थनार्थी गृहान्ययौ ॥१६२१॥
न तं प्रासादयद्राजा विशालबलवाहनः । आक्रम्योसौ[1] कथं नः[2] स्यादित्युपायं त्वचिन्तयत् ॥१६२२॥
त्यज्येत हतकार्योसौ निराशैरनुजीविभिः । मत्वेति तदधीकारानन्येभ्यस्तूर्णमार्पयत् ॥१६२३॥
राजस्थानात्स्वजं धन्यमुदयं[1] कम्पनादपि । अजिमद्द्वारपतिः खेरीकार्ये च रिल्हणम् ॥१६२४॥
हृताधिकारे[1] प्रव्यक्तवैकृते नृपतौ ततः । अल्पावशेषानुचरः सुज्जिरासीद्विशङ्कितः ॥१६२५॥ 1625
विमानितः पुराद्गङ्गायात्रामुद्दिश्य मानवान् । सोथ सुस्सलभूभर्तुरस्थीन्यादाय निर्ययौ ॥१६२६॥
श्रीसुकयात्प्रार्थनाकाङ्क्षी राजधान्यन्तिके न सः । निर्गच्छन्राजपुरुषैर्न राज्ञा वान्वरुध्यत ॥१६२७॥
तन्निर्वासनगर्वस्य स्थापनायानुयायिके । प्रतीहारस्तस्य गुप्त्यै कोशादेः स्वात्मजं व्यधात् ॥१६२८॥
निग्रहानुग्रहावस्मदायत्तावित्ति रक्षिणम् । पुत्रं प्रापल्लक्ष्मको मे[1] इति ध्यायन्स विव्यथे ॥१६२९॥
निवृत्तो लक्ष्मको द्वारात्पर्णोत्सं शनकैर्गतः । अथारोपयदद्रोहो भागिकं लोहराचलात् ॥१६३०॥ 1630
प्रतीहारविसृष्टाय भात्रेयाय महीभुजः । प्रेमाभिधाय तत्कोट्टाधीकारं च समार्पयत्[1] ॥१६३१॥
उत्खाय लोहरात्याताच्छङ्काशङ्कु महीपतेः । स ग्रीष्मविषमं कालं राजपुर्यामलङ्घयत् ॥१६३२॥
अमात्यकन्दुकव्रातपातनोत्पातनक्षमः[1] । आयत्तडामरः प्राप प्रथां कामपि लक्ष्मकः ॥१६३३॥
द्वारेथाकारयत्सुज्जिप्रतिमल्लविधिस्तया । कृष्यमाणो राजवंशपौरवं राजमङ्गलम् ॥१६३४॥
अनन्यदेशजः सुज्जेः[1] शूरो मत्कोश[2]पोषितः । कीर्तिमेव हरेद्ध्यां[3]वितीर्ष्याकलुषो हि सः ॥१६३५॥ 1635
खड्गग्राहिसहायः स क्षुण्णः पर्यटितुं पथि । निःसुखश्चोपहास्यश्च तेन कार्यार्पणात्कृतः ॥१६३६॥
कर्तुं पदव्यां योग्यानामयोग्यान्प्रभवेन्न कः । तेषां गुणैस्तान्संयोक्तुं न शक्यं कारणैरपि ॥१६३७॥
पदे श्रीखण्डस्यानुचितमुचिते वर्त्मणि निजे वृषाङ्कः प्रक्षेप्तुं प्रभवति चिताभस्म रभसात् ।
न तस्यैवेच्छायत्तत्रिजगदुदयापायघटनोप्यसौ तद्गन्धेन स्फुटमिह पटुः[1] संघटयितुम् ॥१६३८॥
तस्मिन्सुज्जिप्रतिस्पर्धामप्रौढे वोढुमक्षमे । दूतानसृजदानेतुं सज्जपालं दिगन्तरात् ॥१६३९॥
निर्वैरे मण्डले द्वेष्योप्यथापत्कार्यगौरवात् । कोष्ठेश्वरो नरपतेर्नितरामन्तरङ्गताम् ॥१६४०॥ 1640
प्रीतिदायैस्तोष्यमाणस्तैस्तैस्तुष्टेन भूभुजा । विश्रब्धो नगरे तस्थौ सोपि लूतामयातुरः ॥१६४१॥

---

१६१९. [1]) Emended; A जहिरेखिलाः. १६२२. [1]) Emended; A आक्रम्यासौ.—[2]) Thus corr. in A from न. १६२४. [1]) Emended; A धान्य°. १६२५. [1]) Emended; A हिता°. १६२९. [1]) Conjectural reading; A °कोष; R C °कोय. १६३१. [1]) Emended; A समर्पयत्. १६३३. [1]) Thus $A_1$; $A_2$ °पातनोत्पातनक्षम:. १६३५. [1]) Thus $A_1$; $A_2$ सुज्जि:.—[2]) Thus corr. by $A_2$ from $A_1$ मत्कोश°.—[3]) Thus corr. by $A_2$ from $A_1$ त्यर्थामेव वदे ˉ ˉ विती°. १६३८. [1]) पटुः supplied by $A_2$ in space left by $A_1$.

एवं डमरकदम्बैक्यं राज्ञि कुर्वति कार्यतः । बालकैः सोमपालाद्यैः सुज्जिर्निन्येथ वैकृतम् ॥१६४२॥
प्रतिज्ञाय लतामात्रसाध्यं कश्मीरनिर्जयम् । सोमपालाय तद्राज्यं सोऽङ्गीचक्रे च मानितः ॥१६४३॥
प्रतिशुश्राव तस्मै च भागिनेयीं स कन्यकाम् । धीमानथान्तरे सामदाने प्रयुयुजे नृपः ॥१६४४॥
1645 द्वौ तावल्पाशयौ राजकन्ययोः स्वीक्रियां तदा । रभसाद्यावकुर्वाणावदत्तामन्तरं द्विषाम् ॥१६४५॥
उपायैर्जयसिंहस्य शकुनैश्च निरीक्षितैः । प्रेरितः सोमपालोऽथ सुज्जेर्मन्दादरोऽभवत् ॥१६४६॥
स्वयमेत्य प्रतीहारस्तत्र राजपुरीपतिम् । सीमान्तर्भुवमानिन्ये कन्यकोद्वाहसिद्धये ॥१६४७॥
जातां कल्हनिकाख्यायां महादेव्यां महीपतेः । उपयेमे नृपसुतां सोमोऽम्बापुत्रिकाभिधाम् ॥१६४८॥
याते तस्मिन्कृतोद्वाहे नागलेखाभिधां सुधीः । तत्स्वस्रेयीं[1] प्रतीहारो भूभुजे प्रत्यपादयत् ॥१६४९॥
1650 इत्थं राष्ट्रद्वये बद्धसंधौ निरवकाशताम् । प्राप्तः प्रतस्थे हेमन्ते सुज्जिस्त्रिपथगोन्मुखः ॥१६५०॥
जालंधरे संघटितो ज्येष्ठपालो निनाय तम् । गाढावमाननिर्नष्टसौष्ठवं भिक्षुपक्षताम् ॥१६५१॥
त्वयि भिक्षाचरे चैकसैन्यनायकतां गते । नोपेन्द्रो वा महेन्द्रो वा समर्थौ प्रत्यवस्थितौ ॥१६५२॥
राज्यप्रदस्य ते यश्च चक्रे राजा विमाननाम् । तस्युवो यश्च विषये प्रतिकुर्मस्तयोर्द्वयोः ॥१६५३॥
इति संप्रेरितस्तेन देङ्गपालान्तिकस्थितेः । यियासुः सोऽन्तिकं भिक्षोर्भागिकेन न्यषिध्यत ॥१६५४॥
1655 अनिक्षिप्तवतोऽस्थीनि स्वामिनो जाह्नवीजले[1] । न युक्तमेतत्ते कृत्यमित्यावेगादशासि[2] च ॥१६५५॥
ज्ञात्वा पुनर्यामेष्यामि पार्श्वं व इति निश्चयम् । स पीतकोशः कृत्वास्य ययौ प्रस्तुतसिद्धये ॥१६५६॥
प्रतीहारकरन्यस्तसर्वभारस्तु भूपतिः । मन्दाक्रान्तितया राज्यमसुस्थितममन्यत ॥१६५७॥
यो यो हि व्यग्रहीत्तं तं संधाय सविधस्थितः । तमन्वहं प्रतीहारः सानुग्रहमिवैक्षत ॥१६५८॥
प्रगल्भमाने चास्त्येवमुदयः[1] कम्पनापतिः । अवधीच्छद्मना हर्म्ये प्रकटं कालियात्मजम् ॥१६५९॥
1660 अविश्वासोल्बणान्सर्वेलात्रन्यानथ लक्ष्मकः । निर्मर्यादान्कम्पनेशामीषत्सान्त्वमजिग्रहत् ॥१६६०॥
ज्ञात्वाभ्येष्यति गङ्गायां यावत्सुज्जिर्विसृष्टताम् । यावत्कथं मया नेया कश्मीरा इति चिन्तयन् ॥१६६१॥
तावन्मासान्तरव्याप्त्या राज्ञो विज्ञाय डामरान् । भिन्नान्भिक्षाचरोऽविक्षद्विषल्लाटां हिमागमे ॥१६६२॥
मण्डलस्यान्तरे तस्य विविक्षो रड्डडामरः । प्रतीहारो हिमर्तुश्च निषेद्धा समपद्यत ॥१६६३॥
स टिक्केन पितृद्रोहादेकान्तद्वेषिणा रिपोः । आनीतः संमतैर्दत्ताप्यायः सर्वैश्च डामरैः ॥१६६४॥
1665 प्रतीक्षमाणो राज्याप्तिहेतुं सुज्जिसमागमम् । निर्भयष्टिक्कजामातुर्भागिकस्य खशप्रभोः ॥१६६५॥
बाणशालाभिधे दुर्गे यमबल्पोषितावपि । दूतैर्विभेदमनयत्सर्वं डामरमण्डलम् ॥१६६६॥
प्रमोदं सुहृदां त्रासं द्विषां च विसृजन्पुरः । स्वाश्रितेनाथ गङ्गायाः सुज्जिर्विहितमज्जनः ॥१६६७॥
पूर्वविप्रकृते भिक्षाचारेऽस्मिन्नभेदमागते । यथामुष्य महीभर्तुस्तथास्माकं भयं भवेत् ॥१६६८॥
ध्यात्वेति सिंहदेवेन प्रार्थितो व्याजमादधे । सुज्जिस्वीकरणोद्योगे सोमपालो भयाकुलः ॥१६६९॥
1670 सुज्जिर्जालंधरं प्राप्तः प्रातर्भिक्षाचरान्तिकम् । यावद्यास्यति तं सायं तद्भृत्यस्तावदासदत् ॥१६७०॥

---

१६४९ [1]) Emended with C; A स्वस्रेयी. १६५५. [1]) These two *pādas* have been twice written by A.— [2]) Emended with C; A °शाधि. १६५९. [1]) Thus A; perhaps read चास्त्यैवमु°.

प्रेरितो ज्येष्ठपालेन निषिद्धो भागिकेन च । विरराम स तस्योक्त्या विपक्षाश्रयणग्रहात् ॥१६७१॥
क्षणं देशान्तरोपान्तं तव भूपोपनेष्यति । त्वं च राज्यस्वीकारं मन्मुखमहितार्थनः ॥१६७२॥
इति दूतमुखेनोक्तः सोमपालेन चान्वहम् । विपक्षोत्सुक्यमुत्सार्य तद्देशाभिमुखो ययौ ॥१६७३॥
उदयः कम्पनाधीशो वैशाखे तीर्णसंकटः । खशाग्निवितेन संग्रामे प्रत्यपद्यत भिक्षुणा ॥१६७४॥
शक्रस्तुष्यत्प्रपतने जाते पृथुबले ततः । तस्मिन्कोट्टान्तरं भिक्षुः प्राविशद्ग्रामवेष्टनः ॥१६७५॥ 1675
राजाथ विजयक्षेत्रं निर्यातः प्रत्यपूरयत् । कम्पनेशस्य कटकं तास्ताः संभेयवर्त्मभूः ॥१६७६॥
यन्त्रोपलशरासारविविधायुधवर्षिणी । दुर्गस्थितैर्नृपचमूः प्रत्ययोध्यश्मवर्षिभिः ॥१६७७॥
पतत्स्वश्मसु भिक्षोश्च नामलक्ष्मसु पत्त्रिषु । ग्रहीतुं दुर्गमाजाजसेना शीघ्रापि नाशकत् ॥१६७८॥
दिनैरभ्यधिके मासमात्रे यातेमहीपतिः । विदार्य मूलं दुर्गस्य धन्यैः खातात्मसु संभृतम् ॥१६७९॥
दुर्गभाजो बलासाध्या राज्युपायपरे धियम् । आततद्वैरिबाधेच्छा धनलुब्धानदर्शयन् ॥१६८०॥ 1680
विससर्ज प्रतीहारमथ तद्वस्तुसिद्धये । राजा डामरसामन्तमन्त्रिराजात्मजैः समम् ॥१६८१॥
कोष्ठेश्वरत्रिल्लकाद्याः कृच्छ्रस्थस्य विमोक्षणम् । करिष्यामो वयं भिक्षोरिति बुद्ध्वा तमन्वयुः ॥१६८२॥
पश्यन्संकटशैलाग्रादधः कोट्टं भिनोति । जिते मेने प्रतीहारो वीक्ष्यानन्ताः स्ववाहिनीः ॥१६८३॥
पूर्वस्थितैः प्रतीहारानुगैश्चान्यत्र वासरे । अयोधि सर्वसैन्यस्य बलात्कोट्टं जिघृक्षुभिः ॥१६८४॥
ते तावन्तोप्यश्मवृष्ट्या तथा तैः प्रतिचक्रिरे । नास्तीदं विक्रमेणेति यथागृह्णन्विनिश्चयम् ॥१६८५॥ 1685
शीर्णदेहदुमार्गेभ्यो न्यपतन्नश्मभिर्हताः । निर्यद्दशौघसरणाः शीर्षभ्रमरगोलकाः ॥१६८६॥
कोष्ठेश्वरस्य मूढत्वं निर्व्यूढं तत्र किंचन । स्वस्य भिक्षोर्लवन्यानामन्येषां च विनाशकृत् ॥१६८७॥
नास्त्यत्र मत्समो वीर इत्येतावत्प्रसिद्धये । स प्रयुक्तोऽभवत्‌ भिक्षोर्येन प्राणक्षयकार्यभूत् ॥१६८८॥
बुभुक्षूणां खशानां स संकटे धैर्यमादधे । कोष्ठेश्वरोस्मि याभिवो तद्दया डामराः परे ॥१६८९॥
यदेतदृश्यते भूरि सैन्यमस्मद्धिताय तत् । पर्यवस्येदिति वदन्नमभाव्यन्यथा च तत् ॥१६९०॥ 1690
विस्रम्भभूरमुष्यार्थेयंन कोष्ठेश्वरोप्यसौ । अन्येषु तत्र कैवास्थेयस्य ते मिथवं दधुः ॥१६९१॥
भूभृत्पितृद्रुहः कार्यवशेन स्त्रैणपनेशने । अङ्गीकृताधिकारस्तु श्रीमांष्टिकस्य लक्ष्मकः ॥१६९२॥
खशाधीशं महाग्रामस्वर्णादित्यागसंभयात् । स्वीकृत्य भिक्षुबुभुक्षाबद्धकल्पमकारयत् ॥१६९३॥
आनन्दाख्यः खशाधीशस्यालः कृतगतागतः । नीत्वा टिक्कं प्रतीहाराभ्यर्णं भूयोप्यरोपयत् ॥१६९४॥
प्रतीहारस्य टिक्केन सहैक्यं वीक्ष्य डामरैः । निःसंशयं हतोस्म्यपि भिक्षुः कोष्ठेश्वरादिभिः ॥१६९५॥ 1695
संरब्धास्तद्विमोक्षाय प्राहिण्वंस्ते खशान्तिकम् । दूतानुरीकृतस्वर्णदाना भूरिधनैः समम् ॥१६९६॥
खशस्तु दध्यांशुत्कोचं गृहीत्वास्माभिरुज्झितः । जानाति रक्षितान्प्राणान्भिक्षुः कोष्ठेश्वरादिभिः ॥१६९७॥
समन्युः प्रागराज्योथ देङ्गपालोथ दूरगः । इन्याम्मां जयसिंहस्तत्रस्थः पश्यः प्रयत्नतः ॥१६९८॥
मत्वेति तेन मत्युक्ता भिक्षुं[1] शौचास्थितं गृहात् । विपाद्यातः फलकं निर्गच्छेत्सूचिरेपि ते ॥१६९९॥

---

१६७६. [1]) Emended; A संभेयवर्त्मभूः. १६७९. [1]) Emended; A धान्यः; C धान्यपा°; cf. viii. 1624. १६८१. [1]) Emended; A राज्ञां. १६८२. [1]) Thus corr. by $A_2$ from $A_1$ कृच्छ्रागतस्य. १६९३. [1]) Emended; A °बुभुक्षु°. १६९७. [1]) Emended with R; A दध्यान्नु°. १६९९. [1]) Emended; A भिक्षुर्मा°

1700 स स्वैरभोगोपलिप्ताङ्गः श्वेतावस्करवर्त्मना । यात इत्ययशो लोके ख्यापयन्मानी न निर्ययौ ॥१७००॥

कोष्ठेश्वरोऽथ कक्कस्य सैन्यक्षोभेऽथयाक्षिपत् । कर्त्तुं कालविदा प्राज्ञे प्रतीहारेण सान्त्वितः ॥१७०१॥

नीतौ खशाद्यैर्दन्तायामा प्रत्यूषादगृह्यत । व्यवसायः प्रतीहारमुख्यैर्भिक्षुप्रमापणे ॥१७०२॥

गच्छन्निरागच्छन्निव राज्ञ दूतैः प्रतिक्षणम् । अभियान्विजयक्षेत्रे वार्ता पर्याकुलोऽभवत् ॥१७०३॥

नावद्विराद्यवेत्स्तैस्तैः साहसे दृष्ट्वा वत्सराम् । कृतयत्नस्य साध्योऽभूत्र यो नृपमहीभुजः ॥१७०४॥

1705 छिन्नो राजानुगा छिन्नावलस्य भिक्षोः प्रमापणम् । साध्यमेते हि मन्यन्ते हन्त किं केन संगतम् ॥१७०५॥

विहस्य नीयते चित्तं खशैरेस्य क्षणादमी । भग्ना नूनं प्रयास्यन्ति मुषिताश्चाखिलाः परैः ॥१७०६॥

पृथग्भूतः कोष्ठकोऽयं बिल्हकोऽस्यैव बान्धवः । एते भिक्षाचरोच्छिष्टपुष्टा आभ्यन्तरा अपि ॥१७०७॥

को नूनमेत्र संग्रामो यो राज्ञः साधयेद्धितम् । सामग्री नूनमाबाला सेयमस्यैव सिद्धये ॥१७०८॥

इत्यूचुः शिबिरे यावज्जनास्तावदवेष्ट्यत । कटकैर्मन्त्रिणां दुर्गं विकोशायुधवाहिभिः ॥१७०९॥

1710 एकाकी चिरसंक्लिष्टो हन्तव्यस्तत्कृतेऽखिलैः । हा धिक्परिकरो बद्धो निर्लज्जैः सर्वशस्त्रिभिः ॥१७१०॥

त एवेत्यूचुरासीच्च कचच्छस्त्रोर्मिनिर्मलः । स्फुरद्घोषाक्षिशफरो निःशब्दः सैन्यसागरः ॥१७११॥

व्योम्नोड्डीयेत वा सैन्यं लङ्घयेद्वा मृगद्युतेः । दुष्टाभ्रवृष्टिरिव वा निखिलांस्ताडयेत्समम् ॥१७१२॥

साश्चर्यशौर्यः पर्यन्ते स्वीकुर्वन्भिक्षुरायुधम् । संभ्रान्तचकितश्चासीदित्यन्तश्चिन्तयज्जनः ॥१७१३॥

एतावन्मन्त्रिणां सिद्धमत्र प्रत्यूहसंभवः । तच्छान्तिः कार्यसिद्धिश्च प्रतापैर्नृपतेरभूत् ॥१७१४॥

1715 सैन्ये भिक्षाचरापातं पश्यत्यूर्ध्वार्पितेक्षणे । कोऽप्याविष्कृतशस्त्रीकः पुमानेको विनिर्ययौ ॥१७१५॥

दवतीभिः परीतस्य नारीभिस्तस्य चिक्षिपुः । पृष्ठे केऽपि वपुर्लोलकौसुम्भाधरवाससः ॥१७१६॥

बद्धः पलायमानोऽत्र सोऽयं भिक्षुरिति ब्रुवन् । उन्मुखः स जनोऽभीपीडितः समय निर्गतम् ॥१७१७॥

स हि[1] भिक्षोः कृतद्रोहतुमुले प्रस्तुतो[2] वधम् । तस्माद्राजानुगेभ्यो वा स्वस्याशङ्क्य विनिर्ययौ ॥१७१८॥

अद्रोहोऽस्मीति लोकस्य प्रत्ययाय चकर्ष च । कृपाणीमुदरं हन्तुं रक्ष्यमाणो निजानुगैः ॥१७१९॥

1720 सानुगस्त्यक्तमार्गो सं विलङ्घ्य नृपवाहिनीम् । अद्रिप्रस्रवणोपान्ते नातिदूरेऽभ्युपाविशत् ॥१७२०॥

उच्छूनसंधिरसंप्राप्तैरम्भोभिर्दुर्गनिर्गतः । मायां प्रयोक्तुं प्रारेभे प्रेरितः सोऽन्यडामरैः ॥१७२१॥

संजातं लम्बमानार्कमहस्तत्प्रक्ष्यतां क्षणम् । भिक्षुः क्षपायामास्कन्दमपनेष्यन्ति डामराः ॥१७२२॥

इति तद्वाचिकाल्लीक्ष्णा नीतिभिर्मन्त्रिणां समम् । खशैस्त्यजद्भिरेषको न्यरुध्यन्ताङ्गरक्षकाः ॥१७२३॥

ततः किलकिलारावमुखरैः करतालिकाः । योधैर्ददद्भिः सचिवा व्यगृह्यन्ताकुलाशयाः ॥१७२४॥

1725 मुक्ताः स्वामिद्रुहः कुच्छ्रगता राज्यं प्रसाधितुम् । द्विषतो मन्त्रिभिः स्वार्थो[1] दत्त्वार्थोऽन्यो नु साधितः ॥१७२५॥

राजकार्ये च मानी च लम्बमानेष लक्ष्मकः । किमेतदिति तं नीर्वि खशस्यालमभाषत ॥१७२६॥

सोऽभ्यधात्कुम्भदास्यापि रोद्धुं शक्यं चिकीर्षितम् । खशानां प्रत्ययस्थाता कथं तवास्त्यसंनिधिः ॥१७२७॥

स हन्तुं वैपरीत्यं तं खशानां त्वं प्रजेत्यथ । उक्त्वा व्यसृजदानन्दं जहसे चान्यमन्त्रिभिः ॥१७२८॥

---

१७०४. [1]) Emended; A °ब्भ्रस्य. १७१८. [1]) Emended; A सह.—[2]) Thus A; perhaps read कृतद्रोहस्तुमुले प्रस्तुते. १७२३. [1]) Emended with C; A °न्यरुध्यन्ता°. १७२५. [1]) Emended; A स्वार्था.

अदूरदर्शिना राज्ञा विषलाटाध्वपालतः । देङ्गपालगृहा – –ºरम्भः समभाव्यत ॥१७२९॥

अतः प्रधानकोष्ठेशस्यालः समभगृह्यत । प्राणेनार्थैस्तदर्थे ममता दीर्घबाहुताम् ॥१७३०॥ 1730

संक्षोभावसरे क्ष्मापं ततो निःसंभ्रमोऽभवत् । शिथिलं पक्षिणमिव त्यक्तं प्राप्य विवेद तम् ॥१७३१॥

स तानूचे न हास्यं मे नष्टे कार्येऽत्र साहसम् । सर्वनाशो हतैर्युष्मिन्खशास्त्रालेऽपि किं भवेत् ॥१७३२॥

अकुण्ठया प्रागल्भ्यकथया राज्ञः स्यालः खशस्य सः । सर्वाश्चिरन्त्य दुर्गामार्गीक्ष्णादीनाजुहाव ताम् ॥१७३३॥

इत्यूनामस्य कण्ठे संवेदं मन्त्रिणां धियः । स्वःस्थीणां भीतयः कार्ष्ठा तीक्ष्णानाकर्तुर्गिरिम् ॥१७३४॥

स चर्मकोपीनपटीबन्धस्तत्स्वामिभाकृतैः । इषुभिः स्वामिभस्त्रस्य व्यापतं सर्वतो युधि ॥१७३५॥ 1735

स ताम्बूलाधरः सक्तः सा केशाहमभुक्तोजने । याम्पूततनुमुमूर्षूणां भिक्षुराजोऽपजीविनाम् ॥१७३६॥

निर्धितान्ते ततस्तस्मिन्स तेषां संन्यवर्तत । कोष्ठेश्वरादिशिविरं तूर्णं शरणमीयुषाम् ॥१७३७॥ तिलकम्॥

एकैकशो लक्ष्मकेण युक्तया स्वैः प्रेरितैर्भटैः । टिक्कः स्वं वीक्ष्य वलितं निषकर्ताङ्गुलिं भयात् ॥१७३८॥

खशैरस्मिन्नवसरे स पलायनशङ्किभिः । रक्ष्यमाणस्तैर्ध्वरःस्य मनस्तापादभुक्तवान् ॥१७३९॥

वीरसार्ध्यन्विलम्बेन तीक्ष्णानामाप्तवोत्सुकः । तस्थौ भिक्षाचरः स्वान्तमक्षतस्त्वा विनोदयन् ॥१७४०॥ 1740

हर्म्यशृङ्गमनायाते तीक्ष्णलोके युयुत्सया । उत्तिष्ठता तेन दायः स्तोकशेषः समाप्यत ॥१७४१॥

दीव्यतः कान्तया सार्धं कामिनः सुखरागमे । प्रत्युत्थातोरिव क्षोभो चान्तस्तस्य व्यजृम्भत ॥१७४२॥

किमद्यापि वधेन स्यादहतानामिति चिन्तयन् । स विहाय शारावापं सासिधेनुर्विनिर्ययौ ॥१७४३॥

सुदीर्घचिन्तागलितश्यामश्यामलिभिः कचैः । धूम्रविषपताकाङ्कमिव वीरपटाञ्चलैः ॥१७४४॥

गण्डताण्डविनाच्छिद्रशङ्खताडङ्करोचिषा । चन्द्रमौलिकलाकान्त्या च द्योतितांसविलासितम् ॥१७४५॥ 1745

विकीर्णं विद्रवाद्यन्ते विपर्ययनाङ्गनाजनम् । योजयन्नाभिनालातैः शस्त्रीनेत्राधराम्बुकैः ॥१७४६॥

कौसुम्भाधरवासोमध्यधौताधराञ्चलैः । लोलैर्वीरहरिं नवसटाटोपमिवांसयोः ॥१७४७॥

हृद्गतःपाणिपादैक्यघातप्रचुरचारिभिः । चरन्तं मण्डलैर्विविधैर्लघुविन्यस्थिरक्रमैः ॥१७४८॥

औचित्यस्योन्नितां चर्यामलंकारमहंकृतेः । अभिमानविभूतीनां निस्योत्सेकमनल्पयम् ॥१७४९॥

अलक्षितक्षिप्रपातं स सर्वोऽप्युन्मुखो जनः । विचरन्तं तमैक्षिष्ट भिक्षुमभ्ये विरोधिनाम् ॥१७५०॥ 1750

राजवीजी मधोर्नेमा तं प्रवीरः कुमारियः । भ्रातापि ज्येष्ठपालस्य निर्यातो रक्तिकोऽन्वगात् ॥१७५१॥

हर्म्यैर्मिश्रोऽक्षतैस्तैस्तैर्विशतः परिपन्थिनः । दरोधकः शरासारैर्गार्गिको भिक्षुसंश्रितः ॥१७५२॥

ते धावन्तो व्यभाव्यन्त दरैस्तत्पापनिर्गतैः । वर्षोपलैः पुरोवातप्रेरितैरिव दन्तिनः ॥१७५३॥

स रोद्धा प्रतियोधानां पाणैः क्षिप्ताश्मभिः खशैः । लताङ्गो भमचापश्च चिरेण विमुखीकृतः ॥१७५४॥

तस्मिन्प्रचलिते मार्गैः प्रविश्यपोत्रवैर्भटाः । ते च भिक्षाचरादीनां सर्वे गोचरमाययुः ॥१७५५॥ 1755

भिक्षोरेकं क्षणालक्ष्यधैर्यं पार्श्वभृतायुधम् । अथावचूर्णमादाय मूलमेको बृहद्भटः ॥१७५६॥

---

१७२९. [1]) A₁ omits here *two aksharas* without indicating the *lacuna*; C देङ्गपालगृहावस्तारम्भः; perhaps read °गृहा-वर्तारम्भः. १७३०. [1]) Thus A; C स समगृह्यत. १७३६. [1]) Emended with C; A राज्ञोपजी°. १७३७. [1]) Emended; A तेषां सन्नव°.—[2]) A₁ writes here ३ instead of तिलकम्. १७४२. [1]) Emended with C; A दीव्यन्तः. १७४९. [1]) चर्या supplied by A₂ in space left by A₁. १७५३. [1]) Emended; A व्यभा°.

तस्य प्रहरतः भूतं भिक्षुराभिलवस्सलः । शिल्पापहस्तेनावेगात्केशाश्चग्राह पाविनः ॥१७५७॥

प्रजहार कृपाण्या च निर्वत्याणे पतिष्यति । तस्मिन्नाहरतां भूयस्तौ कुमारियरक्षिकौ ॥१७५८॥

निर्विभागैर्हते तस्मिन्विविधायुधपातिभिः । विरोधियोधैः संनद्धैस्त्रयो युयुधिरेथ ते ॥१७५९॥

1760 अजायन्त विविक्ताश्च शस्त्रसंपातताडिताः । कोटराजगरापास्तसरवीश्च इव द्रुमाः ॥१७६०॥

अग्राकुर्वन्तस्तान्हन्तुं खड्गशूलादिभिर्द्विषः । अपसृत्य शरासारैस्ततो दूरादवाकिरन् ॥१७६१॥

भिक्षाचरमृगेन्द्रस्य भञ्जतः शरपञ्जरान् । ततो हर्म्यास्तवृन्दैर्मुक्ताः पुष्टाः पाषाणवृष्टयः ॥१७६२॥

धावतस्तस्य घोराश्मवृष्टिकुट्टितवर्मणः । निममज्ज बकुस्पिण्डं भञ्जन्पार्श्वे शिलीमुखः ॥१७६३॥

क्रान्त्वा त्रीणि पदान्याशु स पपात दिशान्वितैः । ततश्चिरप्रवृद्धं तु कम्पं विहितां हरन् ॥१७६४॥

1765 कुमारियोपि बाणेन विद्धवकृणवर्मना । व्रणितोप्यपतद्भर्तुः पादोपान्तेपजीवितः ॥१७६५॥

रक्षिकस्तु शरेणैव विद्धो मर्मणि विह्वलः । सजीवितोपि निर्जीव इव भूमावुपाविशत् ॥१७६६॥

महाकुलीनैः वहितो हतो भिक्षुरशोभत । यथाद्रुमः शिखरैः पुष्पितैरिव पादपैः ॥१७६७॥

इयतो राजचक्रस्य मध्ये हर्षनृपात्मनः । नावमानस्य मानस्य स्वमूर्द्धिक्षेत्रैः परं पदम् ॥१७६८॥

विधाता नित्यविधुरस्तेनान्तेप्यभिमानितः । अकुण्ठेन ध्रुवं चक्रे गृहीतात्मपराजयः ॥१७६९॥

1770 को वराको महर्षीणां क्षोभे पूर्वमहीभृताम् । उदासेनान्तकत्वेन ते त्वस्वापे न किंचन ॥१७७०॥

अहोपुरुषिकामत्तैरारोहद्भिर्द्विपव्रजैः । तदवस्थस्तदार्तोपि शक्यायुक्त कुमारियः ॥१७७१॥

स्फुरन्पौरुष्यमित्येव स महारावरूपस्तथा । विज्ञाततत्त्वैररिभिर्वितस्य बहुशो हतः ॥१७७२॥

विपन्नेस्मिन्नलं मूढाः प्रहारैरिति निन्दिताः । खशैः प्रजह्रुर्बहुशो हते भिक्षौ द्विषद्भटाः ॥१७७३॥

अविधेयाशुभस्वीकरणवेदनयाधमैः । कैश्चिन्निर्जीवितप्रायो रक्षिकः शस्त्रिभिर्हतः ॥१७७४॥

1775 यवसार्थिनिपाति वर्षाश्च मासांश्च भुक्तवान् । न यशाम्यासितश्चैवं दशाम्या नृपतिर्हतः ॥१७७५॥

निदानं विग्रहे दीर्घे सर्वनाशेपि कारणम् । येषां बभूव तेष्वेवं तुतुषुः सत्त्वविस्मिताः ॥१७७६॥

नेत्रस्पन्दं भ्रुवोः कम्पं स्मेरास्यत्वं च नात्यजत् । सजीवमिव तन्मुण्डं कियतीरपि नाडिकाः ॥१७७७॥

एकं व्योम्न्यविशद्विम्बभानुं भूमौ पुनः परम् । तदेहमप्सरःसङ्गं धराम्बु च विरञ्जनम् ॥१७७८॥

सचिवा विजयक्षेत्रस्थितस्याग्रे महीपतेः । तेषां त्रयाणां मुण्डानि ततोन्येद्युरुपाहरन् ॥१७७९॥

1780 श्रीद्वारसदन्स्यप्रदाशाक्रान्तिप्रकाशने । दृष्टचित्रस्वभावोऽभिर्यथार्थं पार्थिवस्तथा ॥१७८०॥

तत्र तमाद्भुतं भावं दर्शयन्भुवनाद्भुतम् । परिच्छेद्यानुभावत्वं न केषामपि गच्छति ॥१७८१॥युग्मम्॥

नाप्यस्मिन्हतोत्साहः पितुर्मे वोप्यभूदिति । न अहर्ष विनष्टोयं राजकण्टक इत्यपि ॥१७८२॥

माकुप्यन्मस्पितुर्मुण्डमेष भ्रमितवानिति । वीक्ष्य भिक्षोः शिरोव्याजभावीदार्यस्त्वचिन्तयत् ॥१७८३॥ युग्मम्॥

आकारस्यास्य संभाव्यं सत्त्वं न हेयवैकृतम् । वैदग्ध्यं स्फटिकस्येव नार्कालोकोपततताम् ॥१७८४॥

---

१७५८. ¹) Emended; A प्रह°. १७६५. ¹) Emended; A पादोपान्ते. १७६६. ¹) Emended with C; A भक्षिकस्तु. १७६८. ¹) Thus A; C °स्वरः.—²) Perhaps read °विभुः. १७७०. ¹) Thus A; B C °नान्तकत्वेन. १७७५. ¹) Emended with C; A अपेक्ष°. १७७६ ¹) Emended; A सत्वविस्मित:. १७७८. ¹) Emended; A धरा°. १७८१. ¹) A₁ g. १७८३. ¹) Emended; A₁ had first written माकुप्यस्त पितु° and subsequently corrected this to माकुप्यत्स्वपितु°.—²) Emended; A₁ °भावी – – स्वचि°, writing in margin भावाराय; B G C °भावाशावस्व°. Cf. ... iii. 308.—³) A₁ g. १७८४. ¹) Emended; A °तततम.

अत्यद्भुतानि कृत्यानि वक्ष्यमाणानि भूपतेः । कोऽमुष्य बहु मन्येत सामर्थ्ये सति संपदाम् ॥१८१२॥
धैर्याब्धिना कार्यशेषं ज्ञातुं राज्ञा सविस्तरम् । प्रहितोथ कोट्टवृत्तान्तमाचख्यौ लेखहारकः ॥१८१३॥
उत्सृज्य भागिकं कोट्टं प्रयाते मण्डलेश्वरे । तुष्टो योगोभवत्तस्मिन्प्रेम्णा संपन्नमक्षधीः ॥१८१४॥
1815 मण्डलाभ्यवहारश्रीभोगैकामो महोमना । स वृत्वा भृत्यवैमुख्यात्पाश्चात्यमभ्यवाहरत् ॥१८१५॥
कुल्यानुकम्पिना दृष्टयुत्पाटनादेः स वारितः । देवेनं नाद्रवानां काचिदकालसमो क्रियाम् ॥१८१६॥
मायाभ्युदयनो नाम कायस्थः स्थूलखाण्डिकः । माणिक्यश्च प्रतीहारो बद्धमूलस्य मन्त्रिणः ॥१८१७॥
पुत्रो भीमाकरस्येन्द्राकरश्चाभ्यन्तरे समम् । बुभुक्षवस्तत्र तत्र वधं प्रेम्णो व्यचिन्तयन् ॥१८१८॥
अलब्धो हन्तुमप्राप्तावसरैस्तैः कदाचन । कोट्टाद्दशालिकां कार्यवशादवतरोह सः ॥१८१९॥
1820 कश्मीरेभ्यो नृपेणाल्पावशेषप्राणवृत्तिना । प्रैषि शासनमेतादृगिति प्रत्ययसिद्धये ॥१८२०॥
कोट्टैकसामशेषाणां गूढलेखान्विधाय ते । निबद्धसंविदः पूर्वमभिषेक्ष्यस्य भार्यया ॥१८२१॥
दृष्ट्वा दुर्गार्गलनिगडं कृत्वा च निशि लोठनम् । सिंहराजस्वामिविष्णुप्रासादायेभ्यवेचयन् ॥१८२२॥तिलकम् ॥
शारदाख्या वधूरेका कापि सुस्सलभूपतेः । तत्र स्थिताभवत्क्षुद्रा तेषामनुमतप्रदा ॥१८२३॥
तदर्पितैरयोयन्त्रभङ्गैरर्गलानि ते । कोशाभिवार्य पर्याप्तं कोशरक्षादि जह्रिरे ॥१८२४॥
1825 समृद्धैः समभिस्तनस्सहसं ध्रुमहत्कृतम् । दानेन त्याजिता या सा चण्डालैः प्रतिकूलता ॥१८२५॥
भेरीतूर्यादिनिर्घोषैर्मिश्राः कोट्टवासिनः । कृता राजोचिताकल्पमपश्यन्नथ लोठनम् ॥१८२६॥
अदृष्टपूर्वतादृक्षोद्यान्तवेषः स विस्मयम् । निन्ये जनान्नृपामात्ययोगो दीपैः प्रकाशितः ॥१८२७॥
प्रेम्णः पार्श्वस्थितस्ताभ्यामानयेद्वारकोन्तिकम् । ससैन्यो रभसधर्मपालिकाख्यौ च ठक्कुरौ ॥१८२८॥
तदास्पदाहितास्कन्दभङ्गस्तेषामशोभनः । रात्रिशेषश्च चन्द्रांशुस्पर्शपाण्डुरशीर्यत ॥१८२९॥
1830 प्रातः प्रेमाय दुर्वार्ताश्रवणेनोष्णदारुणः । संताप्यमानश्चोष्णांशुकरै रोद्धुमुपाययौ ॥१८३०॥
तं प्रतोलीतलप्राप्तं निर्यातैर्वैरिसैनिकैः । पराङ्मुखीकृतं वीक्ष्य चलितोस्म्यन्तिकं प्रभोः ॥१८३१॥
श्रुत्वेति भूभृत्त्वरया लुब्धं लोहरमन्त्रिणम् । विससर्जोदयद्वारपतिमानन्दवर्धनम् ॥१८३२॥
भूमिज्ञौ तौ हि कोट्टस्य त्रिभेदानन्यदेशगौ । तोल्पाद्यत्वादिरन्ध्राणां लक्षणाद्दहनक्षमौ ॥१८३३॥
प्रविश्य पुरं दृष्ट्वा प्रीतिदायार्थिभिः शिरः । भ्राम्यमाणं भटैर्भिक्षोरास्थितैस्तानदाहयत् ॥१८३४॥
1835 राजादेशादसंरुद्धैः स्त्रीभूयिष्ठैरसौ जनैः । नग्ना पैतामहे देशे दह्यमानोन्त्रशोच्यत ॥१८३५॥
काले ग्रीष्मोदयोद्रिक्तभानौ प्रविषमे नृपः । सिद्धिमप्रदधानोपि प्रहिणोति स्म रिल्हणम् ॥१८३६॥
स शौर्यस्वामिभक्त्यर्थनैस्पृह्यादिगुणोज्ज्वलः । तेन प्रमोघप्रारम्भः समभावि जिगीषुणा ॥१८३७॥
भवितव्यतया हृतव्यामोहः प्रेरितोथ वा । शठामात्यैरभूद्भूपस्त व्यस्तायुक्तमन्त्रितः ॥१८३८॥
हीनोर्थदुर्गामात्यैर्योग्यैर्वैरूप्यस्य वैरिणः । अनुमेने कृतारम्भीन्भृत्यान्ग्रीष्मोत्सवणे क्षणे ॥१८३९॥
1840 उदयः कम्पनाधीशो राज्ञोभे पर्यशिष्यत । सर्वामात्याः प्रतीहारमन्वगच्छन्पुनः परे ॥१८४०॥

१८१३. 1) A कोट°. १८१५. 1) Emended with C; A वृत्तपाश्व°.—2) Emended with C; A देवेनाद्र° with haplography. १८१८. 1) Emended; A °चिन्तयत् १८२२. 1) Emended; A °वेचयत् —2) A1 ३. १८२९. 1) Emendation doubtful; A °साकाना १८३०. 1) Emended with C; A चौर्ष°.

राजात्मजमहत्तारोहडामरामात्यमिश्रया । देश्ये तत्सेनयाथापि सर्वसामभ्युद्यमा ॥१८४१॥
अविष्टबहलिकानिविष्टकटको द्विषः । संपाटितुं प्रववृते सर्वोपायैर्विरोधिनः ॥१८४२॥
लुब्धाक्षः क्रमपुरे कोट्टोपान्ताश्रये स्थिताः । भयभेदावबध्यपात्र्यकम्पमनयन्निपून् ॥१८४३॥
स्वसलक्ष्मापतिर्भेदे लोठने तस्थुषामभात् । यस्मै प्राक्प्राप्तलेखाख्यां बहुस्थलं धराभुजे ॥१८४४॥
साहायकाय प्राप्तस्य तस्य सैन्यैर्विचमूः । भृङ्गाभिधस्य युद्धेषु प्रत्यमाहि प्रतिक्षणम् ॥१८४५॥ 1845
भैक्षुपदर्द्राष्ट्रेषु भयदोलायमानधीः । अङ्गीचक्रे नरपतेर्नाति स्वच्छं च लोठनः ॥१८४६॥
यत्नाशस्सिद्धमफलारब्धीनामत्र दुःसहे । काले व्यावृत्तिरस्माकमुचितास्मिन्नलाभया[1] ॥१८४७॥
छायारम्भसुभगे क्रमात्काले बलोर्जिताः । अथारब्धिं विधास्यामः सर्वारम्भेण शोभनाम् ॥१८४८॥
इत्यन्वहं लक्ष्मकेण महितं नादधे नृपः । अन्ये च मन्त्रिणो मन्त्रं शाठ्याद्भ्यर्णवर्तिनः ॥१८४९॥ तिलकम् ॥
सर्वाधिकार्युदयनः प्रतिभुत्त्व धनं बहु । साहायकार्थमानिन्ये सोमपालमपि प्रभोः ॥१८५०॥ 1850
अयाङ्कृपः स संबन्धबद्धोऽपि धनलुब्धधीः । द्रुह्यति स्म महाव्यापत्तिममाय महीभुजे ॥१८५१॥
बद्धर्वो लोठनश्चेत्किं मे संबन्ध्यपेक्षया । अन्यथा भवतामस्मीत्यन्यांन्वक्ष्यामि कैतवात् ॥१८५२॥
इत्थमित्यभिसंधाय सोमपालोऽभ्युपाययौ । समर्थने हेतुरासीत्सुज्जेर्व्याजे क्रियानपि ॥१८५३॥ युग्मम् ॥
स हि भिक्षाचरीन्मुख्यान्विवार्यानायितो यदा । सोमपालमुखेनोर्वीभुजा राजविसर्जितः ॥१८५४॥
दूतः प्रार्थ्यमानस्य तस्यार्थान्प्राकृतातिभुतान् । कणिकस्योत्तमर्णेभ्यः प्रदातुमनुबध्नतः ॥१८५५॥ 1855
तदा भिक्षाचरं आनन्दहतकल्पमनेन नः । व्यसनप्रशमे कोऽर्थ इत्यवज्ञां प्रकाशयन् ॥१८५६॥
मदेन न ददौ किंचित्सोऽथ भिक्षाचरं हतम् । श्रुत्वा निरुपयोगं स्वं राज्ञो ज्ञात्वा सशोकताम् ॥१८५७॥
यावदेकाहमभजल्लोहरव्यसने भयम् । तावन्निशम्य संप्राप्तोत्सेको भूयोऽपि मन्युभाक् ॥१८५८॥
लोठनं बद्धसंधिं वः करिष्यामीति भूभुजः । उक्त्वा दूतं लोठनेन दापयिष्यामि काञ्चनम् ॥१८५९॥
युष्मभ्यं कथंचित्स्वेति सोमपालं चिकीर्षितुम् । बलितामबलत्वं च सर्वेषां स्वार्थसिद्धये ॥१८६०॥ 1860
समं सोमेन तत्सैन्यमध्यप्रस्थित्यलक्षितैः । भिन्नैरनुगतो भृत्यैर्घोरमूलकमासदत् ॥१८६१॥ कुलकम् ॥
यज्ञानीचित्यदुष्पांसुवर्षदूषितकीर्तिना । भोगलुब्धतया तेन हता चिततसत्त्वता ॥१८६२॥
तुषारशर्करासुरक्षजलपानादतुर्जरम् । त्यक्तुं भोज्यं मृदु स्निग्धं काश्मीरं न शशाक सः ॥१८६३॥
सतुषं शुष्कमत्स्यादि बहिर्भोक्तुमपारयन् । यैस्तैरुपायैः कश्मीरान्प्रविविक्षुरतोऽभवत् ॥१८६४॥
काश्मीरकाः कार्यशेषमदृष्ट्वा पीष्मशोषिताः । आकर्ण्य च तदापातमाकुलत्वमशिश्रियन् ॥१८६५॥ 1865
भुञ्जानैर्भृष्टमांसानि पिबद्भिः पुष्पगन्धि च । प्रणीहारापतो हारि मार्द्वीकं लघु शीतलम् ॥१८६६॥
आमेष्यामो जयात्सुज्जिमाकृष्य इमं संयुगे । इत्थं विकत्थनैस्तैस्तैरहोपुरुषिकाः कृताः ॥१८६७॥
काश्मीरकैर्भिर्नैर्युक्तं खशैः सैन्धवकैरपि । अभिषेणयितुं शेकुर्न तेऽत्युद्यमिनोऽपि तम् ॥१८६८॥
भ्रातृव्याय च मुख्याय भूभुजा च करार्पणम् । विदध्यो जयसिंहाय वरमित्यभिमानिनाम् ॥१८६९॥

---

१८४१. [1]) Emended with C; A सर्वे. १८४२. [1]) Emended; A सर्वोपायैर्वि°. १८४४. [1]) Emended; A °केङ्गुर. १८४७. [1]) Emended; A °लाभय; C °लाभयः. १८४९. [1]) Emended; A इत्य°.—[2]) $A_1$ ३. १८५२. [1]) Emended with C; A °त्सीत्यान्य°, with haplography. १८५३. [1]) $A_1$ २. १८५५. [1]) Emended; A °मानस्यार्थान्प्रा°, omitting two *aksharas*; C °मानस्य तावर्थान्प्र°. १८६१. [1]) Emended; A °मध्यम°. १८६५. [1]) Emended; A °शिश्रयन्. १८६६. [1]) A पिबद्भिः. १८६८. [1]) Emended; A तैन्द्युद्य°.

1870 यद्यर्थमर्थ्यमानेन लोठनेन निरस्कृतः । सोमपालः प्रियं किंचिद्राजपक्षे न्यदर्शयत् ||१८७०||
मयि अभुरसैन्यानां व्ययाणां वैरिविग्रहे । तज्जो हिताय त्वं दम्भमन्विष्यसि किमाश्रितः ||१८७१||
इति निर्भर्त्सितस्तेन सुज्जिः स्वार्थक्रियोचितः । सर्वानुलङ्घ्य संनद्धो राजसैन्यमहेभवत् ||१८७२||
जरडांबाडसंजातशीतज्वरमहाभयः । वक्षयिनीमथोत्थाप्य विवशो निशि लक्ष्मकः ||१८७३||
विलूनदूनाः कटकं नष्टं वक्तुं प्रभोर्द्रुतम् । केचिदन्वसरन्सुज्जिं सैनिकास्ते जिघांसवः ||१८७४||
1875 पारेणैकेन भूपालसैन्यमन्येन वैरिणः । वर्त्मनः श्वभ्रदुर्गस्य तुल्यमेव प्रतस्थिरे ||१८७५||
शारम्बरपथं वैरिव्रजं त्यक्त्वा यियासवः । स्थोर्वी कालेनकाख्येन संकटेन तदन्तिके ||१८७६||
तस्मिन्नहन्यस्खलिता वनिकावाससामनि । ग्रामे सैन्या न्यविक्षन्त लोकैरुच्चावचैः समम् ||१८७७|| युग्मम् ||
अनुप्रस्थायिनोऽभ्यर्णग्रामकेष्वपि बुभुजुः । भुक्त्वा पीत्वाथ ते निन्युर्निशार्धमकुतोभयाः ||१८७८||
अथापातं विद्विषद्भिः स्वस्य भावयितुं द्रुतम् । क्षोभमृत्सुज्जिरभ्येत्य तूर्यघोषमकारयत् ||१८७९||
1880 क्षणदाशेष एवाशु पलायां चक्रिरे ततः । तैस्तैः शैलपथैः सेना निरवष्टम्भनायकाः ||१८८०||
चित्राम्बराणि मुष्णद्भिः प्राहेत्यज्यन्त मन्त्रिणः । भूपकम्पैर्गण्डशैला नानाधातुद्रवैरिव ||१८८१||
लुण्ठ्यमानाश्चमूस्त्रातुं नादधे कश्चिदायुधम् । तदा तु येन वा तेन स्वात्मा नान्यस्तु रक्षितः ||१८८२||
उत्प्लुत्य लङ्घयन्तोऽद्रीन्केऽपि शोणाधरांशुकाः । रक्तास्फिजो गतौ प्रापुर्मर्कटा इव पाटवम् ||१८८३||
केऽप्यम्बरपरित्यागविकचद्गौरविग्रहाः । हरितालशिलाखण्डा इव वातेरिता ययुः ||१८८४||
1885 भूलवेणुवनाकीर्णैः शैलैरक्षतविग्रहाः । केऽपि श्वासोत्थपूत्काराः करिपोता इवाव्रजन् ||१८८५||
किं नामोदीरणैर्मन्त्री स नासीत्तत्र कश्चन । तिरश्चेव विपर्यस्तधैर्यैर्यैर्न पलायितम् ||१८८६||
भृत्यस्कन्धाधिरूढोऽथ गच्छन्मूढः प्रधावितुम् । प्रतीहारो हिरण्योऽवैर्दूरात्कैश्चिद्व्यलोक्यत ||१८८७||
निरंशुकः स त्रुटीतांशुककेयूरकुण्डलः । प्रतिज्ञायानुसक्तैः तैः सर्वप्राणप्रधावितैः ||१८८८||
अश्माहतेन भृत्येन त्यक्तः स्कन्धात्पपात तः । स निस्पन्दवपुस्तिष्ठंस्तैरग्राहि महाजवैः ||१८८९||
1890 नवबन्धनशोकार्तशारिकाकृतविग्रहः । स —लगंलिरिव व्यञ्जद्भिः संकुचितेक्षणः ||१८९०||
बद्धस्य मे मानधनमहर्तुर्वैशसान्तरम् । इतोऽधिकं ध्रुवं सुज्जिर्विदध्यादिति चिन्तयन् ||१८९१||
स्कन्धेऽधिरोप्य निःशेषीकृतप्रावारभूषणः । नदद्भिः सोपहासं तैः सुज्जेरग्रं व्यनीयत ||१८९२|| तिलकम् ||
प्रच्छाद्य सत्वरमान्तरकं सोंऽशुकेनैव नोर्जितः । बृहद्राज इत्येत्युक्त्वा तस्मै स्वान्यंशुकान्यदात् ||१८९३||
प्रावारिताम्बरं कृत्वा हयारूढं च तं पुनः । धैर्येणायोजयत्स्निग्धैर्वचोभिः परिसान्त्वयन् ||१८९४||
1895 निर्लुण्ठितसुरंगासिकोशैः परिवृतः खशैः । ततो गृहीत्वा तं श्रीमान्सोमपालान्तिकं ययौ ||१८९५||
इमा व्योमाङ्गनाक्रीडत्तडित्तरलविभ्रमाः । भाग्यमेवानुयायिन्यः स्थायिन्यः कस्य संपदः ||१८९६||
आराधनधिया स्वैरं यस्यासेभोजि भृत्यवत् । गात्राणि कुङ्कुमालेपैरुपावर्तन्त च स्वयम् ||१८९७||

१८७३. ¹) Emended; A जरडा°. १८७६. ¹) नका written by A₂ in space left by A₁. १८८०. ¹) Emended; A न्यविक्षन्त.—²) A₁ २. १८८१. ¹) Emended with C; A नानानुधातु°. १८८२. ¹) Conjectural reading; A स्वात्मनान्यस्तु. १८८६. ¹) Emended, A तिरश्चैव. १८८७. ¹) A °स्कन्धा°.—²) Thus corr. by A₁ from प्रधावितुम्. १८९०. ¹) A °कृतारि°.—²) Thus A without indicating the *lacuna*; perhaps read नवपञ्जलिरिव.—³) Thus A₁, apparently corr. from व्यञ्जुञ्जिपः; doubtful. १८९२. ¹) A₁ १. १८९७. ¹) Emended with C; A °रुपवर्तन्त.

सोमपालादिभिः भट्टैः स मासैरेव पञ्चषैः । तेषामग्रे तथाभूतस्तिलकाद्यैरभाव्यत ॥१८९८॥
लुठ्ठोऽपि पलितश्वेतोपान्तश्यामाननः परैः । वनौका इव बद्धोभूच्छोकमूको वनान्तरे ॥१८९९॥
अर्पितं सुज्जिना सोमपालः स्वीकृत्य लक्ष्मकम् । आनन्तृहीतान्कश्मीरान्निजराष्ट्रं न्यवर्तत ॥१९००॥ 1900
लोठनस्यान्तिकादेत्य स भूरैर्मांजिकादिभिः । प्रतिभुत्य प्रभूतार्थैः प्रतीहारमबाध्यत ॥१९०१॥
कश्मीरा हि प्रतीहारशिक्षापक्षानुयायिभिः । तदा न कैरमन्यन्त संप्राप्ता डामराग्रजैः ॥१९०२॥
लुब्धेनापि प्रतीहारावर्तं राष्ट्रं जिघृक्षुणा । भूरि चाविस्त्वना वित्तं राज्ञोकारि न तेन तत् ॥१९०३॥
भ्रममाणेष्वमात्येषु ग्रामेषु नगरं नृपः । हारिते च प्रतीहारे न धैर्यात्पर्यहीयत ॥१९०४॥
यैः सैन्यसारैर्वैराज्यं पुरा भिक्षाचरोकरोत् । यैश्चाप्युत्कुपिते राष्ट्रे कृच्छ्रावर्तिष्ट सुस्सलः ॥१९०५॥ 1905
भूभृता संगृहीतानां शीतज्वररुजा ततः । तेषां दश सहस्राणि योधानां निधनं ययुः ॥१९०६॥
विरराम तदा देशे न मुहूर्तमपि क्वचित् । बान्धवाक्रन्दतुमुलं प्रेतवाद्यमहर्निशम् ॥१९०७॥
घोरधर्मघृणिभ्रान्ताशेषव्यवहृतिस्थितिः । सोनुत्साहहतः कालो नष्टराज्य इवाभवत् ॥१९०८॥
नानादिगन्तरायातैः प्राप्तैः काश्मीरकैरपि । लोहरेव प्रवृद्धर्द्धि राजद्वारमजायत ॥१९०९॥
काकतालीयसंप्राप्तलोकोत्तरनृपश्रियः । अकुण्ठा लोठनस्यासीत्स्फूर्तिर्वित्तपतेरिव ॥१९१०॥ 1910
तस्याकारपरिक्लेशवैशसाभिन्नवृत्तयः । भोगेष्वबाधा भ्रातृव्यभृत्यपुत्रादयोभवन् ॥१९११॥
नास्थानवर्षी स्थाने वा बद्धमुष्टिर्विभूतिमान् । स वयःपाकनिष्कर्मव्यवहारो व्यभाव्यत ॥१९१२॥
छाया निरङ्कुशपतिः स्वयमातपस्तु छायाश्रितः शतश एव निजप्रतापम् ।
दुःखं सुखेन पृथगेवमनन्तदुःखपीडानुबन्धविधुरा तु सुखस्य वृत्तिः ॥१९१३॥
तावदभ्युदयावाप्तेर्मासे न्यूनेधिके गते । एकसूनोः सुतो दिल्हो लोठनस्य व्यपद्यत ॥१९१४॥
तमेकपुत्रा शोचन्ती शोकशङ्कुहताशया । ततः प्रपेदे प्रलयं मल्ला लोठनवल्लभा ॥१९१५॥ 1915
पत्न्यामभिन्नभावायां गुणज्येष्ठे तथात्मजे । विपन्ने स तया लक्ष्म्या न कृत्यं किंचिदैक्षत ॥१९१६॥
निःस्नेहत्वस्य भूपालवल्लभस्य विजृम्भितम् । मोहनी वा श्रियः शक्तिर्यद्वशासीत्पुनः सुखम् ॥१९१७॥
अकारयन्निर्धनोपि तथा वृद्धस्य कालवित् । लक्षैः षट्त्रिंशता मोक्षं लक्ष्मकस्य क्षमापतिः ॥१९१८॥
दिष्टवृद्धिपरिक्षिप्तपुष्पवृष्टी जनैः पथि । तस्मिन्प्राप्ते न कोत्रासीद्राज्ञा प्रत्याहृतां श्रियम् ॥१९१९॥
स लक्ष्मीमहिमाक्षिप्तविस्मृताभिभवव्यथः । प्रभवन्पुनरेवासीन्निमहानुपलक्षणः ॥१९२०॥ 1920
धनप्रलोभनिर्नष्टसर्वावष्टम्भपाटवः । सुज्जिः साचिव्यमव्याजं भेजे लोठनभूपतेः ॥१९२१॥
दत्वाम्भागिकसुतामविश्वासमपाहरत् । स तस्याश्चप्रियापायदुःस्थितिव्यथया समम् ॥१९२२॥
अभ्यर्थ्य पार्थिवं पद्मरथं प्रानीतधान्कृती । तस्य सोमलदेव्याख्यामुद्वाहाय तदात्मजाम् ॥१९२३॥
एवं प्रधानसंबन्धैर्बद्धमूलं विधाय तम् । सोव्याहतस्य साचिव्यमहस्यानृण्यमाययौ ॥१९२४॥
आनिन्ये च कश्मीरप्रवेशं डामरादिभिः । बहुशः प्रार्थ्यमानेन प्रेरितो मद्रभूभुजा ॥१९२५॥ 1925
इत्थंभूतं कृतैक्यं च समं सीमान्तभूमिपैः । अथ छलयितुं शत्रुं नीतिं प्रायुङ्क्त सुस्सलिः ॥१९२६॥

---

१९०३. ¹) Emended, A [illegible]. १९२१. ¹) च omitted in A; supplied with C.

तमोदयहारपतिस्तस्यारम्भे गभीरधीः । अलुप्तसत्त्वः सुस्सलं सारेतरविहागमात् ॥१९२७॥

तरस्वः स हि निर्गहसर्वस्वोप्यर्चितोहितैः । राजमानादिभिः स्वामिकृत्ये निस्वोचितोऽभवत्[1] ॥१९२८॥

धनमस्थाभिधे स्थाने लोहरादूरगे स्थितः । भाविकोऽचिकसंधामैर्भेदं निन्ये द्विषद्बलम् ॥१९२९॥

1930 कदाचित्ताभिमायैस्मिन्निभ्या तत्र्येन वा वधुः । भयं लोठनभूपालान्माञ्जिकेन्दारकोदयः[1] ॥१९३०॥

इत्यभ्याधाक्षिकानस्मान्सुज्जी न्यस्ताशयो नृपः । वेत्ति तस्यैरणेनासौ तदाशङ्कितवेति ते ॥१९३१॥

संजाते सहजाख्यायां राज्यां सुस्सलभूपतेः । कुर्मो मल्लार्जुनं भूपं लोहरेऽस्मिन्हिताय वः ॥१९३२॥

तस्येमाणमिवाकस्मादभिसंधानं लोठनम् । संदिदेशाथ तान्भीमाञ्जयसिंहो महीपतिः ॥१९३३॥

व्याजेन राज्ञा संदिष्टं तत्कोशं स्वीचिकीर्षुणा । प्रतिभुस्मभिभस्तैस्तस्मिंस्तैश्च तथैव तत् ॥१९३४॥

1935 मल्लार्जुनं लोठनोऽथ ज्ञात्वा प्रारब्धघातिकम् । तदाद्यान्धातृसूनुत्वाधात्रिकामप्यबन्धयत् ॥१९३५॥

अवरुद्धातनूजेन[1] शत्रुं सौस्सलिना भजन् । परं विग्रहराजेन प्रातिहार्यमजिग्रहत् ॥१९३६॥

राजा व्याजात्पितृव्येण बद्धसंधिरुपायवित् । तत्वरे हारितं राज्यं तैस्तैः स्वीकर्तुमुद्यमैः ॥१९३७॥

विसृज्य शूरं निष्कम्पराज्यः सुज्जोः परिभ्रमात् । मासान्कांश्चिदसंक्षोभो नृपस्यावर्तिष्ट लोठनः ॥१९३८॥

सुज्जिः पद्मरथापत्यं प्राक्कन्यामानिनाय याम् । अनूढाया विवाहाय तस्या[1] मातरमागताम् ॥१९३९॥

1940 आकर्ण्य सेजलादीनां[1] प्रसक्तेऽस्मिन्स्वगौरवाम् । सामात्यो[2] दर्पितपुरं कृतप्रत्युद्गता ययौ ॥१९४०॥

माञ्जिकाद्यैरथ प्राग्रन्ध्रैर्निर्गत्य बन्धनात् । मल्लार्जुनः कोट्टराज्ये[1] संहतैरभ्यषिच्यत ॥१९४१॥

ठक्कुरैः प्राग्वशानीतैः प्रतोलीतलमागतान् । भृत्यांस्ते सिंहभूभर्तुः प्रविविक्षूनवारयन्[1] ॥१९४२॥

षष्ठेऽब्दे लोठनः शुक्लत्रयोदश्यां स फाल्गुने[1] । यथायुज्यत राज्येन तथैवाशु व्ययुज्यत ॥१९४३॥

अनूढां कन्यकां मूढः संपदं चात्मसात्कृताम् । प्राप्तां परस्य भोग्यत्वं भाग्यहीनः शुशोच सः ॥१९४४॥

1945 अटिस्थाहालिकादिभ्यो[1] देशेभ्यो नष्टशक्तिना । तेन सुज्जिबलात्कोशशेषः कश्चिदवाप्यत ॥१९४५॥

पूर्वाहृतान्सिंहभूभृत्स्वात्मसात्कृत्य माञ्जिकः । निनायाप्रतिमल्लत्वं मल्लार्जुनमहीभुजम् ॥१९४६॥

तेनातिव्ययिना नव्यवयसा भूभुजा कृतम् । मौक्तिकैः पूगविच्छेदे ताम्बूलार्पणमेकदा ॥१९४७॥

वर्तते विषयौत्सुक्याद्राटकं कुट्टनादिषु । त्यागित्वं तस्य तत्त्वज्ञैः सदोषमुदघोष्यत ॥१९४८॥

प्रजोपतापोपचितः कोशः सुस्सलभूपतेः । तेनातिव्ययिना स्वैरमनुरूपव्ययः कृतः ॥१९४९॥

1950 गणिकाचारणद्रोग्धृविटचेटादिपेटकम् । साधूनिवधूय सोऽपुष्णात्पौर्ण्यः[1] कुमंत्रितः[2] ॥१९५०॥

सपत्नसादहितसाध्वि वा वह्निसाद्भवेत् । द्रविणं क्षोणिपालानां जनतोपद्रवार्जितम् ॥१९५१॥

प्रजापीडनजं वित्तं जयापीडमहीभुजः । दास्याः पुत्रैरुत्पलाद्यैर्विलुप्तं नमुरन्तकैः[1] ॥१९५२॥

लोकसंक्लेशनोद्भूतः कोशः शंकरवर्मणः । प्रभाकरादिभिः स्वैरं जायाजारैरभुज्यत ॥१९५३॥

---

१९२८. [1]) Thus A; perhaps read [निस्वोचितो]°. १९३०. [1]) Thus corr. by $A_1$ from °[केन्याकारयः]. Perhaps read °[केन्याकारा]°; cf. viii. 1818. १९३३. [1]) Emended with C; A °[तान्भीमा]. १९३६. [1]) Emended; A [अवरुद्धसन्]°. १९३९. [1]) Emended with C; A [तस्य]. १९४०. [1]) Thus A; doubtful.—[2]) Doubtful emendation; A [सामात्यो]. १९४१. [1]) Emended; A [कोट्टराज्ये]. १९४२. [1]) Emended A °[वारयत्]. १९४३. [1]) A [फाल्गुने]. १९४५. [1]) Thus $A_1$; $A_2$ °[स्थाहि]-[लिका]°; cf. viii. 581. १९५०. [1]) Thus $A_1$ in margin; in text °[त्पौष्णैर्ण्य:].—[2]) Thus corr. by $A_1$ from [कुमति]°. १९५२. [1]) Emended with C; $A_1$ [नमुरन्तकै:]; the reading [नमुरन्तकै:], given by $A_2$ in margin, has been struck out.

आकृष्य प्रददौ तस्य तस्मात्रिपरितोषिणः । आप्तायसान्द्रया दृष्ट्या वरसंपहीकषो व्यधात् ॥१९८४॥ चक्रलकम् ॥

1985 भर्त्रे हिताय सौहार्दं विधूतोदयधन्ययोः । अभजद्भिल्हणः सुज्जेः प्रवेशे प्रतिलोमताम् ॥१९८५॥

प्रत्युद्गमेन संमान्य सुज्जिं प्रावेशयन्नृपः । देशाधिराज्यकुम्भ्यादीन्मानताय तु तद्गिरा ॥१९८६॥

कृतागाः क्ष्मापतौ लब्धक्षणे तीक्ष्णैर्जिघांसति । कोष्ठेश्वरः पलायिष्ट ज्ञातोदन्तस्तदन्तिकात् ॥१९८७॥

आस्कन्दायागते राज्ञि गृहीतमनुजेश्वरे । स्वपक्षभेदोपहतः सोथ देशान्तरं ययौ ॥१९८८॥

लोठनस्तु निजग्राह कांश्चिदालम्ब्य ठक्कुरान् । बप्पनीलाभिधे स्थाने वसन्मल्लार्जुनं बलात् ॥१९८९॥

1990 तत्र दृष्टमसंभाव्यमेवास्य खलु पौरुषम् । परिभ्रष्टोपि यद्दूरपदं तमजयत्तदा ॥१९९०॥

जहार तुरगांल्लुण्ठिं चकाराट्टिल्लिकापणे । मार्गद्रुमादिभङ्गं च — —[1] सर्वत्र लोकरोत् ॥१९९१॥

राजराजाभिधानेन डामरेणार्थितस्ततः । कश्मीरराज्यसंप्राप्त्यै क्रमराज्यमगाहत ॥१९९२॥

तद्वेश्म समीपस्थे हते चित्ररथेन सः । तस्मिन्नवसन्ये प्रययौ बप्पनीलभुवं पुनः ॥१९९३॥

तस्मिन्नास्कन्दमसकृद्दत्त्वाट्टिल्लिकामपि । अवरोद्धुमशक्तोभूत्कोट्टे मल्लार्जुनो वसन्[1] ॥१९९४॥

1995 भ्रातृव्येण पितृव्यस्य दापयित्वा धनं बहु । ततः कोष्ठेश्वरो यात्रासज्जः संधिं न्यबन्धयत् ॥१९९५॥

लोहरे विहितस्थैर्यो[1] गृहीत्वा लोठनं ततः । कश्मीरोर्व्यां पपातासौ विजिगृक्षुः[2] क्षमाभुजा ॥१९९६॥

गिरीनुल्लङ्घ्य कार्कोटद्रङ्गे विहितबान्धवम् । निपत्य मार्गेमुद्याने यावदन्वैक्ष डामरैः ॥१९९७॥

नावाप योगं निर्गत्य क्षिप्रकारी क्षमापतिः । सर्वोद्योगेन ते तावदुत्थानोपहतं व्यधात् ॥१९९८॥

अत्रान्तरे प्रतीहारः प्रापास्तमपवीक्ष्याम् । न संपत्स्वल्पपुण्यानामनपायित्वमायुषः ॥१९९९॥

उत्सारणप्रियतया परिहृतसर्वद्वारं गृहे निरनुरोधतया वसन्तः ।

2000 संपल्लघुकृतधियोप्रतिघप्रवृत्तेर्धिङ्जायते न रभसान्नियतेर्निपातम् ॥२०००॥

कुर्वाणोत्सारणं तस्य गृहजा सततं नृणाम् । नाज्ञासीत्सुखसुप्तस्य पृष्ठे पतितमन्तकम् ॥२००१॥

ज्वरितः स हि निष्ठ्यूतज्वरः स्वपिमीति विज्वरः । विदित्वेति न विज्ञातः स्वपन्नेव मृतस्तदा ॥२००२॥

सल्लोठने कोष्ठकेथ प्रयाते नृपतिः पुनः । न स मल्लार्जुनो नापि कोष्ठको न स लोठनः ॥२००३॥

प्रमोदयन्नं पार्श्वस्थितं मल्लार्जुनोवधीत् । तस्मै चुकोप माध्यस्थ्ये स्थापितस्तेन कोष्ठकः ॥२००४॥

2005 अनुनिन्ये न तं खिन्नं स संभृतबलस्ततः । अभिषेणयितुं क्रोधादधावत्सहलोठनम् ॥२००५॥

कोष्ठको मल्लकोष्ठाद्यैर्मितैर्युक्तोपि सादिभिः । तीर्त्वा परोष्णीं तत्सेनां निर्ममाथाप्रमाथिनीम् ॥२००६॥

हतेषु तेषु संग्रामे स्वशसैन्यप्रकाशिषु । वधं प्राप्तः सिंहभूभृत्पात्र स नृपो हतः ॥२००७॥

आरूढः कोष्ठमूर्धानं मानमूर्धः परिच्युतः । प्रमप्रतापो भूयोपि समधत्त स कोष्ठकम् ॥२००८॥

विसृज्य लोठनं निर्विर्वैरमपामसुग्नः । आनिर्वाहितवैरेण तेन द्वैधं स डामरः ॥२००९॥

2010 यत्नाधिकारिणः भुल्कं गुरुताकारि राजवत् । तेन स्वनाम्ना भाण्डेषु प्रक्षे सिन्दूरमुद्रणम् ॥२०१०॥

जतुसंहतयोः काचकलशीरत्नयोरिव । क्षणे क्षणे संभिन्नकस्तयोः समुदपद्यत ॥२०११॥

---

१९८४. [1]) A, ४. १९९१. [1]) A, indicates here a *lacuna* of two *aksharas*; C तदा. १९९४. [1]) Emended; A °वसन्. १९९६. [1]) Emended; A °स्थैर्यै.—[2]) Emended with C; A °विजिगृक्षु. १९९९. [1]) Emended with C; A °हारमपारस्तमपवीक्ष्या. २००८. [1]) Emended with C; A कोष्ठमू°. २०१०. [1]) Emended; A °मुद्रणाम्.

निर्व्यूढिभून्यैर्यापास्थैर्विरागं लोहरेश्वरः । निन्ये लवन्यं सोम्पेनं स्पर्शावम्भिरमकुशैः ||२०१२||
डामरेण ततो दत्वात्कन्दं तत्कटकान्तरम् । पराद्ध्याँयुधधुर्याभरणाद्य--¹र्दं कृतम् ||२०१३||
दत्वा ह--¹रायस्यां विषमैर्हडपौरुषैः । एवं तं कोष्ठको मूढः सुखोच्छेदं व्यधाद्विषाम् ||२०१४||
अनयावामसंबन्धाच्छ्रुतं मुख्यमन्त्रिणाम् । अत्रान्तरे नृपो हन्तुं माञ्जिकं स व्यचिन्तयत् ||२०१५|| 2015
आसीत्कठोरतारुण्यतरङ्गितमनोभवः । मुख्यकं स हि तन्मातुरौपपत्येन संमतः ||२०१६||
आहारावसरे तीक्ष्णाः कृतसंज्ञाः समामुजा । दत्तप्रहरणाः प्राणैर्भुञ्जानं तं व्ययोजयन् ||२०१७||
धुन्वन्नसिपटं बद्धवीरपट्टो रटन्बहु । निर्लुण्ठयन्स तस्वेनां तां तामारभटीं व्यधात् ||२०१८||
अथाश्लिष्यत न द्रोहमप्यारिन्दाकरोत्यहो । राज्ञा विषमितस्तेन रसदानेन स स्वयम् ||२०१९||
देवलोऽस्यारितां यातस्ततः सिंहमहीपतिः । संदधे कोष्ठकं मुञ्जि माहिणोद्विजयाय च ||२०२०|| 2020
मार्गस्थ याममात्रेण गम्यस्यान्तिकमाप सः । यावत्पुरं प्रहरणात्कोष्ठकेनाकुलीकृतः ||२०२१||
अन्तर्भेदाकुलस्तावत्स्थवस्थातुमक्षमः । गृहीतकोशः संत्यज्य कोट्टं¹ मल्लार्जुनो ययौ ||२०२२||
राज्यभ्रष्टः स निर्लुण्ठ्यमानो मार्गेषु तस्करैः । अवनाहोन्मुखो रक्षन्कोशशेषं कथंचन ||२०२३||
अष्टमहारश्चशरेष्वथाष्टमवत्सरे । राज्यान्तेन द्वितीयस्यां वैशाखस्यासितेऽहनि ||२०२४||
दाता शिखामृतवचैरमृतं विलब्ध--¹ण्यकृत्समिति लूनशिराः कृतश्च ।
ईशेन यत्र तदकार्युपकर्तुरस्तु तत्रापरः क इव संनिहितो हितः ||२०२५|| 2025
मुक्ता इमा इति जलं नलिनेषु लीनं ज्ञातृत्वमेतदिति आश्रमिनेषु लग्नम् ।
यज्ज्ञायते किमपि हन्त विमोहनी सा शक्तिः श्रियः स्फुरति कापि तदाश्रयायाः ||२०२६||
अन्त्यकृतप्रहरणा विपिनेषु केऽपि प्राणेन केचन वृशाय रसज्ञवान्ये ।
ते केऽपि सन्ति तु नरेन्द्रगृहेषु हिंस्रा यावैव ये विरचयन्ति किलोपघातम् ||२०२७||
ज्योतीरसाश्मन इवाभिनमीश्वरस्य निर्दग्धुमिन्धनमिवागतं न शक्ताः ।
पश्चाद्भवेयादि स तत्प्रसृतावकाशाः कुर्युः खला रविकरा इव भस्मशेषम् ||२०२८||
कापिलं हर्षटं कोट्टं नीतवान्मण्डलेशिताम् । उच्चैः कोटभृत्यानां संमदं कम्पनाधिपः ||२०२९||
कुर्वञ्छाय्यां पुनर्मेनु मण्डलं तद्यलम्भत । दिनानि कतिचित्तत्र यावत्प्रकृतिदुर्जनैः ||२०३०|| 2030
विटैरसूयाविषमैः प्रसादावसरो नृपः । तावत्कलुषतां तस्मिन्नुपजापैरनीयत ||२०३१|| तिलकम्¹ ||
राजा भवन्परः कोऽस्तु स्वाविचारदृढक्रियः । एषोऽपि त्रिभुवनभूषण धूर्तैः प्रवर्त्यते ||२०३२||
शैशवे बालि¹शप्रायैः संस्तुतैर्जाड्यमर्पितम् । प्रौढावपि न वा यायाद्राज्ञः कार्ण्यं²मणेरिव ||२०३३||
भृत्यान्तरापरिज्ञानमात्रेण जगतीभुजाम् । निरागसो वधपातः कष्टं राष्ट्रस्य जायते ||२०३४||

---

२०१३. ¹) A₁ indicates here a *lacuna* of one *akshara*; C [illegible]. २०१४. ¹) Thus or स्व-- A₁; C [illegible]. २०१९. ¹) Cf. viii. 1818. 1980. २०२२. ¹) Emended; A कोट्टे. २०२४. ¹) Thus A; text evidently corrupt; perhaps read °[illegible]°.—²) Thus corr. by later hand from A₁ °स्यासितेऽहनि. २०२५. ¹) Thus A₁; C [illegible]°; perhaps read [illegible]°. २०३१. ¹) A₁ writes here ४ instead of तिलकम् (?). २०३३. ¹) A बालि°.—²) Thus corr. by A₂ from A₁ कार्श्यं.

2035 कृत्ये व्यवसितेसाध्ये हास्यः स्याल्लक्ष्मकादिवत् । सुज्जिः प्रायोजि राजाप्तैर्भेत्तुमिति लोहरम् ॥२०३५॥
निर्व्यूढाद्भुतकार्यस्य तस्मिन्नप्राप्ततुल्यया । अमोघया प्रजह्रुस्ते पापाः पैशुनविद्यया ॥२०३६॥
गाम्भीर्यालक्ष्यविकृतैः प्रीत्यालापैर्महीपतेः । प्रत्याघातः कलुषतां नाज्ञासीत्कम्पनापतिः ॥२०३७॥
प्रकृत्या तस्य निर्द्रोहतया शङ्कास्य तादृशाम् । प्रियं कृतवतश्च स्यादविश्वासोथ वा कथम् ॥२०३८॥
प्रीतिरासीच्च नृपतेस्तत्कृत्यैकचितैरपि । अप्रियप्रणयालापैर्विरक्तस्येव कामिनः ॥२०३९॥
2040 जित्वा राष्ट्रद्वयं प्राप्तां ख्यातिं नृपतेरिति । बहुमानेन दर्पाच्च स्वच्छन्दं स व्यवाहरत् ॥२०४०॥
पौरानगारहरणाद्यपकारैर्निरङ्कुशः । तद्बन्धवो बाध्यमाना विरागमनयञ्जनम् ॥ २०४१॥
निजागःस्मरणात्कोष्ठेश्वरी न व्यश्वसीन्नृपे । न पितृव्योपि भूपालकोपाविष्कृतविक्रिये ॥२०४२॥
क्रोधं प्रजोपतापेन संचिन्वन्सुज्जिना समम् । संबन्धकृच्चित्ररथो नाभूदभिमतः प्रभोः ॥२०४३॥
[1]धन्योदयौ नृपः सुज्जिदाक्षिण्यालक्ष्यसौहृदः । अपुष्णात्प्रविशैर्गूढं राजपुर्यां[1] कृतस्थिती ॥२०४४॥
2045 तौ चाचालगतौ[1] शीतज्वरनष्टपरिच्छदौ । मल्लार्जुनस्य साम्राज्यभ्रंशेपि विपुलश्रियः ॥२०४५॥
सुज्जिद्वेषात्पुरा दूतैराहूतो लक्ष्मकेण यः । आगच्छत्सञ्जपालः स प्राप राजपुरीं तदा ॥२०४६॥
सुज्जिचित्ररथाभ्यां तं दृढचेष्टेन भूभुजा । अविदृष्टप्रवेशार्थं दूतैर्मल्लार्जुनोभजत् ॥२०४७॥
तन्निमित्तं स केनापि सामन्तेन सहाध्वनि । संजातकलहे शस्त्रक्षतो लक्ष्म्या व्ययुज्यत ॥२०४८॥
तथाभूतमपि स्वर्णं भूर्भुरीकृत्य नाशकत् । यत्तन्मल्लार्जुनो नेतुं कार्यज्ञैस्तदपूज्यत ॥२०४९॥
2050 सोस्वतन्त्रेण राज्ञा च सौजन्याद्भिल्हणेन च । दूतैः प्रच्छन्नमाहूतो रभसादाययौ ततः ॥२०५०॥
न[1] व्यग्रमेवं चेद्धन्युर्मामनुबेति चिन्तयन् । अभिज्ञविषमे मार्गे पुरं साहसिकोविशत् ॥२०५१॥
स कन्यकुब्जगौडादिमण्डलेषु महीभुजाम् । स्पर्धया लब्धसत्कारो भूपतेर्मन्त्रितान्विताम् ॥२०५२॥
अनवाप्य निजे देशे सत्क्रियां दुःखितोभवत् । राजधान्यन्तिकैः पौरैः प्रहृताशु व्यलोक्यत ॥२०५३॥
भूपालोगणयित्वाथ मन्त्रिणो दत्तदर्शनः । भेजे स्वहस्तताम्बूलदानप्रक्रिययैव तम् ॥२०५४॥
2055 निष्किंचनोपि सत्ख्यातिमात्रेणानुगतो जनैः । यातायातं नृपगृहे कुर्वञ्छ्रामूनकल्पयत् ॥२०५५॥
व्याहारव्यवहारादि व्यालोक्यालौकिकाकृतेः । पुरुषान्तरवित्सुज्जिस्तस्य स्वैरमवेपत ॥२०५६॥
दध्यौ सोथ ध्रुवं राष्ट्रेऽखर्वसर्वंकषक्रियम् । नैवमेवाद्भुतं भूतमेतादृक्शान्तिमेष्यति ॥२०५७॥
तांस्तान्देशान्तरे वीरानुत्सिक्तान्दृष्टवांश्च च । तं पर्यालोच्य विभ्रान्ति सोत्सेकानाममन्यत ॥२०५८॥
भवितव्यतया दर्पेणाथ नीतः स्वतन्त्रताम् । परिवादावहं सुज्जिस्ततो यत्तदव्याहरत् ॥२०५९॥
2060 स्वानुगैर्लुण्ठितं क्षमामक्षाणं दया द्विजम् । प्रासैर्मडवराज्यस्थः स शृगालमिवावधीत् ॥२०६०॥
ख्याते कुकर्मणा तेन विश्राव्य जनमागतम् । तं प्रत्युपक्रियं लोको विरागं नगरेप्यगात् ॥२०६१॥
अत्रान्तरे बन्धुमेकं व्यधुः कमलियादयः । अगण्यप्रायमुत्सेकादुत्तमप्रक्रियास्पदम् ॥२०६२॥
मयि सत्यपरोपि स्यात्किमनुग्राहकः स्मयात् । अकारि चारणप्रायस्तादृशोपीति सुज्जिना ॥२०६३॥

२०४४. [1]) Emended; A धन्योदयो. २०४४. [1]) Emended; A राज्यपुर्यां. २०४५. [1]) Doubtful emendation; A चाचालमतौ; G चाचालगतौ. २०५१. [1]) न supplied with C; A व्यग्र – च.

संजातयौनसंबन्धबन्धः कमलियादिभिः । अथास्यासिनगोस्थयै सामर्थ्याद्रिल्हणोप्यभूत् ॥२०६४॥
अल्पेन हेतुनोद्भूते द्वैते तेषां च तस्य च । खलपैशुनसेकैस्तत्प्रापाशु घनशाखताम् ॥२०६५॥
प्रकृत्योत्सिक्तगुरुसेकावहैः समुदवीविपत्[1] । दुर्मन्त्रैर्विषमैर्वाक्यैः साहदेविस्समुल्हणः ॥२०६६॥
अरमांनां सहास्माभिः क्षमते समशीर्षिकाम् । कृतघ्नोयमिति स्वैरं मन्युं राज्यपि सोग्रहीत् ॥२०६७॥
भिन्नस्तु भूपतिस्तस्माद्रिल्हणं बाह्यभृत्यवत्[1] । मन्त्रस्वैरकथाद्येषु विस्रम्भेषु व्यवर्जयत् ॥२०६८॥
स तु धूर्तस्तदुर्लक्ष्यताद्वसत्स्वामिवैकृतः । स्वेषां धैर्यं परेषां तु संत्रासं माययातनोत् ॥२०६९॥
समयद्रविताकाङ्क्ष्यसंस्तवः पक्षयोर्द्वयोः । तस्य तु प्रययौ सञ्जपालो वातेन भिद्यताम् ॥२०७०॥
संनद्धयोः प्रविशतोरन्योन्यस्पर्धया तयोः । क्षणे क्षणे राजधानी ययौ संभ्रमलोलताम् ॥२०७१॥
सुज्जिः सभूपालाश्लेषु प्रतिपक्षान्युयुत्सया । महीमानोत्सवास्थाने संक्षोभमुदपादयत् ॥२०७२॥
कृकाटिकान्यस्तहस्तो ह्यःस्थेमावेदितो हि सः । तं निर्भत्स्य शिलालेपं क्रोधकृष्णाक्षरीकरोत् ॥२०७३॥
लिखितैरिव तान्सर्वैः सोढुं रक्षणमीशितुः । मिथ्या तथ्यमिवोदीर्य संयभ्यद्भिः समर्थ्यताम् ॥२०७४॥
उपांशु श्रावयद्भ्यर्णे भूपतिः परिसान्त्व्य तम् । सत्यस्मिन्नास्ति नः किंचिदित्यन्तस्तु व्यचिन्तयत् ॥२०७५॥
चक्रे मडवराज्यस्थैरथ प्रायो द्विजातिभिः । न सुज्जेः कम्पनेशत्वमिच्छाम इति वादिभिः ॥२०७६॥
अन्विष्य विद्विषः शङ्कां मन्त्रविनिशि रिल्हणः । संनद्धसैन्यमानिन्ये पञ्चचन्द्रं तदग्रियम् ॥२०७७॥
शशङ्के सञ्जपालाच्च तस्माच्च बहुसैनिकात् । सुज्जिरन्यानगणयन्नयुडाख्य च तद्रिपुः ॥२०७८॥
आस्कन्दभीत्या निर्गत्य हयारोहैः समं गृहात् । व्युष्टामीको निरुद्धालो जजागाराथ सोध्वनि ॥२०७९॥
भूपतिप्रातिलोम्येन वर्तमानस्तदाभवत् । कोष्ठेश्वरोपि संनद्धः सुज्जिना बद्धसौहृदः ॥२०८०॥
स्थितमप्रातिलोम्येन सोवधीन्मनुजेश्वरम् । इति द्वैध्योपि नितरां द्वैध्यतां नृपतेरगात् ॥२०८१॥
तथा स्थिते निशीथिन्यामाबद्धयुस्तस्य विद्विषः । बुभुक्षाहेतुतां राज्ञः स्वगुप्त्यै तेन या कृता ॥२०८२॥
अतथ्यं तथ्यवद्वस्तु तथ्यं वातथ्यवन्नृपः । यः पश्येन्मूढवत्सोर्थैस्त्यक्तोनर्थैः कदर्थ्यते ॥२०८३॥
रत्नज्योतिर्हुतवहधिया त्यज्यते दृष्टिपातः क्ष्याबाह्याणामितरविषयः स्वस्य संभाव्यते च ।
वस्त्वेकैकं यदिह न मृषा तन्मृषा यन्मृषा तत्सत्यं तेनेत्थं किमिव न जनैर्दृश्यते तत्त्वशून्यैः ॥२०८४॥
राजाथ तद्वधाद्भ्यवद्जानन्दीस्थ्यभेषजम् । न्ययुङ्क्त तस्य तीक्ष्णत्वे सञ्जपालं महौजसः ॥२०८५॥
स कापुरुषवद्वीरः प्रहर्तुं छद्मनाक्षमः । काकुमाक्षिप्य तं हन्तुं तत्र नैक्षत क्षणम् ॥२०८६॥
मायाप्रयोगानन्योन्यमुद्दिश्य स्पृशतोर्द्वयोः । क्षणे क्षणेभजद्राष्ट्रं त्रासोल्लासविलोलताम् ॥२०८७॥
प्रत्याशङ्क्योदयं रात्रौ सुज्जौ जाग्रति पूर्ववत् । अभ्यपद्यामिकग्रामं राजधान्यप्यजायत ॥२०८८॥
राज्ञाविर्वासने रिल्हणस्य सुज्जेरभीप्सिते । पार्थिवोप्यनुमन्ताभूत्सभीतः प्रस्तवास्थिती[1] ॥२०८९॥
स निर्ययासुरामन्त्र्य[1] तत्सेवानुभिताः प्रजाः । संदर्श्य द्वारपतिना राज्ञो गुप्त्या समर्थितः ॥२०९०॥
संमन्त्र्य नृपतिं मैत्रीप्रार्थिना सुज्जिना समम् । पीत्वा कोशं सञ्जपालः प्रातो रात्रौ व्यजिज्ञपत् ॥२०९१॥

२०६६. [1]) Thus corr. by A₁ from A समुदवीविपत्. २०६८. [1]) Emended; A बाह्य°. २०८९. [1]) Emended with C; A °वास्तु:. २०९०. [1]) Emended with C; A निर्यासु°.

प्रेरणादुल्हणादीनां स्वोत्सेकादेव वर्तते । राजन्मुञ्जेरभिप्रायः[1] स्पर्धिनोन्यायमिच्छतः ॥२०९२॥

निर्द्रोहस्योपकर्तुश्च मते स्थास्यति मे नृपः । निर्वास्य रिल्हणं चित्ररथं बद्ध्वा महाधनम् ॥२०९३॥

लोहरादर्थिनिर्दिष्टानधान्कोशं च भूपतेः । नयेयं संभृतो हन्यां दुर्भृत्यमपि कोष्ठकम् ॥२०९४॥

2095 कार्योपरोधान्निर्बन्धः संबन्धेष्वेव नास्ति मे । दाक्षिण्यं स्वामिनः कृत्ये यस्य प्राणास्तृणोपमाः ॥२०९५॥

मध्येव प्रतिराजादिभिर्जयस्वीकृतोद्यमे । दुर्वाविभ्रान्तचित्तोयं नृपश्रीभोगभाग्भवेत् ॥२०९६॥

साहायकाय द्वारेशमुल्हणं रिल्हणाभये । कार्यजाते च मामीशमाकारयितुमिच्छति ॥२०९७॥

भूते च मामुल्हणश्च त्वं चाहं चाभिभेदिनः । मिलिता यत्र तत्रास्ति गण्यः को नु नृपास्पदे ॥२०९८॥

इहस्था नयदायादमेकमानीय कंचन । सिद्धोस्य पदे राज्ञो नानुतिष्ठेदिदं यदि ॥२०९९॥

2100 गुणान्प्रसरणप्रासादुन्धायेव गिरा सृजन् । द्विजांशुभङ्ग्या राजाय विनिश्वस्याब्रवीद्वचः[1] ॥२१००॥

यथाह स तथैवैतच्च द्रोहो नासमर्थता । नौदासीन्यमयैतस्मिन्संभाव्यमभिमानिनि ॥२१०१॥

निष्प्रतिद्वन्द्वभावोस्य दुरुच्छेदो भवेदिति । इयमप्यन्यतस्तावदस्त्वपायधियः कथा ॥२१०२॥

किं तु दूये यदाकोपप्रायम्यात्त्यतोपि[1] वा । निर्द्रोहस्य वधो ध्यातो योस्यासौ कार्य एव तत् ॥२१०३॥

अर्थोयमल्पसत्त्वानामपेत्साभिर्हि मन्त्रितः । नूनं तेनोपलभ्येत तानावर्जयता धनैः ॥२१०४॥

2105 पुण्यैरपरिहार्यैः स्वैर्जायेर्वा मादृशाममी । जानतामपि जायन्ते निर्गुणा भोगभागिनः ॥२१०५॥

बालिशान्भूकृतां[1] प्रायश्चित्तमेतन्महीभुजाम् । तन्मौर्ख्यस्य फलं मूढैरेतैर्यदनुभूयते ॥२१०६॥

दुर्गमो भूमिभृन्मार्गो विटैर्दुद्रुपैरिव । ... .........................[1] ॥२१०७॥

तन्वाना व्रतवैमुख्यं रसनालौल्यशालिनः । परपिण्डोपहर्तारः खलाः कौलेयका अपि ॥२१०८॥

इत्थं खलोपतापेन प्रयुक्तं तद्वयात्पुनः । असंहार्यं कुकर्मेदं पश्चात्तापाय नो भवेत् ॥२१०९॥

2110 इत्युदीर्य नृपः सुज्जेः सज्जो व्यापादसिद्धये । तमजागारयच्चश्चजागरं चापहीत्स्वयम् ॥२११०॥

विश्रम्भमन्त्रजुतेः शङ्कां जिघांसुः सुज्जिरित्यपि । तथ्यं भृत्यवचो जानंस्तस्थौ धीःस्थ्येन पार्थिवः ॥२१११॥

गत्वा स्वयं गृहान्योनसंबन्धं कुरुतं[1] युवाम् । इत्युक्त्वा रिल्हणेनाथ स सुज्जिं समयोजयत् ॥२११२॥

विश्वास्यापि तथा हन्तुं तं प्रसङ्गमनाप्नुवन् । उवताम्यद्दिवारात्रं तल्पोपर्यवशो लुठन् ॥२११३॥

सञ्जपाले गृहाद्बन्धुनाशदुःखिन्यथागते । आशङ्क्य साहसासिद्धिमधिकं पर्यतप्यत ॥२११४॥

2115 निपत्य वीरशयने सुस्सलक्ष्मापसत्क्रियाम् । भ्रातरो यस्य कल्याणराजाद्या व्यस्मरन्युधि ॥२११५॥

सेनानीः कुलराजः स कथातो व्यायामविद्यया । प्राणैरानृण्यमिच्छंस्तमपृच्छच्छोककारणम् ॥२११६॥ युग्मम्॥

स संस्थापयितुं हन्तुं चाप्यशक्यं न्यवेदयत् । तस्याप्रतिसमाधेयं कम्पनाधीश्वराद्भयम् ॥२११७॥

कियदेतन्निजप्राणमात्रलभ्यं महीभुजाम् । इत्याभाष्य स जग्राह साहसाध्यवसायताम् ॥२११८॥

दिनद्वयमनायातो गृहेभ्यः कम्पनापतिः । न प्रातिभाव्यमभजत्तस्य मृत्योः श्रियोथ वा ॥२११९॥

2120 विश्रम्भभृत्यः शृङ्गारनामा चाप्यब्रवीत्प्रभोः । तं दृष्टवांस्तृतीयेह्नि शयनेवगणं स्थितम् ॥२१२०॥

२०९२. [1]) Emended; A °भावस्पर्धिनो°. २१००. [1]) Emended with C; A [illegible]. २१०३. [1]) Emended; A च आकोप°; G *sec. manu* यत्तः कों°. २१०६. [1]) A बालि°. २१०७. [1]) Here two *pâdas* are missing; C supplements क स नीतिज्ञविशेष, क च ते खलकुक्कुरः. २११२. [1]) Emended; A कुरुतां. २११६. [1]) A, २.

शोभोपयोगिनो भर्तुर्नित्यं सततसेवकाः । कर्तुं साहससाचिव्यं विदूरेण तु पार्थिते ॥२१२१॥

करे पिनाकी मकराङ्कशत्रोः शोभाविशेषाय सदानुषक्तः ।
पुराहवे कार्मुककर्म तस्य तत्कालमाप्तेन तु मन्दरेण ॥२१२२॥

ताम्बूलहारकव्याजात्ततो राजा व्यसर्जयत् । कुलराजं तमव्याजधैर्यासंलक्ष्यविक्रियम् ॥२१२३॥

ध्रुवं मृत्युः पुनर्नाहमागन्ता तत्ततोस्य कः । आरब्धेति स निन्ये न ताम्बूलं स्वर्णभाजने ॥२१२४॥

व्यसनप्रशमे राज्ञः स्वदेहत्यागतोनुगाः । एवं कर्तुं यतन्तेन्ये निर्व्यूढौ स्खलिताः पुनः ॥२१२५॥ 2125

सगणोगणो वास्तु निहतो नियतं मया । जागर्त्यतः परं देव इत्युदीर्य विनिर्ययौ ॥२१२६॥

गतस्य साहसासिद्धौ शक्यं शङ्क्यं पलायनम् । ........................ ॥२१२७॥

व्रजन्स्वामिहितं कृत्वा पुनः पथा निनाय सः । शस्त्रिणौ द्वौ मिथाच्छस्त्रौ बन्धस्थाने परामृशन् ॥२१२८॥

स्वयं गृहीत्वा ताम्बूलं राज्ञा प्रहित इत्यथ । द्वाःस्थेनावेदितः सुज्जेः पार्श्वं रुद्धानुगोविशत् ॥२१२९॥

ददर्शोच्चासनस्थं च मितैः परिजनैर्युतम् । यूथनाथमिवात्यल्पैर्द्विपैरहितान्तिकम् ॥२१३०॥ 2130

गृहीतवन्दितस्वामिताम्बूलः सस्मितं स तम् । पृष्ट्वा कृत्यादि नृपतेः सत्कृत्य व्यसृजत्क्षणात् ॥२१३१॥

जनप्रवेशाशङ्की स त्वरमाणस्तमब्रवीत् । कृतागाः कोपि कैवर्तशस्त्रभृन्मत्समाश्रितः ॥२१३२॥

तस्याक्षेपपरान्भृत्यान्स्वामिवार्याधुना तव । संमान्या वयमित्यपेलक्षयन्प्रकृतिक्षयम् ॥२१३३॥

सोत्सेकामिव तां वाचं स दर्पादवधीरयन् । तस्य रूक्षाक्षरं नाहं कुर्यामित्यब्रवीद्वचः ॥२१३४॥

स रोषादिव निर्गच्छन्मान्योसाविति वादिभिः । तं सान्त्वयित्वा तद्भृत्यै रुद्ध्वा व्यावर्तितः पुनः ॥२१३५॥ 2135

तेनाभ्यादि ततः कर्तुं विज्ञप्तिं वस्तुनोमुनः । सज्जयोरादिश द्वारप्रवेशं भृत्ययोर्मम ॥२१३६॥

अवशेनेव तेनाथ वीक्ष्य तौ संप्रवेशितौ । सहाबलाभाद्बुभुक्षुः प्रजिहीर्षुरवर्तत ॥२१३७॥

बाणाद्य कुर्वीं प्रातर्वो विधेयमिति तान्वदन् । दत्तपृष्ठो निदिद्रासुस्तल्पे सुज्जिर्जहौ वपुः ॥२१३८॥

गत्वाथ किंचिद्व्यावृत्तो निष्कृष्टक्षुरिको जवात् । प्राहरत्कुलराजोस्य वामे पार्श्वे कृतत्वरः ॥२१३९॥

तस्य धिक्कुर्वतो द्रोहमधावत्क्षुरिकां प्रति । यावत्पाणिः प्रहरणं तावत्सर्वेपि ते व्यधुः ॥२१४०॥ 2140

विमर्शः पश्यतां यावदाशङ्क्ये तत्र नोद्ययौ । स तावदेव च्छविरापेतश्वास इवाभवत् ॥२१४१॥

भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु । चकर्ष शस्त्रं तत्रैकः पिञ्छदेवः परं तदा ॥२१४२॥

प्रहर्तृस्तैस्त्रिभिस्तुल्यप्रतिप्रहतिभिः क्षतः । भ्राम्यन्च्युतासृक्तस्मात्स मण्डपान्निरवास्यत ॥२१४३॥

स्थितान्दत्तार्गले धाम्नि रुद्धद्वारतमोरयः । जिघांसवः सुज्जिभृत्यास्ततस्तान्पर्यवारयन् ॥२१४४॥

क्षमोरिप्रतिकुर्वाणा भज्यमानैरिभिर्व्यधुः । ते द्वारे तूलशय्यां तां मोक्षार्थं शवमुद्धृतम् ॥२१४५॥ 2145

खड्गेषुभल्लपरशुक्षुरिकाश्माभिवर्षिणः । तान्भ्रमभ्रमयन्मार्गैरनेकैस्ते विविक्षवः ॥२१४६॥

नैराश्यहेतोर्विशतां तेषां संकटवर्तिभिः । पृष्ठाच्छित्त्वा शिरः सुज्जेरङ्गनेक्षिप्यताथ तैः ॥२१४७॥

अप्रतिःसरणाभीक्ष्णभुग्नेक्षणपुटभ्रुमि । उत्तरीयकवच्छन्नससंध्याणपुटद्वयम् ॥२१४८॥

---

२१२४. 1) Thus emended in C; A आरेभेति. २१२५. 1) Emended; A °तोऽस्वगाः. २१२७. 1) Here two *pádas* are missing; C supplements इति चिन्तयतस्तस्य मन आसीद्विशृङ्खलं. २१२८. 1) Emended; A °हृषन्. २१२९. 1) Emended; A द्वास्थेन. २१३१. 1) Emended; A दृष्ट्वा. २१३९. 1) Emended with C; A कुजरा°. २१४१. 1) A विमर्शः. २१४६. 1) Emended; A तान्स तभ्रम°.

अक्ष्णोर्वेश्मन्यमाणस्य लोकस्य प्रतिबिम्बकैः । संभाव्यमानसंस्पन्दस्तोकप्रव्यक्ततारकम् ॥२१४९॥

2150 स्थपुटस्याक्रमच्छेदाद्गलमांसस्य संधिषु । हरिद्रार्द्रैरिवाबद्धमेदोग्रन्थिभिरुल्बणम् ॥२१५०॥

धूलिध्वस्तकचश्मश्रु तदेतदिति निश्चयम् । परं भालतलस्थेन स्वल्पकुङ्कुमबिन्दुना ॥२१५१॥

गृहीत्वा तिर्यक्पतनव्यक्तसंध्यन्तराहितम् । चपलस्तुमुलाकम्पा भृत्याः कापि विदुद्रुवुः ॥२१५२॥कुलकम्॥

तीक्ष्णान्प्रयुज्य क्ष्मापस्तु तिष्ठन्व्याकुलधीस्तदा । बहिर्वीक्ष्य जनक्षोभं साहसं निश्चिकाय तम् ॥२१५३॥

सुज्जौ हते क्षते वापि कार्यमेतदिति द्रुतम् । संनह्य सैन्यमादिक्षत्स तन्मन्दिरवेष्टनम् ॥२१५४॥

2155 मिथ्यैव सुज्जिर्निस्तीर्ण इति श्रुतवता जनात् । स्वयमपाहि भूपेन ततः समरसंभ्रमः ॥२१५५॥

निःसंशयं हतं ज्ञात्वा सुज्जिं राजोपजीविनः । तत्र स्थितं शिशुरथं सर्वेऽप्यमबन्धयन् ॥२१५६॥

हिल्लात्मजन्मनः सुज्जिभ्रातृस्यालस्य कौशलम् । कलशास्यांश निर्वर्ण्य वाणीयं पुण्यभागिनी ॥२१५७॥[1]

आक्षिप्यमाणैर्भिक्षाचैरन्ते धीरोचितं कृतम् । तेन स्वसंशयस्थेन सदाचाराच्च विच्युतम् ॥२१५८॥

राजौकस्थैव तां वार्तां श्रुत्वा स प्रपलायितः । हतस्य स्वामिनोऽभ्यर्णे जिहासुर्जीवितं ययौ ॥२१५९॥

2160 द्वारे पद्मरतिभिर्भञ्जन्तं राजसैनिकाः । अपसार्य कथंचित्तं तीक्ष्णाः कृच्छ्रादरक्षिषुः ॥२१६०॥

प्रविष्टेऽस्मिन्ननिर्व्यूढपीडिते मण्डपान्तरम् । लब्धप्राणा नृपाभ्यर्णं कुलराजादयो ययुः ॥२१६१॥

हठप्रविष्टो हतवांस्तत्रैकं महाभटम् । शरैरेव हतो दूरात्कथंचित्परिपन्थिभिः ॥२१६२॥

आयातं क्षुभिते देशे सज्जपाले महीपतिः । रिल्हणं चोल्हणं हन्तुं प्राहिणोद्विहितत्वरः ॥२१६३॥

यातो मार्गात्पलाय्यायं परिशङ्क्येति रिल्हणः । क्षिप्तिकातटपर्यन्तमटित्वा पश्चदाययौ ॥२१६४॥[1]

2165 पूर्वायातः सज्जपालो गृहद्वाराद्विनिर्ययौ । उल्हणस्य पथो रुन्धन्बहून्प्रहरन्रणे ॥२१६५॥

तावदेकस्य खड्गेन निकृत्ते दोष्णि दक्षिणे । त्वङ्मात्रशेषे छिन्नास्थिस्नायुग्रन्थिरजायत ॥२१६६॥तिलकम्॥

अगण्यमायतां प्राप्ते वंशे यत्कौशलादसौ । दिगन्तरेषु स्वस्मिंश्च देशे प्राप प्रथां पुनः ॥२१६७॥

फलकाले समासन्ने शौर्यप्रतिभुवाभजत् । स तेन दोष्णा वैकल्यं धिगिच्छां विधुरां विधेः ॥२१६८॥

स प्राग्वदुदयावाप्तौ भवेदविकलो यदि । फलेन तस्य जानीयादिच्छां लोकोऽयमद्भुताम् ॥२१६९॥

पीतामृतस्य क्षतविमहत्त्वं न प्राभविष्यद्यदि नाम राहोः ।

2170 अज्ञास्यदिच्छां तदमुष्य लोकः सामर्थ्यभाजः सुचिरप्रवृत्ताम् ॥२१७०॥

दृष्टः त्रील्लाभिधो वृद्धः पितृव्यः साहदेविना । सस्पृहं निहतः साधु ——[1] जातव्रणार्दिना ॥२१७१॥

तस्यार्त्यो विशतो वेश्म जज्जलाख्योऽग्रगो हतः । मान्योऽनुगो भटौ द्वौ च यामिकश्च जनंगमः ॥२१७२॥

बालं तनयमालोक्य निषण्णस्याङ्कनस्थितेः । तस्यानिर्गच्छतो गेहे रिल्हणोऽग्निमदापयत् ॥२१७३॥

आनीयमानो धूमान्धो बद्धा मुख्यैः स सैनिकैः । गृहद्वारे हतः कैश्चित्प्राकृतैर्गणविक्रमः ॥२१७४॥

2175 तस्य प्रधानप्रकृतिक्षयहेतोर्महीपतिः । मुण्डमप्यवलोक्यासीदशान्तक्रोधविक्रियः ॥२१७५॥

व्यापाद्यमानाः साकोपं भूपतिप्रेरितैर्भटैः । उच्चावचाः सुज्जिभृत्याः कृत्यं सत्त्वोचितं व्यधुः ॥२१७६॥

---

२१५७. [1]) Emended with C; A कल॰ — स्याद्य. २१६४. [1]) A₁ ३. २१७१. [1]) Before or after साधु two *aksharas* are missing; the *lacuna* not indicated in A; C supplements सम्यग्ज°.

अनुजो लक्ष्मकः सुज्जेर्बद्ध्वा नीतः स विक्रियाम् । नृपं वीक्ष्यावशैः कैश्चिद्राजधान्यङ्गने हतः ॥२१७७॥

भ्राता पितृव्यजस्तस्य संगटाख्यो नृपाङ्गने । भटवट इव प्राणानौचित्येनामुचत्कृती ॥२१७८॥

प्रविष्टः शरणं बाणशंस्यैः पापैः प्रमापितः । उन्मत्तो मुम्मुनिस्तस्य भ्राता कैश्चित्स्वमन्दिरे ॥२१७९॥

सुज्जिस्यात्मजस्तु भृङ्गारवृत्त्या भङ्गुरया हतः । महाकुलीनो बिम्बरश्चौचित्येन च चित्रियः ॥२१८०॥ 2180

साङ्गिकाख्यः प्रतीहारो प्रणितः श्वनकैर्हतः । अन्येपि संश्रिताः सुज्जेस्तत्र तत्र प्रमिम्यिरे ॥२१८१॥

आत्मप्राजिजवप्रामप्रमाणाः कोष्ठेश्वरान्तिकम् । आसाद्य वीरपालाद्या द्विजा मृत्युभयं जहुः ॥२१८२॥

श्रमञ्शारदियो[1] दुष्टोत्थानदत्ततुरंगमः । प्रपेदे संगटभ्राता बन्धनं सुभटामठे ॥२१८३॥

सूनुश्च सज्जलः सुज्जेः श्रेतिकश्चापजात्मजः । उल्हणस्य तनुजश्च कारागारं प्रपेदिरे ॥२१८४॥

इत्थं राजन्यमात्ये च प्राप्ते पिशुनवश्यताम् । नवमेऽब्दे शुचेः शुक्लपञ्चम्यां विप्लवोऽभवत् ॥२१८५॥ 2185

कार्ये क्वापि विपर्यस्तसत्त्वं संस्मृत्य मन्त्रिणम् । तमद्यापि नृपस्तादृग्भृत्योपेतोऽनुतप्यते ॥२१८६॥

वेतालोत्थापनाच्छ्वभ्रलङ्घनाद्विषचर्वणात् । व्यालाश्लेषाच्च विषमं सत्यं राजोपसेवनम् ॥२१८७॥

अनात्मायत्तनिस्तीर्णगुणानां चक्रवर्तिनाम् । शकटानामिवापस्थो विश्वस्तः को न भज्यते ॥२१८८॥

अयुक्तं नृपतिः सुज्जिवधं मेने प्रजाः पुनः । युक्तं ज्ञात्वा तमुद्रिक्तशक्तितां विविदुः प्रभोः[1] ॥२१८९॥

भेजे राजा सज्जपालं कम्पनाधिपतिं ददत् । कुलराजे च नगराधीकारित्वं समार्पयत्[1] ॥२१९०॥ 2190

त्यक्त्वा मल्लार्जुनं[1] धन्योदयौ नगरमागतौ । प्राग्वत्पुनर्जजृम्भाते प्रियौ विश्वम्भराभुजः ॥२१९१॥

इतराश्रयविच्छेदा वीतपारिप्लवस्थितिः । श्रीः सर्वाकारमकरोत्स्थिरं चित्ररथे पदम् ॥२१९२॥

अद्भुतैश्वर्यधुर्योऽपि राष्ट्रं दण्डेन पीडयन् । शमं नेतुमशक्योऽभूत्स भूपस्याप्यनङ्कुशः ॥२१९३॥

गन्धर्वानाभिधे ग्रामे टिक्कं हत्वा व्यसर्जयन् । पारेविशोकं कोट्टेशस्तच्छिरः पार्थिवान्तिकम् ॥२१९४॥

निसर्गद्वेषिणा प्राप्तप्रतापे नितरां नृपे । तदानीं लप्यमानेन कृतेनाप्यायितोऽसकृत् ॥२१९५॥ 2195

कोष्ठेश्वरेण रभसादल्पैः परिजनैर्युतः । निशि लोठनदेवः स हाडिग्रामं ततोऽविशत् ॥२१९६॥

महाकथिनकन्थान्यैः संरब्धे राज्ञि सर्वतः । बद्धसंधिर्लवन्यस्तं विससर्ज यथागतम् ॥२१९७॥

उत्पलादिवदादातुं राज्यं स रभसं भजन् । निर्बुद्धिभुग्नदार्योगान्मूढो लोकस्य हास्यताम् ॥२१९८॥

तीक्ष्णप्रयुक्तिभिः सैन्यभेदैरन्यैश्च कोष्ठकम् । उपायैर्नृपतिस्तैस्तैस्ततो हन्तुं व्यचिन्तयत् ॥२१९९॥

प्रतिहन्तीव तीक्ष्णानां पाटिताक्षः क्षमाभुजम्[1] । न संप्रासादयत्क्रुद्धः प्रतियोद्धुं त्वचिन्तयत् ॥२२००॥ 2200

स्वैः स्वैः प्रदेशैरादिश्य प्रवेष्टुं पृतनापतीन् । स्वयमुच्चावचैः सैन्यैरवचस्कन्द तं पुनः ॥२२०१॥

स भूपं रभसायातं ज्ञात्वाल्पपृतनं बली । ग्राममुत्कलयितुं तस्थौ प्रतापैः परिहारितः ॥२२०२॥

लग्ने रणे चित्ररथः पृथुसैन्योऽपि दैवतः । तस्य सैन्यैकदेशेन निन्ये जयविपर्ययम् ॥२२०३॥

भङ्क्त्वा नामङ्गलोकारकल्पेन किल तेन सः । ततः प्रभृत्यभूद्व्ययवशम्भो दिने दिने ॥२२०४॥

रिल्हणादीन्योधयित्वा व्यूढव्यस्ताखिलानुगः । लब्धान्यो न्यपतत्सार्धं कम्पनाधिपतेर्बले[1] ॥२२०५॥ 2205

२१८३. ¹) C शरदि यो. २१८७. ¹) Emended with C; A °भान्वे. २१८९. ¹) Conjectural emendation of G. (sec. manu); A प्रजा.. २१९०. ¹) Emended with C; समर्पयत्. २१९१. ¹) Emended; A मल्लार्जुनौ. २२००. ¹) Emended; A °भुजान्—²) Emended; A संप्रसाद°. २२०४. ¹) Doubtful emendation; A भङ्क्त्वामङ्गल्यौ°; C भङ्क्त्वामङ्गलौकार°. २२०५. ¹) Emended; A °बलौ.

कनैः शतादपि भटैर्युतो विद्रुतसैनिकः । सेहे तत्सैन्यरोधं स गजक्षोभमिवाचलः ॥२२०६॥
किं वाच्यः स नरव्याघ्रः प्रवृद्धिं याति संगरे । निजवर्मतनुत्रादि यस्य मानि न वर्मणि ॥२२०७॥
मन्दीकृतारिसंरम्भमवष्टम्भेन तादृशा । तं त्रिल्लकादयः प्रापुर्लवन्याः सैन्यशालिनः ॥२२०८॥
तैः सजातीयदाक्षिण्यात्तटस्थैरपि संकटे । तस्येषदुपयोगोभूत्स्ववीर्योपात्तविद्विषः ॥२२०९॥
2210 काले संनहनं रात्रिजागरः सामतो बलैः । समये ग्रहणत्यागतत्तद्युक्तिविकल्पनम् ॥२२१०॥
लब्धभूम्यपरित्यागो जिगीषोरीदृशैर्गुणैः । बलेयुररयोप्यस्य का वैर्याक्रमणे स्तुतिः ॥२२११॥
अविश्रसम्भिन्नभृत्यस्तादृक्संरम्भपीडितः । पलायनोन्मुखः शैलात्कोष्ठकोथ व्यगाहत ॥२२१२॥
मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनाम् । गन्तुं तस्योद्यमं जघ्नुः पृष्ठलग्ना विरोधिनः ॥२२१३॥
अवमानोपतप्तोथ परिमेयपरिच्छदः । स ययौ जाह्नवीं स्नातुं राज्ञा राष्ट्रादपाकृतः ॥२२१४॥
2215 सोमपालोथ भूपालनाम्ना पुत्रेण खेदितः । दीर्घवैराज्यदुःखार्तः शरणं नृपतिं ययौ ॥२२१५॥
पुत्री दत्तवतो नीविं नागपालस्य तस्य च । अभयं प्रतिभूभाव भूभृदाश्रितवत्सलः ॥२२१६॥
बृहद्राजस्य जिह्मोयं दौस्थ्यहेतुरभूदिति । स तदापदि नास्मार्षीदव्याजौदार्यधुर्यधीः ॥२२१७॥
साहायकाय स्वं सैन्यं दत्तवांस्तं महीपतिः । भूयः प्रतिष्ठामनयद्दर्पप्रशमनाद्विषाम् ॥२२१८॥
स्नात्वा धुनद्यां व्यावृत्तः कोष्ठकोत्रान्तरे पुनः । मल्लार्जुनं गृहीत्वाभूद्वैराज्योत्थापनोद्यतः ॥२२१९॥
2220 अर्कोपरागे प्राप्तः स कुरुक्षेत्रमवाप तम् । लत्रन्यं कार्यतस्त्यक्तपूर्ववैरो नृपात्मजः ॥२२२०॥
आहूतो लोठनः पूर्वमायातस्तेन डामरम् । निशम्य तं संघटितं खिन्नः प्रायाद्यथागतम् ॥२२२१॥
विजयेशाप्तः पीतकोशोपि नृपतिद्विषः । प्रविविक्षुरुपेक्षिष्ट सोमपालो दुराशयः ॥२२२२॥
आराधनाय भूभर्तुस्तत्पुत्रः कोष्ठकं पुनः । प्राप्तं स्वविषयैस्तैस्तैश्चुरैर्निरलुण्ठयन् ॥२२२३॥
अत्रान्तरे चित्ररथं संवृद्धायासदुर्मदम् । अनिच्छन्तोवन्तिपुरे प्रायं चक्रुर्द्विजातयः ॥२२२४॥
2225 उपेक्ष्यमाणास्ते दर्पात्तेनागणितभूभुजा । ज्वलिते ज्वलने देहान्बहवो जुहुवुः क्षुधा ॥२२२५॥
चरके धर्मधेनूनामुत्कर्षेपि तदाश्रितैः । वह्निं गोपालकोप्येकः कारुण्यप्रवणोविशत् ॥२२२६॥
भट्टस्योद्भटवंशस्य पृथ्वीराजस्य नन्दनः । युवा विजयराजाख्यः सानुजो गावदुर्गतः ॥२२२७॥
देशान्तरं जिगमिषुर्विषमं वीक्ष्य तत्र तत् । व्याजहारानुजन्मानं कारुण्याश्रुकणान्किरन् ॥२२२८॥
उपेक्ष्यमाणा दाक्षिण्यस्तम्भितेन महीभुजा । विशः सचिवपाशेन विवशाः पश्य नाशिताः ॥२२२९॥
2230 छन्दानुवृत्त्यामात्यानां यत्र क्ष्माभृदुपेक्षते । कस्तत्रान्यस्तु दीनानामापच्छमयिता विशाम् ॥२२३०॥
यद्वा न्यायोयमन्योन्यस्पर्धया यदुपप्लुतम् । शमिता दण्डयेच्छाम्यं शमितारं परोथ वा ॥२२३१॥
विशृङ्खलं नयेच्छव्यां दार्ढ्यसारं विघट्टनैः । कदाचिल्लोहमश्मानमश्मा लोहं कदाचन ॥२२३२॥
दोषेणैकेन न द्वेष्यो राजा सर्वगुणोज्ज्वलः । तथाच्चित्ररथस्यान्यद्विधेयं नावभाति मे ॥२२३३॥
धर्मः सर्वोपकार्येकक्षुद्रक्षपणमुच्यते । अघ्नन्नाजगरं सोपि जन्तूनामन्तकं जिनः ॥२२३४॥

---

२२०६. 1) Emended; A सह. २२२१. 1) Emended; A सङ्घटितुं. २२२४. 1) Emended with C; A संवृद्धायास°. २२३०. 1) Emended with C; A apparently °मात्यामां.

इत्युक्त्वा भस्मयोरपश्ये संस्प्रष्टुं स्फाटिकं ततः । सपीठं पुरतो द्वारपतेर्लिङ्गमुपानयत् ॥२२९२॥

अचकलाहवसंमर्दमासन्धूलिपुवर्षिणः । योऽधान्धोदुं वरं मार्गं मानवाकूलमिच्छति ॥२२९३॥

इति संभाष्य संस्पृष्टशिवलिङ्गः स भाञ्जिकम् । वरं तस्योररीचक्रे स च भूयो जगाद तम् ॥२२९४॥

आकृष्टदृष्टिरहतः क्ष्माभुजोऽन्तिकमक्षतः । यथेप्सितेव मामोति तथा स्वामर्पयेऽधुना ॥२२९५॥ 2295

कार्पण्योपहतं तस्य वचः श्रुत्वा त्रपाजडाः । सर्वेऽप्युर्वीभुजाऽलक्ष्युर्वृक्षशाखाः पल्लवा इव ॥२२९६॥

अन्तःक्षणस्ततो भिक्षोः स्मर्यमाणः सचेतसाम् । विकासहेतुतां प्राप स्वस्वस्य मनसः पुनः ॥२२९७॥

मनुष्यवाघमाक्रन्दः पर्णे निर्म्ये स भिक्षुपः । तेन स्वपालितांल्लोकानपि पश्यन्नविक्रियम् ॥२२९८॥

अहीनाहारनिद्रादिर्विवशः पशुवत्पथि । कृष्यमाणः स केनापि न विकल्पेन पस्पृशे ॥२२९९॥

पश्यन्नानीयमानं तं गोभृभिस्तादृशं जनैः । दयार्द्रहृदयश्चासीत्साभ्यनन्दत्र भूभुजम् ॥२३००॥ 2300

उवाच चानुकम्प्येऽस्मिन्नग्रजन्मज्येष्ठस्य भूपतेः । नैतोवज्ञाति वैर्भ्रमनुजे पितृवर्जिते ॥२३०१॥

असेचनकमेतस्य मेचकाब्जदृशो वपुः । क्लेशगर्भमनिर्भिन्नचेताः कः कर्तुमर्हति ॥२३०२॥

पूर्वापरानुसंधानवन्ध्यस्तं दृष्ट्वांसदा । विस्मृतागा नृपं तत्ताहिन्युपालभताध्वनि ॥२३०३॥

गणना कापि या बालबालिशादौ विधीयते । न चित्तवृत्तेरैकाग्र्यं महतामपि सर्वदा ॥२३०४॥

श्रोतॄणां युगपाञ्चालीकेशाकृष्ट्यादि शृण्वताम् । पाण्डवेभ्योऽधिकः क्रोधो धार्तराष्ट्रेषु जायते ॥२३०५॥ 2305

कुरूणां क्षतजापाने भग्नोरोर्मूर्धताडने । श्रुते पाण्डवविद्वेषस्तेषामेव च दृश्यते ॥२३०६॥

परावरज्ञः कार्याणां न कश्चिन्मध्यमं विना । तटस्थेऽनुभवाभेदस्तत्र तत्र कथं भवेत् ॥२३०७॥

स पौराक्रोशवक्रं छिन्नाङ्गुल्यङ्गमुद्वहन् । युग्याधिरूढो भृत्यार्थं सार्धं नगरमासदत् ॥२३०८॥

न्यधत्ताभ्युजातभुक्तपञ्जरद्वयो महीपतिः । एकादशेऽब्दे तं रक्षितुं नवमठान्तरे ॥२३०९॥

त्यक्ताहारस्य च निशाः पञ्च पञ्चस्य ताम्यतः । पार्श्वे जगाम कारुण्याच्चरणस्पर्शनार्थिनः ॥२३१०॥ 2310

अदादीदर्थितं तस्मै मतिशुद्धिमुपेयुषे । द्रोहावेकान्ततो बद्धौ स चित्ररथकोष्ठकौ ॥२३११॥

राजा निर्जग्मुषः स्वोर्वीं कोष्ठकस्याथ बन्धनम् । विधित्सुः पञ्चचानामाजिल्हणादीनचूचुरत् ॥२३१२॥

सर्वेषु गलितौजःसु स्वयं राज्यसुखमस्पृशे । अथ तं रिल्हणो दोर्भ्यां क्षणं प्राह दयामहीत् ॥२३१३॥

हताशः स मलिनस्तस्य दोर्पञ्जरान्तरे । गस्याश्लिष्टो निद्रान्धो भूतेनेवासनीकृतः ॥२३१४॥

भ्रातृभ्यो भिःक्षेराजाख्यः कुलराजस्य कोपनः । भूभृद्दत्त्या कृपाण्यास्य निर्बिभेद कृकाटिकाम् ॥२३१५॥ 2315

परश्रवेन मूर्धैनं पृथ्वीपालश्च ताडयन् । राजबीजी स च क्रोधात्कवचिध्यत महीभुजा ॥२३१६॥

कृकाटिकास्थिसंजातमर्मवेधोपवेष्टितः । विचेष्टमानोऽवर्तिष्ट क्षितौ स रुधिरोक्षितः ॥२३१७॥

महाबलैः कमलियप्रमुखैस्तस्य सोदरः । चतुष्कः पातितोऽमुष्यौ गण्डशैल इव द्विपैः ॥२३१८॥

विलोक्य वैकल्यहतौ बद्धौ तौ स्वामिनौ तथा । कुद्दालिनेषुकस्त्यौ द्विजन्मा मल्लकाभिधः ॥२३१९॥

उच्चावचेषु प्रहरत्स भूपालोपजीविषु । अंतर्ज्यमाणस्तुमुलं राजवाटस्थलापतन् ॥२३२०॥ 2320

---

२२९९. 1) A भगऽथ. २३००. 1) Emended; A जना: २३०४. 1) A °वार्ति°. २३१५. 1) A त्रि×क्ष°. २३१९. 1) Emended with C; A स्वामिनौ.

नृपान्तिकादापततस्तांस्ताम्यन्तो महाभटान् । अधावत्सासिधेनुस्तं कुलराजो महौजसम् ॥२३२१॥
प्रतिप्रहतिषु क्षिप्रापतत्पाणिमपारयन् । निहन्तुं संरुरोधेव भित्ती व्यायामवित्स तम् ॥२३२२॥
अपयातुमवस्थातुं प्रहर्तुं वाप्यशक्नुवन् । तस्थौ च बहुसंधानः संस्तभ्यैनमवेक्षतम् ॥२३२३॥
चरणास्फालनोत्फालदोःशब्दमुखरोन्तिकम् । धाविते पद्मराजेथ मल्लकोक्षिपरीक्षणम् ॥२३२४॥
2325 प्राहरत्कुलराजोस्य लब्धरन्ध्रोथ वक्षसि । प्रहस्य गच्छतः पाणेः स तस्याङ्गुष्ठमक्षिणोत् ॥२३२५॥
तौ बिज्जराजे¹ दर्पोष्मनिबिडे प्रहरत्युभौ । तस्मिन्प्रतिप्रहरति क्षिप्रं प्राहरतां ततः ॥२३२६॥
स वीनप्यभियोक्तॄंस्तांस्त्यक्त्वा दृक्पथमागतम् । चतुष्किकाद्वारगतं राजानं समुपाद्रवत् ॥२३२७॥
लक्षीभूते नृपे शीघ्रमनुधावन्ससंभ्रमम् । चकार कुलराजस्तं स्फिगस्थिक्षतिनिर्जवम् ॥२३२८॥
ततः सर्वैर्वृतो योधैः क्षीबाक्षीबान्स सत्वरम् । हत्वाभजद्वीरशय्यां रक्तस्यन्दोत्तरच्छदाम् ॥२३२९॥
2330 जीवद्व्यापद्गतस्यापि वीक्षितः श्लाघ्यविक्रमः । स एवास्पृहणीयान्तक्षणो वीरैरगण्यत ॥२३३०॥
बहिः कोष्ठकभृत्येषु विद्रुतेष्वदरिद्रताम् । परं जनकचन्द्राख्यो धैर्येणोवाह डामरः ॥२३३१॥
निरायुधो राजभृत्याद्गृहीत्वैकस्मात्परश्वधम् । स ययुद्धापदूतस्त्वं नयन्भूरीन्यमान्तिके ॥२३३२॥
विपासोस्तस्य चण्डांशुमण्डलं परशुः करे । सुषुम्णासंविभागार्थी शशिखण्ड इवाविशत् ॥२३३३॥
नाद्राक्ष्म नाश्रौष्म वापि वद्धे भर्तरि यत्तदा । कोष्ठकस्य वधूरन्वतिष्ठन्मानवती सती ॥२३३४॥
2335 जीवन्भूयोपि लभ्येत त्वया स पतिरित्यसौ । बन्धूनामवधीर्योक्तिं प्राविशद्धुताशनम् ॥२३३५॥
समर्थयोपिदाक्षेयतर्षकिल्बिषदूषितः । तस्याः सतीलोकगाथाः पादाभ्यां पावितोनलः ॥२३३६॥
वसन्तस्य सुता धन्योदयभ्रातुः पुपोष सा । शुचिवंशाभिमानेन न डामरवधूव्रतम् ॥२३३७॥
लवन्यललनाः कुर्युर्वैधव्येपि यथेच्छया । ग्रामकार्थिकुटुम्ब्यादीनितम्बाभोगभागिनः ॥२३३८॥
मतिव्यामोहनिर्व्यूढवैकृत्यस्वामिमानिनः । तयानुगाभ्यां च कृतं कोष्ठकस्योच्चकैः शिरः ॥२३३९॥
2340 स्वव्रणोपि क्रिमिसाद्भूतः कैरपि किल्बिषैः । निष्प्राणो गणरावेण कारायां कोष्ठकोभवत् ॥२३४०॥
अथ चित्ररथः शोषकृशः कलुषितं नृपम् । भुक्त्वा मल्लार्जुनेनाभूद्भयादत्यन्तदुःस्थितः ॥२३४१॥
पत्नी तस्यैकभार्यस्य प्रिया सूर्यमती सती । परलोकातिथिः पूर्वं विभवप्रतिभूरभूत् ॥२३४२॥
देहे व्याध्यहताप्याये गेहे गतपरिग्रहे । पत्यौ वैमत्यकलुषे नैषरुच्येव पिप्रिये ॥२३४३॥
तीर्थस्थितस्य न स्यान्मे साध्वसोप्यप्रियं नृपात् । इति संचिन्त्य स प्रायान्निवस्तुं सुरेश्वरीम् ॥२३४४॥
2345 अथ नानार्थभूयिष्ठां धनाधीशाधिकश्रियः । स्थानात्ततस्ततस्तस्य पार्थिवोपाहरच्छ्रियम् ॥२३४५॥
कनकांशुकसंनाहवाजिरत्नायुधादिभिः । स्वा स्वा प्रकाशिता लक्ष्मीः स्पर्धयेवाधिकाधिका ॥२३४६॥
लोहरद्रोहघर्मोष्मशोषितो राजपादपः । तल्लक्ष्मीशीलतटिनीसेकेनाप्यायितोभवत् ॥२३४७॥
विप्लवे चिरनष्टेपि श्रीकल्याणपुरं न यः । वनवासोचितत्रासः शाल्वः सौभमिवात्यजत् ॥२३४८॥
भूतरक्षांशुपृक्तेव चिन्तापाण्डुरवर्तत । बन्दीकृता नरेन्द्रश्रीर्निर्निद्रा यस्य मन्दिरे ॥२३४९॥

२३२३. ¹) Emended with C; संस्तम्भैनं. २३२६. ¹) Emended; A बिज्जराजो. २३४८. ¹) Emended; A साल्वः सौभिवा°; C सालुसेऽनुभिवा°.

राज्ञा प्रयुक्तं विज्ञाय विजयः स भयोद्भवः । तीक्ष्णमानन्दनामानमवधीत्तेन चावधि ॥२३५०॥तिलकम्॥ 2350

इत्थं स पथ्ये साहुक्कआपालनशालिनः । सर्वोत्साहमयो नेता जयसिंहमहीभुजः ॥२३५१॥

तीर्थस्थिते चित्ररथे पादाग्रमहणैषिणौ । शृङ्गारजनकावास्तां तत्कृत्यौ व्यक्तचक्रिकौ ॥२३५२॥

प्रचुरोत्कोचदानेन स्वीकृत्य नृपतिं ययौ । शृङ्गारो मत्र जनकः स्वामिश्रीभोगभागिताम् ॥२३५३॥

चिरप्रचलितं हारमुदये निदधे पुनः । मेघकालः सरित्पूरं गतीर इव पार्थिवः ॥२३५४॥

अवहद्भोग्यदुष्कर्मदत्तमर्मव्यथाधिरम् । कथाशेषोऽभवच्चित्ररथो मासैरष्टभिः ॥२३५५॥ 2355

हास्यावहोऽप्यधिकृतो विकृतोऽप्यपास्यो दुर्गन्धिरप्यतिजडोऽपि गृहीतवाक्यः ।
पूर्वानुभावजयिनो भवति प्रभावाद्यस्य स्तुमस्तमतिसंस्तवमप्रतर्क्यम् ॥२३५६॥

निर्धैराधूतवादैर्यैर्घोषितैः प्रागभीष्टताम् । बाल्ये दुर्ललितस्यागाद्भर्तुर्धिक्प्रचेतसः ॥२३५७॥

विसृज्यमानः संप्राप्तसाम्राज्येन दिवानिशम् । क्रमात्स्वीकृत्य ताम्बूलं तेन चित्ररथान्तिकम् ॥२३५८॥

दूरैः कृत्यान्तरन्यस्तं प्राप्तवानाप्ततां गतः । तदन्ते घटयामासस्तत्कृत्यान्कोशदर्शकान् ॥२३५९॥

तदा सर्वोन्नताशेषमन्त्रिशून्ये नृपास्पदे । सज्जकस्यात्मजः प्राप शृङ्गारो मुख्यमन्त्रिताम् ॥२३६०॥चक्कलकम्॥ 2360

तस्य वैधेयताभ्यस्तकुदृष्टेरपि दुष्कृतम्[1] । मागुः[2] पात्रार्पणात्तुच्छत्यागित्वेनापि संपदः ॥२३६१॥

योऽधित्कशिपुभोग्येन धन्यंमन्योऽपि सोऽभवत् । धान्यदानवदान्यत्वं गुरूणामाजगाम यत् ॥२३६२॥

पीठं कृतवतो रूप्यं[1] संयोज्य रजतैर्निजैः । विद्यमानं सुरेभ्यो यो सायुज्यं तस्य युज्यते ॥२३६३॥

उर्वीशैरपि नार्वाग्भिर्योऽनुगन्तुमशक्यत । आचारपात्रसंभारो निर्विवादद्रविणव्ययः ॥२३६४॥

नन्दिक्षेत्रे स तत्रार्थैः प्रणीतस्थण्डिलादिभिः । तेन कालानुसारेण पोषितः पञ्चषाः समाः ॥२३६५॥ 2365

नर्माङ्कृतायां निःसारो ज्ञातो यः सोऽधिकारभाक् । अचिन्त्यकृत्यकार्यासीत्स्वामिस्नेहप्रभावतः ॥२३६६॥

केलीसज्जैर्युवतिकरजैः कण्ठभूषावशायां यस्याज्ञापि त्रुटनमकृतस्माधरेऽवासकृत्टी ।
सोऽप्यादिष्टस्त्रिपुररिपुणा प्राप भङ्गं न भोगी शक्याधायी कनच न परो भर्तुराज्ञाप्रभावात् ॥२३६७॥

तं च रिल्हणधन्यौ च समाश्लिष्येतरेतरम् । कार्ये जनकशृङ्गारावुत्कोचेनापजह्रतुः ॥२३६८॥

कदाचिज्जनकं बद्ध्वा सार्धं भूषणमौक्तिकैः । सपुत्रदारं शृङ्गारो[1] बाष्पबिन्दूनमोचयत् ॥२३६९॥

स तं च जातु निर्विद्य मानहीनमकारयत् । रूक्षरक्षार्पितोत्कोचधनाभ्यर्थितमैथुनः[1] ॥२३७०॥ 2370

अकुण्ठनखनिर्घर्षनर्तितानामिकोर्मिकः । वदन्वामोत्तरीयाग्रमोचनैः कुञ्चितेक्षणः[1] ॥२३७१॥

भ्रूभङ्गोद्वेल्लितवलीनिम्नोन्नतललाटभूः[1] । पुनरेकस्तयोर्लब्धकार्यो लोकमहासयत् ॥२३७२॥तिलकम्[2]॥

अव्यक्ताक्षरवाग्मौढ्यमीलिताक्षो रटन्बहु । हसन्सकरतालं च संपदान्यो व्यभाव्यत ॥२३७३॥

सोल्लेखमतिमोहीतलक्ष्याणां[1] हास्यवस्तुनि । कथाशरीरं पर्याप्तं नेदृशां[2] किमचेतसाम् ॥२३७४॥

सर्वस्मिन्वस्तुतोऽप्राचि काले त्रिगतयोग्यते । जाने तृणनृणां तुल्ये शृङ्गारोऽर्हत्यगर्वताम् ॥२३७५॥ 2375

यः सर्वकषनिष्कम्पधीसुधीकः क्षमापतिः । धुर्यतां धर्मचर्याभिर्गतः सुकृतशालिनाम् ॥२३७६॥

---

२३५०. [1]) A[1] ३. २३६०. [1]) A[2] ४. २३६१ [1]) Emended; A दुष्कृताय.—[2]) Thus A; R G C मागः. २३६२. [1]) A °वदन्य. २३६३. [1]) Emended with C; A रूप्यं. २३६९. [1]) Emended; A भृङ्गारं. २३७०. [1]) Thus A; C emends °कुरवार्°. २३७१. [1]) Emended; A कु°तेक्षण:; C कुञ्चित क्षण:. २३७२. [1]) Thus A; perhaps read with C °द्वेल्लित°.—[2]) A[2] ३. २३७४. [1]) Emended; A °तारा.—[2]) Emended; A न दृशां.

लब्धबोधिरिवाचार्यैर्यश्चक्रे व्यापदुपक्रियाम् । दावदग्धस्य दग्धाङ्गोऽशावस्येव चन्दनः ॥२३७७॥
गुरुसूरिद्विजान्प्रथमभृत्युषितयापि यः । प्रतिपत्त्या संविभेजे संविभाग्यकुटुम्बकम् ॥२३७८॥
प्रासादान्विजयेशादिदेवप्रातस्य शुद्धधीः । सुधादानेन निन्ये च धन्यः कैलासतुल्यताम् ॥२३७९॥
2380 मठदेवगृहारामहट्टकुल्यादियोजने । जीर्णोद्धृतिव्यसनिनस्तस्य चिन्ता निरन्तरा ॥२३८०॥
सकृद्दर्शितविद्वेषकार्यैः सब्रह्मचारिणाम्[1] । स क्रौर्यधाम पर्याप्तमीदृगप्युच्यते जडैः ॥२३८१॥
विश्वाप्यायनसप्तसिन्धुभरणब्रह्मादिसंप्रीणनप्रायं कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्मणा ।
स्वःसिन्धोर्लघुतां गतं सगरज[1]श्रेणीचिताशर्शना[2]ता येन जनाः श्मशानमिव सा योग्या किलास्थ्नां स्थितौ ॥२३८२॥
तदन्तरे[1] शिवरथो द्विजः प्रचुरचक्रिकः । कायस्थपाशः पाशेन गलं बद्ध्वा व्यपद्यत ॥२३८३॥
इत्थं पृथ्वीपतिः कृत्वा तत्तत्कण्टकपाटनम् । अपेतविघ्नं सौजन्यनिघ्नो व्यधित मण्डलम् ॥ २३८४॥
2385 विपक्षावरणापायप्रायेण पृथिवीभुजः । तैक्ष्ण्यमायान्ति जीमूतमुक्ता रविकरा इव ॥२३८५॥
परिणाममनोज्ञत्वं राजत्वे स्वयं नृपः । माधुर्याधिक्यमुत्पाको द्राक्षाद्रुम इवाययौ ॥२३८६॥
प्रावर्तयत सातत्यात्क्रतून्विततदक्षिणान् । विवाहतीर्थयात्रादीन्महितांश्च महोत्सवान् ॥२३८७॥
संविभेजे स्वसंभारैः स क्रिया धर्मचारिणाम् । तेजोभिः कुलशैलानामोषधीरिव चन्द्रमाः ॥२३८८॥
प्रतिज्ञातं सुतोद्वाहप्रतिष्ठादौ पुरौकसाम् । तेनौपयिकसामग्रीदानमव्यग्रचेतसा ॥२३८९॥
2390 दारुणामाकराः कोश[1]वृद्धये ये धराभुजाम् । नवीचक्रे पुरं सर्वं स्वाधीनान्स विधाय तान् ॥२३९०॥
मज्जतो राजकार्येषु तत्त्वविद्भिर्दुरावने । विस्मितैर्वीक्ष्यते तस्य निष्ठा काष्ठा मुनेरिव ॥२३९१॥
प्राकारादारभ्य खायाङ्क[1]पर्यन्तं चास्य दृश्यते । न तत्कृत्यं गता यत्र नाध्यक्षत्वं विचक्षणाः ॥२३९२॥
अविचारान्धतमसे विद्या व्यद्योततान्तरा । जयापीडादिमेघश्रीसौदामन्या विलोलया ॥२३९३॥
तेन श्रियं नु विश्राण्य स्थास्नुं रत्नप्रभामिव । गुणवैचित्र्यचित्रस्य प्रकाशोऽनश्वरः कृतः ॥२३९४॥
2395 सूरयो येन ---[1] विक्षतक्षेत्रसंपदाम् । ग्रामाणामग्रहारेन्दु[2] सान्वयाः स्वामिनः कृताः ॥२३९५॥
विदुषां विततोत्सेधसौधास्तद्विहिता गृहाः । व्यामाः सप्तर्षिभिर्द्रष्टुमुत्कर्षमिव मूर्धसु ॥२३९६॥
प्रतिभाप्रभवे प्रश्नोपज्ञे न पथि पान्थता । सार्थवाहं तमालम्ब्य निर्दोषा विदुषां स्थिता ॥२३९७॥
आसीद्यथार्थराजस्य शयानस्याप्यतिप्रियः[1] । कामं लिङ्गाभिषेकाम्भःसंक्षोभप्रभवो ध्वनिः ॥२३९८॥
निद्राणस्य तथा वेणुवीणादिपरिहारिणः । दयितं तस्य निर्दोषविद्वज्जल्पविकल्पनम् ॥२३९९॥
2400 काले श्रीललितादित्यावन्तिवर्मादिभूभुजाम् । सिद्धं न यत्प्रतिष्ठादि निष्ठां तदधुना गतम् ॥२४००॥
मठदेवगृहेष्वेवं[1] स्वकालप्रभवेषु यत् । सर्वेष्वेव कृता तेन निर्व्यपाया व्यवस्थितिः ॥२४०१॥
रत्नादेव्या वृद्धाक्कभर्तृवल्लभताभुवः । सर्वप्रतिष्ठाप्रष्ठत्वं विहारः प्रथमं गतः ॥२४०२॥
रिल्हणोऽथ गुणग्रामबान्धवो धर्मपद्धतौ । बभूव पूर्वपथिकः समस्तामात्यसंततेः ॥२४०३॥

---

२३८१. [1]) A °कार्यैसब्रह्मचारिणा, evidently corrupt; emendation doubtful. २३८२. [1]) Conjectural reading; A सरगज°; C सुरगज°.—[2]) Thus A; perhaps read °स्पर्शनात्पूता; C °भात् जाता. २३८३. [1]) Emended; A °न्सरे. २३९०. [1]) A कोष°. २३९२. [1]) A खायाङ्ग°. २३९५. [1]) A, indicates a *lacuna* of three *aksharas*; C supplements संचारे.—[2]) Emended with G (*sec. manu*); A °ग्रहा×कन्दु. २३९८. [1]) Emended; A °प्यातिप्रिय:; cf. the passage ii. 126, to which evidently reference is made here. २४०१. [1]) Perhaps read °ष्वेवं.

तपोधनांस्त्रिवर्णान्धर्मवृद्धांश्च शुद्धधीः । विलम्बभवनस्योपि शक्तस्य कर्तुं न यः क्वचित् ॥२४०४॥

कृष्णाजिनोभयमुखीदानमुख्यैः सुकर्मभिः । धर्मकन्याविवाहैश्च यस्याशून्यत्वमायुषः ॥२४०५॥ 2405

सर्वेषामाहिताग्नीनां निष्प्रत्यूहा महात्मना । सर्वथागोपकरणैर्येन विभाजिताः क्रियाः ॥२४०६॥

भोज्यान्बुभुजिरे भव्यान्सत्रे सुचितविस्मये । यत्र वर्णाश्चतुःषष्टिः कुटुम्बस्वस्थचेतसः ॥२४०७॥

अग्रहारगणोदग्रैर्वसतैर्मठसेतुभिः । पुरे परिष्कृते येन द्वयोः प्रवरसेनयोः ॥२४०८॥

आद्ये प्रवरभूभर्तुः पत्तने प्रत्तविस्मयः । ग्रामः प्रतिष्ठाप्रष्ठस्थं यत्कृतो रिल्हणेश्वरः ॥२४०९॥

लोकान्तरगतां कान्तां कृतिनोद्दिश्य सुस्सलाम् । भंलेरकप्रपास्थाने विहारस्तेन कारितः ॥२४१०॥ 2410

मार्जार्यास्तिर्यगुचितबोधविस्मृत्यपोहतः । मृतामनुमृतायास्तत्रात्मा यः ख्यातिमागतः ॥२४११॥

तद्भर्तुरीर्ष्याकालुष्ये तस्या दूरामगा पुरः । यदेषो मानुषीवासीच्छिवा क्रीडाबिडालिका ॥२४१२॥

तीर्थप्रस्थानदिवसादारभ्यास्या विराविणी । उत्सङ्गमन्त्यादत्तं भोज्यं सा भुक्त्वा जीवितं जहौ ॥२४१३॥

आरोहति परां काष्ठां प्रतिष्ठाविविधाध्वना । द्विष्टा नृपतिपत्नीषु मन्त्रिपत्नीषु तु सुस्सला ॥२४१४॥

श्रीचङ्कुणविहारं या यातं नामावशेषताम् । अश्मप्रासादवेश्मादिकर्मणा निर्ममे पुनः ॥२४१५॥ 2415

अरघट्टप्रबन्धान्धुष्काकशालादिकर्मभिः । तस्याः संपूर्णतां पुण्यप्राकारा निखिला गताः ॥२४१६॥

पूर्वराजकुलाखण्डस्थण्डिलव्यापिनाखिलम् । तद्विहारेण नगरं नीतं नेत्राभिरामताम् ॥२४१७॥

प्रापि प्रतिष्ठयेवाशु यक्ष्मक्षपितया तया । विपत्तिः श्रीसुरेश्वर्याः साज्यसायुज्यदूतिका ॥२४१८॥

मठाग्रहारा धन्येन वल्लभाभिधया कृताः । नाभीष्टं लेभिरे नाम ख्यातिः पुण्यैर्विना कुतः ॥२४१९॥

अग्रहारमठांस्तद्वदुदयः कम्पनापतिः । कृत्वापि स्वाभिधामेव तत्संबद्धां सदाशृणोत् ॥२४२०॥ 2420

उदयद्वारपतिना सह ब्रह्मपुरीगणैः । कृते प्रष्ठे मठे शोभां लेभे पद्मसरस्तटः ॥२४२१॥

भृङ्गारतन्त्रपतिना श्रीद्वारेऽप्यग्र्यजन्मना । प्रत्यष्ठापि मठोद्यानदीर्घिकायतनात्मना ॥२४२२॥

कामकोष्ठमठब्रह्मपुरीसेत्वादिकर्मणा । सोऽलंचकारालंकारो बृहद्बुद्धाभिधो धराम् ॥२४२३॥

बुधः सदौषधीशान्तिहेमोर्जातः कलावतः । यः कविर्मानवत्वं च ख्यातस्त्यागेन योजयत् ॥२४२४॥

नृसिंहसेवी निर्हिंसहिरण्यकशिपुप्रदः । वराहसमये दत्तगौश्च योऽपूर्ववैष्णवः ॥२४२५॥ 2425

भट्टारकमठाभ्यर्णे पूर्णवार्धाविव ग्रहैः । मठः शृङ्गारभट्टस्य व्याख्यानैर्नित्यमोज्झितः ॥२४२६॥

सांधिविग्रहिको दार्वाभिसारोर्वीभुजोऽकरोत् । अष्टमूर्तेर्जङ्कनामा प्रतिष्ठां पुण्यकर्मठः ॥२४२७॥

पुष्पाकरप्रणयभूः सुभगा विभूतिरेकस्य हन्त करवीरतरोर्द्रुमेषु ।
पुष्पाणि यस्य सफलीकुरुते स्वयं तत्प्रादुर्भवत्किमपि लिङ्गमनङ्गशत्रोः ॥२४२८॥

विभूत्या संविभक्तेषु भूभुजाखिलमन्त्रिषु । उत्कर्षकोटिं भुट्टाख्यः परं जल्हानुजोऽर्हति ॥२४२९॥

स्वयंभूः प्रकटीभूय पूजां स्वीकुरुते स्वयम् । ज्येष्ठरुद्रो वासिष्ठस्य यस्य वा वाल्केश्वरः ॥२४३०॥ 2430

सविहारमठोदग्रवेश्मभिः कलुषोज्झितम् । तेन तत्र कृतं भुट्टपुराख्यं पुटभेदनम् ॥२४३१॥

---

२४०४. ¹) Emended with C; A तपोधनाश्च°. २४१०. ¹) Thus A; cf. vii. 1239, where भल्लेरकप्रपा°. २४११. ¹) Emended with C; A तस्तत्र°. २४१४. ¹) Emended; A °भुक्ता. २४२५. ¹) Doubtful emendation; A °कशिपुरः, without indicating the *lacuna*; C °कशिपुश्चिच्छः. २४२९. ¹) Emended; A उत्कृष्टकोटिं. २४३१. ¹) Emended; A °दीर्घिकाः.

नगरेपि हरः प्रत्यष्ठापि भुट्टेश्वराभिधः । सरथ मठवाग्रामे धर्मविभ्रमदर्पणः ॥२४३२॥
नीत्वा प्रतिष्ठां वैकुण्ठमठादि स्वविहारभूः । रत्नादेव्या रङ्कं चक्रे स्वार्थमथनसुस्थिरा ॥२४३३॥
रत्नापुरे बृहद्धारमहार्घे निरयो मठः । धत्ते दुकूलहंसस्य स्फीतधौतसविभ्रमम् ॥२४३४॥
2435 मृत्युंजयो राजतेस्याः सुधाधौताभ्रमन्दिरान् । जगत्स्वामित्वतोऽक्लिष्टैः श्वेतद्वीपं सृजन्निव ॥२४३५॥
गोकुलानां विधातारो गोकुले विहिते तया । गणिताः भूरवर्माद्याः सतृणाभ्यवहारिणः ॥२४३६॥
गवामभ्यागतस्वैरसंचारचरकाञ्चिते । तत्र वैतस्ततोयाढ्ये वपोदामये वपुः ॥२४३७॥
मुकुन्दस्तत्र साधर्यसौन्दर्यौदार्यमन्दिरम् । अभूत् गोवर्धनधरः सिद्धो ना विश्वकर्मणः ॥२४३८॥
मठ – – – कृत्वा सा नन्दिक्षेत्रेऽकरोत्क्षितिम् । – – जयवनाद्येषु स्थानेषु च मनोरमान् ॥२४३९॥
2440 दार्वाभिसारेप्युर्वीशयन्त्रीदार्यमन्दिरम् । स्वनामाङ्कं पुरं चक्रे तथा शक्रपुरोपमम् ॥२४४०॥
वहिश्चोपरतान्मान्यमहत्तरमुखानपि । प्रतिष्ठा विविधाश्चक्रे सा राज्याश्रितवत्सला ॥२४४१॥
एवं सर्वाङ्गमामुक्तालंकृतेरथ स क्षितेः । विशेषकाभं भूभर्तृभूषा स्वमकरोन्मठम् ॥२४४२॥
अनुरिक्तेन यो दत्तभूरिग्रामो महीभुजा । तत्कीरारोपितः ख्यातिं मुख्यः सिंहपुराख्यया ॥२४४३॥
व्यधात्कारपथेशस्य दौहित्रः सिन्धुजान्विजान् । निषिद्धान्द्रविडांश्चात्र प्राक्सिद्धच्छन्नमध्यगान् ॥२४४४॥
2445 किं वा मठादिनिर्माणस्तुत्या तस्य व्यधत्त यः । भूयः सग्रामनगरं कृत्स्नं कश्मीरमण्डलम् ॥ २४४५॥
जीर्णारण्यसधर्मायं कालदौरात्म्यतो भवन् । देशो धनजनावासैस्तेन भूयोपि योजितः ॥२४४६॥
आरम्भात्प्रभृति क्ष्मापे दीक्षितैर्भीष्टदक्षिषु । शिल्पिमात्रैरपि प्रायो मठदेवगृहाः कृताः ॥२४४७॥
सत्कोशांशुकरक्षादौ निरवद्येन भूभुजा । साधारणीकृते पौरास्तांस्तांश्चक्रुर्महोत्सवान् ॥२४४८॥
अकाण्डतुहिनापातोदीपाद्यैरप्युपप्लवैः । नष्टेषु शालिषु क्षीणं सुभिक्षं तत्र न क्षणे ॥२४४९॥
2450 अभुक्तं चाभवद्धान्यः भुक्ता वसिष्ठा रक्षसाम् । केस्वाद्युत्पातजातं च दृष्टं नष्टाश्च न प्रजाः ॥२४५०॥
कोष्ठेश्वरानुजन्मलुलुनामा विहितविग्रहः । आहवैर्गुडदण्डैश्च राज्ञा निन्येन्तकान्तिकम् ॥२४५१॥
चक्रे त्रिक्रमराजादीन्भूपानुन्मथ्य पार्थिवः । मरोर्द गुल्हणादीनां राज्ञां वल्लापुरादिषु ॥२४५२॥
प्रजेशाङ्कान्यकुब्जादावजयेण नृपार्यमा । स व्यधाद्भव्यभूभोगवैभवानभिमानिनः ॥२४५३॥
विद्योतमाने निश्रीकैर्मन्त्रिस्तम्भमेकदा । भेजे जीवितदारिद्र्यं दरद्राजो यशोधरः ॥२४५४॥
2455 स भूभृदनन्तरोप्यन्तरज्ञो राज्ञोतिसेवया । विपक्षी प्रकृतिक्रान्तसंतानच्छिन्नतामगात् ॥२४५५॥
निकृत्यास्य निजामात्यो विड्डसीहाभिधो यतः । संभुज्य दयितां राज्यमप्रौढतनयेग्रहीत् ॥२४५६॥
वशीकृत्य शनैर्देशं नाममात्रनृपं शिशुम् । उच्छेत्तुमैच्छद्यावत्तं स जिघृक्षुः स्वयं क्षितिम् ॥२४५७॥
अन्योमात्यः पुरस्कृत्य यशोधरसुतं परम् । तावत्तेन समं भेजे पर्युकाख्यो विपर्ययम् ॥२४५८॥युग्मम् ॥

---

२४३८.—२४३९. [1]) The last two *pádas* of verse 2438 and the following verse are found in the above, mutilated form in A at the foot of fol. 290, having been added subsequently by $A_1$. C reads: मठप्रतिष्ठां कृत्वा सा नन्दिक्षेत्रेऽकरोत् स्थितिं । विहारान् जयवनाद्येषु स्थानेषु च मनोरमान्. २४४०. [1]) The first two *pádas* of this verse have been subsequently added by $A_1$ at the top of fol. 291.—[2]) Emended; A दार्वासारे°; C दार्वाभिसारेप्यु°. २४४५. [1]) Emended, A सग्राम°. २४४९. [1]) Thus $A_1$ originally; corr. by $A_1$ to शालिष्वक्षीणं. २४५१. [1]) Emended with C. A निन्येन्तिका°. २४५३. [1]) Emended; A प्रजेशा×का°. २४५८. [1]) $A_1$ २. २४५७. [1]) Emended; A °मात्रशिशुं नृपम्.;

ते तथा विपुलारम्भमपि त्रासरसंभ्रमम् । प्रविविक्षुरुपैक्षिष्ट कौसीद्यानुगमो नृपः ॥२४८६॥
पोषिते प्रेषितभीकैरस्थिराङ्गे विग्रहैर्विभिः । अथोदयद्वारपतिः प्रैषि विध्वंसरामुखः ॥२४८७॥
संगृह्णता यमूस्तेन पुरे शंकरवर्मणः । ग्रामोलंकारचक्रस्य पार्श्वमभाजि लोठनः ॥२४८८॥
अपि विग्रहराजाख्यः सूनुः सुस्सलभूपतेः । भोजः सल्हणजन्मा च धृतौ तेन सहागतौ ॥२४८९॥
2490 अथोपह— — स्थान एव तेषां स सस्वरः । मार्गे बहुदिनोल्लङ्घ्यमेकेनाह्ना व्यलङ्घयत् ॥२४९०॥
सपृथ्वकन्यासमयमासिद्धैर्यातो विधेयताम् । तदास्कन्दहतस्पन्दः स पलायिष्ट डामरः ॥२४९१॥
सिन्धोर्मधुमतीमुक्ताभिधा अन्तःस्थितं ततः । शिरःशिलाभिधं कोट्टमथ तैरधिशिश्रिये ॥२४९२॥
गहने क्षुधितः कोट्टे स्थितः किं वा स हस्तली । न निधिकाय द्वारेशो भ्राम्यन्दीर्घासु भूमिषु ॥२४९३॥
अथोपालब्धदुर्गारोहणेऽस्मिन्नपाक्रम्यत । दैवेनापि न भूभर्तुः प्रमादो निष्फलाभवः ॥२४९४॥
2495 उत्थानोन्मुखतां सर्वेष्वपि रुद्धे तत्र दस्यवः । पाल्यताशिमयो यथेष्टपृथक्कृत इवाभजन् ॥२४९५॥
तैस्त्रिल्लकादिभिर्गूढैर्वेकृतैरथ लोठनः । पार्थ्वीहरिः पुनश्चक्रे मायाचतुरचाक्रिकः ॥२४९६॥
पुरग्रामादिदग्धारमसाध्यमथ धावताम् । पदे पदे कृष्णगतं स्वपश्यास्तमरक्षिषुः ॥२४९७॥
दिक्चक्रे निवर्तेर्ध्याध्यमत्रप्रावृतयः स सर्वतः । कल्पान्तयोदयी ब्रह्मपुत्रः केतुरिवाभवत् ॥२४९८॥
भान्तैरमात्यैर्निर्बन्धे संधौ कालानुरोधतः । मेने मडवराज्योर्वी हारितेवाखिला जनैः ॥२४९९॥
2500 असंवृत्तप्रतीकारतयारोहत्सु वैरिषु । तदन्तरेव संभज्य धन्यं प्रास्थापयन्नृपः ॥२५००॥
तत्स्कन्धारोपिते कार्ये मीडां गच्छेत्तटस्थताम् । विपर्यासमथ द्वाराधीशं इत्यभ्यधाज्जनः ॥२५०१॥
भिक्षुर्मल्लार्जुनस्त्वासीदेक एव यशस्त्वमी । संहता हन्त दुःसाधा दस्युभिस्त्वखिलाः प्रजाः ॥२५०२॥
द्वाराधिपस्त्वद्वैधाकव्यवहारो महीपतेः । सिद्धिं स्वस्याप्रसिद्धत्वापि कान्चन्दयोपमोऽभवत् ॥२५०३॥
एकाकी यः किल न भजते मूढतां भर्तृकार्ये नौदासीन्यं भवति च दया यत्प्रधीने च तस्मिन् ।
निर्द्वैधाकव्यवहृतितया साध्यसिद्धिं किलेषत्स्वातन्त्र्यभी प्रभवति परं नाल्पपुण्यस्य राज्ञः ॥२५०४॥
2505 पद्मचन्द्रे मृते तस्यानुजं राजोपवेशने । न्यधाद्यं यशश्चन्द्राख्यं सोऽप्यारब्धे विनिर्ययौ ॥२५०५॥
द्विबाहुकादयो मुख्य— — —ः सह गायकैः । धन्यमेवान्वपुर्याताप्ये राजोपजीविनः ॥२५०६॥
धन्यादिषु तिलग्रामं कोटसिन्धुतटाश्रयम् । अथ— — —द्वारेशो दृढस्थः पृष्ठपद्धतीः ॥२५०७॥
हठप्रवेशायोग्याजिमुख्यद्वैधाकवर्जितः । शोषयाशिषतो धैर्यगम्भीरं स व्यवाहरत् ॥२५०८॥
कुद्दारिकादिभिः कारवृन्दैर्मन्दिरपद्धतीः । धन्यो मधुमतीतीरे नगरस्पर्धिनीर्व्यधात् ॥२५०९॥
2510 निर्व्याप्तं द्रुमसंबाधं सनिकेता वनस्थलीः । कटकं सर्वभोगाढ्यं प्रापकः परिपूर्णोऽकरोत् ॥२५१०॥
देशे भूरितुषारोपहिमर्ती भाग्यसंपदा । भूभर्तुरभियोग्यैव भूरभूद्भानुभूषिता ॥२५११॥
भुवनाद्भुतसंभारप्रेषणं विजयैषिणः । दैराज्यमीलिताक्षेऽपि काले राज्ञो न खण्डितम् ॥२५१२॥

---

२४८८. [1]) Emended; A च मूर्तेन. २४८९. [1]) Emended; A कुल्हण°.—[2]) Emended with C; A °सता. २४९०. [1]) Thus A; perhaps read अथोपह्वरस्था तस्थान; cf. viii. 2518; C अथोपवित्त तस्थान. २४९२. [1]) Conjectural reading; A °भिधामन्त-स्थितं; G (sec. manu) °भिधा अन्तःस्थितं. २४९४. [1]) Doubtful emendation; A °भवत. २४९६. [1]) Comp. for this name viii. 2799. 2912. 3315.—[2]) Emended; A पा हरि:; cf. viii. 2748. 2759. 2793. 2837.—[3]) Emended; A °त्रिलके:. २५०१. [1]) A तत्स्कन्धा°. २५०६.[1]) A does not indicate the *lacuna*; C मुख्यास्तारण्यै:. २५०७.[1]) Thus A; perhaps read with C अथास्तवत्सदृश°.

यथादिदृक्षुः सिञ्चेत्तत्तदेकं स्वजमानितः । अन्यांश्च बन्ध्यामानीय दरदो वा जवेन वः ॥२५३८॥

बन्धनं स्वपनेष्यामि युष्मानित्युक्तवांश्च तम् । डामरं विदधे किंचिदिव सामन्तमाश्रितम् ॥२५३९॥

2540 विमोक्ष्यामि क्षपायां स्वामद्य श्वो वेति तं ब्रुवन् । स स्वसंक्षीणदाक्षिण्यो विप्रलेभे प्रतिक्षणम् ॥२५४०॥

अध्वरोधे ह्यदूरस्थैर्यथावत्कृतैरिभिः । बाह्यग्रामादृतैस्तैस्तैस्ते स्वग्राम्यत्ववारणम् ॥२५४१॥

दुरुदर्कमयाशङ्क्य समयं ते व्यजिज्ञपन् । धन्यादयोऽहितैः संधिर्विधेय इति भूपतिम् ॥२५४२॥

तैस्तैर्निमित्तैः संधानमविधेयं विदन्नृपः । तानादिदेश कर्तव्यं कोट्टाट्टालकवेष्टनम् ॥ २५४३ ॥

संदिदेश च दायादा नन्वेतेऽभ्युपगतिमागताः । निजास्पदे नाम्लहति स्वोत्कोपेश डामरे ॥ २५४४ ॥

2545 भूत्वा कठोरैर्प्यारम्भानिष्ठा निःशीलया ध्रुवम् । क्रियातिपरस्थपालम्बैर्वास्वामोनुशयं विशाम् ॥२५४५॥ ॥

नास्त्यसद्वर्धदेवश्चेत्समाहान्युद्यमं ततः । दुर्धमथाहं प्राप्स्यस्तं मुक्त्येत्यन्योऽपि लभ्यते ॥२५४६॥

सामर्थ्यं मानवान्सर्वो निजैः कृत्यैः शुभाशुभैः । क्रियातिपातिलोकैश्च त्रैलोक्यं तु मुखेर्प्यते ॥२५४७॥

पादेषु पक्षेषु च सत्स्वु नोर्व्यां न व्योम्नि वा पक्षपिपीलकस्य ।

पङ्कुम्बवचङ्क्रमणं तु नर्ते किं संपदा स्यान्नियमे गतीनाम् ॥२५४८॥

सहस्रपादस्य गतेर्निमित्तमभूदभावेऽप्यरुणः प्रभातः ।

तस्याभविष्यद्यदि पादयुग्मं ततोऽधिकं तत्किमिवाकरिष्यत् ॥२५४९॥

2550 उपेक्ष्य साक्षितां तस्मात्कृत्स्नां कोट्टं विवेष्टयताम् । प्रयातु तथैवास्माकं तेषां च पुरुषायुषम् ॥२५५०॥

अविश्रान्तो वातो दहन इव सोऽयं जनयति प्रसक्तिं क्षान्त्याकलयति कुलाद्रीनपि जलम् ।

प्रवृत्ते कृत्येषु व्यवसितिरनिर्व्यूढसुखदा फलावाप्तिं लोके प्रतिकलमसंभाव्यविभवाम् ॥२५५१॥

क्रूरां नरपतेराज्ञां श्रुत्वा धन्यादयस्ततः । कोट्टप्रतोलीं कूलं तं त्यक्त्वाप्याहरुदुर्जयात् ॥२५५२॥

कथं युद्धं विधास्यन्ति कथं स्थास्यन्ति वेति तान् । शराञ्छिरन्तः कोट्टस्था यावत्प्रैक्षन्त कौतुकात् ॥२५५३॥

अधः सोऽप्यूर्ध्वगान्युद्धैर्निष्पीड्य निविडैर्व्यधात् । धन्यः प्रदेशं तावत्तं निकेतैः पत्तनोपमम् ॥२५५४॥ युग्मम् ॥

2555 अविश्रान्तैस्ततः संख्यैरसंख्येयवधमूलयः । प्रतिक्षणं प्रववृते सैन्ययोरुभयोरपि ॥२५५५॥

परेद्युः शारदां दृष्ट्वा संप्राप्तो गर्गनन्दनः । संक्रन्दनपुरीपौरवृद्धिं योधैर्हतैर्व्यधात् ॥२५५६॥

अलंकाराभिधो बाह्यराजस्थानाधिकारभाक् । अधृष्यो मानुषैर्युद्धैर्विरुद्धान्बहुधावधीत् ॥२५५७॥

क्व भूधरचरैः स्पर्धा वसुधातलचारिणाम् । तथापि पृतनायन्त्रमनन्यं चिन्त्यमचिन्त्यकृत् ॥२५५८॥

अल्पीयांसः कोट्टनिष्ठा भूयिष्ठाः कटकाश्रयाः । अतः पूर्वे बहून्घ्नन्तोऽप्यासन्क्षयाल्पया क्षताः ॥२५५९॥

2560 छिद्रद्वारररिपटं छिन्नैः पीडितमाहवैः । मीलिताक्षमिव प्रासादस्ततो दुर्गमजायत ॥२५६०॥

गोपुभेदान्तरद्वैधमुखच्छिद्रानुसारिणः । धन्यादीन्वीक्ष्य विश्वासं कोट्टस्था नोपलेभिरे ॥२५६१॥

निद्राच्छेदार्थमन्योन्यं क्रोशन्तो नास्वपन्निशि । स्वपन्तोऽह्नि तु निःशब्दभूम्यं कोट्टमदीदृशन् ॥२५६२॥

---

२५३८. [1]) Emended with G (*sec. manu*); A वा॰वेन; C चवेन. २५४०. [1]) Emended with C; A श्वो.—[2]) Emended with C; सस्वसङ्क्षी॰. २५४५. [1]) A कठो॰ष्या॰; C कठोरैष्या॰.—[2]) Could be read in A also ॰निष्ठाचि॰.—[3]) A ॰स्वामो॰शयं C ॰स्वामोऽनुशयं. २५४६. [1]) Emended; A प्राप्स्यस्त. २५४७. [1]) Emended; A ॰लोक वैलो॰.; C ॰लोकेऽपि. २५४८. [1]) Emended with G (*sec. manu*); A वर्ते. २५५३. [1]) Emended; A ॰प्रैक्षन्त. २५५४. [1]) Thus A; perhaps read अधःस्थो.—[2]) $A_1$ २. २५५६. [1]) Emended with G (*sec. manu*); A ॰पौरपौरवृद्धिं हतै॰

निघ्नास्तु तत्सुततना यामगुर्यद्वैरपि । चटकाः कोटरगता मेघध्वानैरिवाकुलम् ॥२५६३॥
अहर्निशं भ्रमन्तीभिर्नौभिः संरुद्धपाथसः । तान्समभ्रमयन्सर्वप्रकारं राजसैनिकाः ॥२५६४॥
ते बद्धपाथसस्तर्षशोषं कंचिद्विषेहिरे । निःसंचारास्तु संकीर्णे भोक्तव्ये दैन्यमाययुः ॥२५६५॥ 2565
बुभुक्षवः क्ष्मापयोग्यान्भोगान्भाग्योर्जितांस्ततः । कदन्नैर्नृपदायादा अशनाशनं व्यधुः ॥२५६६॥
दूरे स्पर्धास्तु निस्तीर्णाः क्षुधितास्तेऽधिकं व्यधुः । भूभर्तुर्भोगभागिभ्यो भृत्येभ्योऽप्यन्तरं स्पृहाम् ॥२५६७॥
व्यूहेष्वस्मात्तु पर्याप्तमकार्षमिति भाविनम् । भोजं व्यधान्मध्यशृङ्गे दुर्गस्याथ स तं पृथक् ॥२५६८॥
एकस्य पार्श्वकाद्वैत्रापुत्रस्यादपरस्य च । आवयोर्योग्यतां मेने द्वैराज्यार्हं तमेव सः ॥२५६९॥
विनाशं चानयोः सम्यक्कर्तारमेरज वैरिणः । इति मिथ्या मयां निन्ये तद्विनिःसरणं बहिः ॥२५७०॥ 2570
कान्तालंकारचक्रस्य काकुन्ती क्षयमित्वरी । चक्षूरागात्स्वयत्वन्द्रे सान्द्रकेशार्द्रतां गता ॥२५७१॥
बहिराभ्यन्तरं भेदं नयन्ती मन्त्रमायमयी । साल्हणेः कर्णसरणिं सर्वमन्विष्यतोऽन्वहम् ॥२५७२॥ युग्मम्॥
रागध्वान्ताम्बितधियः प्रतिभेदभयेन सः । तस्य प्रकाशयन्नेनां गन्तुं तु प्रार्थनां व्यधात् ॥२५७३॥
क्षमाचाक्षिशक्तिसापेक्षो मैत्रीस्थैर्ये मुदं भजन् । नागः सागस्यपि दधे बोधिसत्त्व इव कृपाम् ॥२५७४॥
प्रियामन्युः सरागेण मृत्युहेतुर्महानपि । हरि विस्मर्यते पृष्ठे शरभेणेव वारणः ॥२५७५॥ 2575
अथ प्रस्थापितो भोजः क्षमारिशिबिरान्तरात् । वातप्रायोऽप्यलंकारतनयेनानुयायिना ॥२५७६॥
द्रोहेच्छया मयाहतापि स्खलत्सत्त्वेन सत्वरम् । व्यावृत्त्यारोपितो भूयः कोट्टस्थस्यान्तिकं पितुः ॥२५७७॥युग्मम्॥
निर्भर्त्स्य पुत्रं गन्तासि श्वो निशीत्यभिधाय तम् । कलमस्यापवस्तोऽह्नि यात इत्यखिलान्वदन् ॥२५७८॥
प्रोषत्यानिश्चयादेकः प्रायाद्वा श्वः प्रयास्यतः । बोधितैरथ धन्याधिरजागार्यखिलैर्निशि ॥२५७९॥
प्रस्थास्नुः स निशीथेऽथ कोलाहलाद्यलोकयत् । जाग्रतः कटके सर्वान्परितो दीपितानले ॥२५८०॥ 2580
प्रकाश्य वह्निना दुर्गं प्रतोलीनिर्गतो यथा । पिपीलकोऽप्यलक्ष्यत्वं नोन्मुखानां द्विषां व्रजेत् ॥२५८१॥
ज्वालाप्रकाशाचान्तल्याद्विलोला इव रक्षिताः । न्यषेधन्मूर्धकम्पेन साल्हणिं साहसाद्वृताः ॥२५८२॥
तद्गन्तुमक्षमं क्षिप्रं क्षपाग्रे स डामरः । अधोवातीतरच्छ्रुममालिङ्गितघटाकरम् ॥२५८३॥
क्षेमराजाभिधानेन डामरेशेन सोऽन्वितः । शिलां वितर्दिकातुल्यामध्यास्त श्वभ्रमध्यगाम् ॥२५८४॥
आरुह्यासनमात्रे तां पर्याप्तां पापभीतितः । निर्निद्रौ पञ्चरात्रीस्तावत्यवाहयतामुभौ ॥२५८५॥ 2585
निर्वर्तितप्राणयात्रौ करस्थैः सक्तुपिण्डकैः । तत्र एव व्यजहतां विष्ठां मीढादिवाण्डजौ ॥२५८६॥
अव्यक्तव्याकुलौ चित्रावृत्तिताविव तौ स्थितौ । वीक्ष्यारिकटके लक्ष्मीं पुष्टाद्विस्मयमीयतुः ॥२५८७॥
तयोराश्रीयत स्फीतशीतविस्मृतिकारिणा । जयसिंहप्रतापाग्निसंतापेनोपकारिता ॥२५८८॥
षष्ठेऽह्नि तत्र निःशेषीभूतभोक्तव्ययोरथ । शतशार इवारम्भि तुषारं वर्षितुं घनैः ॥२५८९॥
अनुष्णलोचिते वस्त्रवीणावाद्योपमे तथा । शीतासादितसादेन पाणिपादेन भ्रमता ॥२५९०॥ 2590

---

२५६४. 1) Emended with C; A तान्समसम्भ्रम°. २५६५. 1) The letter ष is indistinctly written; C °श्रोषं; R °शोषं. २५६६. 1) Emended; A °सर्वैर्व्यधुः. २५७२. 1) A₁ र. २५७३. 1) Emended with C; A प्राप्ता°. २५७६. 1) A °शिबिरा°. २५७७. 1) A₁ ए. २५७८. 1) Emended with C; A निर्भर्त्स्य. २५८२. 1) Emended; A °प्रकाशं चाञ्च°. २५८३. 1) Emended; A °क्षम:. २५९०. 1) Emended with C; A पाणिपादेन.

तावच्चिन्तयतामद्य शुष्कीशाभिहती ध्रुवम् । पतिष्यावोऽरिकटके प्राणत्राणाभिवाञ्छिनौ ॥२५९१॥
क पुरस्कुर्वः कस्य वार्तां विदितौ यो निर्हरेत् । ततः पञ्चनराख्यौ भूयः कलमाविव ॥२५९२॥
विषमस्थावयोरेवं तौ नक्रमभ्यर्थ्य डामरः । आरोप्य रज्ज्वावलये शृङ्गे स्थापयति स्म सः ॥२५९३॥
कृतशीतप्रतीकारौ पलालानलसेवनैः । दुःखं व्यसहतां तत्र निद्रया चिरलब्धया ॥२५९४॥
2595 ततोऽप्यभ्यधिका व्यापद्द्वेजे लोठनविग्रहौ । अवक्षुण्णौ जनास्निग्धां[1] गिरमप्यापतुर्न तौ ॥२५९५॥
यवकोऽश्वपूपादि तयोः सतुषमश्नतोः । गात्रैर्वस्त्रैश्च वैवर्ण्यं भुविजग्ध्यतया दधे ॥२५९६॥
धन्योऽलंकारचक्रस्य क्षीणभोज्यस्य[1] सर्वतः । स्वीयकारावरोधेन तुल्यौ होलव्यशास्करौ ॥२५९७॥
ततः स दूतैर्विक्रेतुमक्लीबके नृपद्विषः । बुभुक्षाक्षुभितो भृत्यभेदभीतश्च डामरः ॥२५९८॥
दुस्तरव्यापदुद्रेकद्रुतसत्त्वतयास्यजत् । पापोपलिप्तचित्तमधर्माकीर्तिसाध्वसम् ॥२५९९॥
2600 भूपतेर्विद्विषच्छेदस्थापनास्यस्य रक्षणम् । समाप्तिभुक्तौ चिकीर्षुश्च कुशकाशावलम्बनम् ॥२६००॥
भृत्यस्योदयनाख्यस्य धिया प्रच्छादितं तथा । ररक्ष साल्हणिं भोजं[1] तौ तु दातुं स तत्वरे ॥२६०१॥
तं विना च तयोर्भूपाखण्डं आनयसांप्रतम् । अबाधं स्वस्य चाशेषकृत्यं शुष्कममन्यत ॥२६०२॥
भोज्याभावकृतां तस्य व्यापदं तत्र मन्त्रितम् । तदा नाज्ञासिषुर्धन्याद्यः संधिं विधित्सवः ॥२६०३॥
मिथश्चित्रवलिखा तेषां कस्माच्चिदभवत्ततः । किं पुनस्तेन दायादाय दातुं प्रतिश्रुते ॥२६०४॥
2605 देयविश्राणनामीकोल्वानादिपणसिद्धये । भ्रातृव्यमनयद्धन्यः कल्याणमवकल्पताम् ॥२६०५॥
प्रबन्धं निर्वहन्नरिमुपचरन्धाविततर्षं महार्तिं संगृहन्नयकुटिलचेष्टं व्यवहरन् ।
स भूमिः सिद्धीनां दृढदुचितकर्तव्यपरतां भवेद्योऽनिर्व्यूढावपि हृदयसंरम्भरभसः ॥२६०६॥
दुःखैर्दीर्घप्रवासोत्थैरपसारितसौष्ठवाः । तदा संरम्भशैथिल्यं भूभृद्भृत्याः प्रपेदिरे ॥२६०७॥
स सत्त्वं सचिवोऽमात्यः संग्रहीतुं प्रगल्भते । कथाशरीरमिव यो निर्व्यूढं कार्यमाकुलम् ॥२६०८॥
संधिं निबद्धं विज्ञाय सैनिकाः स्वगृहोन्मुखाः । उपेक्ष्य स्वामिदाक्षिण्यं क्षणादेवप्रतस्थिरे ॥२६०९॥
2610 तद्विक्रीतमवाप्यान्नं लवन्यः कार्यमन्थरः । धन्याद्याः स्वल्पसैन्यत्वादासन्कृच्छ्रगतास्तदा ॥२६१०॥
प्रतोलीकीलितदृशः प्रार्थितायमनाशया । तदहः सोऽभियोक्तॄंस्तानदत्तावतापयत् ॥२६११॥
रथाङ्गाक्रान्तिती[1] रात्रिस्तेषां कृच्छ्रेण साऽगमत् । विना जीवितसंन्यासमन्यत्कार्यमपश्यताम् ॥२६१२॥
प्रयत्नसंभृते कृत्ये नष्टे मन्दतया धियः । अस्मत्संभावनादूरीकृतवाक्यादरं प्रभुम् ॥२६१३॥
नष्टानुशोचनव्याजाज्जनवल्गुकमुपहासिनः[1] । सदयं वो ध्रुवं दुःस्थीकरिष्यन्त्यन्यमन्त्रिणः ॥२६१४॥
2615 सद्यो यायातारतम्यात्साम्यन्तो भस्त्रपार्पणम् । कार्यनिष्ठामपश्यन्तः कुर्युर्वैत्वपरेद्युवम् ॥२६१५॥
मायामेतां विचिन्त्यास्तैः संमन्त्र्य नृपाहितैः । सिद्धसाध्योऽधुना वस्तुर्हसमस्यान्ध्रुवं स्थितः ॥२६१६॥
अल्पेतरांस्तु संकल्पानेवं तेषां वितन्वताम् । दशामन्ततनुज्योतिः प्रभाता सा विभावरी ॥२६१७॥ कुलकम् ॥
प्राह्णेऽथ राजस्थानीयोऽलंकारः साहसोत्सुकः । डामरं कोट्टमादाय निन्ये जयभवैर्वशम् ॥२६१८॥
एकाहं गमने सोऽथ विलम्बं तत्र याचते । लोठनं[1] क्षीणदाक्षिण्यः स गच्छेत्यब्रवीत्स्फुटम् ॥२६१९॥

२५९५. [1]) Emended; A जनास्निग्धां. २५९७. [1]) Emended; A °भोजस्य. २६०१. [1]) Emended; A भोजस्प्राण°. २६१२. [1]) Emended with G (sec. manu); A °क्रान्ति°. २६१४. [1]) Emended with C; A °पक्षमय. २६१९. [1]) Emended; A लोठनि.

विमुखे राज्ञि नागेन खुयाश्रमभुवा कृते । तं राजवदनो नाम विजिघृक्षु ररक्ष तम् ॥२६९८॥चक्कलकम्॥
आनृशंस्यं भृत्यमात्राबलत्वं व्यस्ततास्य च । मत्वास्थित्यसामर्थ्यं राज्ञि सर्वे शशङ्किरे ॥२६९९॥
2700 अतोऽलंकारचक्रेण कुर्वतोऽर्थसमर्पणम् । राज्येच्छुको राजबीजी तदा न स समर्प्यत ॥२७००॥ युगलकम्॥
नीतः प्रत्यक्षतां दूरस्थितैरप्युदयने स तम् । विमृशन्नपि दुधुक्षुस्त्यक्तुमेनं न सोऽशकत् ॥२७०१॥
राज्ञा कर्तुं विनियमं भोजस्य महितो धनैः । प्राप्य त्रङ्गामलंकारो विषयाधिकृतस्ततः ॥२७०२॥
तत्पार्श्वमुद्यतं गन्तुं मां समुत्सृज्य यासि चेत् । त्यक्ष्यामि तदसूनेवमूचे भोजस्तु डामरम् ॥२७०३॥
भस्त्रां प्रभाते द्रक्ष्यामीत्येतावत्तत्र जल्पति । कोट्टादनुक्तैव निशस्तुर्ययामे विनिर्ययौ ॥२७०४॥
2705 घनवर्षैर्व्यमर्षेण मार्गान्वेषी गवेषणम् । यावत्चक्रे क्षपान्ते तं तावच्छुश्राव निर्गतम् ॥२७०५॥
असाध्यमतिवेधोऽथ तमद्रष्ट्यनुजगाम सः । प्रस्थितं शारदादेवीस्थानं यावन्मितानुगः ॥२७०६॥
एकसार्थगतौ ज्ञातौ विना तौ ज्ञातियोषिताम् । दाक्षिण्यादक्षमः स्थातुमने सागा भवन्निव ॥२७०७॥
भवयाः पञ्चषान्धारान्क्ष्यधादारब्धिमेव तु । गुणाप्यकल्यः कौलीनमिति स्वस्य च चिन्तयन् ॥२७०८॥
दुराण्डगमने खण्डितेच्छः संभिस्य दारदान् । संयुयुत्सुर्मधुमतीरोधसा मार्गमग्रहीत् ॥२७०९॥ तिलकम्॥
2710 क्वापि श्यानाश्मसूच्यभिमृत्युदंष्ट्राङ्कुरोत्कटान् । क्वचिद्दुरप्रकाशाभ्रकालपाशान्धकारितान् ॥२७१०॥
प्रभ्रश्यद्धिमसंघातगजव्यूहोल्बणान्क्वचित् । क्वापि निर्झरफूत्कारनाराचक्षतविग्रहान् ॥२७११॥
क्वचित्क्षुरस्पर्शपवनस्पष्टस्फुटदसृग्धरान् । क्वाप्यातपक्षतहिमज्योतिर्मिहनंतृकपथान् ॥२७१२॥
दूरावरोहं प्रसृते स्फुटमग्रहते विदन् । ऊर्ध्वावरोहमसकृन्मन्यमानोऽप्यधोगतैः ॥२७१३॥
तुषारकालविषमान्वदलमान्यपि वासरान् । उल्लङ्घ्य स दरद्राड्भूतीमान्तमाममासदत् ॥२७१४॥कुलकम्॥
2715 गुर्वार्पितात्मसामग्रीहतार्किचन्यकावकम् । तं दुग्धघाट्कोट्टेशः पणम्यानयदर्चितम् ॥२७१५॥
दूरस्थितो विद्धसीहस्तदूतोक्ततदागमः । प्रक्रियां माहिणोच्चकवादिकायां नृपोचिताम् ॥२७१६॥
आविष्टदिष्टवृद्धिश्च राष्ट्रे कोट्टाधिपेन सः । अपारयत्स्वकोशस्य स्वामित्वं राजबीजिनः ॥२७१७॥
राजायमानो भोजोऽथ राजवासगतोऽर्थितुम् । आनिन्ये राजवदनापत्येनाभ्येत्य पश्यताम् ॥२७१८॥
2720 स पिशिकान्ततो राज्ञो मिषेण महितोऽन्तिकम् । तेनाज्ञाप्यरिनीत्युपपाशाप्रस्थापनोपमः ॥२७१९॥
कार्यगौरवविश्वासाभावव्यतिकरोचितम् । संदिश्य प्राहिणोत्तं स न स्वीकुर्वंश्च चोत्सृजन् ॥२७२०॥
किमाप्तोऽहं किमेकान्तभिन्नो राज्ञः शमैरिति । मां शास्यसीति तं दूतैः स राजवदनोऽवदत् ॥२७२१
तस्य शाठ्यं दर्शयितुं गोविन्देरिमिषान्नृपे । त्रुवाणेऽथ विदोषत्वं नागाद्यैरग्रहीत्क्षणम् ॥२७२२॥
सामग्र्यूनः शनैः स्थैर्ये ततः साम्यमथ क्रमात् । आधिक्यं चादधे तेषां विमर्दैर्धैर्यनिष्ठुरः ॥२७२३॥
तथा प्रतिष्ठां स प्राप तस्यापूर्वस्य भूमिजाः । दास्यमेत्य यथा प्रीतां नागुर्नागस्य बान्धवाः ॥२७२४॥
2725 स हि त्यागक्षमास्तम्भालोभादिगुणभूषितः । अभिगम्योऽभवन्नित्याभ्यस्तभूतिरिवोन्मिषन् ॥२७२५॥

२७००. 1) Emended; A कुर्वतास्व°. २७०२. 1) Emended; A प्राप्य. २७०३. 1) Conjectural reading; A गन्तुं मामुत्सृज्य; C मामुत्सृज्य. २७१२ 1) Emended; A °मिहित°. २७१३. 1) Emended; A °रोहं. २७१५. 1) Thus A; cf. दुग्धघातम् viii 2468. २७१६. 1) Emended with C; A °गमम्.—2) Emended; A °वादिकायान्नृपो°. २७१८. 1) Emended; A °गतोन्मितुम C °गतोर्थितं; G °गतोचिताम्. २७२२. 1) Emended; A °व्रणे. २७२३. 1) Conjectural reading; A सामग्री नः.

स्थैर्ये पृथ्वीहरादीनां स्वाश्रयाणां न कौतुकम् । आडम्बरो निरालम्बस्यास्य स्तुत्यस्तु विस्मृतः ॥२७२६॥

प्रथयन्पृथुलाम्बूहाधीराटविकभोगिकैः । कालमप्रापमोथ तस्थौ स भोजादीन्प्रतिपालयन् ॥२७२७॥

अहुरन्योन्यसंघर्षसेर्ष्यामात्यमतेन यां । ततो लुण्ठिप्रियत्वाद्या नीतिमन्येपि डामराः ॥२७२८॥

उद्घातप्रसितां विप्रवेष्ठा स्तोठमवन्धने । याधास्तेषां तदानीं सा जगाम ग्रहणातताम् ॥२७२९॥

त्रिल्लकौ जयराजश्च राज्ञा संवर्धितावपि । अकाण्डे नैव तपसा विपश्री चक्रमीलनात् ॥२७३०॥ 2730

यो यूकानामिव श्वभ्रमयानामिव क्षयः । दैत्यानामिव पातालं यादसामिव सागरः ॥२७३१॥

आश्रयः सर्वदस्यूनां त्रिल्लको माययोल्बणः । स देवसरसाभीष्टं संबन्धिप्रश्रयं व्यधात् ॥२७३२॥ युग्मम् ॥

काङ्क्षन्तोथ तदाक्षेपं क्षोणीभर्तुर्धिनो द्विजाः । प्रायं नृपतिमुद्दिश्य चक्रिरे विजयेश्वरे ॥२७३३॥

अकालदस्युनिर्माथं जानतोभ्यर्थनां न ते । राज्ञोगृह्णंस्ततः सोभूत्क्षिप्यासत्समानुगः ॥२७३४॥

प्रस्थातुं पार्थिवे सज्जे ज्यायान्यो विद्युतेप्यभूत् । स जातोत्पातपिटको जयराजो व्यपद्यत ॥२७३५॥ 2735

भाग्यश्चानेकतोजातदस्युवैविक्त्यमीशिता । ततो मडवराज्यं स विप्रवीस्वै विनिर्ययौ ॥२७३६॥

अमात्यदत्तविस्रब्धैः स्वशाखमठवैरिव । द्विजैर्निविद्योलंकारो मन्त्री राज्ञोभितोन्तिकात् ॥२७३७॥

स व्यवस्थापने दुःस्थदस्यूनां सोद्यमः सदा । सेर्ष्याणां मत्यमात्येषां तद्दोषपरिपोषकः ॥२७३८॥

त्रिल्लकोन्मूलनं कुर्यां कृत्वा द्वैराज्यभञ्जनम् । प्रतिज्ञायेति नृपतिर्विप्रान्प्रायात्न्यवीवरत् ॥२७३९॥

यस्तोथ त्रिल्लकस्तैस्तैरभिप्रैरुदवेजयत् । अमुञ्चितमुखो गूढामयो रोगान्तरैरिव ॥२७४०॥ 2740

जयराजानुजं राजा यशोराजं निवेशितम् । तन्मतेनावयस्कन्द भ्रातृव्यं राजकाभिधः ॥२७४१॥

यातुं तं देवसरसं स्वारात्याभिगं गतः । सज्जपालोल्पसैन्यत्वात्संदिग्धविजयोभवत् ॥२७४२॥

ज्ञातोदन्तस्ततोभ्येत्य रिल्हणो रणमुल्बणम् । जयलक्ष्मीकटाक्षाणां प्रथमातिथितामगात् ॥२७४३॥

मन्दरेणाथ तेनारिवारिराशौ विलोडिते । कल्योभूत्सज्जपालोव्यस्तुच्छारातिजलाहतौ ॥२७४४॥

जितेपि राजके स्वोर्व्यां विनानुग्राहकं क्षमः । न बभूव यशोराजः शून्ये बाल इवासितुम् ॥२७४५॥ 2745

प्रतीक्षमाणो द्वैराज्यपर्यायं क्ष्माभुजेकरोत् । त्रिल्लकः कालहरणं तैस्तैर्मायानतिक्रमैः ॥२७४६॥

यथाकालं ततो गूढोपेक्षान्मण्डलकण्टकान् । स्वपक्षसचिविद्विषान्दिक्षु क्षाविविधाक्षिपत् ॥२७४७॥

अथ पार्थ्वीहरिर्योभूच्चतुष्को लोष्ठकानुगः । राज्ञा भ्रात्रा समं बद्धः कारागारात्पलायितः ॥२७४८॥

स तेन निजजामात्रा रक्षितः स्वोपवेशने । असंख्यडामरयुतः ग्रामालौ संप्रवेशितः ॥२७४९॥ युग्मम् ॥

आकर्ण्य कुररस्येव निनादं तस्य भेजिरे । व्यक्ततां दस्यवो गूढा ह्रदस्थाः शफरा इव ॥२७५०॥ 2750

रुद्धं ततः राजवदनं वहयन्नोथ गगगजः । ररोध मलयोद्भूत वेलाद्रिरिव वारिधिम् ॥२७५१॥

वर्धमानक्षीयमाणसंहतौ तौ स्वजायताम् । धर्मे तजम्बालहिमौ तुषाराद्रितटाविव ॥२७५२॥

षष्ठस्य जयचन्द्रश्च श्रीचन्द्रश्चानुजौ ततः । दूरविप्रकृतौ राजमन्दिरात्प्राप्रवेशनौ ॥२७५३॥

ज्ञातनिवृत्यपर्यायौ पुर्वकार्यवशाप्रियात् । प्रतीक्ष्यादमजाहाराः साङ्कितमशुभागमम् ॥२७५४॥

---

२७२८ ¹) Emended; A व्. २७३५. ¹) Emended; A जाती°. २७३७. ¹) Doubtful emendation; A स्वशाखं मठ°. २७४४. ¹) Emended; A °धाराभिवस्तुच्छा°. २७४६. ¹) Emended; A प्रतिक्षमाणी. २७४८. ¹) Emended; A °ष्क: कोष्ठका°; comp. for the name of Pṛthvīhara's elder son, viii. 2912, 2709, 2496, 3313. २७५०. ¹) $A_2$ gloss कुररस्येति कुरर। मदु हुर इति भाषया काश्मीरेषु प्रसिद्धः. २७५१. ¹) Thus corr. by $A_2$ from गर्भजः.

2755 कटकाद्विद्रुतौ राजवदनान्तिकमापतौ । चतुर्थावपि भूभर्तुरागतौ प्रतिबोधिताम्[1] ॥२७५५॥
शैलमध्यावपथिकैरसंख्यैरथ खाशकैः । स पूर्वराजकोशार्थी भुलेश्वरमलुण्ठयत् ॥२७५६॥
तस्कराक्रान्त्यशरणं बलवद्विद्रवाकुलम् । अराजकमिवाशेषं राष्ट्रं कष्टां दशामगात् ॥२७५७॥
उदयं कम्पनाधीशं[1] रिल्हणं च ततो नृपः । चतुष्कयुग्ममादिश्य नगरं निरशोधिशत् ॥२७५८॥
पार्थ्वीहरिस्तु दुःसाधो महाव्याधिरिवौषधैः । स्तम्भितोऽभूत्ततो सैन्यैः संहन्तुं न त्वशाक्यत ॥२७५९॥
2760 कालापेक्षां स्वपक्ष्याणां दुर्बुद्धिं चानुरुन्धतः । आसीन्मन्दप्रतापत्वं रिल्हणस्यापि तत्क्षणम् ॥२७६०॥
विड्डसीहस्तु विज्ञातभोजोदन्तो व्यसर्जयत् । दूतान्समेतुमुर्वीशान्दरदानुत्तरापथे ॥२७६१॥
अपि विस्रब्धवनितारतोद्यैस्त्यक्तवैरिभिः । अपि किंमानुषपुरीगीतोद्गारिदरीगृहैः ॥२७६२॥
अत्यौष्ण्याद्वालुकाम्भोधेः शीतार्तैर्हिमरैकतः । अपि भृङ्गानिलैः पीतान्कुर्वाणैर्वसरान्कुरून् ॥२७६३॥
हिमाद्रिकण्ठमूर्धन्यैर्म्लेच्छेशाः यथावन्नोधिशिखाभिगुः । दिशस्तुरगैः तन्मन्तःस्कन्धावारं दरत्पतेः ॥२७६४॥ तिलकम् ॥
2765 राज्ञां संघटनं यावद्यथावद्दरदृपः । दिग्भ्यो भोजान्तिकं तावत्तत्सामन्ताः प्रपेदिरे ॥२७६५॥
स पिपिये तामखालालापान्वीक्ष्य गिरिमजात् । प्रीतिप्रवणयानवक्त्रान्कपीनिव ॥२७६६॥
जयचन्द्रादयो राजवदनमहिता अपि । कीराः काश्मीरका[1]ः पार्श्वमभजन्भाजनीजिनः ॥२७६७॥
अभ्यर्णस्थान्वलहरमसुखांश्च विदूरगान् । अपुण्यात्साल्हणिः स्वर्णैः परां कोशैशतां भजन् ॥२७६८॥
ततः स्नुजविलोपिच्छलतया निश्चोपचक्रिकः । भोजेन राजवदनः समगंस्तापसाश्रमम् ॥२७६९॥
2770 तयोरकृतकर्तव्यविशेषैर्वेतरेतरम् । आसतीत्वयोः शिथमविश्वासो व्यशीर्यत ॥२७७०॥
अभ्यभिमीयतां तस्यानिच्छतो दरदं विना । महात्मोदारकार्यैरुच्मितामेव स ताम्हयान् ॥२७७१॥
स्तुधेरसोढाभिमाटोपाः कटकस्यारत् नो द्विषः । तस्ताम्बमुन्भिकेयाहा भङ्गे भूयोऽपि योगभित् ॥२७७२॥
तस्मात्सर्वाभिसारेण रणमेकं समेत्यतः । विजयावजयावाभिरेकाहान्तरिता मता ॥२७७३॥
व्याजहारेति यद्भोजस्तदैवोष हसन्स्मयात् । निन्ये तद्दारदं सैन्यमुपेत्यागामिनीमभूः ॥२७७४[1]॥ तिलकम् ॥
2775 संकटान्ते वितीर्णामुपायस्तेषां प्रसर्पताम् । स राजवीजी भुभाव दरदाजमथागतम् ॥२७७५॥
तत्संगमाय व्यापृते तस्मिन्कोट्टान्तिकं पुनः । प्रावेशयद्रिल्हरो मातृग्रामं च तद्बलम् ॥२७७६॥
दिशस्ततो वीक्ष्य वहिर्भ्रान्त्यातमृगा इव । निसर्गधीरधीर्गार्गिर्न धैर्यात्स्वमहीयत ॥२७७७॥
यस्य सर्वेऽपि नीलाश्वडामराः स्वे च सैनिकाः । विपक्षैः सह संदेक्याः सैन्यान्तुभुक्षवो ययुः ॥२७७८॥
स तथा विषमस्थोऽपि प्रस्थित्यै प्रार्थितो निजैः । म्लानाननः प्रभुं द्रष्टुं न क्षमोऽस्मीत्यभाषत ॥२७७९॥
2780 स सूर्यवर्मचन्द्रस्य न जातः कश्चिदन्वये । उपयोगाय यो नागान्महाभिजनजन्मनाम् ॥२७८०[1]॥
भोजं सभाजयित्वाथ विड्डसीहः सपार्थिवः । सारैः समं स्वसामन्तैर्विजयाय व्यसर्जयत् ॥२७८१॥
ततो म्लेच्छगणाकीर्णा प्रजान्संवाहयन्चमूः । प्रयाणमात्रान्तरितः पृष्ठे तस्य बभूव च ॥२७८२॥
प्रादुष्कृतजयक्षोभे बले तत्रानुयायिनि । उत्साहात्साल्हणिर्मेने कृत्स्नां हस्तगतां महीम् ॥२७८३॥

---

२७५५. [1]) Emended; A प्रतिबोधिताम्. २७५८. [1]) Emended; A कम्पनाधीशरि°. २७६४. [1]) A स्तम्भा°. २७६७. [1]) Emended; A काश्मीरिका॰. २७७४. [1]) Emended; A° पणिनी°. २७८०. [1]) Emended; A कैश्चि°.

वाजिभिस्तर्जितैर्म्लेच्छराजैश्च बलमूर्जितम् । स्थाने समुद्रधाराख्ये निबबन्धाथ तत्पदम् ॥२७८४॥

स राजवदनस्थानाद्गुर्जेशाप्यबलोज्ज्वलः । मृत्युरम्भान्तरे दिष्टं षष्ठचन्द्रममन्यत ॥२७८५॥ 2785

ततः प्रावृट्पयोवाहकृतोदीपपरिप्लुता । संजायते स्म वसुधा समीभूतजलस्थला ॥२७८६॥

धरित्रीपानपात्रेभ्यः सीधुपूर्णे दधुर्द्रुमाः । मधा लब्धशिलामाला कच्छीलोलल्लोपमाम् ॥२७८७॥

षष्ठस्य संकटं जानन्भूभृच्छेषैर्बलैः समम् । अथोदयश्रीपर्ति तं च धन्यं व्यसर्जयत् ॥२७८८॥

वाहिनीलक्ष्ममार्गीणौ पदवीमनुजग्मतुः । मार्गे धनंजयस्येव शैनेयपवनात्मजौ ॥२७८९॥

लम्बाम्बुदेऽम्बरे दूरं वारिपूर्णे च भूतले । स्थलेव विद्युद्दृष्टो भिन्नपोतजनैःस्वना ॥२७९०॥ 2790

शोभामात्रोदितागर्वपरिवारबहिष्कृतः । तत्राभिभक्तकटकः पार्थिवः समजायत ॥२७९१॥

अमात्यौ राजवदने सत्त्वावष्टम्भयोः पुरा । अत्रापरो न विज्ञेयो राजवीजीति दारदान् ॥२७९२॥

त्रिल्लकः संदिशन्दूतैर्मूर्ध्नि पार्श्वौ हरिं नयन् । तयोरेकस्य सामर्थ्यादैक्षत हस्तशालिनम् ॥२७९३॥ युग्मम् ॥

अभिषिलिखितालेख्यकल्पं बलहरस्य तत् । तादृग्विलोक्य सामर्थ्यमथ राज्ञश्च सर्वतः ॥२७९४॥

विभक्ताशेषसैन्यस्य तत्र तथारिसंकटे । ज्ञात्वापतितमाधेयश्चित्रमुन्मुखदुर्नयः ॥२७९५॥ 2795

अकृशाधाविदाधारधिरं स्वाङ्गैः स गोपितम् । वहिर्दुर्वेधमत्याक्षीद्द्वितीयमपि कण्टकम् ॥२७९६॥ तिलकम् ॥

ध्वान्तेऽम्बुधरजालान्धमहावाते रजोभरः । स्वपक्षभेदयोर्जातकर्णेजपमहोद्यमः ॥२७९७॥

कुलच्छेदकृतो राज्ञस्तत्र तथातिसंकटे । अशाम्लजागरोऽस्थैर्यमनर्थपरिपोषकः ॥२७९८॥

सोऽथ भूरपुरेकस्माद्बहुभिः सह डामरैः । तेन संपूरितः पृथ्वीहरजो लोठकोऽपतत् ॥२७९९॥ तिलकम् ॥

तस्य संघटतः कन्थां प्रयातं वैकृतं चिरात् । पालीभङ्गे तटस्थेव प्रावृट्पूर्णस्य लक्ष्यताम् ॥२८००॥ 2800

निद्राणोपेन्द्रजठरप्रसादनिसृतं जगत् । समेतमिव तत्सैन्यं प्रत्यभाज्जलदागमे ॥२८०१॥

याबद्भिः पाय्यते नैदृक्संख्यातुमपि तद्बलम् । भर्तव्यकल्पैः सुस्वल्पयोधमध्यगतैरपि ॥२८०२॥

तावद्भिरनुगैः पिज्ञदेवडक्काधिपो युधि । तथोधान्याम्यहरितः सरितश्चातिथीन्व्यधात् ॥२८०३॥ युग्मम् ॥

तटोज्ज्वलैश्चितावह्निबिम्बितैस्तटिनीजले । मृतानामपि संस्कारः क्रियमाण इवाभवत् ॥२८०४॥

इति विस्मृतमृत्युः स कुर्वन्नेकाहमाहवम् । कथंचिदभ्रैरभ्येषुभ्रमसारोपसारितः ॥२८०५॥ 2805

पुरे स भुञ्जे सैन्यानि संगृह्णंस्तत्र सर्वतः । द्वित्रैरहोभिर्नगरं सुलभाशममन्यत ॥२८०६॥

इच्छां पद्मपुरस्कन्दे मन्दत्वं त्रिल्लकोऽनयत् । पृष्ठस्थयोर्यशोराजकम्पनाधीशयोर्भयात् ॥२८०७॥

न भृत्यैस्तादृशैः सिद्धास्यैकस्मिन्नसंमते । विधेयान्यलवन्यस्य डामरे होलडौकसि ॥२८०८॥

द्वैराज्ये सुस्सलस्यापि नैवाहृयत तादृशः । अनर्थो यादृगुत्तस्थौ तत्सुतस्य समन्ततः ॥२८०९॥

अनुष्क्रमनभीर्याथ राजा पादपदोपमम् । रिल्हणः प्रैषि तं पीडागण्डतुल्यं व्यपोहितुम् ॥२८१०॥ 2810

प्रस्थितस्तत्प्रमाथाय ग्रामाद्यैः सोऽन्वबध्यत । बजम्भावज्योतिषं हन्तुं पार्थः संशप्तकैरिव ॥२८११॥

अथावबाध्यभिक्षीणस्तान्व्यावृत्य निपातयन् । पद्माकरोन्मुखः पृष्ठलग्नान्भृङ्गानिव द्विपः ॥२८१२॥

---

२७८४. 2) Doubtful emendation; A °स्तर्जितो. २७८६. 1) Emended with C; A प्रावृट्पयो°. २७८७. 1) A °सीधु°. २७९९. 1) Thus A; comp. for this name viii. 2496, 2748, 2912, 3313. २८०३. 1) Emended with C; A °हरित. २८०८. 1) A होलकौकसि. २८१०. 1) Emended with G; A रिल्हणप्रैषित.

रणश्रान्तेन यमिता त्रियामा तेन रामठे¹ । गर्जत्कुल्यार्पितारातिपृतनावासरक्रिये² ॥२८१३॥

तं¹ कल्याणपुरं प्राप्तं विश्रान्तं सोयमागतः । करोभ्येत्य भूयोपि बलैर्भरितदिङ्मुखः ॥२८१४॥

2815 आपतन्नेव चारातिपदातीन्संमुखागतान् । दृष्टनष्टान्व्यधात्काकानिवामेजगलो गिलन् ॥२८१५॥

उद्भूतमारुतस्येव तस्यापाते पदातिभिः । तत्यजे रिल्हणः पर्णैर्हेमन्त इव पादपः ॥२८१६॥

पश्यतस्तस्य ते विद्रवन्तो जिह्मा न जिह्रियुः । देहस्पृहापारमित्यै कस्यैचित्स्यमनस्ययम् ॥२८१७॥

अभिरथायतस्य स्वैरर्थितो रिल्हणोब्रवीत् । नयन्प्रजाद्यजा साम्यं¹ स्वामिभक्तिस्मृतेः स्मितम् ॥२८१८॥

ह्री¹---चाविशेषेपि जन्तोर्जन्तोर्यदीहिता । भृत्यभावेपि यो लुब्धकस्त्यो धिक्तस्य जीवितम् ॥२८१९॥

2820 जातं वक्षःसरः श्मश्रुराजिनीलाब्जभाजनम्¹ । जराकैरवगौरं च राज्ञः पादान्प्रपद्य यान् ॥२८२०॥

म्लायत्सु तेषु भ्रूभङ्गभृङ्गभ्राजिष्णुभिर्भवेत् । कथं लक्ष्मीविलासैस्तदखण्डैरविडम्बितम् ॥२८२१॥युग्मम्॥

एषा कापुरुषासेव्या धीराणां नैव पद्धतिः । यदायासलवत्रासात्सौख्यवैमुख्यभागिता ॥२८२२॥

यस्यापातत एव प्रीतिजनितस्त्रासोथ तीर्थाम्बुभिः स्नाने दुःखसुखोपलब्धिरसमब्रह्मानुभावोपमा ।
वैकल्यं¹ समरे वपुर्विजहतामेवं किलोपक्रमे कैवल्याख्यसुखोपलम्भपरमा पश्चात्पुनर्निर्वृतिः ॥२८२३॥

एवमुक्त्वा परानीकमेकाकी स व्यगाहत । गृध्रक्षारान्हरिग्रीवप्राससंदिग्धभूकृतान् ॥२८२४॥

2825 स्वर्णस्तबकभांजालहरितालोज्ज्वलोभजत्¹ । खड्गपट्टनटस्तस्य रणरङ्गोत्सरङ्गताम् ॥२८२५॥

तस्खड्गस्य प्रतः खड्गाख्लीवैर्जालच्छलाङ्कुरम् । उत्थाय लग्नं शत्रूणां तृणैस्तृणमणेरिव ॥२८२६॥

आजौ तमनुजग्मुस्ते धैर्यमगण्यन्त वैरिणः । तिर्यङ्नोलक्ष्यतां यातास्तेषां प्राणास्तृणान्यपि ॥२८२७॥

संप्रविष्टो मुखान्मृत्योः कैश्चिन्मार्गैः स निर्गतः । तिमेः संमीलितास्यस्य श्रोत्ररन्ध्रैरिवोदकम् ॥२८२८॥

शश्वत्कुर्वन्परावृत्तीः श्रमशान्त्यै विनिर्गतः । प्रक्षीणभूयिष्ठबलो लब्धोत्सेको रिपावभूत् ॥२८२९॥

2830 पृष्ठतोथ पपाताथ चतुष्कः पुष्कलैर्बलैः । साहायकागतं प्राक्स यं स्वं कंचिदमन्यत ॥२८३०॥

तस्योभयमुखस्यारिसैन्यस्याहेरिवेक्षणात् । न संरम्भः¹ शिखण्डीव परं ताण्डवितोभवत् ॥२८३१॥

तौ व्यूहावथ पर्यायैर्मुखपृष्ठं प्रदर्शयन् । सोक्षिणोद्युधि मन्थाद्रिर्मथनेब्धितटाविव ॥२८३२॥

कीलनिश्चलयोर्भ्राम्यन्नसङ्कुशान्तरे द्वयोः । कुविन्द इव ¹--- तुरंगमत्वरान्वितः² ॥२८३३॥

भासः प्रत्ययहीनस्य तमेकद्रुतमाश्रयम्¹ । एकतोम्भोभरं द्वीपस्येव कूलविलोद्गमः ॥२८३४॥

2835 तेन वैरिचमूचक्रे लुलितायुधकुण्डला । क्रीडता चण्डवेगेन पुरुषायितुमक्षमा ॥२८३५॥

त्रासपाण्डुन्द्विषां वक्त्रकुम्भान्स्वेदाम्भसाचितान् । स कुर्वन्भूभुजं¹ जाने भूयो राज्येभ्यषेचयत् ॥२८३६॥

स च पार्थ्वीहरिश्चास्तामन्योन्यस्य क्षपाक्षणे । सज्जौ मान्त्रिकवेतालाविव रन्ध्रगवेषिणौ ॥२८३७॥

साहायकागतान्साक्षीकृत्य¹ क्ष्मापतिसैनिकान् । अन्येद्युः सोकरोच्छत्रुं वनमार्गावगाहिनम् ॥२८३८॥

पर्यस्तशौचान्संचिन्त्य त्रिल्लकादीनथाययौ । सल्लपालस्तृतीयस्मिन्दिवसे रिल्हणान्तिकम् ॥२८३९॥

---

२८१३. ¹) Should probably be रामुषे, cf. ii. 55.—²) Emended; A गर्जत्कुल्या°. २८१४. ¹) Emended; A तत्कल्या°. २८१८. ¹) Thus A; perhaps read with G (*sec. manu*) प्रजासज्जाचारत्वं. २८१९. ¹) Thus A; C ह्रीयमाणविशेषे. २८२०. ¹) Emended; A °भैरजनम्. २८२३. ¹) Thus corr. by a later hand from A, वैकल्ये.—²) Conjectural reading; A वेकल्या°. २८२५. ¹) Emended with C; A °प्रजाजाल°. २८३१. ¹) Emended; A संरम्भे. २८३३ ¹) Thus A; C supplements पूर्ण्योस्तुरंग°.—²) Emended, A °गमतुराञ्चितः. २८३४. ¹) Emended with C; A द्रुतमाश्रयम्. २८३६. ¹) Emended with C; A °भुजाय. २८३८. ¹) Emended; A साक्षीकृतक्ष्मा°.

नृपप्रतापग्लपितः स ताभ्यां पर्यशोष्यत । वनान्तः शुचिशुक्राभ्यां पुण्यक्षीण इव द्रुमः ॥२८४०॥ 2840

चितानल इवासारैर्युद्धैः शममनाश्रितः । उदयेन शनैर्निन्ये चतुष्कोपि मितोष्मताम् ॥२८४१॥

दारदं बलं दृष्ट्वैर्मसंबाहवाहिभिः । हयैरचकरोदाद्रिकुहरादाहवोन्मुखम् ॥२८४२॥

तुरुष्कलोकेनाक्रान्तान्वेशांस्तद्ग्रामीयुषः । शङ्कमानैर्जनैर्ज्ञाता कृत्स्ना म्लेच्छावृतेव भूः ॥२८४३॥

प्रयाणमात्रान्तरिते धन्ये द्वारपतावपि । साहसं निःसहायस्य तस्ताद्दैत्यमतोभवत् ॥२८४४॥

ज्वलत्कवचकसंबाहं तत्सैन्यं स द्विषोरुधत् । कणज्ज्वालावलिं दावं सनिर्झर इवाचलः ॥२८४५॥ 2845

विधूय जयचन्द्रादीनप्रस्थानरोधिनः । बलबाहुल्यदृप्तास्ते व्यगाहन्ताहवावनिम् ॥२८४६॥

तेषां हयसहस्राणि त्रिंशद्विंशत्तुरंगमैः । रंहसा प्रतिजघ्नाह निजघ्नाह च गर्गजः ॥२८४७॥

तस्यास्तुरङ्गिर्दृष्टो पौरुषं तदमानुषम् । एकैकस्यापतो यस्य वैभवक्ष्यमिवादधे ॥२८४८॥

अश्ववङ्गामविन्यस्तवक्त्वास्ते विद्रुताः क्षणात् । जघाहिरे कापुरुषा गिरीन्किंपुरुषा इव ॥२८४९॥

अभूमिज्ञतया शत्रावेव जातः पराभवः । धन्यस्तस्मात्पुरस्कृत्य जयं प्रत्याहरिष्यथ ॥२८५०॥ 2850

इत्युक्ता राजवदनजयचन्द्रादिभिर्निशि । तथेति मिथ्याकथयन्दारदा विग्रहोन्मुखाः ॥२८५१॥ युग्मम् ॥

प्रवेश्य धन्यद्वारेशौ दूरं बल्हरो बली । ऐच्छत्सद्यभिसंधातुं रुद्धा पाश्चात्यपद्धतीः ॥२८५२॥

स्कन्धावारेण सार्धं च दरदां राजबीजिनम् । विधातुं विदधे बुद्धिं तं ततस्तारमूलके ॥२८५३॥

चिकीर्षति ततस्तस्मिन्प्रसेऽ्वन्धेषु दस्युषु । उत्सेहे साल्हणिः कृत्स्नं राज्यं निखिलं निर्जितम् ॥२८५४॥

जवाभावेप्यनन्तेवृक्तामन्तसहितस्ततः । भव्योस्मि भवितेत्येवं विचिन्त्यैक्षिपिचे च सः ॥२८५५॥ 2855

पद्योन्माथाद्द्विरदरदनैरश्रियैः पद्मबन्धोरिन्दौ स्पर्धिन्युदयति वपुः खण्डशः स्वं भिदेत ।

तापस्त्यज्येत च रुचिरतांभागिभिः सूर्यकान्तैर्भद्राभद्रं व्यसनसमये संभवेदप्रतर्क्यम् ॥२८५६॥

यो डामरतया भिक्षोः शश्वत्कृच्छ्रेप्युपेक्षणम् । टिक्कादीनां च कौटुम्ब्याद्भर्तुर्द्रोग्धृमूर्धनि ॥२८५७॥

अलब्धन्यतयानन्यसामान्याश्चर्यवर्धनात् । ततः कृष्णोपयोगाच्च विधासस्येव मूर्धनि ॥२८५८॥

तौ नागराजवदनौ व्यसनावसरे तदा । चित्रं स्वकार्यतात्पर्याद्गुणावरतां गतौ ॥२८५९॥ तिलकम् ॥

स्वयं विधेयं नागोन्यकृतं तं वीक्ष्य विभ्रमम् । अदूरमर्थमन्येन कृतं कविरिवाभुवत् ॥२८६०॥ 2860

क्ष्माभृद्विपक्षं स्वं पक्षीकर्तुं कृपाननं ततः । संत्यज्य राजवदनं मां भजस्वेत्यभाषत ॥२८६१॥

संभ्रान्तं वः प्रतीक्षध्वं[1] तेजोबल्हरात्मजम्[2] । युग्याधिरूढं किं नारिसेवतां[3] धार्मिको यथा ॥२८६२॥

इति ते संदिशन्तं च व्यसहन्त विहाय तम् । कामधेनुसमं नागं छागाश्वेषाद्विधि[1] यत् ॥२८६३॥

सर्वः स्वकार्यतात्पर्यात्प्रवर्तेत प्रियाप्रिये । लोहवैरेन्धदीये तु न किंचिदधिगच्छति ॥२८६४॥

ज्योतिस्तर्जितकान्ति हन्तयुगलं वाच्यं सुधादीधितेर्दोषास्वादधिया प्रिया मधुलिहां कुम्भस्थली कुम्भिनः ।

वासस्यैव[1] विरोधभाक्सरसिजस्येत्यत्र नेन्दो रतिस्तस्याप्यायकृतौ हितोयमिति नाप्यस्य द्विरेफा द्विषः ॥२८६५॥ 2865

२८४२. [1]) Thus A; C तद्बलं.—[2]) Emended with C; A दृष्ट्वैर्म°. २८४४. [1]) Doubtful emendation of C; A तस्ताद्द्रै°. २८५३. [1]) A स्कन्धा°.—[2]) Emended: A राजबीजिनम्. २८५४. [1]) Emended with G (sec. manu); A निखिलनि°. २८५५. [1]) Emended; A °सहितस्ततः. २८५६. [1]) Emended; A रुचिरतामा°. २८६१. [1]) Emended with C; A तस्याश्च. २८६२. [1]) Emended with C; A प्रतीक्षध्वं.—[2]) Cf. तेजोनामा बल्हरात्मजो viii. 2695 and note.—[3]) Thus A; perhaps read नारिसे°. २८६३. [1]) The text of this verse is evidently corrupt; A as above. C reads व्यसहन्त संदिश्य तं । कामधेनुसमं नागं छागाश्चेषो विधिर्न यत्. २८६५. [1]) Doubtful; A वा°स्यैव; C सूरस्यैव.

प्रतिष्ठालोठनं कर्तुं ततो बल्हरस्य सः । आजन्म वैरं संरेभे तेन भूभृद्विलेषवा ॥२८६६॥
स तथा दारदान्भ्रमानभिज्ञो मुमुचे न कः । सभोजाञ्जराजवदनो इत्यादिस्त्वभ्यधाद्विभीः ॥२८६७॥
दरद्राजानकानीतनेतारौ कम्पनापती । मक्वालक्षेमवदनमणा- -भिधावुभौ ॥२८६८॥
यस्यसोजसनामा च कोष्ठेशो मण्डिलं रदः । ब्रुवाणास्तथ्यरस्यन्त भोजेनान्तरवेदिना ॥२८६९॥
2870 स्फाटिकेनेव सैन्येन तेनान्ते ह्रदमप्यथ । दिधक्षु राजार्कमहो विक्षुसीहेन्धनेऽपतत् ॥२८७०॥
पार्थिवानर्थदुश्चिन्तामययक्ष्मपरिक्षतः । स यक्ष्मणक्षपाक्षीणसोमसाम्यं समाययौ ॥२८७१॥
रोगग्रस्ते रणग्रस्ते पृष्ठगोप्तरि भर्तरि । तथाभियोज्ये स्थाने च भयजर्जरतां गते ॥२८७२॥
आहारस्थं बलहरं विहाय निखिलास्ततः । पलायिषत तेऽन्येद्युर्विगाह्य हरिभिर्गिरीन् ॥२८७३॥ युग्मम् ॥
दृष्ट्वा बहुमतं प्रातरागन्तारः पुनर्वयम् । कथयित्वेति संप्रार्थ्य साल्हर्णि सह तेऽगमन् ॥२८७४॥
2875 प्राक्पीनकोशो वैवश्यात्स तेषामनुगोऽभवत् । भट्टकार्यस्तु वैकल्यं भ्रमे मज्जन्निवाद्यये ॥२८७५॥
मुहुः सर्वशिरोविस्फारक्तपूर्णमिव ज्वलत् । अवरोहद्वनच्छाम्बुसोपानाश्मनिभं मुहुः ॥२८७६॥
ज्ञातेन पतितेनेव मुहुर्व्योम्ना महीसमम् । व्रजतस्तस्य वैलक्ष्याद्लक्ष्याक्षमभून्मुखम् ॥२८७७॥
दध्यौ च धिङ्ग ये शाश्वत्प्रभावं वयमीदृशाम् । राज्ञो दृष्ट्वाप्यनात्मज्ञा जानीमो मर्त्यधर्मताम् ॥२८७८॥
प्रतिभाप्रौढनिर्भातत्त्वानां नान्यथा शिरः । महाकवीनामेतादृक्प्रतापानलवर्णने ॥२८७९॥
2880 राज्ञः प्रतापशिखिनः कणाः क्षोणौ न सन्ति चेत् । तत्कस्माद्वयमायाताः पदन्यासेष्वधीरताम् ॥२८८०॥
अनेकशोऽस्य वीराणां पीतधाराम्बुडम्बरे । शोषः प्रादुष्कृतो न स्यात्तज्ज्वालासंज्वरं विना ॥२८८१॥
किमन्तरेण तद्धूममालान्ध्यं मोन्मिषद्दृशः । मार्गामार्गविभागस्य परिज्ञाने विमूढता ॥२८८२॥
मधुमत्यास्तटेऽन्यस्मिन्विवर्ज्य दरदः स्थितान् । वीचीजवनिकाच्छन्नः सोऽवाप्याथ तटेऽवसत् ॥२८८३॥
क्रमादुत्खातखेदस्तैर्नीत्वा स्वशिबिरान्तरम् । तन्नेष्यतेति संधातुं रोहप्रोहस्पृहातुरैः ॥२८८४॥
2885 नृपं तेषां सगण्यार्थवर्षिणं नयनैपुणात् । उपजीवितुमिच्छाभूत्तत्क्षणवणिज्यया ॥२८८५॥
नानेहा विग्रहस्यायं प्रत्यासन्नो हिमागमः । मधुमासि विधास्यामः पुनरारब्धिमुत्तमाम् ॥२८८६॥
कालक्षेपक्षमस्त्वं चेद्भुद्दराष्ट्राध्वनाधुना । स्वान्तर्निबन्धो बलिनस्त्विह्लकस्योपवेशने ॥२८८७॥
राजानं राजवदनः श्रितसैरित्यसावतः । उत्कोच्यत स्वराष्ट्रान्तर्युक्त्या बन्धुं नराधमैः ॥२८८८॥ तिलकम् ॥
अपि राजपुरीयाणां कौटिल्यं तैर्हि जीयते । दैर्घ्यं निदाघकालानां वियोगादिवसैरिव ॥२८८९॥
2890 तथा यातमुपालेभे दूतैर्बल्हरोऽथ तम् । मद्दो निहितग्रास्त्वस्मीति चोटिमवटाकरः ॥२८९०॥
हस्साहादाहवस्थोऽपि स तथा गार्गिमंभिमम् । आयान्तं च नृपानीकमुत्साहार्य व्यचिन्तयत् ॥२८९१॥
अकस्माद्विद्रुतदरद्राजभोजादिवार्तया । न व्यवीर्यत यद्वैर्यपर्याप्तिस्तत्किलाद्भुतम् ॥२८९२॥
आडम्बरालम्बनस्य भैरव्यादिकृतविग्रहः । यद्युद्धोद्दतं सिध्येत्तत्कस्यामानुषं विना ॥२८९३॥

---

२८६८. [1]) Thus A; the *akshara* before the *lacuna* could be read also श्रु; C °वदनमधुमत्ताभिधा°. २८७०. [1]) Emended with C; A दिदक्षु.—[2]) Emended; A विक्षुसुहेन्धने°. २८७३. [1]) Emended; A पलायिषतेन्ये°. २८७५. [1]) A °कार्यो. २८७६. [1]) Doubtful emendation; A सर्वशिरोविस्फ°.—[2]) Emended; A °ज्वलत्. २८८४. [1]) A स्वशिविरा°.—[2]) Emended; A रोहप्रोहः स्पृह°. २८८९. [1]) Emended; A °दवानां. २८९१. [1]) Emended with C; A गार्गिम°.—[2]) Doubtful emendation, A °कमु – हाज; C °नीकं दृष्ट्वापि नत्व°.

कालानुरोधात्संधिस्तु धन्यहाराधिपावथ । सोयोजयद्विलम्बेन भोजस्यागमनाशया ॥२८९४॥

ततोलंकारचक्रः स नेतुं साल्हणिमाययौ । ज्ञातेयाहारदानेत्य[1] प्रार्थिता परिपन्थिनीः ॥२८९५॥ 2895

बुद्ध्वा तदनुबन्धेपि द्रोहनिर्बन्धिनीः सभाः । अमर्षीन्मार्गसेतुघ्ने निधनाध्यवसायिताम् ॥२८९६॥

भृत्यैः सह युग्मपायैर्वीक्ष्य तं मर्तुमुद्यतम् । दरापुरं दरद्राजसैन्यं तदैन्यमाययौ ॥२८९७॥

व्यपोहन्ती बल्हरी बाहुभिः कलहं सरित् । कल्लोलास्फालनोल्लापैर्निनिन्देव दरत्कुलम् ॥२८९८॥

प्रेषितः स्वापरोधैश्च सेव्यैश्च म्लेच्छपार्थिवैः । सैन्यैः कदनभीतैश्च विद्युसीहोथ तं जहौ ॥२८९९॥

पुरःसरैर्भग्नसेतुपालैः पारं परं ततः । विज्ञाप्य तानि[1] स प्राप भिन्नैस्तूर्यरवैर्दिशः ॥२९००॥ 2900

असामर्थ्ये वरूथिन्याः[1] स्वस्य प्रार्थितसंधिना । आनीतो विद्युसीहेन दूतः प्रोक्तोथ भूपतेः ॥२९०१॥

अमानुषानुभावेन तावत्स्वस्वामिना[1] भवेत् । पातिसीमिकसामन्तयुद्ध्या स्पर्धाद्य भीवरः ॥२९०२॥

अभद्रेयानुसंधान एव यान्तौ[1] यमान्तिकम् । जयराजोस्मि यामुष्य प्रभावावेदकौ दिवि ॥२९०३॥

तेन दिव्यानुभावेन निर्जयोपि जयो मम । यान्यस्य कुलविध्वंसात्तीर्थे पतनमुद्गतिः ॥२९०४॥

अथायातः पुरे स्थित्वा कंचित्कालं निजेबिधान् । यमराडुमसरत्कीर्तिलसद्वन्दनमालिकम्[1] ॥२९०५॥ 2905

अबुद्ध्वा भोजमायान्तं संधिं तत्रैव वासरे । सार्धं हारेशधन्याभ्यां स राजवदनोप्यगात् ॥२९०६॥

अथागतं तं व्यावृत्य षष्ठं षष्ठ मनस्विनाम् । आदाय तावदाभ्यर्णे[1] प्राविक्षातां क्षमापतेः ॥२९०७॥

अहंकाराद्विमोहाद्वाविमर्शेन[1] बहिष्कृतौ । उपेक्षामक्षते भोजेभजतां[2] राजबीजिनि ॥२९०८॥

आहूतस्तु हठोत्कण्ठाभाजापि प्रभुणासकृत् । अनिःशेषीकृताराति र्न व्यावर्तत रिल्हणः ॥२९०९॥

प्रभोः पुरस्तात्कार्यान्ते तेन स्थातुमशक्यत । प्रसादाकाङ्क्षिणा वदेनेव भोक्तुं न हि कश्चित् ॥२९१०॥ 2910

द्विधा कृता येन युद्धे पृथ्वीहरसुतद्वयी । मगधेन्द्राकृतिर्भीमेनेव कार्यक्षमाभवत् ॥२९११॥

मातृकुक्षिमिव स्वोर्वीं तेनाजौ लोष्ठकः[1] कृतः । खाण्डवे खण्डितः सर्प इव गाण्डीविनाविशत् ॥२९१२॥

भजंश्चतुष्कः[1] संकोचं दुर्भेदं विल्लकालयम् । स्वकायकर्परं दर्पोज्झितः कूर्म इवाविशत् ॥२९१३॥

निःशेषीकृतकार्यः स शौर्येणैव महीपतेः । पार्श्वं पावनसज्ज्योतिःपट्टबन्धाप्तये ययौ ॥२९१४॥

प्रतापैर्नृपतेरित्थं विप्लवः शोषितोप्यभूत् । अमात्यमतिदोषेण भूयः प्रादुष्कृताङ्कुरः ॥२९१५॥ 2915

दण्डार्हो राजवदनो दानेनाप्यायितो यतः । निर्भर्य भोजमायान्तं प्रतिजग्राह तं पुनः ॥२९१६॥

तत्कोशपरिणामान्तं सोथ स्थापयति स्म तम् । दिन्नाग्रामाभिधे स्थाने खाशकानां निवेशने ॥२९१७॥

इत्येनमब्रवीच्चक्षुःश्रदायास्यो नानुगामिनः । मितानुयायी हारेशः प्रायात्स्वप्रोषरान्मम ॥२९१८॥

सोत्कम्पः साहसस्रोतःपातैर्[1] नीयत नौरिव । विल्लकेनापि स स्थैर्यं नीतिरज्जुप्रसारणात् ॥२९१९॥

असमोल्लासवैवश्यं विशां पत्युर्व्यचिन्तयत् । येनाव्यवस्थाप्रायम्यं स जाल्मः पुनरग्रहीत् ॥२९२०॥ 2920

अलंकारादिभिः स्वास्थ्ये स्थाप्यमानोपि मन्त्रिभिः । अत्यजन्नेव कौटिल्यमजितास्मेत्र[1] दुर्ग्रहम् ॥२९२१॥

---

२८९५. [1]) Emended; A °हारदानेत्य; the text is corrupt. २९००. [1]) Emended; A विज्ञाविनानि. २९०१. [1]) Emended; A वरूथिन्या. २९०२. [1]) Emended; A ताव स्वामिना. २९०३. [1]) Emended with C; A यान्तो. २९०५. [1]) Emended; A °मालिकाम्. २९०७. [1]) The letter corresponding to य cannot be read with certainty in A; C तावताभ्यर्णे. २९०८. [1]) A °विमर्शेन.—[2]) Emended; A भजति. २९१२. [1]) Comp. note to लोष्ठकः viii. 2496. २९१३. [1]) Emended with C; A भजंश्च°. २९१९. [1]) Emended with C; A °पातपाते°. २९२१. [1]) Emended; A अत्यजन्नेव and °जितास्मेव.

गर्तं मेष इवापाकं समवज्ञाय पार्थिवः । पक्षगण्डानिवारेभे रिपून्पाटयितुं परान् ॥२९२२॥

आगन्तव्यं त्वया पश्चात्त्वस्मात्स्व प्रकम्प्यताम् । भोजमुक्तेत्यलंकारचक्रोऽगाद्विप्रबोधितः[1] ॥२९२३॥

तं जयानन्दवाडाख्यो[1] दस्युरानन्दवाडजः । अन्वयुर्विक्रमोद्दामाः परेऽपि क्रमराज्यजाः ॥२९२४॥

2925 अप्रस्थितो राजगृहोलंकारः स्वल्पसैनिकः । वालुकासेतुकल्पस्तैर्जज्ञे[1] सिन्धुरयैरिव ॥२९२५॥

स तु रामचराख्याभिक्षोभसंभावनां विधाम् । उदपादयदेकाकी कुर्वन्बहुभिराहवम् ॥२९२६॥

आपातरभसक्षुभ्यद्रक्षःसंभ्रमदक्षिणम् । रणं जगाम गङ्गात्यमञ्जसाप्यपरिप्लुतः ॥२९२७॥

स मूलकूटमिव तस्कटकं विकटं द्विषाम् । किमन्यत्स्यैरयत्क्वापि प्रभञ्जन इवाञ्जसा ॥२९२८॥

ग्रासाय गृध्रकङ्कादिपक्षिव्रातस्य[1] तत्यजे । आनन्दवाडस्तनुः[2] स हत्वा तेनेषुणा रणे ॥२९२९॥

2930 भोजस्योत्थातुकामस्य जिघृक्षोः क्ष्माभुजश्च तत् । पङ्कप्रधावत्ककरव्याधन्यायो व्यवर्धत ॥२९३०॥

अनुद्यमनसामर्थ्यः भ्राम्यति क्रकरो यथा । धावन्पङ्के पतन्व्याधोप्यनुधावत्ययान्वहम् ॥२९३१॥

प्रसङ्गे साहसस्यैवं भोजः क्लैब्यमगात्सदा । तं प्राप्तुमिच्छुर्भूपोपि मतिमोहं मुहुर्मुहुः ॥२९३२॥ युग्मम् ॥

दिन्नाग्रामस्थिते भोजे स राजवदनोऽप्यगात् । पुनः किं चौरचण्डालाः श्रेयसीत्युक्तिमीशितुः ॥२९३३॥

डामरा भद्रसंघाता भूयः पूर्वाधिकास्ततः । कन्यां ते मन्थयामासुर्मुहुर्यो शौर्यशालिनः ॥२९३४॥

2935 ते द्वारपतिमायातं सोढुं शेकुर्न केवलम् । अशक्यैराहवैर्योधवात्यर्यादुदवेजयन् ॥२९३५॥

तेषां त्राणार्थमन्येषामुत्थानार्थमथाययौ । कृष्टोलंकारचक्रेण नीविं दत्त्वा स साल्हणिः ॥२९३६॥

तेषां परेद्युः पार्श्वे स यियासुरसकृत्तदा । छायाश्रमं भ्रान्तसैन्यो द्वारेशोबुद्ध तं तदा ॥२९३७॥

अजानन्निव तेषां स व्याजसंधिं निबद्धवान् । मिषात्कुतोप्यगात्स्थैर्यैकस्थितं सत्तारमूलकम्[1] ॥२९३८॥

तस्मिंस्तत्र स्थिते दूरात्कुतस्त्यामपि पूत्कृतिम् । श्रुत्वा भोजोवदत्सायं किमपि व्याकुलीभवन् ॥२९३९॥

2940 निर्भीर्विहस्यमानोपि त्रासात्तस्मादहेतुकात् । व्यरंसीत्संभ्रमाद्यासी चक्रे सज्जांस्तु वाजिनः ॥२९४०॥

अस्तोलंकारचक्रोथ दशग्राम्यमतो द्रुतम् । क्व राजपुत्र इत्येवं कथयित्वा पलायितः ॥२९४१॥

उदतिष्ठत्ततो ग्राममध्यात्तूर्यध्वनिर्महान् । आस्कन्दावेदकः सेनानिनादश्च क्षपामुखे ॥२९४२॥

अलक्षितो ध्वान्तमध्ये भेजे भोजः पलायनम् । श्वः कर्तव्येप्यलंकारचक्रो युद्धाय संदधे ॥२९४३॥

दत्तो द्वाराधिपनाभिर्गिरिवर्त्म प्रकाशयन् । ध्वान्तध्वस्तात्मनां[1] तेषां तदाभूदुपकारकः ॥२९४४॥

2945 द्वाराधिपस्य क्षाम्यन्तः[1] संधिं भोजप्रतीक्षया । श्रुत्वा तमथ वृत्तान्तं भङ्क्तं ते डामरा ययुः ॥२९४५॥

असंख्यजनपत्त्यादिबन्धं धीरोबलाभयात् । आजिं स भोजोलंकारचक्रेणामङ्गलावहम् ॥२९४६॥

. . . . . . . . . . . . . . . . . . . . . . . .[1] । भोजस्तत्राप्यभूत्सर्वासारादिसुखान्वितः ॥२९४७॥

बाणाग्निजस्त्रिपुरनिर्दहने प्रतापः पाथोनिधेः प्रमथने वडवाग्निजन्मा ।

आसाद्य मन्दरनगेन समागमं हि न क्वापि पन्नगपतेः सुखसख्यमासीत् ॥२९४८॥

---

२९२३. 1) Emended with C; A °चक्रेणाद्वि°. २९२४. 1) A °वाडाख्यो and °वाडजः. २९२५. 1) Emended with G (*sec. manu*); A °कल्पस्तं जज्ञे. २९२६. 1) Conjectural reading; A रामचराख्या°; C शत्रुभिराख्या°. २९२९. 1) Emended A °पक्षिव्रातस्य; C °पक्षिव्रा°.—2) A आनन्दवाड°. २९३३. 1) Emended; A तस्मात्तु°. २९३८. 1) Emended; A सन्ता°. २९४४. 1) Emended; A °स्वना. २९४५. 1) Emended with C; A °क्षाम्यन्तः. २९४७. 1) Two or more *pâdas* seem to be lost here; A does not indicate the *lacuna*; C supplements संरम्भात्स्वस्यमारेभे साम्यभोज्यं च यत्नतः.

क्षुत्पिपासाश्रमं हन्तुं प्राप्तः स्वविषयावनौ । अलंकारात्मजैर्भूयो बन्द्धुं[1] भोजोऽभ्यलष्यत ॥२९४९॥

पितुर्मतेन बुद्ध्या वा स्वया तत्तद्विचिन्तकः । सोऽभिसंधाय निर्यातः प्रापाय विषयान्तरम् ॥२९५०॥ 2950

ततो बल्हरेणैव कृत्यं निश्चित्य कार्यवित् । धन्योऽन्यलवन्येषु दिशाग्रामं पुनर्ययौ ॥२९५१॥

द्वाराधिपोऽहितोद्धारधीरोऽभ्यन्तरेऽक्षमः । चक्षूरोगेण भग्नाभियोगोऽकस्मादधीयत ॥२९५२॥

भोजाय दातुमैच्छद्यो डामरस्ते धृते ददौ । पर्णोण्डये गुल्हणाय राजजाय च निर्जितः ॥२९५३॥

रोगोऽखण्डतया दण्डप्रयोगावसरे कृते । तत्र ग्राम प्रयुज्यैव द्वारेशो विषयोचितात् ॥२९५४॥

अभियोगक्षणे तस्मिन्ययौ भारसहः क्षयम् । दुर्नामकामयक्षामः षष्ठचन्द्रोऽपि गर्गजः ॥२९५५॥ 2955

तत्रामयाविन्येवास्ते द्वेकौ तदनुजौ निजौ[1] । चक्राते बहुधा दुःस्थामास्कन्दाद्यैरुपद्रवैः ॥२९५६॥

त्रिल्लकः प्रबलैरन्यैः सहाभेदं प्रवर्धयन् । नाग्रहीद्विमदैकाग्र्यः सान्त्वनामपि भूपतेः ॥२९५७॥

षष्ठे निष्ठां गते रोगमग्ने द्वाःपतावपि । नियुक्तः क्ष्माभुजा धन्यो[1] निरगाल्लारमूलकम् ॥२९५८॥

भोजश्च्युतो मुतोऽन्येषां बलिनां गोचरे पतेत् । ग्रामप्रतिष्ठो निस्तीर्णो देशाद्वासाध्यतां व्रजेत् ॥२९५९॥

इति संचिन्त्य सामाद्यैरुपायैस्तं जिघृक्षुणा । क्ष्माभुजामन्दसंरम्भो विदधे सोऽभियोगभाक् ॥२९६०॥ युग्मम् ॥ 2960

अज्ञातोदर्कवैषम्या दुर्नीतिः सा महीभुजम्[1] । व्यावृत्यावाधताक्लिन्नपुच्छाकृष्टेव पन्नगी ॥२९६१॥

बलिने राजवदनं नृपं चावेत्य निर्बलम् । आभ्यन्तराश्च बाह्याश्च विक्रियां चक्रमाययुः ॥२९६२॥

छिद्रान्तराणि सुलभानि सदैव हन्त पातालरन्ध्रसरणेरिव दण्डनीतेः ।
बहीभवन्प्रसरमन्तरसंप्रविष्टो यास्यप्रतर्क्यविषमास्पतनं भजेद्वा ॥२९६३॥

भोजस्त्यागोऽर्थितो राज्ञा क्षीणार्थोऽसौ व्रजेदितः । वक्त्वेत्यमुं बल्हरस्तस्य वृत्तिमकारयत् ॥२९६४॥

तां लब्धप्रसरां मायां राजपक्षे विलोक्य सः । युक्त्यन्तराणि संलेभे प्रयोक्तुं नीतिकौशलात् ॥२९६५॥ 2965

संधिं पदे पदे बद्ध्वा सार्धं बल्हरादिभिः । कुर्वन्गतागतं धन्यो जनस्यावाप हास्यताम् ॥२९६६॥

शश्वद्व्यावर्तमानस्य[1] राजकार्यस्य नावधिम् । अरघट्टघटीयन्त्रगुणस्येवाससाद सः ॥२९६७॥

तस्य चक्र इवोद्भ्रान्ते कर्तव्ये तैक्ष्ण्यभागपि । भेत्तुं प्ररोढुं वाप्यासीन्नयो बाण इवाक्षमः ॥२९६८॥

नीतराजद्वयो व्यग्रः शेषस्यैकस्य विग्रहे । चतुरङ्ग इव क्रीडन्विवशोऽभूद्दिशां पतिः ॥२९६९॥

बद्धलक्ष्यः प्रदानार्थं ततश्च छद्मना परान् । भञ्जनो वाजिपत्यादि नाभ्यासीन्नाप्यजीगणत् ॥२९७०॥ 2970

दस्युषु स्यूतसङ्गेषु[1] शीतापायप्रतीक्षिषु । नागाद्बल्हरः स्वेषामुन्मूलनमशङ्कत ॥२९७१॥

सामर्थ्याशिथिलाभिप्रभावे सुश्रितविप्रिये । तस्मिन्धावति धन्ये च शश्वत्तोपताकुलः ॥२९७२॥

संमन्त्र्य सार्धं भोजेन धन्यं समदिशत्ततः । बद्धार्पयत नागं मे भोजं दास्यामि वस्ततः ॥२९७३॥

भूरिकार्यकृतं स्वस्य बन्धनार्थाग्रहां[1] रिपोः । धन्यो व्यसनवैवश्याद्धियं नाबुद्ध तस्य ताम् ॥२९७४॥

पार्थिवाः स्वार्थसंसिद्धित्वराविरतसत्त्वया । धियाविशुद्धं यत्किंचित्कुर्वन्तीति न नूतनम् ॥२९७५॥ 2975

काकुत्स्थोऽपि[1] मित्रप्रार्थी व्यग्रः सुग्रीवसंपदे । वीरोऽविधेयं स्वार्थान्ध्याद्वधं व्यधित वालिनः ॥२९७६॥

---

२९४९. [1]) A बन्धुं. २९५६. [1]) Emended; A समनुजं निजम्; cf. ... viii. 2753. २९५८. [1]) Emended; A धन्ये. २९६१. [1]) Emended; A °भुजाम्. २९६७. [1]) Emended; A °शश्वर्त°. २९७१. [1]) A has written first स्यूतसङ्गेषु and subsequently indicated the reading स्यूत°. २९७४. [1]) Emended; A °र्थं. २९७६. [1]) Emended with C; A काकुस्थोऽपि.

तेषस्य सत्यनिस्थत्वं राज्यगर्भाविशुद्धधीः । आचार्ये पाण्डवो राजा धर्मनिम्नोप्यपातयत् ॥२९७७॥
आ भिक्षुर्विग्रहाविस्पष्टोग्धुर्नागस्य विग्रहः । स्वार्थापेक्षी तटस्थस्य तत्काले न विगर्हितः ॥२९७८॥
अगृहीत्वा तु भूभर्त्रा कांचिद्द्रोजार्पणे पणम् । सोवाष्टम्भीत्यभूत्तस्मिन्मन्युर्मतिमतां मनाक् ॥२९७९॥
2980 यथा तत्कृत्यमायत्यां हितं जातं तथैव चेत् । विचार्याकारि राज्ञा तच्छेमुषीयममानुषी ॥२९८०॥
विभिन्न इव भोजस्तु नागं समदिशद्यथा । दित्सुर्बल्लहरो राज्ञे स्वदर्पणपणेन माम् ॥२९८१॥
बन्धमभ्रद्धानोस्य राज्ञस्त्रासादसौ भवेत् । स विदधाय माध्यस्थ्यमिति तं हि तथावदत् ॥२९८२॥
षष्ठचन्द्रे गते निष्ठां जयचन्द्रेण पार्थिवः । संगृहीतेन तं नागं पार्श्वं प्रावेशयत्ततः ॥२९८३॥
पक्षीकृतः क्ष्माभुजायं हन्यादस्मान्भयादिति । चलन्तमपि तं भोजस्तन्मन्त्रिणमबोधयत् ॥२९८४॥
2985 तथेति जानन्नपि तं कृष्टोस्म्येतैरमीशताम् । यातः किमपि हन्तेति दूतैर्नागोप्यभाषत ॥२९८५॥
नियतं नियतिस्रोतोगर्भे जन्तोर्निमज्जतः । कथ्यमानं तटस्थेन श्रोतुं न श्रवणौ क्षमौ ॥२९८६॥
नागे बद्धे तत्कुटुम्बैर्भीतैरेत्य समाश्रितः । मायाशाली बल्लहरो दुर्दर्शः समपद्यत ॥२९८७॥
भोजनिष्क्रयविक्रेयं तमादाय ययौ ततः । रिल्हणेन समं धन्यो धावन्बल्लहरान्तिकम् ॥२९८८॥
सान्तर्हासोमोहयत्तौ प्राङ्नागं दत्त मे ततः । भोजं दास्यामि व इति ब्रुवन्भ्रामयति स्म सः ॥२९८९॥
2990 बद्धमूलतया दूरं दुर्धर्षो योद्धुमागतम् । सर्वं तत्र तयोः सैन्यं निन्ये कृत्यविधेयताम् ॥२९९०॥
वर्षयुद्धापकर्षादि-खिन्नौ तौ ततोभ्यधात् । इतोपसृतयोः कुर्यां युवयोर्मतमित्यसौ ॥२९९१॥
एकप्रयाणान्तरिते स्थितयोः पथि चाकरोत् । कार्यान्तःपातश्चैवद्वये तयोर्मतिविमोहनम् ॥२९९२॥
काचिद्बल्लहरस्यासीत्पर्यायैर्धैर्यसत्त्वयोः । निर्भीयापतने काले वीराणां विरलैव या ॥२९९३॥
तथा हारितमार्गाय साहसात्पार्श्वमीयुषे । द्रुह्यति स्म न धन्याय लोभाद्भोजाय नापि यः ॥२९९४॥
2995 मतिमोहेन नागं चेद्घ्नुमे सचिवास्ततः । कुर्यां तं स्वपदेभ्यर्थ्य चकारेति च चेतसि ॥२९९५॥
नागासांनिध्यलब्धार्द्धदायार्थे गूढचैकृतः । भ्रातृव्योपातयन्नागं धन्याचैल्लोष्टकाभिधः ॥२९९६॥
सचिवैर्निहते नागे निर्हेत्वहितमोहितैः । दुर्मन्त्रितं नरपतेः स्वैः परैश्च व्यगर्ह्यत ॥२९९७॥
स्वजातीयवधक्रोधाद्विरुद्धैः सर्वडामरैः । नागानुगैश्चाभितोभूत्ततो बल्लहरो बली ॥२९९८॥
देहिनो व्यसनापातवैवश्याद्भ्रमतोपथि । अकार्यं कुर्वतः कार्यं सिद्धः संसाधयेद्विधिः ॥२९९९॥
सद्यःसहविस्तानवतया बद्धावधाने मनस्युन्मार्गभ्रमणेवशस्य रभसाच्छ्वभ्रे परिभ्राम्यतः ।
3000 अन्योपाहितकोशपृष्ठलुठनात्संदर्शिताङ्कक्षतेर्जन्तोर्हन्त तनोति दुर्गतिशमं रम्यानुलोम्यो विधिः ॥३०००॥
तथा निरनुसंधानं नागं धीसचिवैर्हतम् । नावुद्ध भोजः संजातत्रासस्स्वैवं व्यकल्पयत् ॥३००१॥
लब्धवर्णस्य नावर्णावहं कर्मैवमीशितुः । अलब्धपणबन्धस्य वाञ्छिताप्त्यै विशङ्क्यते ॥३००२॥
[1]यच्च युद्धमिति व्यर्थं[2] हर्षादायामवापि यः । भोजमन्यकरस्थोयमशक्यो ह्यन्यथा मम ॥३००३॥

२९७९. [1]) Emended; A सोपष्टम्भी°. २९८१. [1]) Emended; A °बैलहरे. २९८४. [1]) Thus A; perhaps read °न्मन्त्रितमबो°. २९८५ [1]) Emended, A °म्यमीरस्येतैर°. २९८८. [1]) Emended with C; A भोजानि°.—[2]) Emended with C; A °म्बलहरान्तिकम्. २९८९. [1]) Emended; A मोहयन्सो. २९९२. [1]) Thus A; C °कर्यान्तिसद्विर्मो.—[2]) Thus corr. by A[1] from °न्मथात्. २९९५. [1]) A[1] has written मतिमोहे; न supplied apparently by A[2]. ३००३. [1]) The text of this verse is evidently corrupt; emendation doubtful.—[2]) Perhaps read युद्धमतिव्यर्थं.

त्रपेति मोहबन्धान्ध्यमुक्त्या – – दिमं संदिशेत्[1] । इति मां राजवदनः स्मितसखमनन्यथा ॥३००४॥ युग्मम्॥

आ भिक्षुविषयाद्रोहमभिक्षस्यानुबन्धिनः । किं राजवदनोप्येवं लोभात्संभाव्यते न भूः ॥३००५॥ 3005

अथाविश्वासिनस्तस्य स्मुरासारात्स्य साशङ्काः । एकार्थकृन्निजसाङ्कि कोशपानं प्रचक्रिरे ॥३००६॥

प्रादुष्कृतभियः क्षिप्रं क्षिणोमुष्य तिष्ठतः । विश्वासार्थं बलहरो विरलः पार्श्वमाययौ ॥३००७॥

अमात्यमतिजाड्येन नष्टे कृत्येष कृत्यवित् । स्वयमुत्तम्भने भीतः संरंभेसंभ्रमो नृपः ॥३००८॥

वैद्यः पादपमण्डलस्य तटिनीतोयस्य वर्षागमः सत्कारो गुणगौरवस्य वचनप्रेम्णोन्तिकासेवनम् ।
ऐश्वर्यस्य महोद्यमो जयविधेर्गाढाविषादग्रहः कर्तव्यस्य च सिद्धदेवनृपतिम्लीनौ न तस्यावहः ॥३००९॥

प्रवाहेणेव कृत्यस्य हठेन हरतोन्तरे । प्रातिलोम्यं भितवता पारं गन्तुं न पार्यते ॥३०१०॥ 3010

अतो धूर्तो नृपो मुग्ध इति ज्ञातोरिभिर्मुधा । मौग्ध्यं प्रदर्शयंस्तेषां यततेस्माभिसंधये ॥३०११॥

स हि वस्त्रप्रदानेन भजन्भोजाम्बिकस्थितीम् । तस्याविश्वासपात्रस्यं मन्त्रस्तस्याभितोभवत् ॥३०१२॥

लब्धेन वासितोत्सङ्गाः कुरङ्गार्भकजन्मना । गन्धलुब्धो विभाव्यन्ते तटिन्योपि कबाटिभिः ॥३०१३॥

भीतस्थान्तः तरन्ध्रस्य सर्वतो हि भयं स्पृशन् । जाले हारावबद्धे च निर्गमे पतनं विदन् ॥३०१४॥

तान्वेद्यथा खगो भोजस्तथान्तःस्थेष्वविश्वसन् । बाहिर्भूपेन दत्ताश्वा प्रस्थानेप्यभजद्भयम् ॥३०१५॥ युग्मम्॥ 3015

तदा स दौःस्थ्यालिंथितो प्रायः प्रैक्षत न क्षणम् । मनोविनोदनं किंचित्कृत्यं लोकद्वयोचितम् ॥३०१६॥

स्वपाभिषङ्गमनुषङ्गि परस्य दुःखं हन्ताश्रयं व्यथयति प्रसभार्द्रभावम् ।
बद्धः सरोजकुहरे विरहार्तनादैश्चक्राभिधस्य मधुपोधिकमेति दैन्यम् ॥३०१७॥

रणे पूर्णव्रणाद्यानशोणितो लूनकुन्तलः । केणोद्गार्यानन: क्रन्दंस्तेनैकः प्रैक्ष्यत द्विजः ॥३०१८॥

स पृष्टो विप्रुतेर्नीतं[1] सर्वस्वं विस्तरं तथा । स्वं डामरैर्निवेद्यैनं निनिन्द ज्ञानुमक्षमम् ॥३०१९॥

स्वदौःस्थ्यार्तमनास्तस्य दुःखेन व्यथितोन्वहम् । घट्टितार्द्रव्रण इव प्राह स्मेति स सान्त्वयन् ॥३०२०॥ 3020

सर्वार्होस्मि न ते ब्रह्मन्योनुयाज्योहमीदृशः । विषमे वर्तमानश्चेत्यथ सोपि तमब्रवीत् ॥३०२१॥

दुर्मेधेणामुना ब्रूहि कोर्थः पार्थिवपुत्र ते । सारासारविदो[1] यूनः कुले जातस्य मानिनः ॥३०२२॥

प्राणान्संदेहमारोप्य प्रणम्य प्राकृताशयान् । पीडयित्वा विशः क्लेशैः कार्यं किमिव पश्यसि ॥३०२३॥

कथ ते प्रतिभात्येव जेतव्यो विदितो न किम् । अभिद्रोहः स सारङ्कः परशौर्याभिमञ्जने ॥३०२४॥

यत्र शस्त्रशलाकापि विकला तद्विधीयते । इन्दीवरदलश्रेण्या घटनं स्फाटिकाश्मनः ॥३०२५॥ 3025

पृथ्वीहरावतारादिप्रत्यनीकिजितः परे । के नामास्य न संवर्षं क्षुद्रमाया हरिष्यति ॥३०२६॥

किं दर्प्वा[1] एव युद्धापि कृत्यं दैराज्यजीविनाम् । भृत्याशयाः फणिग्राहिगृहीता इव भोगिनः ॥३०२७॥

जातैः क्ष्मातलयोद्वहे फणिकुले पित्र्यौगिभिर्डिम्भैर्मुदा[1][2] व्यालग्राहिविकासितास्यकुहरैर्मांसस्य[3] हा गृध्यते ।
एतान्भिक्षयितुं न तु प्रथयितुं ते जीविकायै जनत्रासार्थं ननु कारयन्ति हि धूर्तैर्निमज्जनोन्मज्जनम् ॥३०२८॥

इत्युक्तवन्तं तं सान्त्वयित्वा भोजो व्यसर्जयत् । तदैव[1] चाशु व्याकोशविवेकः समपद्यत ॥३०२९॥

---

३००४. 1) Thus A; C °मुक्त्वान्युन्मौऽस्मि सन्दिशेत्.—2) Perhaps read संदिशन्. ३०१९. 1) Emended with C; A °र्नीतः ३०२२. 1) सारासार no longer legible in A; found in R G C. ३०२७. 1) Emended; A दृष्ट्वा. ३०२८. 1) Emended with G (sec. manu); A °कुलैर्भोगि°.—2) Emended; A मुदा.—3) Emended with G (sec. manu); A °कासितस्य कुहरैर्मांसस्य ३०२९. 1) Emended; A तदैव.

अध्यात्मत्वं प्रशममहिमोल्लासने हन्त हेतुर्भावानां नु ध्रुवमपरथा मार्दवं क्रूरता वा ।
3030 स्पृष्टं पादैरमृतमहसः स्यात्कठोरं हिमांशोर्यातीति ग्रावाप्यवश रभसादार्द्रतां चन्द्रकान्तः ॥३०३०॥
राजन्याभिजने जातोऽप्यलज्जत्वमशिक्षितः । सोऽन्तरं स्वस्य राज्ञश्च मुहुर्महदचिन्तयत् ॥३०३१॥
गुणैः शौर्यनयत्यागसत्यसत्त्वादिभिः प्रभोः । पूर्वेऽप्युर्वीभुजः सर्वाः क्षुद्राः स्पर्धासु के वयम् ॥३०३२॥
तस्य प्रभाववीर्येऽपि समये क्षान्तिशीतता । शक्तिः क्षयजडस्येऽपि मुग्धानां नो महोष्मता ॥३०३३॥
क्ष्वेडाग्नितापनिबिडोरगसंगमेऽपि तुङ्गस्य चन्दनतरोरपि शीतलत्वम् ।
काले हिमर्तुपरिपिञ्जरसंज्वरेऽपि निम्नस्य कूपकुहरस्य महोष्मयोगः ॥३०३४॥
3035 कुतोऽपि पर्ययात्कार्ये भ्रमे नृपममुं विना । प्राप्य कस्य पुनः प्राप्यमप्यभुक्त्वा न याचितम्[1] ॥३०३५॥
भ्रष्टं निर्झरवारि भुजगवलैः स्वीयेन भूयः कथितलभ्यं लभ्यमथाश्रतः कलुषतादुष्टं प्रकृष्टं न तत् ।
निर्यन्निर्भरनिम्नगाम्बु नभसः प्राप्येत नित्यं द्रवत्प्रालेयत्वमुपेत्य शुद्धिमधिकां नाद्रेर्हिमाद्रेर्नगैः ॥३०३६॥
तदर्थमेव प्रथितो योऽनर्योऽप्यथितात्मनः । स तेन स्वस्वतां नेतुमर्थितो न स्पृशेद्गुणम् ॥३०३७॥
क्रोधाय योऽस्य दववह्निमदाहमुष्मिन्नस्त्यै स तेन शिखिना ग्लपितः समीपम् ।
अभ्येति चन्दनतरोर्दववह्निदाहशान्त्यै यदि प्रियकृदेव न तस्य किं स्यात् ॥३०३८॥
समर्तुर्गतावर्हदपकर्तैव भूपतिम् । लोलनाथं समुद्धर्तुं धीरं धन्यः पुनः पुनः ॥३०३९॥
3040 राजप्रसादनोपायान्वेषी बलहरान्तिकम् । राजदूतमथायान्तमेकदैकं[1] व्यलोकयत् ॥३०४०॥
दरदेशां प्रजन्तृष्टवान्याकमशातमन्तिकम् । स नमन्तं तमानीय ततः स्मेर इवाब्रवीत् ॥३०४१॥
राज्ञः किमन्यसंधानैः संधिं बध्नास्यसौ मया । प्राज्ञैर्हि भिषजा भोज्यमातुराय समर्प्यते ॥३०४२॥
तस्याभवधानस्य नर्मस्मेरस्य जानतः । प्रत्ययोत्पादनं तैस्तैरालापैः किंचन व्यधात् ॥३०४३॥
निर्दम्भभाषितैरूढविस्रम्भः स कथान्तरे । अथाभिगम्य राजानं सुतं भोजमभाषत ॥३०४४॥
3045 राजपुत्राभिजातस्य पादच्छायास्य लभ्यते । स्वर्णाद्रेरिव कल्याणप्रकृतेः पुण्यभागिभिः ॥३०४५॥
अनुवृत्त्यातिमृद्व्यापि तस्यापोह्येत वैकृतम् । ज्योत्स्नयेव शरज्ज्ञानुपरितापौष्ण्यमम्भसः ॥३०४६॥
अपि स्मरसि चारत्वे नियुक्तोऽस्मि महीभुजा । विशालस्ते दरदेशानभूवं पुरतः पुरा ॥३०४७॥
ततो निवृत्तो वृत्तान्तं मुख्यमाख्याय तावकम् । कालं क्षेप्तुं कथां[1] वैन्यैं नयन्मध्ये तमभ्यधाम्[2] ॥३०४८॥
क्षुत्तृडध्वक्रमश्रान्तान्वेव त्वामवलोक्य माम् । निन्दतः स्वानुगान्भोजो[1] निर्भर्त्स्यैवं तदाब्रवीत् ॥३०४९॥
3050 स दैवतमिवास्माकं कुलालंकरणं प्रभोः । वयं स्वसुकृतो यस्य नामुमः पादसेवनम् ॥३०५०॥
गण्याः पर्यन्तनिःसारास्तस्मिन्वनधाविमे वयम् । चन्दनश्रान्तिकृत्काष्ठं यस्यात्राम्नधवासितम् ॥३०५१॥
तच्छ्रुत्वेव दयार्द्रस्त्वं त्वयि यातः स लक्षितः । पृच्छन्निवेद किं गर्भरूपो वक्तीति मां पुनः ॥३०५२॥
तन्निशम्यैव भोजस्य द्रवीभूतमभून्मनः । सोऽन्तर्बाष्पोऽप्यपश्यत्तं सान्त्वयन्निव मामतः ॥३०५३॥

३०३०. [1]) Emended with C; A स्पष्टं. ३०३५. [1]) Emended; A चाचितुम. ३०३९. [1]) Emended with G (sec. manu); A समभोतु°. ३०४०. [1]) Emended with G (sec. manu); A °मेकमेकं. ३०४१. [1]) Emended; A °स्पृष्टवाक्यमशान्तम°; C °वाक्यमशातम°. ३०४२. [1]) Emended with C; A [illegible]. ३०४६. [1]) Emended; A °पौशत. ३०४७. [1]) Emended; A चारत्वे. ३०४८. [1]) Emended; A कथार्थं.—[2]) Emended; A [illegible]. ३०४९. [1]) Doubtful emendation of C; A [illegible]°.—[2]) Emended; A भोजं. ३०५३. [1]) [illegible] omitted in A; supplied with C.

सख्य न मायासंबोधमुग्धत्वेन विधीयते । तस्याविष्कारणाशङ्कान्तःकरणवेदनम् ॥३०५४॥

अप्रदधानस्तामिच्छां भोजस्याक्रम्यवर्तिनः । प्रतिकूलीकृते तस्मिन्धन्यो न प्रत्ययं दधे ॥३०५५॥ 3055

दयिताभूयथा नागवृत्तान्ते न भवेत्तथा । महीभुजं मोहयितुं मायया दीक्ष्यते मया ॥३०५६॥

मा भूद्विश्रमोयमित्येवमुक्त्वा मल्लहरं रहः । व्याजार्जवेन भोजस्तु संधिबन्धाय तत्वरे ॥३०५७॥युग्मम्॥

तत्कालयोग्यसांनिध्यधात्रिकाचतुरस्तथा । तेनाशु दैशिकापत्यमेको दूत्ये न्ययोज्यत ॥३०५८॥

स बालकतया नित्यस्वतन्त्रधात्रिकां स्वयम् । आचरेदिति नाशङ्कां भोजे मल्लहरोऽभजत् ॥३०५९॥

पार्थिवः प्रार्थितः संधिदूतमात्रं प्रतीक्षते । प्रत्यागतेन तेनेति तत्रो भोजोऽभ्यधीयत ॥३०६०॥ 3060

तत्रासीन्निहितान्याप्तः स्त्रीस्वातन्त्र्यातिभामपि । धात्रीं मोनाभिधानां स्वां राज्ञोऽभ्यर्णे व्यसर्जयत् ॥३०६१॥

मृतेन पित्रा मात्रा च हीनं[1] तमनुयातया । मातृकृत्यं ययासीच्चैत्रावे मानमीयया ॥३०६२॥

पत्युः प्रीत्यै विसंधानध्वंसाकल्पादिकल्पनात् । सखीकृत्यं सपत्नीनां यया शान्त्यैर्ष्यया कृतम् ॥३०६३॥

ह्रासोल्लासे[1] हि कार्याणां योग्यकृत्याप्रनिश्चयात् । न यां सुखप्रियां क्ष्माभृत्संभ्रान्तां जातु वीक्षते ॥३०६४॥

श्वशुरेण प्रजाभिश्च कृतं राज्ञोऽभिषेचने । आशास्यं यां महादेवीपट्टबन्धं समादधे ॥३०६५॥ 3065

अपत्यप्रियताभोगलोभभर्तृप्रसादनैः । प्रेर्यमाणाप्यकार्येषु बुद्धिर्यस्या न धावति ॥३०६६॥

स्वनाय्यत्र च संधाने जाते भर्तुरभिप्सधीः । भाग्योदयेष्वनुत्सिक्ता या चाखण्डितसद्भुता ॥३०६७॥

आ बाल्यात्त्रायितभर्तुः कुसृत्यनुसृतौ न सा । कार्यमध्ये विगाहेत मानाभिजनरक्षिणी ॥३०६८॥

इति कल्हणिकादेव्या माध्यस्थ्ये स धियं व्यधात् । प्रस्थानपरयाशं सा सीमान्तमापणावधि ॥३०६९॥कुलकम्॥

गुल्मे लम्बकविस्तारि पराध्यै मध्यपातिनाम् । पाथेयार्थं पृथुस्वर्णभाजि कोशादि चात्मनः ॥३०७०॥ 3070

प्रापयामास किं चाप्तौ प्रकृष्टाभिजनोद्भवान् । पालनार्थं राजपुत्रान्देवी यत्सर्वसंमितम् ॥३०७१॥युगलकम्॥

याचकं तद्दृष्ट्वा तामागमत्पार्थिवेन सः । धात्रीं स कारयन्धन्यो बद्धेच्छासिद्धिनिश्चयाम् ॥३०७२॥

विहितप्रत्ययस्तस्याः सद्यः स्यात्तु महीपतिः । राजधर्मस्य च वसत्यासीद्दोलाकुलाशयः ॥३०७३॥

स हि दध्यौ निर्विरोधो वैराग्येणाथ मायया । संकटान्मोचितव्योऽसौ[1] यायात्कालेन विक्रियाम् ॥३०७४॥

अनिःशेषितजीमूतजालमात्रैर्भवत्त्विषिः । अनूनक्लेशशेषं च विवेको न स्फुरेच्चिरम् ॥३०७५॥ 3075

मुग्धान्[1]विरनुसंधाननागबाधादवेत्य नः । स्वार्थस्य सिद्धये माया तेनेयं निरमायि वा ॥३०७६॥

लब्धलक्षेपरिक्षीणे शक्ते[1] पुनि गणाश्रिते । क्षत्रधर्मस्थिते नेदृग्विवेकः क्वापि लक्ष्यते ॥३०७७॥

भवति कुङ्कुमं पुष्पमपुष्पं क्षीरिणः फलम् । अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम् ॥३०७८॥

न त्याज्यो राजपुत्रोऽसावेवं मायानिधिर्यदि । पर्यावर्तेत चेत्तस्मिन्नदृष्टे किं दृशोः फलम् ॥३०७९॥

राज्ञी राजात्मजाधीने प्रतिष्ठाभङ्गशासिनः । ऋजुभावात्सुस्पष्टमन्यत्कार्यं न मन्यते ॥३०८०॥ 3080

अटन्ती[1] कुटिलं स्पष्टं सरित्संघर्षं लक्ष्यते । कान्ताकुन्तलविष्यन्दी तोयबिन्दुरिव क्रमः ॥३०८१॥

---

३०५४. [1]) Emended with G (*sec. manu*); A °कारणाशा°. ३०६२. [1]) Emended; A हीनै. ३०६४. [1]) Emended; A °ह्रासे. ३०६९. [1]) Emended; A पर. ३०६९. [1]) Emended; A सीमन्तापणा°. ३०७०. [1]) Emended; A °पातिनम्. ३०७१. [1]) Emended with C; A प्रापयामास.—[2]) Emended with G (*sec. manu*); A °त्सर्वसंमत°. ३०७४. [1]) Doubtful emendation; A °तव्यासौ. ३०७६. [1]) Emended; A मुग्धानि°. ३०७७. [1]) Emended; A शक्तौ. ३०८१. [1]) Emended with C; $A_1$ has first written अ—न्ती and then supplied ट over the *lacuna*.—[2]) Emended with C; A सरस्व°.

इति ध्यात्वा राजधर्मं सत्यशोचितं व्यधात् । धन्यरिल्हणयोः कार्यं भुतावम्याग्विसर्जयन् ||३०८२||
स्वस्यैवार्थस्य साहचर्याय साल्हणिस्त्वां दिदृक्षते । समागमायेत्युक्त्वाथ धन्यो दूतैरनीयत ||३०८३||
मा भैषीरेष संधित्सुः सैन्यादिति मितानुगः । अवर्तिष्ट तटिन्याः स द्वीपान्तस्तत्प्रतीक्षया ||३०८४||
3085 सरित्सा जानुदघ्नाम्भा भूत्वा घर्मद्रुते हिमे । गगनालिङ्गिभिर्भीमा तरङ्गैः समपद्यत ||३०८५||
अवाप्ता चेद्वर्षयालङ्घ्यभावं यान्त्यपि दन्तिनाम् । हयाः सिन्धावभवंस्तोय द्विषां रन्ध्रैषिणां वशे ||३०८६||
सिन्धोरुद्भवतस्तोयैर्व्याप्ततीरभुवोन्तरे । ते डिण्डीरोपमां प्रापुः पिण्डिताः पाण्डुवाससः ||३०८७||
खाशंकानां सहस्राणि भोजस्य पतितं बले । स्थितवन्ति निहन्तुं तं तथास्थितमचिन्तयन् ||३०८८||
दृग्भ्यां संभ्रमदीनाभ्यामघशान्त्यै स्पृशन्निव । कर्णे सल्हणसूनुस्तान्संतर्ज्यावृजिनोब्रवीत् ||३०८९||
3090 निर्दम्भमस्य विस्रम्भाद्दावतो विहिते वधे । निरत्ययो निपातः स्याज्जियतं निरये पुनः ||३०९०||
हतेस्मिन्बहुभृत्यस्य न च शक्तिक्षयः प्रभोः । नैकपक्षक्षये तार्क्ष्यैरहः संहारमर्हति ||३०९१||
अपि वा वाच्यता राज्ञामेवं विस्रम्भवाधनात् । तुल्यस्तुल्येन कर्तव्यं किमनुध्याय बध्यते ||३०९२||
यथायं वृत्तयेनन्यकर्मा भूपं निषेवते । तथा ममापि यत्नोयं तत्सेवासादने यतः ||३०९३||
युक्तमित्यादि तेनोक्ता अपि निश्चलनिश्चयाः । ते न्यविध्यन्त निर्बन्धात्प्रतिज्ञायात्मनो वधम् ||३०९४||
3095 राज्ञी तथैवादरिद्राभिद्रं तद्रक्षितुं ततः । कारिताः कोशपानं ते तमर्थं सोपि बोधितः ||३०९५||
तेनावेदितनिर्व्याजतया धीरो महीपतिः । अनुध्यायाथ संदिग्धं संधिसिद्धिममुग्धधीः ||३०९६||
अज्ञातनिश्चयः सिद्धेर्विनान्तःकरणं परैः । अथ प्रास्थापयद्देवीं सामात्यां तारमूल्कम् ||३०९७||
राजधर्मविधेयत्वाद्धार्यक्रूरशङ्किनी । प्रस्थानप्रार्थनां भर्तुः सा स्वीकृत्य ततोब्रवीत् ||३०९८||
असामान्येष्वमात्येषु कुसृत्यालोकनात्सकृत् । आर्यपुत्र विचार्योस्ति विस्रम्भः किं विरोधिनाम् ||३०९९||
3100 यद्दा निर्मानुषोन्मेषं शेमुषीत्वं विगाहितुम् । प्रयते नु कथंकारं मूर्तत्वं मर्त्यधर्मिणाम् ||३१००||
देहोपकरणत्वं ते प्राणैर्मम विचिन्त्यते । सतीधर्मस्तु सहते राजधर्मस्य नोचितम् ||३१०१||
व्यञ्जितास्यसदाचारं कलिकृत्यं द्विषि त्वयि । प्रारब्धो देव भोजेन हिमाद्रौ हिमविक्रयः ||३१०२||
न गृह्णाति शर्म वेत्ति स्वस्यान्यस्य न चान्तरम् । निर्व्यूढमदद्रोवोध प्रायेण प्राकृतो जनः ||३१०३||
पुत्रमन्त्रयविरोधादिभुग्नभुज्या प्रधावति । साध्वाचारोपि भूपालः कुध्यन्विक्रमधवाधने ||३१०४||
3105 क्षमयालङ्कृतामोघगिरा देवेन पीयते । लोकत्रयैकपात्रेस्मिन्यशो नूनं मया सह ||३१०५||
ज्ञातव्यसंक्षयोपेक्ष्यमाणायास्त्वन्यदाशयः । ममैवास्वादयन्त्यादादात्मभरिपुराक्थितिः[1] ||३१०६||
इत्युक्त्वा विरतां सत्यसंधः साध्वीं धरापतिः । शान्तशङ्कामकृत्वा तां समामन्त्रयं न्ययोजयत् ||३१०७||
भङ्क्त्वा सर्वानयं त्रातुं प्रयोक्तुं वेतनं नृपः । संरम्भे किमयं ध्यायत्यन्तः सर्वोप्यचिन्तयत् ||३१०८||

३०८३. ¹) Emended; A °गिरतां. ३०८४. ¹) Emended; A भेषीरिष संधित्सुः. ३०८७. ¹) Emended with C; A °रोपमनां. ३०८८. ¹) Emended; A खश°.—²) Emended; A पतिते.—³) Emended; A° चिन्तयत्. ३०८९. ¹) Emended; A °सङ्कं वृजिनो°. ३०९०. ¹) Emended; A विधेः. ३०९२. ¹) Emended; A °बोधनात्. ३०९३. ¹) Emended; A कर्प. ३०९७. ¹) The *akshara* त्वां could also be read न्त्वां; thus C. ३०९९. ¹) Doubtful emendation; A विचार्योसि. ३१००. ¹) Conjectural reading; A °न्मायां. ३१०४. ¹) Emended with C; A कुध्य वि°. ३१०६. ¹) Thus A; the text of this verse requires emendation. ३१०७. ¹) Conjectural reading; A has written originally ----न्मकां° and subsequently filled up the *lacuna* with मातां मञ्चया; G (*sec. manu*) सौमामञ्च्य.

उपायेषु प्रयुक्तेषु देवीसंप्रेषणावधि । नान्यदस्य प्रयोक्तव्यं बदवाशिष्यत क्वचित् ॥३१०९॥
स्वपक्षभेदाद्भूभर्तुः सबलत्वाबलत्वयोः । परीक्षकत्वाद्ये केचिन्माध्यस्थ्येनावसन्क्वचित् ॥३११०॥ 3110
तेऽप्यल्पे वा महान्तो वा क्षीणदाक्षिण्यशृङ्खलाः । भोजगृह्यैः सहाबभन्कन्यां सर्वेऽपि डामराः ॥३१११॥
ते प्रच्छिन्नतटस्थत्वाद्राज्येऽस्माभिरीदृशाः । भोजः संजात इत्याशु माध्यस्थ्यं परिजह्रिरे ॥३११२॥
त्रिल्लको भोजसविधं तनूजं प्राहिणोत्तुलम् । प्रावेशयच्च मालां च चतुष्कं पुष्कलैर्बलैः ॥३११३॥
ये भिक्षुविप्रवेश्यासव्याजदाक्षिण्यरक्षिणः । विरोधिसविधं प्रापुस्तेऽपि नीलाश्वडामराः ॥३११४॥
लहरादेवसरसाद्धोलडातश्च डामराः । द्वयो नीलाश्वतथैका डामरी पर्यशिष्यत ॥३११५॥ 3115
न व्यरंसीद्दिमं तथाप्यन्ये साल्हणेर्बले । पतत्याकृष्टप्रमत्तीबवोपोम्भीभाविवोद्गतः ॥३११६॥
भोजस्तु देवीमायान्तीं श्रुत्वा बलहरं ततः । ध्रुवं संधित्सया बद्ध इति सुज्जकमभ्यधात् ॥३११७॥
एतावन्ति विनाभ्यासीत्पुंसो भ्रमयिता पुमान् । संबन्धिनीनां माध्यस्थ्ये स्वकुल्यात्कोऽन्यथा भवेत् ॥३११८॥
कुलचूडामणिः प्रेम्णा स यथैवं प्रवर्तते । किं स्यादगण्यप्रायाणां कार्कश्ये मम मादृशम् ॥३११९॥
यच्च मायामिमां ब्रूथ तत्तथास्त्वस्मि वञ्चितः । विश्वास्यैव भविष्यामि नाकीर्तीनां निकेतनम् ॥३१२०॥ 3120
सा च भूविजयाशा वः समेता निखिला इति । अग्राक्ष्म वेदग्राम्य्यूहानवाहक्षाम योजतेः ॥३१२१॥
युक्तियुक्तमिदं चान्यथोक्तवान्बहु निश्चयात् । नाशक्यतान्यथा कर्तुं भोजो बलहरादिभिः ॥३१२२॥
विवाहान्तरितेऽमिश्रममायेपरया कथम् । फलकालेऽसि संवृत्तमिति तं चावदन्नृपाः ॥३१२३॥
तारमूलस्थितौ राज्ञ्यां ससैन्यौ धन्यरिल्हणौ । राजपुत्रैः सह ततः पाञ्चिग्राममवापतुः ॥३१२४॥
ग्रामावरेऽस्य तौ नद्यास्तीरेवात्रि कृतस्थिती । परस्मिन्कूलगहने भोजोऽप्येतावुपाविशत् ॥३१२५॥ 3125
अभ्रान्तं विशतो दिङ्मुखेभ्यस्तत्कटकं भटान् । पश्यन्तः केऽपि संधिं न श्रद्धुर्नृपतेर्बले ॥३१२६॥
हठप्रविष्टान्निर्यातुमक्षमानल्पसैनिकान् । धन्यादीन्राजवदनो हन्तुं शश्वदचिन्तयत् ॥३१२७॥
छित्त्वा सुय्यपुरात्सेतुं राज्ञः सैन्यं जिघांसवः । महापद्मसरोनौषु निभृतं केचनावसन् ॥३१२८॥
अन्ये तत्साहसोदन्तान्वेषिणः पतनोन्मुखाः । स्वैः स्वैर्मार्गैस्तत्र तत्र तस्थुर्भूभृदसंमताः ॥३१२९॥
आस्कन्दं भाङ्गिलेयायाः पुरे शांकरवर्मणः । ग्रामाल्लाक्षिसिकाबाधिं डामराः समचिन्तयन् ॥३१३०॥ 3130
प्राप्यं महासारिकुलं त्रिल्लकाद्यैरगण्यत । नीलाश्वडामरैर्यैर्शा कार्या च नगरान्तरे ॥३१३१॥
किमन्यद्राजगृह्याणां समं सर्वे जिघांसवः । कारण्डवानां तोयान्तर्वेष्टितानामिवाभवन् ॥३१३२॥
सांधिविग्रहिकं कार्यं सर्वतः समतां तदा । प्राप वृष्टेरवग्राहमहयोगान्तरस्थितेः ॥३१३३॥
पदे पदे राजचमूपयायोत्थानमिच्छतः । छिन्दन्बलहरस्येच्छां भोजो व्यग्रत्वमग्रहीत् ॥३१३४॥
क्षणे क्षणे विसंधानध्यायिना तेन कश्चन । बध्यमानास्वन्तरायः संविधाय व्यधीयत ॥३१३५॥ 3135
घटनामुपयौ यो यो विरोधः कटकद्वयात् । सख्यैकामः स्वयं भोजस्तं तं त्वरितमच्छिनत् ॥३१३६॥

३११५. [1]) A °ड्डोलडातश्च. ३११६. [1]) Emended; A साल्हणे बले.—[2]) Emended with C; A °प्रमत्तीय°. ३११७. [1]) Doubtful emendation; A °दीशीमायान्ती. —[2]) Emended A° हरस्ततः. ३१२१. [1]) Doubtful emendation; A वेदृशां व्यूहान-वहक्षाम; C वैदृशं व्यूहमवरोक्ष्यामि. ३१२४. [1]) Doubtful emendation; A °स्थिते राज्ञ्यां; C °स्थिते राज्ञि.—[2]) Emended with C; A पैन्य°. ३१३०. [1]) A, gloss ग्राल. ३१३१. [1]) Thus A; C °रेरीर्ष्या. ३१३२. [1]) Emended with C; A °भवन. ३१३५. [1]) Emended; A बध्यमानस्तान्त°.

दूत्ये च कल्यकल्ये वा येऽवन्राजरञ्जकाः । भयेन प्रययुस्ते यत्कैकल्यं कार्यसंकटे ॥३१३७॥

कर्णे तत्कथयन्ति दुन्दुभिरवै राष्ट्रे यदुद्घोषितं तन्नत्वाकुलतया[1] वदन्ति करुणं[2] यस्मादपायाद्भवेत् ।
श्लाघन्ते तदुदीर्यते यदरिणाप्युग्रं न[3] मर्मान्तकृद्ये केचिन्ननु शापभीरवनिभयस्ते भूभुजो रञ्जकाः ॥३१३८॥

भण्डस्ताण्डवमण्डपे कटुकथावीथीषु[1] कल्याकविर्गोष्ठधा स्वगृहाङ्गने शिखरिभूगर्ते[2] ऋटाकुः स्फुटम् ।
पिण्डीभूततया विदश्य पटुतां भूभृद्गृहे गच्छति गच्छन्ति द्रवकूटकच्छपतुलां चित्रं ततोऽन्यत्र ते ॥३१३९॥

3140 भूरोद्रेकविपर्यासाच्छान्तोष्मक्ष्माभृतस्ततः । वासरः शारणीचक्रे तुङ्गस्योत्तुङ्गमञ्जसा ॥३१४०॥

भानुर्दत्तपदो भूरोर्भ्रातुर्गोवलयान्तरे । क्ष्माभृच्छिरोर्पितकरो रक्तमण्डलतां दधे ॥३१४१॥

अहस्त्रियामामुखयो - -[1] मध्यस्थया दधे । संध्यया वन्दनीयत्वं जनस्य[2] व्यञ्जिताञ्जलेः ॥३१४२॥

कवाटिदन्तैर्विस्फोटाश्चन्द्रकान्तैः शिरोभ्रमः । वयथुः पयसां पत्या दधे राज्युदयोन्मुखे ॥३१४३॥

सदैन्येष्वरविन्देषु हीनहन्नोपजीवनैः । कवाटिनां वटेष्वेव षट्पदैर्घटितं पदम् ॥३१४४॥

3145 अदृष्टकार्यपर्यन्तास्ततस्ते विषमस्थिताः । सरित्तटे सकटकाः पर्यतप्यन्त मन्त्रिणः ॥३१४५॥

न किंचित्प्रत्यभात्सर्वं लघु भ्रान्तं च जानताम् । ओघेन ह्रियमाणानामिवैषामवलम्बनम् ॥३१४६ ॥

तीरे परस्मिन्सरितो वसन्बलहरः पुनः । रुद्धः कन्दलितास्कन्दबुद्धिः[1] साल्हणिनासकृत् ॥३१४७॥

कार्यातिपातादायातं मन्त्रिणां तन्मितं बलम् । तस्य प्रवर्धमानस्य शङ्कोच्छेदं बभूव यत् ॥३१४८॥

वितस्तासिन्धुसंभेदयात्रायां नगरे यथा । तथा तथापतत्कांक्षी लोकोऽभ्रान्तो व्यवर्तत ॥३१४९॥

3150 लेखैर्डामरसंहारखण्डनाय विसर्जितैः । सान्त्वैर्मथिता बाह्यैर्नामैव राजबीजिनः ॥३१५०॥

शाखाग्निवैरनुसरैस्तुमुलोत्पादनैरपि । धीरो धैर्याद्विधयाज्ञा दवैः स कर्तुं न पारितः ॥३१५१॥

सामन्तानामागतानामविश्रम्भादसंभ्रमम् । न्यकृतोयं विपत्स्याशु कुर्यादस्याहितं रुषा ॥३१५२॥

कृते च कदनोंकारेनेन - -[1] समुन्मिषेत् । द्विजानामिव दस्यूनां समूहस्तेन सर्वतः ॥३१५३॥

इति निर्ध्याय दुर्धुक्षुरिव भोजः क्षपात्यये । कुर्मः शान्तमित्युक्त्वा निन्ये बलहरं समम् ॥३१५४॥तिलकम्॥

3155 एषां मर्यादायातानां सामन्तानां सभोजनः[2] । दाक्षिण्यादिति नाभोजि तेनाप्यभिजनस्पृशा ॥३१५५॥

तथा स्वमत्यावैमत्यं तमज्ञात्वा तु मन्त्रिणः । निष्प्रत्ययास्तेन जातममन्यन्त नयात्ययम् ॥३१५६॥

पक्षिपक्षस्फुटास्फालशफरस्फुरितेष्वधात् । तेषामासन्निधास्कन्द[1]ः प्रधावदहितभ्रमम् ॥३१५७॥

कूले परस्मिन्कूलिन्याः स्वामिसंधाननिर्वृतैः । समभाव्यत तैर्नान्यो रथाङ्गेभ्योऽभिषङ्गभाक् ॥३१५८॥

महत्काकुत्स्थदूतस्य[1] कपेस्तीर्णाम्बुधेः पिता । ततान तेषां दूतानां सरित्पारगतो - -[2] ॥३१५९॥

---

३१३८. [1]) This verse and the following are found in *Vallabhadeva's Subhâshitâvali*, 462-463 (ed. Peterson and Durgâprasâda).—[2]) तन्नत्वाकुलतया supplied by $A_3$ in space left by $A_1$.—[3]) Thus corr. by $A_1$ from करुणा.—[1]) Thus corr. by $A_3$ (from $A_1$ यदपाय°.—[5]) Thus in *Subhâshitâvali*, A °न्युपेण.—[6]) Thus corr. by $A_3$ from $A_1$ कर्मा°.—[7]) ननु supplied by $A_3$ in space left by $A_1$. ३१३९. [1]) Emended; A कटुकथावीथीषु, *Subhâsh.* चटुकथावीथिषु.—[2]) Thus $A_1$ in margin and *Subhâsh.*; $A_1$ in text भूगर्ते. ३१४०. [1]) तुङ्ग supplied by $A_3$ in space left by $A_1$. ३१४२. [1]) Thus $A_1$; C supplements °र्नीरपि.—[2]) Emended with C; A जनवन्द्यञ्जि°. ३१४६. [1]) Emended; A °भ्रान्तं. ३१४७. [1]) Emended with C; A °स्कन्दोद्बुद्धि.—[2]) Emended with C; A साल्हणना°. ३१४९. [1]) Emended A °पततांक्षी. ३१५३. [1]) मैव supplied by $A_3$; $A_1$ indicated originally a *lacuna* of four *aksharas*; C supplements सर्वे. ३१५४. [1]) A दुर्धु°. ३१५५. [1]) Doubtful emendation; A एतां मर्यादा.—[2]) Doubtful emendation; A सभोजनि; C सामन्तानामभोजने. ३१५६. [1]) Doubtful emendation; A समत्यावै°. ३१५७. [1]) Emended, A °स्कन्दम°. ३१५९. [1]) Emended with C, A काकुस्थ°.—[2]) Thus A; C fills up the *lacuna* with बलम्.

कीर्णकर्णज्वरांधारीन्पीत्कृतैस्तीरभूरुहाम् । आश्रित्योशिरकेणेत्थं निन्युस्ते तां निशीथिनीम् ॥३१६०॥ 3160

क्षपान्ते क्ष्माधरोत्तंसहेमतामरसभ्रमम् । उद्गच्छतो रवेर्यावद्विच्छिदुर्न करच्छटाः ॥३१६१॥

चक्राह्वविरहालोकसशोकानामिवागलत् । कुड्मलाक्षिपुटाद्यावदेषां माध्वश्च वीरुधाम् ॥३१६२॥

मिलपत्तियुतस्तावत्तरुकच्छाद्विनिर्गतः । – – –¹स्वरयन्युद्धवाहान्मूर्च्छयंङ्क्षिणा स्पृशन् ॥३१६३॥

रोद्धुकामान्डामरीयान्वीरान्दृष्टैर्विलोकितैः । सर्वतो धावतः कुर्वन्योधान्प्रतिहतौजसः ॥३१६४॥

पारश्रधी चारुवेषो युवा संमुखमापतन् । युध्याधिकवशैस्तैः प्रैक्षि संघातः सरितस्तटम् ॥३१६५॥कुलकम्॥ 3165

अदृष्टपूर्वं तं दृष्ट्वा श्रीखण्डोज्झिखिवालकम् । कुङ्कुमालेपिनं चैते भोजोऽयमिति मेनिरे ॥३१६६॥

अभिशाय निशां राजवदनं तं विमोहयन् । प्रातश्च तरसाभ्यन्य स तथा संमुखोऽभ्यभूत् ॥३१६७॥

प्रविष्टयुग्यं तोयान्तः पाराडाधितवाजिनः । धन्यादयस्तमभ्येत्य मुदिताः पर्यवारयन् ॥३१६८॥

उदभूत्तुमुलः शब्दस्ततः कटकयोर्द्वयोः । एकत्राक्रन्दमुखरः परत्रानन्दनिर्भरः ॥३१६९॥

नादमाकर्ण्य संग्रामबुद्ध्या दिग्भ्यः प्रधाविताः । तं परैर्मिलितं वीक्ष्य मूर्च्छतापात डामरैः ॥३१७०॥ 3170

तस्याभिनन्दनालापप्रमुखा प्रक्रियाभवत् । अदैन्यभुग्धन्यादिष्वनुज्झितनिजक्रमा ॥३१७१॥

प्लवमानं मनोहर्षं वेगात्संस्तभ्य सर्वतः । अथेत्थं स्तुवता तस्य धन्येनाभ्यधीयत ॥३१७२॥

राजपुत्र पवित्रेयं पृथिवी स्थैर्यशालिना । त्वया धाम्ना सुमनसां मेरुणा वा महीभृता ॥३१७३॥

गवां जयति सर्वासां निर्विकारतया वसन् । विक्रियोपहतं गोस्ते क्षीरं –¹ क्षीरवारिधेः ॥३१७४॥

कस्य पुंस्कोकिलस्येव त्वां विनाधममध्यतः । निर्गत्य निजकुल्यानां सिद्धं मध्यावगाहनम् ॥३१७५॥ 3175

सदाचारस्य भवता प्रथमं महते पथि । न तद्विदं संचरामधरमं चेत्ततोऽधिकम् ॥३१७६॥

इत्यादिप्रसृतालापदत्तोज्झापोऽधिरोह्य सः । जयोत्तरङ्गं तुरगं स्तुवद्भिस्तैरनीयत ॥३१७७॥

लग्नान्याः कतिचित्क्रोशान्विक्रोशन्तस्तदा ययुः । स्वकुल्यैर्नीयमानं तं काका इव पिकान्तिकम् ॥३१७८॥

स एवमेकत्रिंशेऽब्दे ज्येष्ठस्य दशमेऽहनि । त्रयस्त्रिंशद्वर्षदेश्यः समगृह्यत भूभुजा ॥३१७९॥

राज्ञी कृतप्रणामं तं प्रिये पुत्रमिवागतम् । अभ्यनन्दच्छ्रान्तभृत्यमस्याहारमकल्पयत् ॥३१८०॥ 3180

इन्दुवंशाभिसंवादिगुणग्राममवेक्ष्य तम् । प्रागदृष्टवती मेने वञ्चिते सा विलोचने ॥३१८१॥

गुणैरश्लाघ्यदाक्षिण्यमाधुर्यधैर्यकृत्रिमैः । तस्या विशदशीलं स क्ष्मापतिममन्यत ॥३१८२॥

मुखरागो मनोवृत्तेर्हारौज्ज्वल्यं गृहश्रियः । भर्तृस्वभावस्याचारो योषितामनुमापकः ॥३१८३॥

*दिनक्षयव्यच्छिन्नाध्वक्रमं¹ मस्यानुमुत्सुकम् । राज्ञोऽभ्यर्णे विशोल्वेन² दाक्षिण्यात्कोऽपि नाब्रवीत् ॥३१८४॥*

कथंचित्कुडमाध्यस्थ्यशेमस्थैः सन्निवेश्य । स त्वादिक्षत्परतिराशाम्नेत्योऽभ्यधीयत¹ ॥३१८५॥ 3185

राज्ञोऽभ्यर्णे विशोल्युत्केरुपोद्घातोपमं वचः । ततस्य भोजराज्कुल्यां –¹ प्राङ्क्रियां व्यधात् ॥३१८६॥

३१६३. ¹) Thus A; C सर्वारस्वर°.—²) Emended with C; A °स्पृशत्पथा°.—³) The letter न cannot be read with certainty: C °स्पृशन्. ३१६९. ¹) Emended; A °क्रान्त°. ३१७०. ¹) Thus corr. by A₁ from डामरैर्मि°. ३१७१. ¹) Emended with G (*sec. manu*); A °मुखापक्रि°. ३१७२. ¹) Emended with C; A °स्तम्भ. ३१७४. ¹) Thus A; C supplements तं. ३१७७. ¹) Emended; A °दत्तोज्झापोधिरोह. ३१७८. ¹) Emended; A °लग्नान्यारि°. ३१७९. ¹) Emended with C; A ज्येष्ठस्य. ३१८१. ¹) Emended; A इन्दुवंशा°. ३१८३. ¹) Emended; A मुखरागमनो°. ३१८४. ¹) Emended with C; A °क्रमां.—²) Emended; A विशल्वेन. ३१८५. ¹) Doubtful emendation; A स त्वादिक्षत्परतिराशाम्नेत्योऽभ्य°. ३१८६. ¹) Emended; A विशल्यु°.—²) Thus A; C supplements तदा.

चिरान्ताडितमर्मेव समाश्वास्यैक्षताथ सः । मध्यस्थानां स्थितं स्थैर्यं[1] दाक्षिण्यादोष्ठयोः परम् ||३१८७||
प्राणान्मुमुक्षोस्ते रूक्षभाषिणस्तस्य सान्त्वनैः । मन्दत्वं विक्रियां निन्युर्विनयानतमौलयः ||३१८८||
आचारं चैनमाक्रिन्धमपि न्याय्यं वचस्विनम् । न कोपि प्रतिवाक्येन शक्यं जेतुममन्यत ||३१८९||
3190 अथ स्वान्तस्थितस्वामिवैवश्यं दर्शयन्निव । दशनांशुवनैर्धन्यो धीरः स्निग्धमभाषत ||३१९०||
पद्धतिं राजधर्माणां सदाचारे स्थिता च ते । जानतोपि कथं मोहः क्रमायातेषु वस्तुषु ||३१९१||
किं संधिः सोभिधीयेत यत्र संधेयदर्शनम् । अकृत्वा गम्यत इति प्राज्ञो कथमजीगणः ||३१९२||
अनद्यतनभूभर्तृसुलभं[1] भूभुजं[2] तव । ज्ञात्वा सत्त्वोज्ज्वलं ज्ञातिधर्मजातप्रवर्तनम् ||३१९३||
नास्य दम्भस्मयस्तम्भाप्रीतिस्थैर्यखलोक्तयः । आदरादर्शवैशद्ये निःश्वासस्यापि काः श्रियः ||३१९४||
3195 अस्योपजीवनाद्या धीः साम्राज्यासादनाय सा[1] । प्रकाशो बिम्बितो[2] योर्कोद्दीपात्स्याज्ज्वलतः स किम् ||३१९५||
निर्वाणगोष्ठीनिष्ठत्वं शमिनामाश्रयेषु यत् । तत्पर्यस्य राजर्षेः --[1]न्मृन्दानुबन्धिनः ||३१९६||
एवं न्यगृह्णसंप्राप्यभयोनिःश्रेयसस्य ते । स्थानैः श्रियः समाप्याथ किं स्यादन्यैर्महीधरैः ||३१९७||
मु-भ्रा न केवल परे गणिताः फणिभ्यः कालानुकूलनिजकुण्डजलस्यजो[1] ये ।
लिप्सन्ति चन्दनतरुक्षिशिशिरालिदाघे मार्गेप्यशीतमनघं[2] विवरं विशन्ति ||३१९८||
प्राणोपकरणं राज्ञो राज्ञी राजात्मजाश्च ये । तद्धिते यदनौचित्यं तेषामौचित्यमेव तत् ||३१९९||
3200 स्वस्कोष्मवैकृतं पाथ इव क्वथितशीतलम् । अनुतापेन ते कृत्यं भूयो वैरस्यमेष्यति ||३२००||
तथा समर्थां सामर्थ्यादस्याख्याय भारतीम्[1] । कुण्ठशाठ्यलवस्तस्थौ प्रस्थानार्थे स मन्थरः ||३२०१||
पथि संप्रथितस्तोकान्वास्तव्यान्वीक्ष्य सर्वतः । अजायताथ संरुद्धकृत्यसाधुत्वदार्ढ्यधीः ||३२०२||
पदातिचरणक्षुण्णरेणुव्याजाददृश्यत । वसुंधरातलं बद्धसंधीव नभसा समम् ||३२०३||
दध्यौ ----[1]भोजः कश्चित्तमामुयां नृपम् । कश्चिदमुष्य विद्येत दर्शनं विप्रलम्भकैः ||३२०४||
3205 आराधन--[1]धाम्नि नान्तरान्तरितो विटैः । स्वामिनां क इवाप्नोति गुणाविष्करणक्षणम् ||३२०५||
शीतोपचारकरणाद्दयितो भवेयमौर्वार्दितस्य जलधेः प्रसृतं धियेति ।
क्रोतो हिमाद्रिपयसो विनिपात एव ग्रासीकृतं तिमिभिराहत ---[1]स्यात् ||३२०६||
इत्यादिचिन्तास्तैमित्यात्पुरःक्षोभामलक्षयन् । सैन्यस्य ददर्शाथ तयानुद्भासनं[1] नृपास्पदम् ||३२०७||
नातिप्रांशुं नातिकृशं सूर्यांशुश्यामलाननम् । सरोजकर्णिकागौरं शिथिलश्लथश्रिग्रहम् ||३२०८||
ककुद्मत्ककुदोत्सेधिस्कन्धमायतवक्षसम् । दम्भुणानतिदीर्घेण व्यक्तगण्डगलोन्नतिम् ||३२०९||
3210 उन्नसं पक्वबिम्बोष्ठं विस्तीर्णाक्षुल्बणालिकम् । तिर्यग्विप्रेक्ष्य ---[1]धीरमन्थरगामिनम् ||३२१०||
समाहितांशुकोष्णीष--[1]श्रीखण्डव--[2]म् । सीमन्त--[3]चुम्बिन्या रेखया चन्द्रगौरया ||३२११||

३१८७. [1]) Emended with C; A स्थौर्य. ३१९३. [1]) Emended; A सुलभे.—[2]) Emended; A भूभुजां. ३१९४. [1]) Emended with G (sec. manu); A °स्तम्भप्री°. ३१९५. [1]) Emended with C; A सः.—[2]) Emended with C; A बिम्बतो. ३१९६. [1]) Thus A; perhaps read राजर्षेर्विवृन्दा°; C °र्वैरजोनाम् वृन्दा°. ३१९८. [1]) Emended with C; A °जल-जो.—[2]) Emended with C; A °शीतम-वं. ३२०१. [1]) Doubtful emendation; A समर्थासामर्थ्या-प्रस्या°; C °सामर्थ्याच्च प्रस्या°. ३२०४. [1]) Thus A; C supplements चिन्नतरी. ३२०५. [1]) Thus A; C आराधनम् प्रबुं धाम्नि. ३२०६. [1]) Thus A; C °हतमेव तत् स्यात्. ३२०७. [1]) Emended; A °सन्नृपास्पदम्. ३२१०. [1]) Thus A; C °प्रेक्ष्यमाणास्यं. ३२११. [1]) Thus A; C °ष्णीषमौलिं.—[2]) Thus A; C श्रीखण्डवर्तुलं.—[3]) Thus A; C सीमन्तस्थानचु°.

अन्वयप्रथितो धन्योऽथ स्वार्थाम⁻⁻[1]बन्धकृती । कृतप्रणामो भूपाल स्वगुणाकर्णनं विना ॥३२३८॥

न प्राणा द्रविणं नाथ यन्न निर्विक्रिया पुनः । सत्क्रिया स्वामिनोऽप्यर्थे[1] तस्मात्पार्थिव चिन्त्यताम् ॥३२३९॥

3240 तथापि कथ्यमानं तत्र स्यात्संभावनाभुवि । यदस्मिं[1]श्चिन्त्यतेऽस्माभिरिति भूपो व्यभाषत ॥३२४०॥

क्षणमुच्चावचां चर्चां विरचय्य निशां पतिः । भोजेन सार्धं सुप्ताम्न रल्लादेव्यास्ततो ययौ ॥३२४१॥

कृतप्रणामस्तां वीक्ष्य सौजन्यादिगुणोज्ज्वलाम् । स राजपारिजातं तं मेने कल्पलतायुतम् ॥३२४२॥

मान्योऽयं देवि सौजन्यख्यातेयाभ्यामिहागतः । विशिष्यसे सौ पुत्रेषु क्ष्माभृद्यो[1]पेत्यभाषत ॥३२४३॥

सभाजनाय सौजन्यनिधिर्भोजाम्बितस्ततः । उदूढकार्यभाराणां दाराणामप्यगादृहम् ॥३२४४॥

3245 अभाणीन्निपुणा राज्ञी भोजं राज्ञा सहागतम् । अधुनैव नृपस्याग्रः संवृत्तोऽसीति[1] सस्मितम् ॥३२४५॥

लज्जास्मितमुखी पत्युः प्रणत्या स्वागतोक्तिषु । ददत्स्वेवोत्तरं भोजं निर्दिश्यान्यप्यभाषत ॥३२४६॥

आर्यपुत्र न विस्मार्यं प्रत्याख्यातापमन्त्रितम् । नानैकशरणस्यास्य ज्ञातिप्रीतिप्रवर्तनम् ॥३२४७॥

पूर्वोपकर्तृ सलिलं वृक्षावश्यक्षतोऽम्बरम् । पद्मान्स्वकुलपद्मानां युक्तं जेतुं भवादृशाम् ॥३२४८॥

कार्यकृच्छ्रेषु सज्जानामनुष्यागमनं विना । सिध्येदीशस्वसंरक्षा नेह प्रत्यागमश्च नः ॥३२४९॥

3250 उदीपे[1] रक्षतस्तीरं शरीराश्रयिणी भवेत् । ध्रुवं वनस्पतेर्वी[2]रुत्सन्निपातानुपातिनी ॥३२५०॥

पतिगत्यनुगामित्वं प्राणानां परिचिन्तितम् । तथा कार्यं यथा न स्याज्जातव्यस्यान्यथात्मनः ॥३२५१॥

राजा जगाद तां देवि सर्वकर्तव्यसाक्षिणी । अन्यथाप्रतिपत्त्यं[1] मे त्वमप्यस्यं[2] न मन्यसे ॥३२५२॥

निगृहीतवतो दुष्टौ सुज्जिमल्लार्जुनावपि । निस्तापं मम नाद्यापि पापानुशयमाशयम् ॥३२५३॥

अथ राज्ञार्थितः स्थातुं परार्ध्ये धाम्नि सानुगः । भोजो नामन्यतान्यत्र राजधान्याः[1] स्थिरां स्थितिम् ॥३२५४॥

3255 विदूराश्रयनिर्गमप्रभावाप्रचुरदर्शनैः । आराधनं धराभर्तुरसाध्यं ध्यातवानिह सः ॥३२५५॥

रक्षितृनमहीत्क्ष्मापास्थैर्यं[1] च समकल्पयत् । [2]अनया ⁻ नृपं कार्यो न सुराराधनागमे ॥३२५६॥

विज्ञाय भावं प्रीतेन राज्ञा दत्तं[1] ततो गृहम् । सर्वोपकरणापूर्णं राजधान्यन्तरेऽभजत् ॥३२५७॥

राजापि ममतास्फीतप्रीतिभिः स्वैः परैस्तथा । उपासितस्तत्र रतिं चिराभिन्न इवाययौ ॥३२५८॥

भोगवेलोचिताश्चर्यदर्शनादौ नृपोऽपि तम् । प्रियं पुत्रमिवास्मार्षीद्दूतैः पार्श्वं निनाय च ॥३२५९॥

3260 जग्राह दक्षिणे पार्श्वे भुञ्जानं ज्ञातिगौरवात् । स्पर्शास्वादितभोज्यादिदाने नैव व्यवर्जयत् ॥३२६०॥

अकृत्रिमं तथा स्नेहमुवाह ⁻⁻⁻[2] यथा । लक्षितं ज्ञातिवत्तस्मिंस्तद्वा[3]लापस्यकैः समम् ॥३२६१॥

तामेवालम्बत व्यक्तां[1] सोऽपि वृत्तिं यथा यथा । राजा सपरिवर्होऽपि विश्रम्भमविगाहितम् ॥३२६२॥

आसन्नाभ्यन्तरा भिन्ना ये द्वेषे तामदर्शयत् । राज्ञां[1] विरक्तिं स्वस्यारिवातुल्यं च व्यसर्जयत् ॥३२६३॥

---

३२३८. [1]) Thus A; C स्वार्थांमनलबन्धकृती. ३२३९. [1]) Emended with C; A स्वामिनो⁻र्थे. ३२४०. [1]) Emended; A यदास्मिं°. ३२४३. [1]) Emended with C; A क्ष्माभृद्योपेत्य°. ३२४५. [1]) Emended; A संवृत्तोसीति; C संवृत्तोऽस्मीति. ३२५०. [1]) A, gloss उदीप: प्रतिवृष्ट्या अत्युद्रिक्तजलागमः.—[2]) Emended with C; A °वीरुत्ताभि°. ३२५२. [1]) Emended; A प्रतिपत्त्वं.—[2]) Emended with C; A त्वमप्य⁻. ३२५४. [1]) Emended; A °धान्यां. ३२५६. [1]) Emended; A °क्ष्मापास्थिर्य.—[2]) Thus A; the text is here evidently corrupt; C अनयानं नृपं; G (*sec. manu*) अनुयान्तं नृपं कार्याकृच्छ्रराधनागमे. ३२५७. [1]) Emended with C; A दत्तं. ३२६०. [1])—[1]) Written by $A_3$ on new paper. ३२६१. [1])—[1]) Written by $A_3$ on new paper.—[2]) Thus A; C supplements जनकी.—[3]) Emended; A° स्तद्बालापस्यकैः. ३२६२. [1]) Conjectural reading; A तमेवालम्बत व्यक्तिं. ३२६३. [1]) Emended; A राज्ञां.

अकृत्रिमास्तथाभाषास्करणानां सभान्तरे । न प्रत्यभाज्जडो नापि धृष्टो नापि च वक्रगः ॥३२६४॥
प्रमादस्खलिते हीनातिरिक्तत्वे च भूपतेः । कार्ये नावदधे सूक्ष्मः कविरिव महाकवेः ॥३२६५॥ 3265
न विक्रमकथास्तत्र ----[1]व्यकत्थत । प्राग्भूतमन्तरा पृष्टः सोपस्कारं च नाभ्यधात् ॥३२६६॥
वि--कारंप्रभोः साम्यसकुल्यत्वादिवादिभिः । धीराधृष्टैर्हिपातैरपुनर्मोचिणो व्यधात् ॥३२६७॥
तथा स्पृष्टोप्यनुत्तानाशयोभूदवगाहितुम् । न शोकुर्तं यथा आत्मवर्मविस्पृभुनादयः ॥३२६८॥
क्षणेष्ववसितालोकक्षोभादिविश्वरादपु । प्रा--[1]वसथं गच्छन्प्राङ्गुं[2] कामपि नातनोत् ॥३२६९॥
यथा यथास्य विस्रम्भानुपोभूच्छिथिलाग्रहः । तथा तथैव सिद्धोश्व इव नाधावदुद्धतम् ॥३२७०॥ 3270
सदैवाभेसरोन्यत्र पथाद्रुद्धपदोभवत् । अभिषिक्तोपि मुक्तान्तमन्त्रागारावगाहने ॥३२७१॥
विश्रब्धोपधिकाभिमार्थनमादरात्स्वयम् । दूरीचक्रे परापेक्षां शश्वत्संशयिताशयः ॥३२७२॥
अना--- समये तस्या---[1]रक्षिणः । न स्वमभूतमप्यासीदमात्यो महीभुजे ॥३२७३॥
मन्त्र्यान्तःपुरिकादीनां परस्परविगर्हणम् । नाकर्णयदिस्मृतिं च दुष्टत्वमभिधानयत्[1] ॥३२७४॥
सचेतनोपि दुर्मर्मगोष्ठीष्वनुरणन्नपि । भवदस्फुरदप्यन्तर्भिटानां नाम लाघवम् ॥३२७५॥ 3275
एवं शुद्धानुभावस्य तस्य कृत्स्नेन कृत्यवित् । पुत्रेभ्योप्यधिकां प्रीतिं विश्रम्भेजे[1] क्रमान्नृपः ॥३२७६॥
कलिकालमहीपालदुस्तरः सिंहभूभुजा । सोयं गोत्रपरित्राणे नवः सेतुः प्रवर्तितः ॥३२७७॥
इत्थं विद्रावितारोपोपद्रवस्थितिराङ्कस्ततः । आभि--[1]मपि स्वास्थ्य--[2] भूभृदचिन्तयत् ॥३२७८॥
असौ हि निर्हिमोर्वीभृन्मार्गे काले पलायनम् । शाठ्ये सत्त्वस्य दुःसाध्यं बद्धं ध्यायन्व्यलम्बत ॥३२७९॥
अतः सुमेधा यात्रायां यावत्क्षणमपैक्षत । सज्जपालिनाविचारात्तावत्प्रारम्भि धावनम् ॥३२८०॥ 3280
अल्पाधिष्ठानसुभटः स देवसरसोद्भटैः । बहुभिः सहितः सैन्यैर्मार्ताण्डे विदधे पदम् ॥३२८१॥
निर्निरोधप्रवेशः स प्रदेशः परिपन्थिनाम् । नासाथ योधा निःसारा दर्पाद्येति विवेद सः ॥३२८२॥
विसङ्कानुचरा युद्धसंनिहितसायकाः । तेन सार्धं विदधिरे न चाहीयन्त पौरुषम् ॥३२८३॥
निःसीमसैन्यसहितो लवन्योन्यत्र डामरे । तत्र सर्वाभिसारेण धावतो युयुधे क्रुधा ॥३२८४॥
लुण्ठितद्रविणापूर्णास्ते देवसरसौकसः । सर्वे ततः सज्जपालं विमुनाः परिजहिरे[1] ॥३२८५॥ 3285
द्विषत्संवर्तवर्षोर्व्यां सर्वत्र कुडितेभवन् । अधिष्ठानभटा एव कुलशैला इवोद्धताः ॥३२८६॥
ते तीक्ष्णतीक्ष्णनर्णोः सोढारातिरुपचिरम् । बहुभिर्हतवन्तोन्यांस्तत्र तत्राहवे हताः ॥३२८७॥
[1]क्षतेषु युधि सर्वेषु विन्दानैर्मण्डलं निजैः । शूरेषु तत्र मार्ताण्डेप्यासीदविरलव्रणः[1] ॥३२८८॥
रराजाजौ साज्जपालिर्गयापालो हतेषु यः । त्रिषु वाजिषु[2] चातुर्यात्पदातिर्नोपलक्षितः ॥३२८९॥

३२६६. [1]) Thus A; C supplements °सत्कथालापैः स्वं स्म°. ३२६७. [1]) Thus A; possible emendations would be विग्रह-काम्यभोः or विग्रहैकाम्यभोः; C विग्रहैकाम्यभोः. ३२६९. [1]) Thus A; C प्रासोऽस्याव°.—[2]) Emended; A गच्छन्प्र--ङ्गां. ३२७१. [1]) Emended with C; A °वाहने. ३२७२. [1]) Conjectural reading; A प्रार्थन-परस्वयम्; C °प्रार्थनः स परस्वयम् ३२७३. [1]) Thus A; C अनारतसमये तस्य न वधुः चपि रक्षिणः. ३२७४. [1])—[1]) Written by A₃ on new paper. ३२७६. [1]) Emended with C; A भेजे. ३२७८. [1]) Thus A; C आभिमुख्यमपि स्वास्थ्यदुर्भृ°. ३२८४. [1]) Emended with C; A निःसीम सै°. ३२८५. [1]) Emended; A °जहिरे. ३२८६. [1]) Thus corr. by a later hand from A₁ अधिष्ठानि भटा.—[2]) Emended with C; A इवोद्धता. ३२८७. [1]) Emended with C; A बहुभिर्°. ३२८८. [1])—[1]) Written by A₃ on new paper. ३२८९. [1]) Emended; A सज्जपालि°.—[2]) Emonded; A गयपालः; cf. viii. 3322.—[3]) Emended; A वाजिस्वथा°; C वाजिस्वथा°.

अविचिन्त्योऽबलक्षोणिभृतः प्राणान्विनश्वरान् । ऐश्वर्यैकविभूतत्वात्सनिर्व्यूढव्यवस्थितौ ॥३३१६॥
मठेऽमुनितकोशाख्ये तत्सद्राजाश्रयात्रते । कुलोद्वहो निहितवान्सिंहदेवो व्यवस्थितिम् ॥३३१७॥युग्मम्॥
सुस्सांविहारं पैतृव्यं पितुर्देवगृहद्वयम् । तत्रार्धसिद्धमासाद्य परिपूर्णं व्यधान्नृपः ॥३३१८॥
स एव ग्रामान्संग्रामीमहापणसमर्पणैः । निर्दोषपारिषद्यादिद्वाजियोग्यधीर्व्यधात् ॥३३१९॥
भवरोषेन्दुवदनां मृगामुदिश्य चन्द्रलाम् । मन्त्रदापि मठोऽनूनभीहारैर्धारितातिथिः ॥३३२०॥ 3320
स्त्रष्टो नगरनिर्दोहैः सोऽपि सूर्यमतीमठः । पूर्वाधिकोपकर्मैव तेनैव निरमीयत ॥३३२१॥
संजाते सज्जपालस्य ततो लोकान्तराश्रये । कम्पने निदधे राजा गयापालस्तदात्मजः ॥३३२२॥
विपाकसुकुमारोऽपि दुःसहः शत्रुणामभवत् । विस्मारितः स सौम्येन शरच्चानुदितेन्दुना ॥३३२३॥
ग्रीष्मोष्मदोषविषमेष्वविशेषभूतेष्वेवोदये सटतरोस्तटिनीप्रवाहः ।
पद्मवनकाण्डततिविद्रापनेन नाद्यं नाद्यांसति स्वसलिलस्य विभूतिलाभम् ॥३३२४॥
आ भिक्षुक्षपणाद्भोजभञ्जनादपि भूभुजः । विधुरे कार्यभाराणां योऽभूद्बद्धधुरः परम् ॥३३२५॥ 3325
तस्य तस्मिन्नृपरते क्षीणप्रक्षीणकण्टके । स धन्योऽनन्यसामान्यप्रेमा प्रमयमाययौ ॥३३२६॥
ताम्बूलमायाविकलां नीत्वाऽमुनामयानिव । आर्पिपन्मधुरावहं जीवं यस्य निजः सुतः ॥३३२७॥
स जगज्जीवितेनापि रक्षणीयः क्ष्मापतिः । पदे पदे विपन्मग्नः प्रजोद्धरणधीरधीः ॥३३२८॥
व्याधितस्य विनिद्रोऽपि संसक्तान्मक्रलेभकुंभिः । कान्तक्षणे तस्य पार्श्वान्कृतशोकाचलन्नृपः ॥३३२९॥
विपन्नजस्यामात्यस्य स्वकर्मविपरीतता । तस्य कोऽपि क्षणं जाता जनजीवितदा भवे ॥३३३०॥ 3330
भूभुजामपि मान्धातृमुखानां निधनेन याः । दुःखं प्रभुः प्रजास्तासां समभावि तदा ह्यकम् ॥३३३१॥
वैराज्योपप्लुते राष्ट्रे नवस्य नृपतेरभूत् । अव्याहतं यत्साचिव्यं तस्य सर्वाभिषङ्गभित् ॥३३३२॥
कालो बली व्यवहृतेर्ननु तद्दशेन पूर्वापराचरणविस्मरणे न कस्य ।
शक्तिः क्षितेर्वहनकर्मणि योग्यतायां निर्धारणे सुरजितस्तु वराहतायाम् ॥३३३३॥
नगराधिकृतो भूत्वा सुज्जेर्निर्वापिते पुरा । चिरमब्दान्यो देशस्याव्यवस्थां न्यवारयत् ॥३३३४॥
भट्टः क्रयेषु दीनारव्यवहारोऽव्यवस्थया । निगृह्य तं धान्यकार्येनिर्मितदण्डः प्रवर्तितः ॥३३३५॥ 3335
परिणीताङ्गनाशीलभ्रंशो गृहपतेरभूत् । दण्डप्रवृत्तिर्या तेन सा विचार्य निवारिता ॥३३३६॥
एकान्ततो स्थितो भूत्वा विश्रामेवं पुनर्व्यधात् । नगराधिक्रियां लब्ध्वा स एव परिपीडनम् ॥३३३७॥
वद्धाभिर्नर्तकीभिश्च परिणीतगृहस्थितौ । संप्रयुक्तान्कथ्यमानान्स्वैनादण्डयद्बहून् ॥३३३८॥

---

३३१६. ¹)—¹) Written by $A_3$ on new paper.—²) Emended with C; A ऐश्वर्यं क°. ३३१७. ¹)—¹) Written by $A_3$ on new paper.—²) Emended; A° स्थितम्. ३३१८. ¹)—¹) Written by $A_3$ on new paper.—²) Emended with C; A स्वस्सा°; cf. viii. 248.—³) Emended with C; A पैतृव्य.—⁴) Emended with C; A —नृप. ३३१९. ¹) Emended with G (sec. manu); A ग्रामसा°. ३३२०. ¹) Emended with C; A °वदनं.—²) Thus A, R; $A_3$ चन्द्रलाम्; C चन्द्रलाम्. ३३२१. ¹) Emended with G (sec. manu); A स्रष्टो नगरनिर्मोह (स्रष्टो written by $A_3$); cf. viii. 1193. 1528. ३३२३. ¹) Emended; A सौम्येन. ३३२६. ¹) Emended; A धन्यो नान्यसा°. ३३२७. ¹) Thus A; perhaps read नीत्वामुना°.—²) Emended with C; A आर्पिपन्मधु°. ३३२९. ¹)—¹) Written by $A_3$ on new paper. ३३३०. ¹)—¹) Written by $A_3$ on new paper. ३३३२. ¹) Emended with C; A अव्याहतं. ३३३३. ¹) Emended with G (sec. manu); A निर्धारणे. ३३३५. ¹) Doubtful emendation: A प्रवर्तेत; C प्रवर्तितः. ३३३७. ¹) Emended; A पीडनम्. ३३३८. ¹) Emended with C; A° बद्धाभि — नर्तकीभिश्च.—²) Conjectural reading; A परि — गृह°; C परिणीतगृ°.

किंवो---¹लेशानां तुषाणामिव चिन्तनैः । अक्रोहालोभयोर्भूमिर्न तादृगपरोभवत् ॥३३३९॥

3340 भिक्षुमक्षार्जुनो¹ कालानुवृत्त्याभिर्तवानपि । नासौ जहौ स्वामिहितं² न तौ---³ नाबधीत् ॥३३४०॥

अक्षीणस्यागहीनस्य विभूतिसमयेप्यभूत् । संस्कारौपयिकं नास्य पर्याप्तं निधने धनम् ॥३३४१॥

कृतघ्नतायां राज्ञोन्यस्पर्याप्ते किमुदीर्यताम् । यो जीवित इवानीतान्संविभेजेनुजीविनः ॥३३४२॥

लोकान्तरातिथिं विज्जाभिधामुद्दिश्य वल्लभाम् । धन्यस्य विज्जनामाङ्क¹विहारारम्भकारिणः ॥३३४३॥

परलोकं प्रयातस्य निर्माण¹प्रतिपूरणम् । स्थितं व्यवस्थितेः कं च विनियोगं चकार सः ॥३३४४॥ युग्मम् ॥

3345 भूभृद्धार्मिकताभावाद्दक्षुतोल्लेकवासवैः । युद्धैकवृत्तिभिरपि प्रवृत्ते पुण्यकर्मणि ॥३३४५॥

विपक्षाणां सुभिक्षेण तुरुष्कविषया¹भयात् । जन्मभूमेर्वृत्तये यैः क्रौर्यादन्यत्र शिक्षितम् ॥३३४६॥

¹येपि वृत्तिं विरोध्यांजिव्यये सुस्सलभूभुजि । कलहावसरेष्वेवं कश्मीरेषु प्रपेदिरे ॥३३४७॥

गोत्रे तेषां क्षत्रियाणां जातः कमंलियानुजः । राजबीजी सङ्गियाख्यः प्रतिष्ठां स्वाख्ययाकरोत् ॥३३४८॥

वितस्तापुलिने बाणलिङ्गे तेन निवेशिते । जायते स्वर्धुनीरोधःसंपर्कवि¹मुक्तधीः ॥३३४९॥

3350 तदीयं च मठं चैव तपोधनविभूषितम् । दृष्ट्वा निवर्तते हृल्लोकालोकनकौतुकम् ॥३३५०॥

लोठनेन्यप्रतिष्ठानामधन्यद्रविणार्पणे । न तेनायतने काले संरब्धं¹ शुद्धबुद्धिना ॥३३५१॥

उदयस्य प्रिया चिन्ताभिधाना कम्पनापतेः । पुलिनोर्वी वितस्ताया विहारेण व्यभूषयत् ॥३३५२॥

प्रासादपञ्चकव्याजात्तद्विहारस्थितः करः । उदस्त इव धर्मेण प्रोत्तुङ्गाङ्गुलिपञ्चकः ॥३३५३॥

सांधिविग्रहिको मङ्खकाख्योलंकारसोदरः । समठस्याभवद्यष्टः श्रीकण्ठस्य प्रतिष्ठया ॥३३५४॥

3355 मठाग्रहारदेवीकोजीर्णोद्धारादिकर्मभिः । अनुजः¹ सुमना नाम रिल्हणस्यासदृतुलाम् ॥३३५५॥

भूतेश्वरे मठं कृत्वा त्रिग्राम्यामप्यपाययत्¹ । तोयं कनकवाहिन्या वितस्तायाश्च यः पितॄन् ॥३३५६॥

प्रदेशे¹ कश्यपागाराभिधाने नील्भूः सरित् । जीगीषयेव जाह्नव्या यत्र पूर्वां दिशं गता² ॥३३५७॥

उत्ताराय गवादीनां यः सेतुं तत्र बन्धयन् । निर्ममे निर्मलं कर्म संसारोत्तरणक्षमम् ॥३३५८॥

नगरेपि स्वनामाङ्कपाङ्गणगारकारिणा । मठो येन कृतोभट्टजटाधरवटाश्रयः ॥३३५९॥

3360 मम्मेश्वरं स सौवर्णामलसारं¹ चकार यः । सोमतीर्थं तथा तोयोपानाद्युद्योतितान्तिकम् ॥३३६०॥

अत्र क्ष्माभुजो¹ वंशे वंशीभूत्यधनादिषु । सासूयस्वादमात्यानां धनप्राणादिहारिणः ॥३३६१॥

कुध्यत्प्रवासनाध्यासासूयया वासवोपि वा । माध्वंशयविधो देवो¹ मान्धातारं धराभुजम् ॥३३६२॥

अविप्लुतमतिर्भृत्याम्कृत्यीत्स्यवतोन्वहम् । दृष्ट्वा ध्यातस्वमाहात्म्यवृद्धिस्तु प्रीयते नृपः ॥३३६३॥

कलशक्ष्मापतेः¹ प्रांशोपर्श भृत्योस्य रिल्हणः । कुर्वन्स्वर्णातपत्राणां प्रतिष्ठां प्रीतिकार्यभूत् ॥३३६४॥

---

३३३९. ¹) Thus A · C को भवेद्दलेशानां. ३३४०. ¹) Thus R C; A₅ भिक्षुमक्षा°.—²)—³) Written by A₅ on new paper.—³) Thus A₅; C °कृत्वा भुत°.—⁴) Emended; A स्वामिहितं.—⁵) Thus A; C supplements तावपि. ३३४३. ¹) Doubtful emendation, A °नामाङ्क°. ३३४४. ¹) Emended with G (*sec. manu*); A निर्वाण.° ३३४६. ¹) Emended with C; A तुरुष्कामिषया°. ३३४७. ¹)—¹) Written by A₅ on new paper. ३३४८. ¹)-¹) Written by A₅ on new paper. ३३५१. ¹) Emended; A संरब्धे. ३३५५. ¹) Emended; A अनुजा. ३३५६. ¹) Emended; A त्रिग्राम्यामप्यपाययत्; cf. यासेन सिन्धुत्रिग्राम्या वितस्ता दक्षिणेन तु v. 97. ३३५७. ¹) Emended; A प्रदेश.—²) These two *pádas* and the following three verses are written by A₅ on new paper. ३३६०. ¹) Emended with C; A₅ R °मलसारं.—²) Emended; A₅ R °पानाद्युद्योति°. ३३६१. ¹) Doubtful emendation; A क्ष्माभुजो.—²) Emended, A °स्वादमात्यानां.—³) Emended; °विहारिणः. ३३६२. ¹) Emended with C; A देवी. ३३६४. ¹) Thus corr. by A₁ from °पतिः.—²) Thus A; cf. vii. 528 ffg.

स्वर्णपत्त्रं¹ धुरेश्वर्यां शिवयोः समवेतयोः । सदीपारात्रिकामत्र मैत्रीमेति सघण्टिकम् ॥३३६५॥ 3365

बन्धोर्हिमाद्रेर्दयितः सुताजामातरौ शिवौ । स्वर्णच्छत्त्रच्छलान्मेरुर्मूर्ध्ना¹प्रष्टुमुपागतः ॥३३६६॥

उद्दिश्य यच्छिवधनुर्धममास्मयोनिर्दग्धो मयाकृतदमं दयितेन गौर्याः ।
सिद्धं तदत्र ---¹मुमयेति हैमच्छत्त्रच्छलाद्वरदशावलितोऽभिरूर्धम् ॥३३६७॥

छत्त्रं तत्र च रिल्हणेन विहितं रौक्मं मदद्गुरुक्मिणीश्रेयोमन्दिरमूर्ध्नि नष्टमधुनादभ्रं परिभ्राजते ।
सैन्येन क्षतजावपानजनुषा नष्टं ततः स्वामिना प्राप्तं चक्रमवेक्षितुं¹ स्वरुधिरं भास्वानिवाभ्यागतः ॥३३६८॥

तीर्थे मन्मथजित्खगध्वजहराजर्योर्भिलाचार्यके साधारामरणं क्रियापरिणति स्वर्णातपत्त्रं प्रभोः ।
भात्येकस्य शिखाहिफूत्कृतिवलद्गङ्गाम्बरेणूपमं¹ केशान्तस्थितमेघपार्श्वगलज्ज्योत्स्नाभमन्यस्य च ॥३३६९॥

सौवर्णद्रुहिणाण्डकर्परपुरे संसूत्रिता कज्जलकल्याकोशस्य समुद्गकप्रतिकृती दीर्घार्पित¹ वने ।
सङ्केनेन्दुकिरीटकैटभरिपुप्रयामासितालंक्रिया सद्रत्नाकरयोः पिधानकरणि स्वर्णातपत्त्रं गतम् ॥३३७०॥ 3370

ते लोहरमहीपालमन्वजायन्त भूभुजः । रड्डादेव्या गुणोदाराश्चत्वारश्चतुरा¹ः सुताः ॥३३७१॥

गुल्हणेनापरादित्यो राघवेणेव लक्ष्मणः । अभिन्नभावः संवृद्धिं वर्तते लोहरे भवन् ॥३३७२॥

ललितादित्यदेवेन¹ जयापीडो हि हारकः । भरतेनेव शत्रुघ्नः पाल्यमानः² प्रवर्तते ॥३३७३॥

पार्थिवाहस्करात्राणनमस्कारात्प्रभास्करः । पञ्चमः¹ क्षितिभृद्धर्म्यो बालातप इवोदितः ॥३३७४॥

चपलैः शैशवाच्छन्दानुभावस्थास्नुसौष्ठवैः । लडितैर्ललितादित्यो भिन्नैरप्याद्रियत्यहो ॥३३७५॥ 3375

दन्तरश्म्यञ्जनं ताम्राधरं गौरं तवाननम् । सबालातपभृङ्गाङ्कस्¹वर्णपङ्केरुहायते ॥३३७६॥

आलापास्तस्य माहात्म्यगर्भा बाल्यास्¹फुटा अपि । अमृतार्द्रा इवोद्गारा मथ्यमानस्य वारिधेः ॥३३७७॥

महाभिजनसंजातो राजसूनुः स शैशवे । अभिधत्तेनुभावेन भव्येनागामि जृम्भितम् ॥३३७८॥

अत्यन्तमण्डनशिखण्डिशिखोपि तोयस्पर्शासहाञ्चितकलापिकलापभङ्ग्या ।
वापीं निपीतसलिलो चलितं प्रयाति चेष्टोक्तभावमहिमा वरवर्णिभावः ॥३३७९॥

चतस्रो मेनिला¹ राजलक्ष्मीः पद्मश्रिया समम् । संजाता²ः कमला चास्य कन्याः सत्कृत्यवृत्तयः ॥३३८०॥ 3380

विनोदलीलोद्यानैस्तैर्भित्वकान्तैरपत्यकैः । विद्योतितेनवथी¹ तौ प्रावृट्पुष्पाकराविव ॥३३८१॥

तीर्थायतनपूतेस्मिन्मण्डलेखण्डितैश्वर्यैः । रड्डादेव्या एव याता भाग्यभावं विभूतयः ॥३३८२॥

कृतानुयात्रा सा दैवयात्रासु¹ क्षितिपाङ्गना । ²राजलक्ष्मीरिवाभाति राजसामन्तमन्त्रिभिः ॥३३८३॥

सतीवेशे तीर्थयात्रास्थजन्त्यस्या निमज्जने । स्नानासक्तसतीमूर्तिस्पर्शोत्सुक्यमञ्जसा ॥३३८४॥

चित्रे कालेव याचासु द्रष्टुं वृष्टचुत्तरैः सदा । यस्याप्रपृष्ठिव --¹यं जीमूतैरनुगम्यते ॥३३८५॥ 3385

३३६५. ¹) Emended; A °पत्त्रां. ३३६७. ¹) Thus A; C कल्याणमुमयेति°.—²) The last *páda* and the following verse written by $A_s$. ३३६८. ¹) Emended with C; $A_s$ R चक्रमिवे°. ३३६९. ¹) Thus A; C °पमं. ३३७०. ¹) Thus A; C °र्पिताद्वै वने. ३३७१. ¹) Emended with C; A °श्चतुरस्सुताः. ३३७३. ¹) Emended with C; A ललिताप्तिस्य°.—²) Emended with C; A पाल्यमान:. ३३७४. ¹) The last two *pádas* and the following verse written by $A_s$ on new paper. ३३७६. ¹) Emended with C; A °भृङ्गाकुरस्वर्ण°. ३३७७. ¹) Emended; A बाल्यास्फुटा. ३३८०. ¹) Emended with C; A मैनिला; cf. viii. 3394, 3397.—²) Emended; A संजाता. ३३८१. ¹) Doubtful emendation; A विद्योतवाथवथौ; C द्योतितावनवथौ. ३३८३. ¹) Emended with C; A यात्रास्वक्षि°.—²) These two *pádas* and the first *páda* of the following verse are written by $A_s$ on new paper. ३३८५. ¹) Thus A; C supplements तैयैर्थ.

सा पार्थिवेषु तीर्थेषु स्नानाय प्रस्थितां भुवम् । दिव्यैर्धर्ममिवाशीर्भिः प्रावृषेव नदीर्व्यधात् ॥३३८६॥

अभ्रंलिहांश्च गिरींश्च कूलंकषा नदीः । मृद्वङ्गी दुर्गमा मार्गे तीर्थौत्सुक्येन वेत्त्यसौ ॥३३८७॥

सुबह्वीभिः प्रतिष्ठाभिर्जीर्णोद्धारैश्च धीरया । तया चित्रं चतुरया चतुर्दिक्षा विलङ्घिता ॥३३८८॥

अद्यापि विसरत्क्षीरार्णवकान्तिच्छटाच्छलात् । यो भातीव सुधासूतिसितश्वेताश्मनिर्गतः ॥३३८९॥

3390 उपमन्योरुदन्याया हारिद्योपशमापहः । सत्री रुद्रेश्वरो नाम्ना श्रीमान्कश्मीरभूषणम् ॥३३९०॥

जगत्सौन्दर्यसारं स सत्स्वर्णामलसारकः । शान्तावसादप्रासादोद्धारश्च विहितस्तया ॥३३९१॥

सत्त्वानामिव भृत्यानां कोपैर्वैकृते नृपे । उदम्यतीव शरणं सिन्धुर्हैमवतीव तां ॥३३९२॥

स्थिरप्रसादे भूपाले निग्रहानुग्रही क्षणात् । भूभुजामपि संवृत्तावविच्छिन्नौ तदिच्छया ॥३३९३॥

सोमपालात्मजो भूभृद्भूपालः प्रापितस्तया । मानिन्या मेनिलादेव्या विवाहेन महार्हताम् ॥३३९४॥

उत्पत्तिभूमिकुलभानुभवो न भूम्ना कस्याप्यहो व्यभिचरत्यनुभावभावः ।

3395 तेजस्तमोविलुठनव्रतमुष्णभानोश्चेदं तदुत्थमकरोत्तमसोपि चक्रम् ॥३३९५॥

भुवनाद्भुतसाम्राज्यमार्जनैं भूभुजामभूत् । प्रातिभाव्यं दृढं रत्नाक्रान्तसन्मण्डलाश्रमिः ॥३३९६॥

ऊढायां मेनिलादेव्यां परिणेतुरभूदपि । पिता वैमत्यमुत्सृज्य निर्व्याजं राज्यदायकः ॥३३९७॥

राज्ञः प्राजिधरस्याजौ तरसा भूभुजोनुजः । वैरिभिर्निहतस्याभे वैरसंशोधनोद्यतः ॥३३९८॥

रज्ञां शरणमेत्योग्रमानोत्कटो घटोत्कचः । भेजे राज्यश्रियं प्राप्य चित्रं राज्याभियं पराम् ॥३३९९॥ कुलकम् ॥

3400 कृतसाहायकोमात्यैं राज्ञः समग्निमद्भुदम् । राज्यात्प्रांशुर्यशातृष्णं पञ्चवटं नृपम् ॥३४००॥

भलक्ष्यतत्प्रभावात्स्कारदानाम्बुनिर्भरात् । सरितं खड्गवर्णां च कृष्णां विहितविगोचराम् ॥३४०१॥

द्वितीयस्योरशाभर्तुरकीर्तिं निर्जयात्सृजत् । देवप्रभावायोधाममल्युग्रपुरमग्रहीत् ॥३४०२॥

शीतोष्णवारणशक्तिद्योतकल्लोलितास्ततः । बहवो बाहिनीनाथाः प्रथामित्थं प्रपेदिरे ॥३४०३॥

समाद्वाविंशती राज्ञयाग्नेः प्राग्भूभुजो गता । तावत्येवाग्रराज्यस्य पञ्चविंशतिवत्सरे ॥३४०४॥

3405 इमवृष्टमनन्यत्र प्रजापुण्यैर्महीभुजः । परिपाकमनोज्ञत्वं स्थेयाः कल्पातिगाः समाः ॥३४०५॥

अभ्भोपि प्रबहत्स्वभावमशनैराश्यानमश्मायते पाथाम्भः ज्वलति द्रवत्वमुदितोद्रेकेषु चार्चिष्मुषः ।

कालस्यास्खलितप्रभावरभसं भाति प्रभुत्वेद्भुते कस्यामुष्य विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः ॥३४०६॥

प्रयाते त्र्यधिकेप्यर्धसमाषट्कशते कलेः । कश्मीरेष्वासीद्गोनन्दः पार्थानां सेवया नृपः ॥३४०७॥

सूनुर्दामोदरोस्याथ तस्य पत्नी यशोमती । गोनन्दोन्यस्तत्सुतोपि ततोतीत्य महीपतीन् ॥३४०८॥

पञ्चत्रिंशतमज्ञातानृपहाभिजनाभिधाम् । राजाभवल्लवो नाम सूनुस्तस्य कुशस्ततः ॥३४०९॥

---

३३८६. [1]) Emended; A प्रस्थितां. ३३९२. [1]) Emended with C; A शरणं.—[2]) The last *páda* and the following two verses written by $A_3$ on new paper. ३३९३. [1]) Emended; $A_3$ R C °विच्छिन्नावपि°. ३३९५. [1]) Emended with C; A उत्पत्तिर्भू°. ३३९६. [1]) Emended; A °मार्जनी. ३३९९. [1]) Emended; A °त्योग्रं मानोत्क°. ३४००. [1]) Emended; A राज्यं प्रा°.—[2]) Doubtful emendation; A °वटे. ३४०१. [1]) The last *páda* and the following verse written by $A_3$ on new paper. ३४०२. [1]) Doubtful emendation of G (*sec. manu*); A °कीर्तिनिज°. ३४०४. [1]) Emended with C; A °विंशतु व°. ३४०६. [1]) Emended with C; A चार्चिष्मः. ३४०८ [1]) Emended with C; A दामोदरस्याथ.—[2]) Comp. यशोवती i. 70.—[3]) Emended with C; A °पती. ३४०९. [1]) Emended with C; A राजा लवनको; cf. अथाभवल्लवो नाम i. 84.

द्वौ खगेन्द्रसुरेन्द्राख्यौ पुत्रपौत्रावमुष्य तु । गोधरोऽथान्यकुलजः सुवर्णोऽस्य तदात्मजः ॥३४१०॥
तज्जन्मा जनकोऽप्यासीत्सूनुः शच्याः शचीनरः । अथाशोकोऽभवद्भूभृद्भ्रातुरस्य प्रपितृव्यजः ॥३४११॥
तज्जो जलौकाः संविग्नवंशो दामोदरस्ततः । तुल्यं क्रमेण हुष्काद्यास्तुरुष्काभिजनोद्भवाः ॥३४१२॥
अभिमन्युस्तृतीयोऽथ गोनन्दोऽस्य बिभीषणः । राजेन्द्रजिद्रावणश्च --श्चः क्रमशोऽभवत् ॥३४१३॥
अन्यो बिभीषणः सिद्ध उत्पलाक्षश्च तदनु । पश्चात्ततो हिरण्याक्षहिरण्यकुलयोरभूत् ॥३४१४॥
राजा वसुकुलस्तस्य सूनुः ख्यातस्त्रिकोटिहा । क्षितिनन्दो बकात्तस्माद्वसुनन्दस्तदात्मजः ॥३४१५॥
नरोऽन्योऽक्षस्ततस्तस्माद्गोपा गोकर्णको नृपात् । तस्मान्नरेन्द्रादित्योऽभूत्सूनुरन्धयुधिष्ठिरः ॥३४१६॥
तस्य प्राभ्रंशितो भृत्यैरन्याभिजनसंभवः । भूपः प्रतापादित्योऽभूज्जलौकोऽपि तदात्मजः ॥३४१७॥
तुञ्जीने निःसुते तज्जे विजयोऽन्यकुलोद्भवः । जयेन्द्रोऽस्य सुतेऽपुत्रे सचिवः संधिमानभूत् ॥३४१८॥
युधिष्ठिरस्य पौत्रेण भूपादित्यात्मजन्मना । श्रीमेघवाहनेनाथ गोनन्देऽभ्युदितं कुले ॥३४१९॥
. . . . . . . . . . . . . . . . . . . . . . . . . . . . . । . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . ॥
ततः प्रवरसेनोऽन्यस्तोरमाणात्मजः क्षितिम् । लेभे हिरण्यभ्रातृव्यस्तस्य पुत्रो युधिष्ठिरः ॥३४२०॥
ततो नरेन्द्रादित्यश्च रणादित्यश्च भूपतिः । क्रमादभूतां तत्पुत्रो विक्रमादित्यभूपतिः ॥३४२१॥
बालादित्यश्चोदभवद्रणादित्यस्य नन्दनः । बालादित्यस्य जामाता ततो दुर्लभवर्धनः ॥३४२२॥
सूनुर्दुर्लभकस्तस्य चन्द्रापीडोऽभवत्ततः । तारापीडोऽनुजन्मा च मुक्तापीडोऽस्य चानुजः ॥३४२३॥
भूपावास्तां कुवलयापीडो वैमातुरोऽस्य च । वज्रादित्यः सुतौ राज्ञो मुक्तापीडस्य तत्सुतौ ॥३४२४॥
पृथिव्यापीडसंग्रामापीडावनु नृपोऽभवत् । जयापीडोऽस्य मन्त्री च जज्जः पुत्रावपि क्रमात् ॥३४२५॥
ललितापीडसंग्रामापीडौ ज्येष्ठात्मजस्ततः । श्रीचिप्पटजयापीडः कल्यपालसुतोऽभवत् ॥३४२६॥
अभिचारेण तं हत्वा सांमत्योऽदितरेतरम् । उत्पलाद्यैरसंमातराज्यैस्तन्मातुलैः कृतः ॥३४२७॥
भ्रातुः पुत्रोऽजितापीडो जयापीडस्य तत्पदे । अनङ्गापीडनामा च संग्रामापीडजस्ततः ॥३४२८॥
तमुत्पाट्योत्पलापीडोऽस्याजितापीडनन्दनः । अवन्तिवर्मा शूरेण तं निवार्याथ मन्त्रिणा ॥३४२९॥

---

३४१०. [1]) The last three *pádas* and the following verse are no longer found in A as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Emended with C; R G (*prima manu*) सुवर्णाकुलस्य°; cf. i. 97. ३४१२. [1]) Emended; R C °वंशो; the upper strokes of the letters are not legible in A. ३४१३. [1]) Thus A; C पितापुत्रौ क्रमात्नृपौ. ३४१४. [1]) Here the name of NARA is omitted.—[2]) Emended; A उत्पलाक्षश्च.—[3]) Thus A; doubtful.—[4]) Emended; A हिरण्याक्षोहिरण्यकुलयोर°. ३४१५. [1]) C inserts here two *pádas* श्रीमिहिरकुलो राजा बकाख्यस्तदनन्तरं.—[2]) Emended; A क्षितिनन्दो बकात्तस्माद्व°. ३४१८. [1]) Emended; A तुञ्जने; cf. ii. 11.—[2]) Emended; A जयेन्द्रस्य— पुत्रे; C जयेन्द्रस्तस्सुतोऽपुत्रः. ३४१९. [1]) Thus A; but compare ii. 145 ffg.—[2]) Emended with C; A गोनन्दाभ्युदितं.—[3]) After this verse C inserts the following: ततः प्रवरसेनोऽभून्नृपः काश्मीरमण्डले ॥ तत्सुतश्च हिरण्योऽभूत् पालयन् क्षितिमण्डलं । मातृगुप्तोऽभवद्राजा राज्यस्तेन प्रकाशिना ॥. One verse containing the names of PRAVARASENA I., HIRANYA and MÂTRIGUPTA appears to have been omitted here by A. ३४२०. [1]) The remaining portion of this verse, the following verse and the first *páda* of verse 3422 are no longer found in A, as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Thus C; R पुत्रो —धिष्ठिरात्, corr. *sec. manu* as above; G पुत्रात्सुधिष्ठिरात्. ३४२१. [1]) Thus C R; G तत्पुत्र विक्रमादित्य भूपतिः. ३४२२. [1]) Thus C R; G °श्चाभवद्रणा°.—[2]) Emended with R G; A °दित्यस्य वं°. ३४२३. [1]) Thus C; R G °पीडस्य; in A three *aksharas* after मुक्ता have become illegible. ३४२५. [1]) Emended with C; A जज्जपुत्रावपि. ३४२६. [1]) Emended with C; A °पीडसंग्रा.° ३४२७. [1]) Emended with C; A सामन्ता°. ३४२९. [1]) Here ends the text of A at the foot of fol. 327 *rev.*, the last leaf of the MS. being lost. The text of the remaining verses is given from R G.

3430 मनोत्पलस्य विदधे साम्राज्ये सुखवर्मजः । भूरः शंकरवर्मा स गोपालस्तस्य चात्मजः ॥३४३०॥

रथ्यागृहीतः प्राभूच तद्भ्राता संकटाभिधः । सुगन्धाख्या तयोर्माता तां विनाश्याथ भूभुजम् ॥३४३१॥

शूरवर्मप्रणप्तारं पार्थं तन्त्रिपदातयः । चक्रुर्निर्जितवर्माणं ततस्तस्य च तत्क्रमात् ॥३४३२॥

चक्रवर्मा शूरवर्मा चेति निर्जितवर्मजः । विहिता बहुशो राज्ये तत्सम्भे शंभुवर्धनः ॥३४३३॥

तदन्तरे लब्धराज्ये मन्त्री व्यापाद्य तं नृपम् । चक्रवर्मण्यतीतेथ पापी पार्थात्मजः क्रमात् ॥३४३४॥

3435 उन्मत्तावन्तिवर्मासीत्तत्पुत्रे शूरवर्मणि । राज्याकृष्टे द्विजैर्दत्ते राज्ये मन्त्री यशस्करः ॥३४३५॥

प्रपितृव्यात्मजस्तस्य वर्णटस्तनयोनु तम् । राज्ये चक्राङ्कसंग्रामस्तस्थौ निष्पाट्य तं ततः ॥३४३६॥

अमात्यः पर्वगुप्ताख्यो राज्यं द्रोहेण लब्धवान् । क्षेमगुप्तः सुतोस्यासीदभिमन्युौ तदात्मजे ॥३४३७॥

शान्ते मात्रा पाल्यमाने नन्दिगुप्ते च तत्सुते । ततस्त्रिभुवने भीमगुप्ते च क्रूरचेष्टया ॥३४३८॥

पौत्रे तयैव निहते स्वयं दिद्दाख्यया कृतम् । राज्यं संग्रामराजोपि भ्रातृव्योन्ते नृपः कृतः ॥३४३९॥

3440 हरिराजानन्तदेवावास्तां तस्यात्मजौ ततः । कलशोनन्ततनयः क्रमाद्भूपौ तदात्मजौ ॥३४४०॥

उभावुत्कर्षहर्षाख्यावपि निष्पाट्य भूपतिम् । हर्षदेवं तमुद्दामविक्रमोनन्यवंशजः ॥३४४१॥

भ्रातुः पुत्रस्य दिद्दाया अस्सराजस्य नप्तृकः । मल्लाभिधानात्युच्चलो भूपतामुच्चलोभजत् ॥३४४२॥

द्रोहेण तं हतवतां भृत्यानामग्रतस्ततः । शङ्खराजान्यनामाभूद्रड्डाख्यः क्षणिको नृपः ॥३४४३॥

गर्गेण निहते तस्मिन्सल्हो द्वैमातुरोप्यभूत् । तस्योच्चलमहीभर्तुर्भ्राता निर्बध्य तं बली ॥३४४४॥

3445 सुस्सलाख्योग्रहीद्राज्यं माल्हिरुच्चलसोदरः । विरक्तैः पातिते तस्मिन्राज्याकृष्टैर्नृपः कृतः ॥३४४५॥

षण्मासान्हर्षभूभर्तुर्नप्ता भिक्षाचराभिधः । पुनर्निर्वास्य तं प्राप्तराज्ये सुस्सलभूभृति ॥३४४६॥

क्रमाल्लवन्यैर्विश्वस्तैर्द्राज्योद्वेजिते हते । लवन्यांस्त्रिलिलांस्तं च हत्वा भिक्षाचरं नृपम् ॥३४४७॥

सुतः सुस्सलभूभर्तुः संप्रत्यप्रतिमक्षमः । नन्दयन्मेदिनीमास्ते जयसिंहो महीपतिः ॥३४४८॥

गोदावरी सरिदिवोत्तुमुलैस्तरङ्गैर्वक्त्रैः स्फुटं सपदि सप्तभिरापतन्ती ।

श्रीकान्तिराजविपुलाभिजनाब्धिमध्यं विश्रान्तये विशति राजतरङ्गिणीयम् ॥३४४९॥

[1] इति श्रीमहाकविश्रीकल्हणकृतायां राजतरङ्गिण्यामष्टमस्तरङ्गः[1] ॥

समाप्तेयं राजतरङ्गिणी

कृतिः श्रीमहामात्यचण्पकप्रभुसूनोर्महाकवेः कल्हणस्य ॥

---

३४३०. [1]) The last two *pádas* are found in the above form in C; in R G they are added *sec. manu*, being probably copied from C. ३४३१. [1]) Emended with C; R G विनाश्य°. ३४३२. [1]) Thus R G; cf. v. 287 ffg.; C ततः पार्थस्ततः क्रमात्. ३४३३. [1]) These two *pádas* and the first half of the following verse are omitted in C.—[2]) Thus R; G --स्तंभे. ३४३७. [1]) Thus C R (*sec. manu*); G R (*prima manu*) सोमगुप्त. ३४३९. [1]) Emended; R G C निहिते.—[2]) Emended; R G राज्ये; C कृते । राज्ये. ३४४४. [1]) Emended; R G C सल्हो; R (*sec. manu*) सल्हो. ३४४७. [1]) Thus R; G °लांस्तं च; C °लांस्तांश्च. ३४४९. [1]) Emended; R G C श्रीकान्त°; comp. vii. 1285. *Colophon.* [1])—[1]) This part of the Colophon is not found in G.

## CORRIGENDA AND ADDENDA.

Canto. Verse.

१. १०. *For* स्कन्धावारं *read* स्कन्धावारं, *adding* *note:* ¹) Emended ; A स्कन्धावारं.

१. १०३.¹) *For* A₂ भूमीश्वरी *read* A₁ भूमीश्वरी.

१. ११७. *For* स्वादुनीलकण्ठ° *read* स्वादु नीलकण्ठ°.

२. १. *For* ललनाढु° *read* ललनाढु°

२. ४४. *For* भीक्षमाणाय *read* भीक्ष्यमाणाय.

२. ११६. *For* संवारिशिखिमिश्र *read* संवारि शिखिमिश्र°.

२. १००. *For* जरठ° *read* जरठ°¹, *adding* *note:* ¹) A जरठ°.

३. १०१. *To* पुरुषाधम: *add note:* Subhâshitâvalî, 361, reads पुरुषोत्तम:.

३. ४९३. *To* निवसन्निव *add note:* Subhâshitâvalî, 579, reads निवसन्निव

*To* जगतस्तिस्त्रो° *add note:* Subhâshitâvalî, 579, reads जगतां तिस्रो°.

४. ११५. *For* वीर्य *read* वीर्य.

*To* परापकारत्याय *add note:* Subhâshitâvalî, 3133, reads जनापकारत्याय.

४. १४८. *For* अतिथिभयांस्ते *read* अतिथिप्रियांस्ते.

४. २३४. *To* °न्काले तिवाली° *add note:* Subhâshitâvalî, 3028, reads °न्कालेपि वाली°.

४. ४५८¹) *For* A₂ देश, A₁ देशे *read* A₂ देशे, A₁ देश.

४. ७१२. *For* °गुणस्तबक *read* °गुणस्तबक¹, *adding* *note:* ¹) Emended ; A°गुणस्तबक.

५. ११५. *For* सत्कर्मजन्मसु *read* सत्कर्म जन्मसु.

५. १३६. *For* वर्षे एकोनषष्टे *read* वर्षे एकोनषष्टे.

५. १३२. *For* °शिखयत् *read* °शिखिवत्.

५. १४५. *For* °भुजग: *read* °भुजग:.

५. २२५.¹) *For* बराहमूल° *read* वराहमूल

५. २३३. *To* कमलुकाभिधान् *add note:* Comp. the name of the Shâhiya King *Kamalû*, Albêrûnî's *Indica* (transl. by Sachau) ii. 13.

५. २६०. *For* °बाहका *read* °पाहका.

५. २९५. *For* कमलुकाभि° *read* कमलुकाभि°.

५. ३०५. *For* श्रीवक° *read* श्रीवक°.

६. ५८. *For* समर्पय *read* समार्पयत्¹, *adding* *note:* ¹) Emended ; A समर्पयत्.

६. १२५. *For* सत्यम् *read* सत्यम्.

६. १४९. *For* काश्मीरिकाबल° *read* काश्मीरिकबल°.

७. ११७. *For* स्वल्पानुगोऽभवत् *read* स्वल्पानुगो भवत्.

७. ४३३. *For* °स्कन्धानां¹ *read* °स्कन्धानां¹, *adding* *note:* ¹) Emended ; A °स्कन्धानां.

७. ५५०. *For* वैताढ्यशिभयत् *read* वैताढ्यशिभियत्.

७. ५८५. *For* °शिवपहेवे° *read* °शिवपहेवे°.

७. ५८८. *To* कीर्तिस्थकपुरा° *add note:* ¹) Thus A ; perhaps read कीर्तिस्कन्धपुरा° ; comp. viii. 588.

७. ५९०. *For* काकवार° *read* काकवार°.

७. ५९१. *For* °व्यासतीर्थ *read* °व्यासतीर्थ.

७. ६०३.¹) *For* A प्रस्थाने *read* A₁ प्रस्थाने.

७. ७१२. *For* पक्षमतिशिभयत् *read* पक्षमतिशिभियत्.

७. ८०४. *To* स्नातिरस: *add note:* Subhâshitâvalî, 3132, reads निजाशिर:.

*To* शिष्या एवैव *add note:* Subhâshitâvalî, 3132, reads वेश्या: सैव.

७. ८४९. *For* जरठ: *read* जरठे¹:, *adding note:* ¹) A जरठ:.

७. ८८५. *For* कोपाकुले *read* कोपाकुले

७. ८९९. *For* हुहुष्° *read* हुहुष्°.

७. ९५०. *For* विरलाढु° *read* विरलाढु°.

७. ९७९. *For* काश्मीरिकाणां¹ *read* काश्मीरकाणां, *omitting note.*

७. १००८. *For* काश्मीरिकाणां¹ *read* काश्मीरकाणां, *omitting note.*

७. १०११. *For* हुहुष्° *read* हुहुष्°.

७. ११३१. *For* संग्रस्तगुल्मन्वत: *read* संग्रस्तगुल्मिन्वत:.

७. ११८९. *For* काश्मीरिका¹: *read* काश्मीरका:, *omitting note.*

७. ११८९. *For* स्कन्धावारे *read* स्कन्धावारे¹, *adding note:* ¹) Emended ; A स्कन्धावारे.

